Sāstra is the most difficult subject to understand at present among the technical subjects in Sanskrit. Sanskrit scholars have long neglected the study of the subject. Rarity of commentaries on the texts is a result of this neglect. But the art and craft have been followed by traditional craftsmen who are not well-versed in Sanskrit. The models of the art and practitioners thereof are to be found more in South India than in the North. The texts handed down by the tradition of craftsmen is badly mutilated and those texts have yet to be restored properly. Fortunately the text we have edited is very good as it has been restored by a commentator. But the identification of the technical terms has not been fully attempted by the commentator himself, as according to him they have to be learnt rather from traditional craftsmen than from Bhattārakas or scholars in Śilpa Śāstras.

A systematic study of Śilpa Śāstra by modern scholars was begun by Mr. Ram Raj in 1834. He knew Sanskrit, Tamil, Mahārāṣtra and other Indian languages. He had the benefit of assistance from the traditional craftsmen available during his time. He devoted about 7 years to the study of the subject. With all that, he says he is still in doubt with regard to the details of the art and science of Śilpa. Foreign scholars like Fergusson, Burgess, Havell & Brown have done good work on the subject. But they have dealt more with the analysis of existing models according to their own light than with the texts of Śilpa Śāstra. Mr. Ācārya has attempted a translation of Mānasāra and has given drawings of the forms mentioned in the text, He has also compiled a Dictionary of the terms. But he has not studied the numerous existing models of Śilpa in South India and his translation and Dictionary are marked by a large amount of uncertainty. Sthapatis and scholars have yet to come close together for a proper restoration of the texts handed down by practitioners and for identifying all the technical terms. Till that is done, the terms that are not

clearly understood are best left by themselves. In the uncertainty that now surrounds the Śāstra, mistakes are bound to be found in large numbers in the interpretation of the terms. All help by way of correction and explanation from scholars and Sthapatis are welcomed and will be gratefully acknowledged and incorporated in the next edition of the work.

Saraswati Mahal,
Tanjore. } K. VĀSUDĒVA S'ĀSTRI.

॥ श्रीगणाधिपतये नमः ॥

# ॥ विश्वकर्मवास्तुशास्त्रम् ॥

दिव्येन विश्वकर्मणा विरचितम् ।

श्रीमदनन्तकृष्णभट्टारकविरचितप्रमाणबोधिन्याख्यया

व्याख्यया समेतम् ॥

## ॥ प्रथमोऽध्यायः ॥

तत्र कैलासं प्रति इन्द्रादीनामागमनम् ॥

पुरा कैलासशिखरे मुनिबृन्दनिषेविते ।
देवकिन्नरयक्षेशस्तुतिनादितदिङ्मुखे ॥ १ ॥

---

## ॥ व्याख्यानप्रारम्भः ॥

## ॥ प्रथमोऽध्यायः ॥

अजमव्यक्तमीशानमनन्तं जगतां पतिम् ।
नमामि सूरिभिर्ध्येयं नमताभिष्टदायिनम् ॥ १ ॥

सुवर्णरत्नसन्दोहप्रभाकवचिताम्बरे ।
दर्शनादेव देवानामपि सर्वफलप्रदे ॥ २ ॥

---

गुरोः प्रसादान्मन्दोऽपि अहं शक्तः प्रसन्नधीः ।
विश्वकर्मकृतेर्भावं व्याकरोमि क्वचित्क्वचित् ॥ २ ॥

प्रमाणबोधिनीं व्याख्यामिमामुद्वीक्ष्य साधवः ।
सृजन्तु मयि स ... ... ... ... ॥ ३ ॥

सर्वलोकहितार्थाय प्रणीतं विश्वकर्मणा ।
वास्तुशास्त्रमिदं पूर्वं सुरलोके प्रतिष्ठितम् ॥ ४ ॥

ततः कालेन महता मुनयः शौनकादयः ।
श्रुत्वा सूतमुखादेतद्भेजिरे परमां मुदम् ॥ ५ ॥

तदाप्रभृति लोकेऽस्मिन्स्थपत्यादिभिरादरात् ।
प्रवर्तितमिदं वास्तुशास्त्रं सर्वफलप्रदम् ॥ ६ ॥

अथ तत्रभवान् परमेश्वरप्रसादलब्धदिव्यशक्तिः प्रख्यातनामा दिव्यो विश्वकर्मा सर्वलोकहितप्रदं वास्तुशास्त्रमिदं प्रणिनाय । तत्रादौ 'आशीर्नमस्क्रिया वस्तुनिर्देशो वा' इत्यादिप्रमाणप्रसिद्धं वस्तुनिर्देशात्मकमिदं महच्छास्त्रं 'पुरा कैलासशिखरे' इत्यारब्धवान् । पुरा किल कैलासपर्वते देवदेवस्य गौरीपतेश्शङ्करस्य सभां प्रति इन्द्रादीनामागमनं सञ्जातम् ।

प्रहृष्टमनसा देव्या पार्वत्या सह शङ्करः ।
दिव्यं मण्डपमासाद्य सुवर्णमणिभूषितम् ॥ ३ ॥
माणिक्यस्तम्भशोभाढ्यं मकराननतोरणम् ।
शीतलेन कटाक्षेण महर्षीणाञ्च योगिनाम् ॥ ४ ॥
देवानामपि चाह्लादं वर्धयन्भक्तवत्सलः ।
भजन्परमसानन्दं रेजे दिव्यासने शुभे ॥ ५ ॥
तदा देवसमूहेन सेवितो वासवो मुदा ।
ऐरावतं समारुह्य प्राप कैलासमादरात् ॥ ६ ॥
तत्रानन्दमये दिव्ये मण्डपे मणिभूषिते ।
लोकाम्बया समाविष्टं सर्वलोकनमस्कृतम् ॥ ७ ॥
भुजङ्गभूषितं त्र्यक्षं सर्वकामफलप्रदम् ।
सर्वशक्तिमयं शम्भुं वीक्ष्य भक्तिप्रचोदितः ॥ ८ ॥
अवतीर्य गजात्तूर्णं प्रणिपत्य पुरन्दरः ।
कल्पवृक्षसुमैर्दिव्यैश्शम्भोः पादाम्बुजार्चनम् ॥ ९ ॥
विधाय मघवा भक्त्या बद्धाञ्जलिपुटस्तदा ।
तुष्टाव परमेशानं सर्वलोकैकनायकम् ॥ १० ॥

अथ इन्द्रकृतशिवस्तुतिः ॥

प्रसीद परमेशान पार्वतीश जगत्पते ।
पाहि नो देवदेवेश तव पादैकसेविनः ॥ ११ ॥

तव प्रसादात्सर्वाणि भूतानीमानि शङ्कर ।
तरन्ति सर्वा विपदो भजन्ति च परां मुदम् ॥ १२ ॥

त्वत्प्रसादेन लोकेश जगत्स्थावरजङ्गमम् ।
भजते परमानन्दं शाश्वतीं च शुभां गतिम् ॥ १३ ॥

त्वमादिदेवो भूतानां रक्षको भक्तवत्सलः ।
सर्वशक्तिमयं सर्वलोकानामपि कारणम् ॥ १४ ॥

भजन्ति त्वां महेशान योगान्ते परमर्षयः ।
सर्वेषामपि भूतानां त्वमेव परमा गतिः ॥ १५ ॥

इति स्तुवति जम्भारौ भक्त्या परमया युते ।
शीतलेन कटाक्षेण वीक्ष्य गौरीपतिस्तदा ॥ १६ ॥

अभयं सर्वभूतिश्च वासवाय ददौ विभुः ।

अथ नन्दिकृतविश्वकर्मप्रेरणम् ॥

तस्मिन्नवसरे नन्दी शिवभक्तिपरायणः ॥ १७ ॥

प्रणम्य शङ्करं लोकशङ्करं सर्वदैवतम् ।
बद्धाञ्जलिपुटः ... ... ... ... तम् ॥ १८ ॥

आहूय विश्वकर्माणं पार्श्ववर्तिनमादरात् ।
चोदयामास हर्षेण नन्दी लोकहिते रतः ॥ १९ ॥

शङ्करस्याशयज्ञेन नन्दिदेवेन धीमता ।
प्रचोदितो विश्वकर्मा तुष्टाव गिरिजापतिम् ॥ २० ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे शिवस्तुतिवर्णनं नाम

प्रथमोऽध्यायः ॥

---

स्तप्रतिपादकः पुरा कैलासेत्यादिकः प्रथमाध्यायः स्पष्टार्थः ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां

विश्वकर्मवास्तुशास्त्रव्याख्यायां

प्रथमोऽध्यायः ॥

---

## अथ द्वितीयोऽध्यायः ॥

विश्वकर्मशिवस्तुतिः ॥

नमः कैलासनाथाय पशूनां पतये नमः ।
नमोऽष्टमूर्तये गौरीरमनाय नमो नमः ॥ १ ॥

नमोऽस्तु शूलिने लोकरक्षकाय नमो नमः ।
नमो रुद्र नमश्शम्भो नमो लोकैककारण ॥ २ ॥

नमो यज्ञाधिपतये देवेशाय नमो नमः ।
लोकाधार जगन्मूर्ते वेदवेदान्तसन्नुत ॥ ३ ॥

त्वत्तः किल समुद्भूतं जगत्स्थावरजङ्गमम् ।
त्वामाराध्यैव शास्त्रार्थः ज्ञायते परमर्षिभिः ॥ ४ ॥

देवैरपि स्थितिः प्राप्ता शाश्वती त्वत्प्रसादतः ।
चतुर्वर्गफलं पुंभिः प्राप्यते त्वत्प्रसादतः ॥ ५ ॥

त्वया संरक्ष्यते सर्वं जगच्च सचराचरम् ।
त्वया संवीक्षितो लोके परमं सुखमश्नुते ॥ ६ ॥

विश्वकर्मणे परमेश्वरकृतवरदानम् ॥

इति स्तुवन्तं त्वष्टारं बद्धाञ्जलिपुटं शिवः ।

---

॥ द्वितीयोऽध्यायः ॥

अथेह द्वितीयाध्याये 'नमः कैलासनाथाय' इत्यादि 'विविधासु च शालासु' इत्यन्तं सुगमम् ॥

कटाक्षसुधया सिञ्चन्नुवाच गिरिजापतिः ॥ ७ ॥

ईश्वर उवाच—

विश्वकर्मंस्तव स्तुत्याऽनया तुष्टोऽस्मि दिव्यया ।
उवाच लोकमातेयं सन्तुष्टा हितकाङ्क्षिणी ॥ ८ ॥
मत्तो वरं वृणीष्व त्वं यत्ते मनसि वर्तते ।
इत्युक्तो देवदेवेन शङ्करेण महात्मना ॥ ९ ॥
ययाचे वरदं दिव्यं विश्वकर्मा वरं तदा ।

विश्वकर्मोवाच—

शम्भो जगत्पते नाथ यदि ते मय्यनुग्रहः ॥ १० ॥
स्तुत्या प्रसीदसि त्वं मत्कृतया चन्द्रशेखर ।
वास्तुशास्त्रप्रकाशोऽस्तु मच्चित्ते तव वीक्षणात् ॥
देवगन्धर्वमनुजप्रासादेषु गृहेषु च ।
मण्डपेषु विमानेषु गोपुरे तोरणेऽपि च ॥ १२ ॥
सोपानेषु प्रतोलीषु वापीकूपादिकेषु च ।
विविधासु च शालासु चन्द्रशालादिकेषु च ॥ १३ ॥
यन्मानं[1] या क्रिया[2] या च भक्तिः[3] कृत्रिमभासुरा[4] ।

---

1. Proportion of length, breadth, height, depth etc. of the various parts of buildings for men and for deities.

यच्चित्रं यच्च सन्दूप्यं[5] तैतलं [6] यच्च कीर्तितम् ॥ १४ ॥

तेषामस्तु परिस्फूर्तिः परिज्ञानञ्च मद्धृदि ।

---

'यन्मानं या क्रिया' इत्ययं श्लोको व्याख्यायते । यथा—देवमानुषप्रासादेषु अन्येषु मण्डपादिषु निर्माणेषु यन्मानमुक्तं—दैर्घ्यायामनिम्नोन्नतसोपानकवाटादिमानं प्रमाणम् । या क्रिया भित्तिकल्पनद्वारस्थापनगवाक्षस्थापनादिका । या च भक्तिः कृत्रिमभासुरा ; भक्तिस्तावद्बहुविधा । सोपानपार्श्वादिषु सुधया निर्माणं भक्तिरिति सामान्याक्रिया । भक्तिविशेषलक्षणं तावदग्रे प्रपञ्च्यते । तत्र तत्र निर्माणस्थलविशेषादिके नयनसुखसंपादनार्थं कल्पितं कृत्रिमभासुराख्यं चित्रविशेषादिलक्षणं चाग्रे वक्ष्यामः । चित्रशब्दार्थस्सुगमः ॥

सन्दूप्यमिति । सन्दूप्यं नाम भवनहर्म्यप्रासादादिषु मुखद्वारोभयपक्षयोः कल्पिता त्रिकोणाकारा, क्वचिद्वर्तुलाकारा, क्वचिच्च चतुरश्रा प्रोन्नता भूमिः (திண்ணை) उच्यते ॥

---

2. Actual construction of walls etc.
3. Balustrade.
4. Artistic adjunct.
5. Ornamental structures rising on either side of a doorway.
6. The seats for the Dwara Palas (Door-keeps) on either side of the main gate of a temple.

कार्येषु विविधेष्वन्यन्मानं यच्च प्रकीर्तितम् ॥ १५ ॥
अधिष्ठानो[1]पपीठा[2]दिकार्यजालेषु यन्मतम् ।
तत्प्रमाणपरिज्ञानमस्तु मे त्वदनुग्रहात् ॥ १६ ॥
इति गद्गदया वाचा स्तुवन्तं शिवसन्निधौ ।
पिनाकी प्लावयन्नूचे कटाक्षैः शीतलैः स्वकैः ॥ १७ ॥

पिनाक्युवाच —

विश्वकर्मन्महाबाहो प्रार्थितं यत्त्वया शुभम् ।
तत्सर्वं सिध्यतु क्षेत्रक्षेमाय तव सुव्रत ॥ १८ ॥
दिव्या शक्तिः परं तेजः सिध्यतु त्वत्करे शुभे ।
मदाज्ञया त्वं लोकानां निर्माणादिषु कौशलम् ॥
लभस्व च शुभां कीर्तिं सर्वलोकहिताय च ।
इत आरभ्य देवेश भवनादिक्रिया भुवि ॥ २० ॥
दिवि पाताललोके च त्वदुपज्ञा भवेद्ध्रुवम् ।
स्थपत्यादिषु वर्णेषु त्वमेवोत्तमतां व्रज ॥ २१ ॥

---

तैतलमिति । तैतलं नाम देवप्रासादमुखद्वारेषूभयपक्षयोः द्वारपालकबिम्बस्थापनार्थं कल्पिता भूमिरुच्यते । एतेषां लक्षणज्ञानं क्रियाशक्तिश्च मे भूयादिति विश्वकर्मणो वरयाचनमिति भावः ॥

---

1. Base.
2. The next support above the base.

हिताय सर्वलोकानामित्यादिष्टः पिनाकिना ।
विश्वकर्मा महातेजा दिव्यां शक्तिमुपेयिवान् ॥ २२ ॥

आनन्दाश्रुपरीताङ्गः प्रणम्य मुहुरादरात् ।
त्र्यक्षं पिनाकिनं चन्द्रशेखरं लोकनायकम् ॥ २३ ॥

भक्त्या प्रदक्षिणीकृत्य बद्धाञ्जलिपुटस्तदा ।
वासवं समुपेत्यारादीशानुग्रहमुक्तवान् ॥ २४ ॥

विश्वकर्मोवाच —

अहो भाग्यमहो भाग्यं मम देवेश वासव ।
प्रसीदन्परमां शक्तिमदान्मे वृषभध्वजः ॥ २५ ॥

शक्त्यानया सुरास्सर्वे किन्नरा मानुषा अपि ।
भजेयुः परमानन्दं प्रासादादिषु सत्सुखम् ॥ २६ ॥

लोकास्समस्तास्सुखिनो भवेयुश्शुभसेविनः ।
वीतरागभयक्रोधाश्शिवभक्तिपरायणाः ॥ २७ ॥

सर्वपापविनिर्मुक्ता भूयासुस्सत्त्वभासुराः ।

॥ विश्वकर्मकृतशिल्पशास्त्रप्रशंसा ॥

सा परा शक्तिरेवैषा शूलिनः केन वर्ण्यते ॥ २८ ॥

या तता त्रिषु लोकेषु तैलबिन्दुरिवाम्भसि ।
यत्प्रसादान्मया ज्ञातं वास्तुशास्त्रमिदं ततम् ॥ २९ ॥

शास्त्रेणानेन सर्वस्य लोकस्य परमं सुखम् ।
चतुर्वर्गफलप्राप्तिस्सल्लोकश्च भवेद्ध्रुवम् ॥ ३० ॥

शिल्पशास्त्रपरिज्ञानान्मर्त्योऽपि सुरतां व्रजेत् ।
परमानन्दजनकं देवानामिदमीरितम् ॥ ३१ ॥

शिल्पं विना नहि जगत्त्रिषु लोकेषु विद्यते ।
जगद्विना न शिल्पश्च वर्तते वासव प्रभो ॥ ३२ ॥

अतो लोकेषु सर्वेषु शिल्पं बहुविधं ततम् ।
ग्रामाणाञ्च पुरीणाञ्च लक्षणं बहुधा स्मृतम् ॥ ३३ ॥

खेटकर्वटकादीनां दुर्गाणामपि लक्षणम् ।
प्रासादेषु च हर्म्येषु देवानां भूभुजामपि ॥ ३४ ॥

विविधेष्वपि निर्माणेष्वपि सन्दूष्यकं बहु ।
भवने न्यायशालायां सभायां कोशसद्मनि ॥ ३५ ॥

अन्तःपुरे शस्त्रगेह शालासु विविधासु च ।
क्रीडागेहेषु रम्येषु तोरणादिषु[1] मञ्जिके ॥ ३६ ॥

अधिष्ठानोपपीठेषु[2] गोपुरेषु[3] तथा बहु ।
सङ्कीर्णभवनाढ्येषु पताकापारिभद्रके ॥ ३७ ॥

---

1. Arch and its supports at the main gate etc.
2. Pedestal placed above the base
3. Towers

चातुर्वर्ण्यगृहाणाञ्च लक्षणं बहुधा स्मृतम् ।
वेदिका[1] पोतिकासन्धिबन्धनावरणेषु च ॥ ३८ ॥

स्तम्भादिके च निर्माणे विशेषभवनेषु च ।
मण्डपेषु विमानेषु प्राकारादिषु यन्मतम् ॥ ३९ ॥

लक्षणं बहुधा प्रोक्तं नानादेशविभागशः ।
सकलं तच्च संक्षिप्य वक्ष्येऽध्यायक्रमादहम् ॥ ४० ॥

इति विश्वकर्मप्रणीते **विश्वकर्मवास्तुशास्त्रे** विश्वकर्मकृत-
शिवस्तुतिकथनपरमेश्वरकृतवरप्रसादकथनं नाम

**द्वितीयोऽध्यायः ॥**

---

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
**द्वितीयोऽध्यायः ॥**

---

1. Raised platform

अथ दिङ्निर्णयकथनं नाम

## तृतीयोऽध्यायः ॥

आदौ कालं परीक्षेत सर्वकार्यार्थसिद्धये ।
कालो हि सर्वजीवानां शुभाशुभफलप्रदः ॥ १ ॥

कालातिक्रमणे दोषो द्रव्यहानिश्च जायते ।
देवानामपि देवीनां विप्रादीनां विशेषतः ॥ २ ॥

प्रासादभवनारम्भे स्तम्भस्थापनकर्मणि ।
द्वारस्थापनवेलायां भवनानां प्रवेशने ॥ ३ ॥

वापीतटाकनिर्माणे गोपुरारम्भकर्मणि ।
विमानमण्डपारामगर्भगेहोद्धृतौ तथा ॥ ४ ॥

---

॥ तृतीयोऽध्यायः ॥

आदौ कालमिति । परमेश्वराज्ञया संकल्पितः सूर्यादिग्रहपरिवर्तनेन वसन्तोऽयं कालः, ग्रीष्मोऽयं काल इति व्यवह्रियमाणः समयो यः शुभफलप्रद इति ज्योतिस्तन्त्रपारगैर्निर्णीतः, तस्मिन्नेव समये स्वजन्मनक्षत्राद्यानुकूल्यभाजि प्रासादभवनादिनिर्माणं कार्यमिति भावः । देवानां देवीनामालयनिर्माणे विशेषतो विप्रादिचतुर्वर्णजानां गृहारम्भे चेदं शुभकालनिरीक्षणं श्रेयस्करमिति बोध्यम् ॥

कालं शुभं परीक्षेत मङ्गलावाप्तिसाधकम् ।

अथ देशभेदेन कालपरीक्षा ॥

देशभेदेन कालोऽपि भिन्नतां प्रतिपद्यते ॥ ५ ॥

इष्टिकान्यसनं शस्तं शुभकाले विशेषतः ।
तस्मात्सर्वप्रयत्नेन शुभं कालं न लङ्घयेत् ॥ ६ ॥

अथ दिङ्निर्णयक्रमः ॥

प्राचीं परीक्षयेत्सम्यक्सूर्यगत्यनुमानतः ।
गृहीतस्थलके [1]शङ्कुमवटे स्थापयेत्क्रमात् ॥ ७ ॥

---

देशभेदेनेति । भारताख्योऽयं वर्षः षट्पञ्चाशद्देशभेदेन विभक्तः । तत्र विन्ध्यस्योत्तरभागे चत्वारिंशद्देशाः । विन्ध्यस्य दक्षिणे भागेऽवशिष्टा इति शिष्टाः । तेषु देशेषु पुष्कलावर्तकादिजीमूतप्रसरणतदभावाभ्यां क्वचिद्वर्षाकालः, क्वचिद्ग्रीष्मकाल इत्येवं कालवैपरीत्यस्य देशभेदेन दृष्टत्वात् कालस्य भिन्नत्वमुपपादितम् । तस्मादङ्गादिमेषु देशेषु वर्षाकालं ग्रीष्मकालं च परित्यज्य कालान्तरे शुभे मुहूर्ते प्रथमेष्टिकान्यसनपुरस्सरं भवननिर्माणयतनं धनधान्यादिसर्वसंपत्करमिति निमित्तज्ञाः ॥

अथ सर्वेष्वपि निर्माणेषु सम्यक् प्रमाणपरिज्ञानार्थं

---

1. Gnomon or Sundial for determining the true East, West, North and South.

खदिरस्तिन्दुको वापि क्षीरवृक्षसमुद्भवः ।
शङ्कुः श्रेयस्करः प्रोक्तो द्वादशाङ्गुलमानभाक् ॥८॥

हस्तप्रमाणतो वापि द्विहस्तो देवमन्दिरे ।
शङ्कोरुपरि मानस्य सूचिका सा शिखा मता ॥ ९ ॥

यत्र सा पतति व्यक्ता तत्स्थानं बिन्दुसंज्ञकम् ।
शिल्पाचार्यवरैः शङ्कुस्थापनं कल्पयेद्बुधः ॥ १० ॥

---

प्राच्यादिदिङ्निर्णयक्रममाचष्टे 'प्राचीं परीक्षयेत्' इत्यादिभिः पञ्चदशभिः श्लोकैः । प्रासादादितत्तन्निर्माणाय संगृहीतायां भूमौ सूर्यगतिपरिज्ञानात् प्राच्यादिदिङ्निर्णयार्थं शङ्कुस्थापनमाचरेत् । खदिरवृक्षेण वा तिन्दुकवृक्षेण वाऽन्यक्षीरवृक्षेण वा शङ्कोः कल्पनं प्रशस्तम् । तादृशशङ्कोर्दैर्घ्यं तावत् द्वादशाङ्गुलप्रमाणम् । अथवा एकहस्तप्रमाणम् । लक्षणमिदं मानुषभवननिर्माणाय प्रोक्तमिति भावः । देवालयादिषु तावच्छङ्कुः द्विहस्तप्रमाणकः कार्यः ॥

सूर्यच्छायापरिज्ञानार्थं शङ्कोर्मस्तके कल्पिता सूक्ष्मसूचिका कर्णिकाकारा शिखेत्युच्यते । सूर्यच्छायासमेता तादृशशंकुशिखा मण्डले यत्र निपतति तत्स्थानं बिन्दुसंज्ञकमिति प्रतीतिः । एतादृशलक्षणान्वितशङ्कुस्थापनं शिल्पाचार्यवरैः गृहपतिर्बुधः कारयेत् । शङ्कुच्छायापरिज्ञानार्थं निर्माणाय परिगृहीतायां

चक्राकारे नेमियुक्ते मण्डले शङ्कुभासुरे ।
शङ्कुच्छायाप्रसारस्तु यत्र भाति सलक्षणः ॥ ११ ॥

तं प्रदेशं निरीक्ष्यैव प्राचीनिर्णयमादिशेत् ।
उत्तरायणमासेषु दक्षिणायनगेष्वपि ॥ १२ ॥

कन्यायां वृषभे मासि यदि व्यक्ते दिवाकरे ।
शङ्कुच्छाया मध्यगा स्यान्नहि पार्श्वे कदाचन ॥

---

शुद्धभूमौ नेमिद्वययुक्तं मण्डलं विच्छित्तिविशेषसहितं वा कल्पयेत् । तन्मण्डलस्य मध्ये शङ्कुं निखातयेदिति भावः ॥

शङ्कुस्थापनक्रिया तावदैच्छिकमासेषु कार्या । प्रातः-काले सायङ्काले वा शङ्कुस्थापने कृते शङ्कुगता मार्ताण्डच्छाया पूर्वोक्तनेमिद्वययुक्तमण्डले धनुराकारप्रदेशगा स्यात् । तादृश-धनुराकारप्रदेशगा मार्ताण्डच्छाया शङ्कोर्मध्यस्थानरेखायाः सव्यभागगता उतापसव्यभागगता भवेदिति भावः ॥

यथा वोत्तरायणमासेषु शङ्कुस्थापने कृते शङ्कुगता सूर्यच्छाया मण्डलमध्यभागस्य दक्षिणभागगा स्यात्, तथा दक्षिणायनमासेषु शङ्कुस्थापने कृते शङ्कुगता सूर्यच्छाया मण्डलमध्यभागस्योत्तरभागस्थिता स्यादिति क्रमः । कन्याराशिं गते सति रवौ शङ्कुच्छाया पार्श्वगा न भवेत् । तथैव वृषभ-राशिं गते सति रवौ शङ्कुच्छाया न पार्श्वभागगा स्यात् ।

मेषस्थे वा मृगस्थे वा रवौ तु चतुरङ्गुला ।
शङ्कुच्छाया भवेद्व्यक्ता दिशां निर्णयकारिणी ॥

मकरस्थे रवौ शङ्कोश्छायाष्टाङ्गुलका भवेत् ।
मिथुनस्थे रवौ शङ्कोश्छाया तु त्र्यङ्गुला मता ॥

कुळीरस्थे रवौ शङ्कोश्छाया वेदाङ्गुला मता ।
सिह्मस्थे तु रवौ शङ्कोश्छाया वेदाङ्गुला मता ॥

तुलास्थिते रवौ शङ्कोश्छाया तु द्व्यङ्गुला मता ।
वृश्चिकस्थे रवौ शङ्कोश्छाया स्याच्चतुरङ्गुला ॥ १७ ॥

चापस्थिते रवौ शङ्कोश्छाया स्याच्च षडङ्गुला ।
मीनास्थिते रवौ शङ्कोश्छाया स्याच्चतुरङ्गुला ॥

इति द्वादशमासस्थे रवौ छाया स्फुटा भवेत् ।
उत्तरायणमासेषु छाया दक्षिणगा भवेत् ॥ १९ ॥

---

परन्तु मण्डलमध्यकल्पितस्वस्तिकाकाररेखान्तर्गता भवेदिति सूक्ष्मोऽर्थः । मेषराशिगते रवौ, तथा सिह्मराशिगे रवौ शङ्कुच्छाया चतुरङ्गुलप्रमाणा नेमिद्वयगा स्यात् । मकरस्थे रवावष्टाङ्गुला, मिथुनस्थे रवौ त्र्यङ्गुला, कुळीरस्थे रवौ चतुरङ्गुला, तुलास्थे रवौ द्व्यङ्गुला, वृश्चिकस्थे रवौ चतुरङ्गुला, चापस्थे रवौ षडङ्गुला, कुम्भस्थे च षडङ्गुला व्यक्ता भवेदिति च्छायाव्यक्तिनिर्णयक्रमो बोध्यः सूक्ष्मदर्शिभिः ॥

दक्षिणायनमासेषु छाया चोत्तरगा भवेत् ।
छायामानवशादेवमङ्गुलानि विसर्जयेत् ॥ २० ॥

शिष्टच्छायाप्रसारेण सम्यक्प्राचीं समादिशेत् ।
विन्ध्यस्य दक्षिणे देशेष्वेवं प्राचीविनिर्णयः ॥

आर्यावर्तस्थदेशानां प्राचीनिर्णय उच्यते ।
मकरादिचतुर्मासेष्वेव छायाङ्गुला भवेत् ॥ २२ ॥

वृषभस्थे रवौ शङ्कोश्छाया तु चतुरङ्गुला ।
मिथुनस्थे रवौ शङ्कोश्छाया स्याच्च षडङ्गुला ॥ २३ ॥

---

एवंप्रकारेण शङ्कुस्थापने कृते तत्तन्मासेषु तत्तद्भागे व्यक्तां द्व्यङ्गुलादिसूर्यच्छायां गणने विसृज्य पूर्वोक्तमण्डलमध्यभागप्रमाणिकां रेखामालिख्य तल्लेखोपज्ञं सूत्रप्रसारं कृत्वा तद्द्वारा प्राच्यादिदिङ्निर्णयो ज्ञेयः । प्रकारोऽयं विन्ध्यस्य दक्षिणभागस्थितेषु केरलपाण्ड्यचोलान्ध्रकलिङ्गोत्कलकर्णाटकुन्तलमहाराष्ट्रसौवीरादिदेशेषु शिल्पिवर्यैरनुष्ठेय इति भावः ॥

अथार्यावर्तस्थितेषु प्राग्ज्योतिषनेपालवङ्गाङ्गकोसलशूरसेनपाञ्चालविराटाविदर्भकुरुकेकयादिषु देशेषु कल्प्यो दिङ्निर्णयक्रम उच्यते— **आर्यावर्त** इति । पूर्वोक्तप्रकारेण शङ्कुस्थापने कृते पूर्वोक्तदेशेषु दिवाकरे मकरादिचतूराशिस्थिते शङ्कुच्छाया तावदेकाङ्गुला भवेत् । वृषभराशिङ्गते दिवाकरे शङ्कुच्छाया

इति दक्षिणगा छाया प्राचीनिर्णयकारिणी ।
कुळीरस्थे वृश्चिकस्थे रवौ छाया न विद्यते ॥ २४ ॥

सिह्मस्थैकाङ्गुला प्रोक्ता कन्यास्थे द्व्यङ्गुला भवेत् ।
तुलाचापस्थिते भानौ अङ्गुला सा प्रकीर्तिता ।
इति चोत्तरगा च्छाया प्राचीनिर्णयकारिणी ॥ २५ ॥

ब्रह्मावर्तस्थदेशानां प्राचीनिर्णय उच्यते ।
मकरादिषु मासेषु त्रिषु छायाङ्गुला भवेत् ॥ २६ ॥

---

चतुरङ्गुला, मिथुनस्थे षडङ्गुलेत्येवमुत्तरायणमासक्रमो बोध्यः ॥

कुळीरस्थे वृश्चिकस्थे दिवाकरे शङ्कुच्छाया पार्श्वगा न स्यादिति भावः । सिह्मराशिं गते रवौ पूर्ववच्छङ्कुच्छाया एकाङ्गुला, कन्यास्थे द्व्यङ्गुला, तुलागते चापगते च शङ्कुच्छाया एकाङ्गुला भवेत् । इत्येवं दक्षिणायनमासक्रमः । उत्तरभागगा छायावगन्तव्येति मतिः ॥

एवंप्रकारेण पूर्वोक्तदेशेषु शङ्कुस्थापने कृते मण्डलस्य पार्श्वगां शङ्कुच्छायां तत्तन्मासक्रमेण विसृज्य पूर्वोक्तमण्डलमध्यभागप्रमाणिकां रेखामालिख्य तद्द्वारा सूत्रप्रसारणं कृत्वा प्राच्यादिदिङ्निर्णयो ज्ञेयः । इत्येवमार्यावर्तदेशदिङ्निर्णयक्रमः ॥

**ब्रह्मावर्तस्थदेशानामिति** । अथ ब्रह्मावर्तस्थितेषु काम्भोजबाल्हीकबर्बरकाश्मीरादिदेशेषु कल्प्यो दिङ्निर्णयक्रम उच्यते—

मेषस्थे वृषभस्थे च छाया तु त्र्यङ्गुला मता ।
मिथुनस्थे झषस्थे च छाया पञ्चाङ्गुला मता ॥२७॥

मीनस्थे च क्वचिच्छाया न भवेदिति तान्त्रिकाः ।
कुलीरस्थे रवौ चापस्थिते च न हि सा स्फुटा ॥ २८ ॥

सिंहकन्यास्थिते भानौ सा चतुष्पञ्चका मता ।
तुलास्थिते द्व्यङ्गुला स्यादिति छायाक्रमो भवेत् ॥

शङ्कुस्थापनवेलायां विप्रेभ्यो बहुदक्षिणाः ।
मार्दङ्गिकैः स्वस्तिकैश्च जयशब्दश्शुभावहः ॥ ३० ॥

---

पूर्वोक्तक्रमेण शङ्कुस्थापने कृते काम्भोजादिदेशेषु रवौ मकरादिमासत्रयं गते सति शङ्कोश्छाया एकाङ्गुला भवेत् । मेषवृषभगे सति शङ्कुच्छाया त्र्यङ्गुला, मिथुनमृगनाथराशिभाजि रवौ छाया पञ्चाङ्गुला मता । कदाचित्पूर्वोक्तदेशेषु मीनस्थे सति रवौ छाया पार्श्वगा न भवेदिति शिल्पितान्त्रिकाणां मतमिति च ज्ञेयम् ॥

रवौ कुलीरस्थे चापस्थिते च सा शङ्कुच्छाया साकल्येन न स्फुटा पार्श्वगता न भवेदित्यर्थः । सिंहस्थे रवौ चतुरङ्गुला, कन्यास्थे पञ्चाङ्गुला, तुलास्थे द्व्यङ्गुलेति यथाक्रमं मण्डलपार्श्वगतायाश्छायायाः लक्षणं ज्ञेयं सूक्ष्मदर्शिभिरित्येवं सूक्ष्मेण चक्षुषा सर्वत्र शङ्कुस्थापनप्रकारो ज्ञेयः । शङ्कुस्थापनकाले ब्राह्मणानां वेदपारगाणां बहुशो दक्षिणादानं, मङ्गलवाद्यवादनं,

सूत्रप्रसारमानेन शुद्धां प्राचीं समाश्रयेत् ।
पुरारम्भे गृहारम्भे गोपुरारम्भकर्मणि ॥ ३१ ॥

गर्भगृहविमानादिसद्वास्तुषु शुभावहः ।
शिल्पिनां माननं शस्तं हेमभूषादिभिश्शुभैः ॥ ३२ ॥

स्थूपिस्थापनकाले च प्राकारस्थापने तथा ।
प्रासादभवनारम्भे वापीकूपादिकेषु च ॥ ३३ ॥

गृहप्रवेशकाले च स्वस्तिघोषश्शुभावहः ।
दिशां कोणास्तु चत्वारो न शस्ता आयलक्षणे ॥

---

स्वस्तिपठनादिकं सर्वमपि श्रेयस्करमिति बोध्यम् ॥

गृहभवनप्रासादादिनिर्माणे, नगरनिर्माणे, गोपुरस्थापने, गर्भगृहस्थापने, विमाननिर्माणेऽन्यस्मिन्नपि मुख्यवास्तुनिर्माणकर्मणि अवश्यं शङ्कुस्थापनवशात् शुद्धा प्राची ग्राह्येति सिद्धान्तः। एतादृशवास्तुनिर्माणसमयेषु धनकनकभूषावस्त्रादिभिश्शिल्पिनो मानयेदिति, स्थूपिस्थापने, प्राकारस्थापने, प्रासादादिस्थापने च राज्ञां नानादानानि शुभावहानीति च सिद्धान्तः। आग्नेयनिर्ऋतिवायव्यैशानाख्यदिशां कोणाश्चत्वारोऽपि आयादिलक्षणे न शुभफलप्रदाः । तस्मात्सर्वप्रयत्नेनापि पूर्वोक्तरीत्या शङ्कुस्थापनकरणे स्थपत्यादीनां साह्येन युक्त्या च शुद्धा प्राची

तस्मात्सर्वप्रयत्नेन शुद्धां प्राचीं समाश्रयेत् ॥ ३४ ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे

दिङ्निर्णयकथनं नाम

तृतीयोऽध्यायः ॥

---

प्राह्येति तृतीयाध्यायार्थः ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां

विश्वकर्मवास्तुशास्त्रव्याख्यायां

तृतीयोऽध्यायः ॥



अथ द्रव्यसङ्ग्रहणकथनं नाम

## चतुर्थोऽध्यायः ॥

सर्वनिर्माणकार्याणां द्रव्यमाद्यस्सखा मतः ।
तस्मात्संपादयेद्विद्वान्सद्द्रव्यं शुभवर्धनम् ॥ १ ॥
धनवस्तुप्रभेदेन तद्द्रव्यं द्विविधं स्मृतम् ।
धनेन मानयेद्भृत्यान् शुभवाक्यैश्च नित्यशः ॥ २ ॥
इष्टिका च सुधा श्लक्ष्णा पारिभद्रादिदारवः ।
अयःकीलादयश्चान्ये वस्तुसंज्ञा उदीरिताः ॥ ३ ॥
दारुसङ्ग्रहणं शस्तं शुभकाले विशेषतः ।
स्वगुरुं स्थपतिं धेनुं श्रोत्रियान्वेदपारगान् ॥ ४ ॥

---

॥ चतुर्थोऽध्यायः ॥

अथ द्रव्यसङ्ग्रहणलक्षणकथनात्मकं चतुर्थाध्यायमारभते--

**सर्वेति** । शुभवर्धनम् धनधान्यसुतादिसकलसंपद्विवृद्धिकरम् , न्यायमार्गार्जितम् , पापरहितम् । सद्द्रव्यस्य सत्फलजनकत्वमुपपादितम् । तच्च द्रव्यं धनरूपेण वस्तुरूपेण च द्विविधं भवति । धनेन सान्त्ववचसा च भृत्यान् भवननिर्माणादिकार्येषु नियोजितान्नित्यशः सन्तोषयेत । इष्टिकासुधादारवोऽन्येऽयःकीलादयश्च वस्तूनीति व्यवह्रियन्त इति भावः ॥ ३ ॥

**दारुसङ्ग्रहणमिति** । कालान्तरे गृहभवननिर्माणादिके शक्येऽपि यदि अत्यन्तं शुभकाले प्राप्ते तदा काननात् दारु-

पूजयित्वा विशेषेण दारुसङ्ग्रहणे रतः ।
दिक्पालानायुधाधीशानर्चयेद्गन्धपुष्पकैः ॥ ५ ॥

सह मङ्गलघोषेण काननं प्रविशेद्बुधः ।
शुद्धश्शान्तमना भूत्वा नववस्त्रोत्तरीयकः ॥ ६ ॥

देवानामपि देवीनां ध्वजस्तम्भाय दारुकान् ।
आहरेन्मन्त्रघोषेण सर्वलोकहितप्रदान् ॥ ७ ॥

वकुलस्तिनिशस्सालः कोविदारश्च केसरः ।
श्रीपर्णस्सप्तपर्णश्च कुद्दालः पिण्डकस्तथा ॥ ८ ॥

देवालयेष्विमे शस्ताश्शुभदाः संप्रकीर्तिताः ।
भल्लाटस्य मृगस्यापि मित्रस्य वरुणस्य च ॥ ९ ॥

जयन्तस्य च पूष्णश्च गन्धर्वस्य च शूलिनः ।
वास्तुनाथस्य देवस्य देवीनाञ्च विशेषतः ।
अंशभूता इमे वृक्षाः शास्त्रविद्भिरुदीरिताः ॥ १० ॥

---

सङ्ग्रहः कार्य इति सिद्धान्तितः । तदा स्वगुरुं स्थपतिं दिशापतीन् आयुधाधिपान् देवांश्च गन्धादिभिरभ्यर्च्य मङ्गलवाद्यघोषेण मुखरितदिशस्सन् देवताध्वजदार्वादिकानाहरेदिति शिल्पसमयः ॥ ७ ॥

वकुल इति । वकुलादय इमे प्रशस्ताः वृक्षाः देवालयनिर्माणेषु शुभदाः कीर्तिताः । किं चामी भूरुहो भल्लाटादितत्त-

आम्रातको[1] मधूकश्च नागरङ्गश्च तिन्दुकः ।
खदिरः पूतिको वेणुः पाटलश्च विभीतकः ॥ ११ ॥
कर्णिकारश्च सरलः कर्कन्धूस्तिनिशस्तथा ।
काश्मरी च रसालश्च पारिभद्रश्च केसरः ॥ १२ ॥
श्रीपर्णास्तिलकश्चापि नक्तमालश्च भद्रकः ।
अन्ये च क्षीरवृक्षा ये निम्बाद्याश्च सुगन्धिनः ॥
नृणामालययोग्यास्स्युश्शुभदाः संप्रकीर्तिताः ।
मनुष्यवास्तुभूमीशा धनपालादयश्शुभाः ॥ १४ ॥

---

त्स्थानविशेषदेवानां अंशभूताः प्रधानदेवदेवीनां च सत्त्वसान्निध्यादिहेतव इति शिल्पशास्त्रविदां सिद्धान्तः । देवालयनिर्माणाय सङ्गृहीतायां शुद्धभूमौ प्राच्याः भल्लाटाख्यो देवविशेषोऽधिपतिः । आग्नेय्याः मृगदेवः, दक्षिणस्या मित्रदेवोऽधिपतिः । निर्ऋतिदिशो वरुणदेवोऽधिपतिः । वारुण्या दिशो जयन्तोऽधिपतिः । वायव्या दिशो रविदेवोऽधिपतिः । उदीच्या दिशो गन्धर्वोऽधिपतिः । ऐशान्याश्शिवदेवोऽधिपतिः । मध्यभूमेर्वास्तुनाथोऽधिपतिरित्येवं क्रमो बोध्यः ॥ १० ॥

**आम्रातक इति ।** आम्रातकाद्या भूरुहा इमे मनुष्यालययोग्याश्शुभदाश्च । मनुष्यालयनिर्माणाय सङ्गृहीताया भुवो धनपालमित्रयक्षकुबेराः चत्वारो देवाः क्रमेण चतुर्णां दिशा-

---

1. Spondias Mangifera.

गवाक्षस्थूलडोलानां तिर्यग्दारुकलापिनाम् ।
सोपानानाञ्च खट्वानां प्रतिमानां निवेशिनाम् ॥
पीठानां फलकानाञ्च स्तंभानां च शिखण्डिनाम् ।
वर्तुलानां पूतिकानां तन्तुवाजिककुंभिनाम् ॥ १६ ॥

---

मधिपतय इति केचित् । मतान्तरे तु देववास्तुवन्मनुष्यवास्तु-भूमेर्नगरपुरग्रामनिर्माणाद्यारम्भकाले च तेषां पूजनं बलिदानं च शस्तमिति तेषां नामानि ग्रन्थान्तरे द्रष्टव्यानि ॥

केषुचिद्देशेषु नगरपुरग्रामगृहादिवास्तुनिर्माणसमये दिग्देवा-नेवमर्चयन्ति । तेषां नामानि यथा — अग्निः, विवस्वान्, दौवारिकः, मित्रः, यमः, चन्द्रः, शेषः, ईशान इति प्राच्याद्यष्ट-दिग्देवक्रमः । देशान्तरे तु वास्तुभूम्याः सीमान्ते पुरन्दरादीनष्टौ लोकपालानेवमर्चयन्तीति शिष्टाचारशिल्पिवर्याणामाशयश्च बोध्यः

आम्रातकादिवृक्षजातकार्यमाह— **गवाक्षेति** । गवाक्षः प्रसिद्धः । पटलाद्युपरितनभारधारी [1]स्थूलनामको दारुविशेषः । डोलार्थस्सुगमः । तिर्यग्दारुः पूर्वोक्तपटलादिभारवाही तदपेक्षया सूक्ष्मो दारुविशेषः (கழி—உத்தரம்) । कलापिनस्तावत् द्वारोभय-पक्षयोश्शोभार्थं कल्प्यमानाः छदिविशेषाः बहुचित्रचित्रिताङ्गाः । सोपानादयः प्रसिद्धार्थाः । शिखण्डिनः स्तंभेषु उपरि शोभार्थं, भारवहनार्थं च कल्पिता दारुखण्डाः । वर्तुलास्ताद्दशदारोरधः

---

1. Beam.

उपपीठादिनां सिंहवक्त्रादीनाञ्च मेशिनाम् ।
अन्येषां शिल्पकार्याणाममी शस्ताः प्रकीर्तिताः ॥

मधूकं तिनिशं पूतिमन्यं क्षीरतरुं तथा ।
तिर्यग्दारौ चित्रकार्ये योजयेन्न कदाचन ॥ १८ ॥

नाडीवृक्षाः पिन्नवृक्षाः गुलिकाभिन्नदारवः ।

---

स्थापिता वर्तुलाकाराः फलकाः । पूतिका तावत् खट्वाङ्गादिषु तत्र तत्र गुम्फिता बम्बरनामभाक् रक्तदारुखण्डः । तन्तुवाजिकस्तु स्तम्भफलककवाटतिर्यग्दार्वादिषु क्रियमाणा रेखा या तस्या उपष्टम्भकभूता सूक्ष्मवारिका । कुम्भिनस्तावत्पाञ्चालिका-पुत्रिकादयः । उपपीठः स्तम्भानामधःस्थापितः पृथुकः । सिंह-वक्त्रादयः प्रसिद्धाः । मेशिनस्तु अयःकीलघटनयोग्याः फलकाः । इत्यादिशिल्पकार्येषु पूर्वोक्ता आम्रातकादिभूरुहश्शस्ताः दृढाः कार्यसौकर्यशालिनो द्रष्टॄणां नयनानन्दकारिणः चिरकालवर्तिन इत्येतेषां स्वरूपगुणा उक्ता भवन्ति ॥ १७ ॥

**मधूकमिति** । मधूकादीन्क्षीरप्रधानवृक्षान् तिर्यग्दारु-स्थापने सालभञ्जिकादिचित्रकार्येष्वपि न योजयेदिति भावः । कुत इति चेत्— तादृशक्षीरप्रधानवृक्षाणां अतिदौर्बल्यं सर्वत्र प्रसिद्धम् । किञ्च तावत्कालक्रमेणान्ततः क्षीरप्रसरणवात् शीर्णाः, भिन्नाः, वक्रा वा भवेयुरिति भावः ॥ १८ ॥

गजदन्तप्रभिन्नाश्च वक्रा भिन्नास्तथा वने ॥ १९ ॥

पक्षिहीना दिवाभीतैरुषिताश्च (द्विजाधमैः) ।

विद्युता भिन्नवृक्षाश्च योधानामिषुभिर्हताः ॥ २० ॥

कण्टकावृतदेहाश्च न प्रशस्ताः प्रकीर्तिताः ।

उदीच्यां शयिता वृक्षा देवालयशुभप्रदाः ॥ २१ ॥

ऐन्द्र्यां दिश्यथ वारुण्यामुदीच्यां वा विशेषतः ।

---

नाडीवृक्षा इत्यादि व्याख्यायते । यथा — नाडीवृक्षाः सिराप्रधाना वृक्षाः सिरावाहुल्यवन्तो वृक्षा इति यावत् । पिन्नवृक्षा अत्यन्तं सूक्ष्मकृशवृक्षाः; शाखाहीनवृक्षा इति केचित् । गुलिकाभिन्नदारवो गुलिकाभिर्लोष्टलगुडादिभिर्भिन्नशाखा इत्यर्थः । तथा गजदन्तेन खण्डिताः, वने स्वयमेव वक्रिमाणमुपेत्य प्रवृद्धा वृक्षाः, तथा पक्षिभिरनध्युषिता वृक्षाश्च, तथैवोलूकादिभिरधमैः पक्षिभिराक्रान्ता वृक्षाश्च, तथा वज्रपातेन, गजगर्जितेन, विद्युत्स्फुरणवेगेन च भिन्नाः क्लान्ता वृक्षाश्च, तथा व्याधादीनां शरव्यभावं गताश्च वृक्षाः, तथा दक्षिणशिरस्कतया शायिता मुण्डिता वृक्षाः वहुकण्टकवन्तो वृक्षाश्चैतादृशा वृक्षा मनुष्यालयस्थापनयोग्या न भवन्ति । चित्रादिश्लक्ष्णकर्मण्यपि नार्हतां प्राप्नुवन्तीति शिल्पसमयः ॥ २१ ॥

**उदीच्यामिति** । उदीच्यां दिशि शायिता वृक्षाः देवालय-

शयिताः पातिता वृक्षाः प्रशस्ता मानुषालये ॥ २२ ॥

पतिता दक्षिणाशायां तथा प्रेतवनं गताः ।
दुष्टभूमिस्थिता वृक्षा वर्ज्या निन्द्याऽशुभेप्सुभिः ॥

नागाधिपं वृक्षपतिं पयसा पायसेन च ।
तर्पयित्वा विशेषेण वने छिन्द्याद्बुधोत्तमः ॥ २४ ॥

काले शुभे स्वस्तिघोषैः खण्डितांस्तान्वनान्तरात् ।
शुभ्रवर्णैर्हेमशृङ्गैर्वृषभैर्वाहयेद्बुधः ॥ २५ ॥

स्थापयेच्छुद्धदेशे तानधिवासाय निश्चितः ।
संवत्सरो(रं) वा षण्मासान् मासत्रयमथापि वा ॥२६॥

---

निर्माणविषये प्रशस्ताः तथैवैन्द्र्यामुदीच्यामथ, वारुण्यां वा दिशि स्वयं पतिताः पातिताश्च वृक्षाः मनुष्यालयादिनिर्माणकार्येषु शुभप्रदा इति भावः । दक्षिणादिङ्मुखतया पतिता वृक्षाः, श्मशानभूमिस्थिता वृक्षाः, तथा म्लेच्छाध्युषितभूमिस्थिताश्च वृक्षा न शुभफलप्रदा इति भावः । देवालयनिर्माणादिषु तादृश-दोषदुष्टा वृक्षा अवश्यं परिहार्या इति वैदिकाः ॥ २३ ॥

**नागाधिपमिति** । स्वस्वकार्योचितानां तरूणां छेदनानन्तरं तादृशतरूणामधिनाथं अनन्तं भुजगेशं पयसा, पायसेन वा विशेषतोऽभ्यर्च्य तर्पयित्वा तान्वृक्षान् खण्डशश्छेदयेत् । तदनु तथा खण्डितान् दारुखण्डान् सुवर्णशृङ्गैरशुभ्रवर्णैः वृषभैरुह्य-

अधिवासाय तान्न्यस्य माल्यगन्धार्चनादिभिः ।
रक्षणं कारयेद्धीमान्वास्तुशास्त्रविशारदः ॥ २७ ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे
द्रव्यसंग्रहणकथनं नाम
चतुर्थोऽध्यायः ॥

---

मानान् शकटान्नीत्वा, शुद्धदेशे स्थापयित्वा, संवत्सरावधि, षण्मासावधि, मासत्रयकालावधि वा तांस्तरुखण्डानधिवासाय स्थापयेदिति । अधिवासनं नाम छेदितानां तरूणां क्षीरादि-शुष्कीकरणाय न्यसनमिति । तच्च द्विविधम् । जलाधिवासनम्, स्थलाधिवासनञ्चेति । केषाञ्चित्तरूणां जलाधिवासनं बलकरं भवति । अन्येषां तरूणां तु भूमौ प्रच्छायतलेऽधिवासनं बलकरम् । केषाञ्चित्तरूणामातपे न्यसनं बलकरमिति च विवेकः इति द्रव्यग्रहणविधानमुक्तं भवति ॥

इष्टिकानिर्माणप्रकारशिलापरीक्षादिकं तु मया कृतायां शिल्पकलादीपिकाव्याख्यायां विस्तरशः प्रपञ्चितम् । विस्तर-भयान्नेह लिख्यते । अतस्तत्र द्रष्टव्यमिति ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
चतुर्थोऽध्यायः ॥

अथ भूपरीक्षाकथनं नाम

## पञ्चमोऽध्यायः ॥



पुरा भूमिरियं धात्रा विशाला च वसुन्धरा ।
जलाधारान्विता सृष्टा सशैलवनकानना ॥ १ ॥
हिमवद्विन्ध्यमलयैरन्यैः कुलमहीधरैः ।
कनकाद्यैर्दिव्यलोहैर्गर्भिता च समन्ततः ॥ २ ॥
तथापि भूगर्भसारात् क्वचित्स्वादुरसान्विता ।
क्वचिद्रसेन हीना च क्वचिदुष्णा च शीतला ॥ ३ ॥
क्वचिद्भीकरसत्वाढ्या क्वचित्सत्वखगावृता ।
क्वचिदत्यन्तसुखदा क्वचिदुद्वेगकारिणी ॥ ४ ॥
इत्येवं बहुधा जाता कालभेदेन भूरियम् ।

---

॥ पञ्चमोऽध्यायः ॥

अथ भूपरीक्षाकथनात्मकः पञ्चमाध्यायः प्रारभ्यते—पुरेति । पुरा जगत्सृष्टिकाले धात्रा विश्वकर्त्रा ब्रह्मणा इयं भूमिर्विशाला वसुधारिणी च स्वादुजलान्विता शैलोद्यानलोहादिसद्वस्तुभरिता च सृष्टा, तथापि भूम्याः गर्भवेगवशात क्वचित्प्रदेशे स्वादुजलान्विता, क्वचित् कटुजलान्विता, क्वचिज्जलहीना च भूरियं सञ्जातेत्यादिस्सुगमार्थः ॥ ४ ॥

परीक्षयेद्वास्तुभूमिमतस्सल्लक्षणान्विताम् ॥ ५ ॥

उत्तमा मध्यमा भूमिरधमा चेति सा त्रिधा ।

विभक्ता गुणभेदेन शास्त्रज्ञैः पूर्वसूरिभिः ॥ ६ ॥

रसवर्णस्पर्शगन्धैरन्यैरपि च लक्षणैः ।

परीक्षयेदिमां भूमिं वास्तुयोग्यां बुधोत्तमः ॥ ७ ॥

माधुर्यमृत्तिका भूमिर्देवविप्रहितप्रदा ।

---

परीक्षयेदिति । अतः पूर्वप्रतिपादितक्रमेण कालभेदेन गर्भवेगवशेन च भूम्याः क्वचित्सुखप्रदत्वं, क्वचिदसौख्यप्रदत्वमपि सञ्जातम । तस्माद्बुधोत्तमस्सुखादिमङ्गलाशंसी पुमान् देवालयनगरपुरग्रामभवनादिनिर्माणसमये निर्माणात्पूर्वमेव तादृशभूम्यास्सदसल्लक्षणं परीक्ष्योत्तमां भूमिमेवाश्रयेदित्युपदेशः ॥

सा च भूमिरुत्तमा, मध्यमा अधमा चेति तत्तद्गुणादिभिस्त्रिधा विभक्ता । देवालयाय उत्तमा भूरेव ग्राह्या । मनुष्यालयाय तु उत्तमा मध्यमा भूरपि संग्राह्या । सर्वत्र अधमलक्षणान्विता भूमिरवश्यवर्ज्येत्युपदेशः । भूम्याः परीक्षणं तावत् रसेन, वर्णेन, स्पर्शेन, गन्धेन चान्यैश्च व्यक्providedाव्यक्तैर्लक्षणैः कार्यमिति शास्त्रज्ञाः पूर्वाचार्या वदन्तीत्यर्थः ॥ ७ ॥

अथ ब्राह्मणादिचातुर्वर्ण्यभेदेन प्रथमतो भूमिलक्षणमाह माधुर्यमृत्तिकेत्यादिना श्लोकषट्केन — मधुरजलसंयुक्ता

तथोदुम्बरवृक्षाढ्या श्वेतवर्णा च भूरपि ॥ ८ ॥
(उदीच्यां च जलोपेता भूरियं चोत्तमा मता ।)
कषायमृत्तिका भूमी रक्तवर्णा च भूरपि ॥ ९ ॥
पूर्वभागजलोपेता तथाश्वत्थद्रुमान्विता ।
विपुला लोहयुग्भूमिः क्षत्रियाणां हितप्रदा ॥ १० ॥
नातिकृष्णा न रक्ता च प्लक्षद्रुमसमन्विता ।

---

भूमिर्देवानां विप्राणां च शुभप्रदा । देवालयार्थं ब्राह्मणगेहार्थं च योग्येति भावः । तथोदुम्बरवृक्षसंपन्ना भूः श्वेतवर्णा च भूः उदीच्यां दिशि नदीतटाकादिजलोपेता च भूरेवमाद्युत्तमा भूमिर्देवविप्रशुभकरीति भावः । एतादृशैश्चतुर्विधलक्षणैर्युक्ता भूमिर्मृग्येति भावः । एवमुत्तरत्रापि ज्ञेयम् । एकलक्षणसमन्विता च भूः तेषां शुभप्रदेति सिद्धान्तः ॥ ८ ॥

अथ क्षत्रिययोग्यभूमिलक्षणमाह — कषायमृत्तिकेति । कषायरसयुक्ता भूमिः तथा रक्तवर्णा भूमिः तथा पूर्वायां दिशि नद्यादिजलोपेता भूमिरश्वत्थद्रुमाढ्या भूमिर्विशेषतो वैशाल्यशालिनी भूमिः कनकादिलोहखनियुक्ता च भूमिः क्षत्रियाणां जयादिसर्वसंपत्कारिणीति भावः । एतादृशसर्वलक्षणयुक्ता भूमिरपि दुर्लभेति भावः । एकद्वित्र्यादिलक्षणभागपि भवनादिनिर्माणाय सङ्ग्राह्येति ॥ १० ॥

दक्षिणायां जलोपेता नातिनिम्नोन्नतस्थला ॥ ११ ॥
भूरियं वैश्यजातानां बलसंपत्करा मता ।
(कटुमृत्स्ना कृष्णवर्णा वटवृक्षसमन्विता ॥ १२ ॥
वारुण्यामुदकोपेता शूद्राणां क्षेमकारिणी । )
इत्येवं जातिभेदेन कथितं भूमिलक्षणम् ॥ १३ ॥
श्रीवृक्षैर्निम्बकाशोकै रसनैः क्रमुकैरपि ।
सौवीरैरिङ्गुदीभिश्च रसालैर्वंजुलैरपि ॥ १४ ॥

---

अथ वैश्ययोग्यभूमिलक्षणमाह— **नातिकृष्णेति** । नातिकृष्णवर्णा भूमिः तथा च नातिरक्तवर्णा, तथा प्लक्षवृक्षसमन्विता च भूमिस्तथा दक्षिणायां दिशि नद्यादिजलोपेता भूमिर्नातिनिम्नोन्नतस्थलान्विता च भूमिः वैश्यानां सर्वसंपत्प्रदा भवेत् ॥

अथ शूद्रयोग्यभूमिलक्षणमाह --**कटुमृत्स्नेति** । कटुजलान्विता भूमिः कृष्णवर्णा च भूमिस्तथा वटवृक्षसमन्विता च भूमिस्तथा वारुण्यां दिशि नद्याद्युदकसमन्विता च भूमिस्तथा कठिनस्पर्शा च भूमिश्शूद्रजातानां सर्वक्षेमकारिणीति भावः । इत्येवं चातुर्वर्ण्यभेदेन भूमिलक्षणमुक्तं भवति ॥ १३ ॥

अथ प्रकारान्तरेण सर्वजनयोग्यभूमिलक्षणमाह **श्रीवृक्षैरि**त्यादिना–इह लोके विधात्रा सृष्टेषु तृणादिमहद्वस्तुषु केचित् वृक्षाः कस्मिंश्चिद्देशविशेष एवात्यन्तं फलिता भवेयुः । तादृशवृक्षा एव

केसरैस्सप्तपर्णैर्वा कुद्दालैः कोविदारकैः ।
आरग्वधैर्मधूकैर्वा प्लक्षैर्वा पाटलैस्तु वा ॥ १५ ॥

श्रीपर्णैर्वा शिरीषैर्वा पूतिकैः खदिरैस्तथा ।
नदीभूर्जैर्नक्तमालैर्वेणुभिस्तिनिशैरपि ॥ १६ ॥

नळदैर्वीरणैर्घासैर्नारिकेलैरथापि वा ।
मालत्या कुन्दलतया मुस्तादाडिममंजुलैः ॥
द्राक्षालतासमायुक्ता भूमिरेषा शुभप्रदा ॥ १७ ॥

---

स्थलान्तरे स्थापिता यदि तदा स्वल्पफलदा एव भवेयुः । त एवान्यत्र स्थले स्थापिता यदि तदानीमेवाङ्कुरादिहीना भवन्ति, अथवा कालक्रमेण क्षीणदशां प्राप्नुवन्तीति प्रसिद्धिमालोच्य श्रीवृक्षनिम्बादिवृक्षाणां वर्धनकारिणी भूमिरेव सकलवास्तुकार्याय योग्येति समयः । एवमुत्तमभूमावारोपितास्तरवो विशेषफलदा भवन्ति । मध्यमभूमावारोपिताः स्वल्पफलदाः । अधमभूम्यामारोपिता वृक्षादयः स्वयमेव क्षीणा भवन्तीति प्रसिद्धिमवलम्ब्य श्रीवृक्षाद्युपेता भूमिस्सर्ववास्तुयोग्या । अथवा श्रीवृक्षादिवर्धनकरी च भूमिर्वास्तुयोग्या । तथा मालत्यादिलताविततिवर्धनकारिणी भूमिश्च वास्तुकार्यादिषु विशेषसुखदा भवेदिति भावः । एवमुत्तमभूमेर्लक्षणमुक्तं भवति ॥ १७ ॥

धेनुभिर्हरिणैर्वापि तुरगैर्वा विशेषतः ।
पारावतैः कोकिलैर्वा शुकैः कीरैरथापि वा ॥ १८ ॥

कारण्डैश्चक्रवाकैश्च मयूरैराजहंसकैः ।
गजैर्वा वृषभैर्वापि मेषसङ्घैर्विशेषतः ॥
भूमिरध्युषिता शस्ता सर्ववास्तुषु कीर्तिता ॥ १९ ॥

लघुसैकतसंयुक्ता सुखस्पर्शयुतापि वा ।
निबिडा स्वादुतोयाढ्या समीपजलवर्षिणी ॥ २० ॥

मधुगन्धा पुष्पगन्धा सर्पिर्गन्धा च भूरपि ।
स्थिरवर्णा च भूश्शस्ता सर्ववास्तुषु कीर्तिता ॥ २१ ॥

---

पुनरपि प्रकारान्तरेणोत्तमभूमिलक्षणमाह धेनुभिरित्यादिना—धेनुभिरित्यादिश्लोकद्वयं सुगमम् । पूर्वं धेन्वादिभिरुषिता भूर्वाऽथवा धेन्वादिजीवजन्तूनामन्येषां च विहङ्गानां सौख्यवर्धनकरी भूमिर्वा वास्तुकर्मणि फलदेति भावः । एवमत्युत्तमभूमेर्लक्षणमुक्तं भवति ॥ १९ ॥

लघुसैकतेति । सूक्ष्मासिकतायुता भूमिः सुखस्पर्शा भूमिस्त्रिचतुर्हस्तावधि खनने कृते वापीकूपादौ स्वादुरसजलवर्षिणी च भूः मृत्तिकां प्रति बहुशः परीक्षायामेकवर्णभासुरा भूमिरपि सर्वविधवास्तुकर्मणि प्रशस्ता सर्वेषां जीवानां सर्वेष्वपि समयेष्वत्यन्तसुखप्रदेति भावः ॥ २१ ॥

सा भूमिरुत्तमा ज्ञेया त्रिरात्राङ्कुरवर्धिनी ।
सा मध्यमा च विज्ञेया पञ्चरात्राङ्कुरप्रदा ॥ २२ ॥

मन्दाङ्कुरप्रदा भूमिरधमा चेति गद्यते ।
सा वर्ज्या सर्वकार्येषु बीजानां क्षयकारिणी ॥ २३ ॥

वर्ज्या कण्टकवृक्षैश्च तिग्मवृक्षैर्विदारकैः ।
वल्मीकेन समायुक्ता भूमिरस्थिगणैस्तु वा ॥ २४ ॥

रन्ध्रान्विता च भूर्वर्ज्या गर्ताद्यैश्च समन्विता ।

---

पुनरपि प्रकारान्तरेणोत्तमभूमिलक्षणमाह— सेति । आढकादिबीजे उप्ते सति त्रिरात्रकालात्पूर्वमेव तदङ्कुरकारिण्युत्तमा भूमिः । पञ्चरात्रेष्वङ्कुरप्रदा मध्यमा भूमिः । पञ्चषणिणशागमनानन्तरं क्रमशो मन्दं मन्दमङ्कुरप्रदर्शिनी भूमिरधमा । उप्तबीजानामङ्कुरमप्रदर्श्यैव तत्क्षयकारिणी भूमिस्तु सर्वथा अधमा । सर्वकार्येष्वपि दूरतो वर्ज्येति भावः ॥ २३ ॥

एतावता प्रबन्धेनोत्तमभूमेर्लक्षणं बहुधाविष्कृत्येदानीमधमभूमिलक्षणमाचष्टे— वर्ज्येत्यादिना । कण्टकवृक्षयुक्ता भूमिस्तथा तीव्रोष्णकरवृक्षयुता भूमिः पत्रादिभिर्हिंसाकरैस्तरुभिर्युता भूमिश्च शुभेप्सुभिर्वर्ज्या । तथा वल्मीकयुता भूमिरस्थिशकलयुता भूमिस्सर्वत्र रन्ध्रोपरन्ध्रयुक्ता भूमिः

वराहै रासभैर्व्याघ्रैस्सिंहाद्यैर्दुष्टजन्तुभिः ॥ २५ ॥

भल्लूकैर्वनमार्जालैर्मूषकैर्वृश्चिकादिभिः ।
भूमिरध्युषिता वर्ज्या सर्ववास्तुषु हानिदा ॥ २६ ॥

श्मशानभूसमीपस्था तुषभारैस्समन्विता ।
कम्पेन भेदिता भूमिरग्निदग्धा च सर्वतः ॥ २७ ॥

भूमिरेवंविधा वर्ज्या कार्यज्ञैश्च शुभेप्सुभिः ।

इति विश्वकर्मप्रणीते **विश्वकर्मवास्तुशास्त्रे**

भूपरीक्षाक्रमकथनं नाम

**पञ्चमोऽध्यायः ॥**

---

पृथुगर्तादिनिम्नोन्नतस्थली भूमिश्च वास्तुकर्मणि वर्ज्येति भावः । किञ्च वराहादिभिर्दुष्टसत्वैरध्युषिता भूमिश्च वर्ज्या । भूकम्पेन तत्र तत्र खण्डिता भेदिता च भूमिस्तथाग्निज्वालाभिः समन्ततस्तापिता च भूमिश्शुभेप्सुभिर्वर्ज्येति भावः ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां

विश्वकर्मवास्तुशास्त्रव्याख्यायां

**पञ्चमोऽध्यायः ॥**

## अथ भूमिग्रहणकथनं नाम

## षष्ठोऽध्यायः ॥

परीक्षकैश्शास्त्रविद्भिर्नानोपायैः परीक्षिताम् ।
उत्तमां मध्यमां वापि भूमिं प्राप्य बुधोत्तमः ॥ १ ॥

श्वेतमाल्याम्बरधरैः श्वेतगन्धानुलेपनैः ।
भृत्यैराप्तैश्शुद्धवाग्भिस्सल्लक्षणसमन्वितैः ॥ २ ॥

शुभे मुहूर्ते सल्लग्ने खनित्रादीनथार्चयेत् ।

---

॥ षष्ठोऽध्यायः ॥

अथ परीक्षिताया भूमेस्स्वीकरणप्रकारकथनात्मकं षष्ठाध्यायं विशिनष्टि परीक्षकैरित्यादिना—देवालयायोत्तमभूरेव स्वीकार्या। मनुष्यालयाय तु उत्तमा । तदलाभे मध्यमा च भूः स्वीकार्येत्याद्याप्तपरीक्षकैर्बहुविधैरुपायैस्तत्तत्स्थलानुकूलैः परीक्षिताया भूमेः स्वीकरणं तु विधिवदेव कार्यमिति न्यायमनुसन्धाय तादृशभूपरिग्रहप्रकारं कथयति — नगरपुरग्रामादिवास्तुयोग्येयं भूरिति परीक्षकैश्शिल्पिवर्यैः परीक्षितां निर्दिष्टां भूमिं समीकुर्यात् । तत्पूर्वं तादृशसमीकरणोपकारभूतानां खनित्राद्यायुधानामर्चनं तु सल्लक्षणान्वितैर्भृत्यैः कारयेदित्यनुष्ठानमिदं देवागारमनुष्यागारयोरुभयोरपि तुल्यमिति भावः ॥ २ ॥

नवा भूरथवा पूर्वं प्रजाध्युषितभूर्यदि ॥ ३ ॥

नरेन्द्रैर्ग्रामनिर्माणकार्यार्थं स्वीकृता भवेत् ।
वास्तुनाथार्चनं शस्तं श्रोत्रियैर्वेदपारगैः ॥ ४ ॥

पुण्याहं वाचयेत्पूर्वं विप्रैरागमवेदिभिः ।
प्रोक्षयेत्तज्जलैर्दिव्यैश्शान्तिहोमं च कारयेत् ॥ ५ ॥

वास्तुस्वरूपं विज्ञाय हेमगन्धाक्षतादिभिः ।
वास्तुनाथार्चनं कुर्यात्कारयेद्वा द्विजोत्तमैः ॥ ६ ॥

भूदेवीमर्चयेत्पश्चाद्गन्धपुष्पाक्षतादिभिः ।
तदनुज्ञां समासाद्य शुभकाले प्रसन्नधीः ॥ ७ ॥

भूसमीकरणं कार्यं महोक्षैश्श्वेतवर्णकैः ।
बलिकर्मविधानञ्च राष्ट्रक्षेमकरं भवेत् ॥
ब्राह्मणान्भोजयेत्पश्चात्तोषयेद्दक्षिणादिभिः ॥ ८ ॥

---

अनन्तरकरणीयमाह — नवेति । आदौ स्वेनैव गृहीता नवीना भूमिर्वा पूर्वमेव जलवासान्विता वा भूमिर्यदि तावत् पुरनगरनिर्माणाय यदि गृह्येत, तर्हि नराधिपो वा यजमानो वा तादृशभूमौ शयानस्य वास्तुनाथस्यार्चनं वेदविद्भिर्ब्राह्मणोत्तमैर्यथाविधि कारयेदित्यर्थः ॥ ४ ॥

तदनन्तरकरणीयमाह पुण्याहं वाचयेदित्यादिना— पुण्याहवाचनजलसंप्रोक्षणवास्तुनाथार्चनबलिकर्मविधानानि शास्त्र-

समीकृते स्थले पूर्वमैशान्यां खननं शुभम् ।
वारुण्यामथवा कार्यं शुभकाले विशेषतः ॥ ९ ॥

इष्टिकान्यसनात्पूर्वं पूरयेद्गर्भमादरात् ।
स च विप्रादिभेदेन चतुर्धा सन्निगद्यते ॥ १० ॥

ब्राह्मं गर्भं पूरयेत्तु पुस्तकैर्यज्ञसूत्रकैः ।
क्षात्रं गर्भं पूरयेच्च खड्गच्छत्रादिभिर्दृढम् ॥ ११ ॥

वैश्यं गर्भं पूरयेच्च तुलाद्रव्यादिकैरपि ।
शूद्रं गर्भं पूरयेच्च सीरकैर्वस्त्रकैरपि ॥ १२ ॥

देवालये दैवगर्भे रत्नन्यासो विशेषतः ।

---

संप्रतिपन्नानि । महोक्षैः सीरादिना भूसमीकरणादिकन्तु निर्माणादीनां सौकर्यावहमिति भावः । पुण्याहं वाचयेदित्यादिश्लोकाः स्पष्टार्थाः ॥ ८ ॥

समीकृत इति । पुरनगरग्रामादितत्तद्वास्तुनिर्माणाय परीक्ष्य स्वीकृते स्थले श्वेतवर्णवृषभैरुह्यमानसीराद्यैः निम्नोन्नतरहितं यथा तथा समीकृते सति प्रायशो देशेषु ऐशान्यां कचित् वारुण्यां दिशि शुभकाले खननं कार्यम् । किमर्थं ? प्रथमेष्टिकान्यसनार्थम् । अयमग्रे प्रपञ्च्यते । तादृशप्रथमेष्टिकान्यासात् पूर्वमेव वास्तुभूमध्यदेशे गर्भद्रव्यनिक्षेपणं कार्यम् ॥

दैववास्तुषु सर्वेषु सौवर्णं भाजनं शुभम् ॥ १३ ॥

सौवर्णं राजतं वापि ब्रह्मक्षत्रियवास्तुषु ।
शूद्रजानां विशां शस्तं राजतं भाजनं मतम् ॥ १४ ॥

अन्येषां वास्तुभूमौ तु ताम्रजं भाजनं शुभम् ।
भाजनं पट्टिका वापि पृथुपट्टमथापि वा ॥ १५ ॥

स्त्रीगर्भेण यथा जीवो वर्धते भुवि नित्यशः ।
तथा भूगर्भमाहात्म्यात् जीवराशिस्तु वर्धते ॥ १६ ॥

तत्रत्यानां सुखं दिव्यं यावद्गर्भो न नश्यति ।
तस्माद्गर्भं शिल्पिवरैश्शाश्वतं कारयेद्भुवि ॥ १७ ॥

तच्च चिह्नं लिखेत्पट्टे गन्धपुष्पार्चनं तथा ।
तत्पट्टं भाजने न्यस्य तन्मञ्जूषागतं नयेत् ॥ १८ ॥

वास्तुभूमध्यदेशे तां मञ्जूषां स्थापयेद्बुधः ।
गन्धमाल्यार्चनं शस्तं जयशब्दपुरस्सरम् ॥ १९ ॥

---

स च गर्भन्यासो ब्राह्मणगर्भः क्षत्रियगर्भः वैश्यगर्भः शूद्रगर्भ इति चतुर्धा भवति । देवालयवास्तुभूमौ कार्यो देवगर्भन्यासस्त्वन्य एव भवति । सौवर्णादिनिर्मिते पट्टे यथाविभवं पृथुपट्टे वा तत्तज्जातियोग्यलक्षणानि विलिख्य तं पट्टं सौवर्णादिरचितभाजनान्तरे विन्यस्य तच्च भाजनमयोमय-पेटिकायां संस्थाप्य तान्तु पेटिकां शुभे काले वास्तुमध्यदेशे

आच्छाद्य तां मृदा शिल्पी वास्तुनाथं हृदि स्मरेत् ।
ब्राह्मणांस्तोषयेत्पश्चाद्भोजनाद्यैर्विशेषतः ॥
सर्ववास्तुष्विदं शस्तमीरितं शास्त्रपारगैः ॥ २० ॥

समीकृतस्थले पूर्वमैशान्यां खनने कृते ।
वारुण्यामथवा शस्ते लग्नकाले विशेषतः ॥ २१ ॥
इष्टिकान्यसनं कार्यं स्वस्तिघोषपुरस्सरम् ।

---

खननं कृत्वा तदवटे निक्षिप्य मृदाऽऽच्छाद्य ब्राह्मणान् भोजनादिदानैस्तोषयेदित्यर्थः । देववास्तुकर्मणि सौवर्णमेव भाजनं शस्तम । विप्रक्षत्रियवास्तुषु सौवर्णं राजतं वा शुभप्रदम् । वैश्यशूद्रवास्तुषु रजतनिर्मितभाजनं शस्तम् । अन्येषां वर्णानां वास्तुकर्मणि तु ताम्रनिर्मितमेव भाजनं शस्तमिति विवेकः । ब्राह्मणगर्भपट्टे पुस्तकरूपं यज्ञसूत्ररूपं वा एतदुभयं वा चित्रं लिखेत् । क्षत्रियगर्भपट्टे खड्गरूपं, चामररूपं (छत्रादिरूपं)चित्रं लिखेत । वैश्यगर्भपट्टे तुलारूपं चित्रं लिखेत । शूद्रगर्भपट्टे सीरं वस्त्रं च चित्रं लिखेत् । 'देवालये देवगर्भे रत्नन्यासो विशेषतः' इत्युक्तत्वात्सति विभवे सर्वैरपि सर्वेषु वास्तुषु रत्नन्यासश्च ताम्रादिपट्टेन सह शुभप्रद इति संप्रदायविदः । चिराय यथा गर्भभाजनं न विनङ्क्ष्यति तथा तद्रक्षणोपायो गर्भन्याससमय एवोपायज्ञैश्शिल्पाचार्यवर्गैः कारयेदिति भावः । सर्वमन्यत्सुगममिति ॥ २० ॥

पुरन्ध्रीभिश्च कन्याभिरवटे जलसेचनम् ॥ २२ ॥

कारयेत्कार्यकालज्ञश्शिल्पी सर्वेषु वस्तुषु ।
दीपारोपं हेमवर्षं नानादानानि कारयेत् ॥ २३ ॥

सर्वमङ्गलघोषैश्च स्वस्तिशब्दैश्च शिल्पिराट् ।
वास्तुं प्रदक्षिणीकृत्य वरवस्त्रोत्तरीयकः ॥ २४ ॥

मङ्गलाचरणं कृत्वा प्राप्तस्वर्गादिदक्षिणः ।
कङ्कणश्च करे धृत्वा ज्ञापयेत्कशतक्षकौ ॥ २५ ॥

सम्यक्तप्तं वक्रहीनं ककशं कुङ्कुमान्वितम् ।
सूत्रप्रसारे कलिते वास्तुनिर्माणभूमिषु ॥ २६ ॥

ऐशान्यां विन्यसेत्प्राज्ञः ककशं तं प्रसन्नधीः ।
स्मृत्वा मनसि कार्यज्ञो देवता मङ्गलप्रदाः ॥ २७ ॥

अधोभित्त्यादिकं कृत्वा दृढीकुर्याच्च तद्बुधः ।
रक्षयेच्च यथा तत्र दूषणं न प्रसज्यते ॥ २८ ॥

---

समीकृत इति । शुभकाले पुरन्ध्र्यादिभिरवटार्थं जलसेचनं कार्यम् । तदनु पूर्वोक्तसमीकृतस्थले ऐशान्यां तादृशमवटं कृत्वा समीकृतस्थले ककशं सुतप्तं इष्टिकां ककशकारैर्भित्तिकारैश्च तक्षकैश्च विन्यस्य तदुपरि भित्तिन्यासं कारयेत् । अयमेव प्रथमेष्टिकान्यास इत्युच्यत इति । शेषं सुगममिति । तदा

दृढीकृतेऽथ भित्त्यादिकर्म कुर्याद्यथाविधि ।
इत्येवं तक्षकमुखैः कार्यज्ञैर्ज्ञेयमीरितम् ॥ २९ ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे
भूमिग्रहणकथनं नाम
षष्ठोऽध्यायः ॥

---

स्थपतेः करे कङ्कणधरणम् । वास्तुप्रदक्षिणादिकन्तु शास्त्र-संप्रतिपन्नम् ॥ २९ ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
षष्ठोऽध्यायः ॥



अथ ग्रामलक्षणकथनं नाम

## सप्तमोऽध्यायः ॥

देवतानां नराणाञ्च गजगोवाजिनामपि ।
निवासभूमिश्शिल्पज्ञैर्वास्तुसंज्ञमितीर्यते ॥ १ ॥

वास्तुभूर्विविधा ख्याता स्थलभेदात्क्वचित्क्वचित् ॥ २ ॥

चतुरश्रायता भूमिर्वर्तुला च त्रिकोणगा ।
मर्दलाकारवत्येषा प्रशस्ता वास्तुकर्मणि ॥ ३ ॥

निम्नोन्नता च या भूमिश्शिरोहीना च भूरपि ।

---

॥ सप्तमोऽध्यायः ॥

अथ समग्रग्रामलक्षणात्मकं सप्तमाध्यायमारभते—**देवतानामित्यादिना** । देवनृपगवादीनां वासभूमिर्वास्तुसंज्ञेति शिल्पवेत्तारः । तादृशवास्तुभूमिस्तावत् तत्र तत्र स्थलभेदेन बहुधा ख्याता । तथा चतुरश्रा वास्तुभूमिः, आयता वास्तुभूमिः, वर्तुलाकारा वास्तुभूमिः, त्रिकोणाकारा वास्तुभूमिः, मर्दलाकारा वास्तुभूमिरिति मुख्यतया पञ्चभेदा गण्यन्ते । अत्र त्रिकोणाकारा भूमिर्न वास्तुयोग्येति केचित् । नगरादिषु सा च न दोषायेत्यन्ये । तथा निम्नोन्नता भूमिरत्यन्तं निम्नभूमिश्चात्यन्तमुन्नतभूमिश्च न निर्माणार्हा भवतीति स्फुटमेव ॥

वक्राकृतिश्च भूरन्या वर्ज्या सर्वेषु कर्मसु ॥ ४ ॥
संप्राप्य चोत्तमां वास्तुभूमिं निर्माणकोविदः ।
संप्राप्तद्रव्यराशिश्च यतेत पृथुकर्मणि ॥ ५ ॥
आद्यस्तु मण्डकग्रामः प्रस्तरस्तदनन्तरम् ।
बाहुलीकस्तृतीयस्तु पराकस्तु चतुर्थकः ॥ ६ ॥
चतुर्मुखः पञ्चमः स्यात् षष्ठः पूर्वमुखस्तथा ।
सप्तमो मङ्गलग्रामस्त्वष्टमो विश्वकर्मकः ॥ ७ ॥
नवमो देवराड्ग्रामो विश्वेशो दशमो मतः ।

---

तथा द्वारादिप्रवेशभूमौ वैशाल्यवती क्रमेण वैशाल्ये क्षीयमाणेऽन्ते शिरोहीना शिरसा हीना च भूमिर्न शस्ता । इयमपि प्रायशस्त्रिकोणाकारभूतुल्येति मतिः । भुजगगतिवद्वक्राकृतिर्वास्तुभूमिश्च वर्ज्या । पूर्वाध्याये बहुधा निर्दिष्टामुत्तमां भूमिं स्वीकृत्य समीकरणादि च कृत्वा इष्टिकाशिलादारुमुखानि द्रव्याणि च सङ्गृह्य अनन्तरं समुचितसमये पृथुकर्मणि यतेत । पृथुकर्म तावद्भित्तिनिर्माणादिः ॥ ५ ॥

अथ द्वादशधा ग्रामभेदं विशिनष्टि — आद्यस्त्विति । आद्यो मण्डकग्रामः । द्वितीयः प्रस्तरग्रामः । तृतीयो बाहुलिकग्रामः । चतुर्थः पराकग्रामः । पञ्चमश्चतुर्मुखग्रामः । षष्ठः पूर्वमुखग्रामः । सप्तमो मङ्गलग्रामः । अष्टमो विश्वकर्मग्रामः ।

एकादशस्तु कैलासो द्वादशो नित्यमङ्गलः ॥ ८ ॥

इत्येवं द्वादश ग्रामाः शिल्पशास्त्रे प्रकीर्तिताः ।

एतेषां ग्रामवर्गाणां लक्षणं कीर्त्यते क्रमात् ॥ ९ ॥

॥ तत्र प्रथमस्य मण्डकग्रामस्य लक्षणम् ॥

प्राचीं गता मुख्यवीथी वारुणीं स्पृशते यदि ।

अन्याभिस्तिसृभिर्युक्ता स्थली स्यान्मुख्यवास्तुषु ॥

वारुण्यां देवतागारं विन्यसेच्च क्रमाद्यदि ।

विप्रैरधिकसंख्याकैर्मण्डकग्राम ईरितः ॥ ११ ॥

---

नवमो देवेशग्रामः । दशमो विश्वेशग्रामः । एकादशः कैलासग्रामः । द्वादशो नित्यमङ्गलग्राम इति विवेकः । एतेषां समग्रं लक्षणं क्रमशो वक्ष्यत इति ॥ ९ ॥

तत्राद्यस्य मण्डकग्रामस्य लक्षणमाह — **प्राचीमिति** । पूर्वप्रतिपादितेषु सद्वास्तुषु यत्र स्थले प्राचीदिशो मुख्यवीथी प्रतीचीं दिशं गाहते, यत्र वारुण्यां दिशि शिवस्य विष्णोर्वा मन्दिरं निर्मीयते, तादृशमन्दिरं तां च मुख्यवीथीमावृत्य कुबेरेन्द्रयमादिग्भाजस्तिस्रोऽन्या विपुला वीथ्यो वर्तन्ते; अत्र च इतरजनसंख्यापेक्षया विप्राणामेवाधिकसंख्या भवति, तं मण्डकग्राममिति सिद्धान्तिनो वदन्तीति भावः ॥ ११ ॥ १ ॥

अथ द्वितीयस्य प्रस्तरग्रामस्य लक्षणम् ॥

प्राक्प्रतीचीप्रतोल्यस्तु चतस्रः संमुखान्विताः ।
तथैव यत्र संभक्ता दक्षिणाधनदाशयोः ॥ १२ ॥

मध्यगा सैव वीथी तु मध्यवीथीति गद्यते ।
मध्यभागस्थितं शर्वमन्दिरं सुन्दराकृति ॥ १३ ॥

परिघाकारवीथी वा परितः परिघापि वा ।
पूर्वद्वारसमोपेतं प्रत्यग्भागजलाशयम् ॥ १४ ॥

---

अथ द्वितीयस्य प्रस्तरग्रामस्य लक्षणमाह — प्रागित्यादिना । यत्र ग्रामे प्राचीं दिशमारभ्य वरुणदिग्गामिन्यश्चतस्रो वीथ्यस्तथैव दक्षिणां दिशमारभ्योदीचीदिग्गामिन्यः चतस्रो वीथ्यो वर्तन्ते, सोऽयं ग्रामो नाम्ना प्रस्तरग्राम इति भण्यते ॥

अस्मिन्प्रस्तरग्रामे सर्वा अपि वीथ्यः परस्परं सम्मुखगृहान्विताः कार्याः । किञ्चात्र सर्वत्र वीथीषु मध्यगामिनी या तिर्यग्वीथी तस्या एव मध्यवीथीति व्यवहार इति भावः । ग्रामस्यास्य मध्यभाग एव शिवस्य मन्दिरनिर्माणङ्कार्यम् । किञ्चामुं ग्रामं परितो लघुपरिखां वा परिखाकारवीथीं वा कारयेत् । अपि च ऐन्द्रयामेव दिशायामस्य ग्रामस्य मुख्यमार्गकल्पनामित्युक्तत्वात् अस्यैन्द्रदिग्गतो मुख्यो मार्ग एक एव

विपणिश्चाप्यथैशान्यां बहुवस्तुसमावृता ।
विप्रैरधिकसंख्याकैस्स युक्तः प्रस्तरो मतः ॥ १५ ॥

अथ तृतीयस्य बाहुलिकग्रामस्य लक्षणम् ॥

प्राक्प्रतीच्योः पञ्च वीथ्यो वर्तन्ते विपुला यदि ।
तथैव याम्यां कौबेरीमाश्रिताः पूर्वदिङ्मुखाः ॥

लघुवप्रेण संयुक्तो विपण्यादिभिरावृतः ।
मध्ये शिवस्थलोपेतो दक्षिणस्थजलाशयः ॥ १७ ॥
नानाजातिभिराकीर्णो ग्रामपालालयान्वितः ।

---

नान्यत्रेति सूच्यते । वापीतटाकादिकन्तु वारुण्यां दिश्येव । विपणिस्त्वैशान्यामेव कार्येति । किञ्चेतरजनगृहापेक्षया विप्रजातिगृहाधिक्यमेवात्रेति प्रस्तरग्रामलक्षणार्थः ॥ १५ ॥

अथ तृतीयस्य बाहुलिकग्रामस्य लक्षणमाह — **प्रागिति** । यत्र ग्रामे प्राचीदिगारब्धाः विपुलाः पञ्च वीथ्यः प्रतीचीं दिशं भजन्ति, सोऽयं ग्रामो बाहुलिक इति निगद्यते ॥

किञ्चास्य ग्रामस्य प्रतीच्यामेव मुख्यद्वारं कल्पनीयम् । ग्रामस्यास्य मध्यभाग एव शिवमन्दिरनिर्माणमपि शस्तम् । ग्रामोऽयं लघुवप्रेण संवृतो भवति । बहुवस्तुसमृद्धविपणिमन्याञ्च सौकर्यकारिणीं शालां यथेष्टस्थले स्थापयेदिति भावः । नैर्ऋत्येनात्र जलाधारभूमिस्तटाकादिः दक्षिणस्यामेव

सस्यभूमिसमायुक्तो ग्रामो बाहुलिकः स्मृतः ॥ १८ ॥

अथ चतुर्थस्य पराकग्रामस्य लक्षणम् ॥

एकवीथ्या समायुक्तः कौबेर्यामीशगेहभाक् ।
सहस्रजनता यत्र विप्रहीना च भण्यते ॥ १९ ॥

यस्यां जलाशयोपेतः कार्षिकैर्बहुभिर्युतः ।
पश्चिमद्वारसंयुक्तः परिघासंवृतोऽपि वा ॥ २० ॥

याम्यभाग्विपणिश्चैव शालीसस्यरसान्वितः ।
सोऽयं ग्रामश्शास्त्रविद्भिः पराक इति कीर्त्यते ॥

---

कार्यः । किञ्चायं ग्रामो ग्रामाधिपालयसमेतो बहुजातिजनाकुलश्च । किञ्चामुं ग्रामं परितः सस्ययोग्यभूमिश्च शस्तेति बाहुलिकग्रामलक्षणार्थः स्फुटः ॥ १८ ॥

अथ चतुर्थस्य पराकग्रामस्य लक्षणमाह— **एकवीथ्येति** । यत्र स्थले एका मुख्यवीथी अतिदीर्घा वर्तते, उत्तरस्यां दिशि कल्पितं शिवमन्दिरम्, प्रादक्षिण्यक्रमेणावृता चतुरश्रा वर्तुला वा वीथी क्रियते, यत्र विप्राणां संख्या हीनाऽन्येषां संख्याधिक्यमाहातिक्रमेण किञ्चिन्न्यूनाधिकसहस्रजनता गण्यते, यत्र च दक्षिणस्यां दिशि तटाकादिजलाधारः, प्रायशः कृषीवलैरेवाक्रान्तः, वारुण्यां मुख्यद्वारेण संयुतश्च । परिखासंवृतोऽपि वेत्युक्तत्वात्केषाञ्चिन्मते पराकग्रामस्यास्य परिखावृतत्वमप्यभिप्रेतमिति भावः ॥

अथ पञ्चमस्य चतुर्मुखग्रामस्य लक्षणम् ॥

चतुर्दिक्स्थचतुर्द्वारं मध्यभाग्देवमन्दिरम् ।
पञ्च वीथ्यः प्रतिदिशमथवा द्वादश स्मृताः ॥ २२ ॥

लघुवप्रेण संयुक्तो नानाजातिजनान्वितः ।

---

किञ्च याम्यां दिशि क्षुद्रविपण्याद्युपेतः । सर्वत्रादिशब्देन कुलालम्बष्ठरजकादिजातीनां ग्रामकार्यधुरन्धराणां गृहाद्युपेतत्वमुक्तं भवतीति प्रसिद्धिः । प्रायशोऽयं ग्रामस्सस्यभूमिपरिवृतश्च भवतीत्यादिलक्षणं यत्र संभवति सोऽयं पराकग्राम इति पूर्वेण संबन्धः ॥ २१ ॥

अथ पञ्चमस्य चतुर्मुखग्रामस्य लक्षणमाह — **चतुर्दिक्स्थचतुर्द्वारमिति** । यत्र ग्रामे प्राच्यादिषु चतसृषु दिक्षु द्वारचतुष्कं क्रियते, ग्रामस्य मध्यमभागे देवतायतनं क्रियते, तदायतनं परितश्चतसृष्वपि दिक्षु पञ्च वीथ्यः कल्प्यन्ते । यथैका मुख्या प्रतोलिका तदुभयतः प्रतोलिकाद्वयमिति । तथा चाहतिक्रमे विंशतिर्वीथिकायुतग्राम इति विवेकः ॥

अथवा प्रतिदिशं द्वादशवीथिकायुतो वा कल्प्यते, तदात्वेऽष्टचत्वारिंशद्वीथिकायुत इत्यर्थः । तदा महाचतुर्मुखग्राम इति नामभागिति केषाञ्चिन्मतम् । सोऽयं ग्रामश्शास्त्रविद्भिः चतुर्मुखग्राम इतीर्यत इति भावः । किञ्चायं चतुर्मुखग्रामो लघुवप्रेण

ऐन्द्रयामपि च वारुण्यां वाप्यादिजलसंयुतः ॥ २३ ॥

दक्षिणस्यां पण्यवीथी तत्रैव ग्रामपालकः ।
भूपालाज्ञाकरी शाला कौबेर्यां कल्पिता यदि ॥
सोऽयं ग्रामश्शास्त्रविद्भिश्चतुर्मुख इतीरितः ॥ २४ ॥

अथ षष्ठस्य पूर्वमुखग्रामस्य लक्षणम् ॥

प्राच्यां मुखद्वारयुतः परिखावृतवास्तुकः ।
वैश्यसंख्याधिक्ययुतः पण्यवीथीभिराकुलः ॥ २५ ॥

---

युतोऽपि शस्त एव, नानाजातिजनान्वितश्च भवति । ग्रामस्यास्य वारुण्यामैन्द्रयां च दिशि वापीतटाकजलाशयादिः कार्यः । दक्षिणस्यां विपणिः, तत्रैव ग्रामपालकार्यालयश्च कार्य इत्यर्थः । तत्समसूत्र-प्रसारणे भागे उदीच्यां भूपालाज्ञाकरी शाला कार्या । भूपालाज्ञाशाला तावत्तत्तन्न्यायादिकथनसभेत्यर्थः; प्राड्विवाकादिशालेति यावत् । इत्येवं चतुर्मुखग्रामलक्षणमुक्तं बोध्यम ॥ २४ ॥

अथ षष्ठस्य पूर्वमुखग्रामस्य लक्षणमाह— प्राच्यामिति । यत्र स्थले मुखद्वारं प्राच्यां दिशि क्रियते । किञ्च यत्र स्थले विशेषमहिता वास्तुभूमिः परिखावृता च क्रियते, तादृशोऽयं ग्रामः पूर्वमुख इति पूर्वैर्महर्षिभिरुदीर्यत इति श्लोकार्थः ॥

नानाजातिभिराकीर्णो नृपालयसमन्वितः ।
उदीच्यामथ वारुण्यां देवतायतनं शुभम् ॥ २६ ॥

तत्र तत्र जलोपेतत्रिंशद्वीथीभिरावृतः ।
उपवीथीयुतो वापि पुरद्वारेण संयुतः ॥ २७ ॥

ग्रामकार्यकरैरन्यैः संयुतश्च समन्ततः ।
नाम्ना पूर्वमुखग्रामः कथितोऽयं महर्षिभिः ॥ २८ ॥

अथ सप्तमस्य मङ्गलग्रामस्य लक्षणम् ॥

प्राच्यामपि च वारुण्यां मुखद्वारसमन्वितः ।
प्राचीदिशः प्रतीचीगाश्चतस्रो वीथिकास्तथा ॥ २९ ॥

---

किञ्चायं ग्रामो नानाजातिजनावासभाक् च भवति । राजकीयव्यवहारभवनान्वितश्च भवति । उदीच्यां वारुण्यां वा दिशि देवमन्दिरं स्थाप्यम् । तत्र तत्र तटाकवाप्याद्युपेतास्त्रिंशत्प्रतोल्यः कल्पनीयाः । क्वचिदुपवीथ्यादिकल्पनमैच्छिकमिति । किञ्च ग्रामकार्यकरैः कुलालाम्बष्ठरजकादिभिः गेहानिर्माणञ्च तत्र तत्र यथास्थलं कार्यमिति । एतादृशलक्षणोपेतपूर्वमुखग्रामस्य पुरद्वारञ्च महत्पीठोपेतं कार्यमित्येवं पूर्वमुखग्रामलक्षणार्थः ॥ २८ ॥

अथ सप्तमस्य मङ्गलग्रामस्य लक्षणमाह — **प्राच्यामिति ।** यस्यां वास्तुभूमौ प्राच्यां प्रतीच्याञ्च दिशि गमनागमनयोग्यं मुखद्वारयुतं कल्प्यते । तथा प्राचीदिशः प्रतीचीगाश्चतस्रो

याम्यकौबेरगा वीथ्यः षड्भागेन समन्विताः ।
चतुर्विंशत्प्रतोलीभिर्युक्तः परिघयावृतः ॥ ३० ॥

प्रतीच्यां मध्यभागे वा देवतायतनं शुभम् ।
गोपुरेण समायुक्तो ग्रामान्तरपथा युतः ॥ ३१ ॥

नानाजातिभिराकीर्णो विपण्यादिभिरावृतः ।
मठमण्टपसंयुक्तो जलाधारसमन्वितः ॥

---

विपुला वीथ्यस्तथैव दक्षिणोत्तरगाश्चतस्रो वीथ्य एकभागभाजो भवन्ति, तस्या वास्तुभूमेर्मङ्गलग्राम इति शास्त्रपारगा वदन्तीति विवेकः ॥

ग्राममिमं षड्भागं विभज्य प्रतिभागस्थलं वीथीचतुष्कयुतं कृत्वा तत्स्थलं परितः परिघामगाधाञ्च कारयेत् । तथा चाहति-क्रमेणास्य ग्रामस्य चतुर्विंशत्प्रतोलिका भवन्तीति भावः । सौधावल्युपेताया वीथ्याः प्रतोलिकेति नामान्तरम् । किञ्च अस्मिन्मङ्गलग्रामे वारुण्यां दिश्यथवा मध्यभागे स्वेष्टदेवतायतनं कारयेत् । पूर्वोक्तमुखद्वारयुतन्तु गोपुरेण युतं ग्रामाद्ग्रामान्तर-गमनयोग्यपृथुपथा च संयुतं करणीयम् । तथा नानाजनान्वितो विपण्यादिभिश्चोपेतोऽयं ग्रामो भवति । आदिशब्देन शाकादि-विक्रयस्थलं सर्वोपजीविनामावासशालादिरुच्यते । किञ्चास्मिन् मङ्गलग्रामे यतीनामावासयोग्यो मठः कार्यः, देवोत्सवार्थं

नाम्नायं मङ्गलग्रामो भण्यते शास्त्रपारगैः ॥ ३२ ॥

अथाष्टमस्य विश्वकर्मग्रामस्य लक्षणम् ॥

नदीतीरगता प्रायः उत्तमा वास्तुभूरपि ।
पूर्वपश्चिमगं द्वारमथवा दक्षिणोत्तरम् ॥ ३३ ॥

भूलाभे द्वाश्चतुष्कं स्याद्वप्रेणापि समावृतम् ।
चतुरश्रा वास्तुभूमिरथवा दैर्घ्यमानिता ॥ ३४ ॥

वारुण्यामैशगेहेन विपुलेन समन्वितम् ।

---

मण्टपाश्च । किञ्च सर्वा अपि वीथ्यस्तत्र तत्र सुखलभ्य-जलाधारयुताश्च कार्या इति मङ्गलग्रामलक्षणार्थः ॥ ३२ ॥

अथाष्टमस्य विश्वकर्मग्रामस्य लक्षणमाह — **नदीतीर-गतेत्यादिना** । नदीतीरगतां पूर्वोक्तप्रकारेणोत्तमां वास्तुभूमि-मासाद्य यदि तत्र ग्रामनिर्माणमधःप्रदर्शितलक्षणोपेतं क्रियते सोऽयं विश्वकर्मग्राम इति नामभाग्भवति ॥

कथंभूतोऽयं ग्राम इति चेद्विवृणोति — ग्रामस्यास्य वास्तुभूमिश्चतुरश्रा वा दैर्घ्यान्विता वा स्वीकार्या । तस्यां भूमौ प्राच्यां वारुण्यां च दिशि समसूत्रप्रसारं मार्गद्वयं कल्पनीयम् । अथवा तादृशस्थलसौकर्याभावे दक्षिणोत्तरदिग्गतं वा मार्गद्वय-कल्पनं सोपपीठं कार्यम् । यदि विशेषतो भूलाभस्तर्हि प्राच्या-दिषु चतसृष्वपि दिक्षु द्वारचतुष्कं समसूत्रप्रसारं समलक्षणभाक्

काळीभवनकेनापि प्राच्यां दिशि समन्वितम् ॥ ३५ ॥

वापीकूपादिकैर्युक्तं निष्कुटैश्च समावृतम् ।
दक्षिणोत्तरगा वीथ्यो द्वात्रिंशत्संख्यगा मताः ॥३६॥

प्राक्प्रतीचीगता वीथ्यष्षट्संख्याश्च (नियोजिताः) ।
तत्तत्स्थलवशात्क्षुद्रवीथिका च प्रकीर्तिता ॥ ३७ ॥

मठमण्टपसंयुक्तं वैद्यालयसमन्वितम् ।
पक्षद्वयगृहोपेता वीथ्यस्तास्संप्रकीर्तिताः ॥ ३८ ॥

षट्सहस्रावधिजनैरावृतश्च समन्ततः ।
नरपालालयोपेतं न्यायवित्सभया युतम् ॥ ३९ ॥

---

च कारयेत् । विपुलमीशगेहं वारुण्यां, काळीभवनं च प्राच्यां दिशि स्थापयेत् । काळीभवनकेनेति कप्रत्ययेन ईशगेहापेक्षया देवीभवनस्य दैर्घ्यादिमाने किञ्चिद्धीनत्वमुक्तमिति भावः । अपि चायं ग्रामस्सर्वत्र बहुभिर्वापीकूपतटाकादिभिरारामैश्चोपेतः कार्यः ॥

किञ्चात्र ग्रामे प्राक्प्रतीचीगताष्षडेव विपुला वीथ्यः । दक्षिणोत्तरगाः प्रतोल्यस्तु द्वात्रिंशदिति वीथीनामुपवीथीनां च संख्येति भावः । यत्यादीनामावासयोग्यो मठः, देवोत्सवोचितो मण्टपादिः, वैद्यशाला प्रसिद्धा, एतैरुपेतो भवति । किञ्चात्र ग्रामे पूर्वोक्ता अष्टात्रिंशद्वीथ्यस्सर्वा अपि पक्षद्वयगृहान्विताः कार्याः । उपवीथीनान्तु नेदं लक्षणमुपपद्यते । किञ्चात्र षट्सह-

ग्रामकार्यकरैस्सर्वैरन्वितश्च वणिग्गणैः ।
पण्यवीथीभिराकीर्णं धनिकैश्च समन्वितम् ।
वास्तुचिह्नमिदं नाम्ना विश्वकर्मेति चोदितम् ॥ ४० ॥

अथ नवमस्य देवेशग्रामस्य लक्षणम् ॥

कालीहरिहरादीनां दिक्पालानाञ्च सर्वशः ।
देवायतनसंयुक्ता प्राक्पश्चिममुखान्विता ॥ ४१ ॥
विशेषतो जलोद्धारिभूरियं परिकीर्तिता ।
पक्षद्वयगृहोपेताः त्रिंशद्वीथ्यः प्रकीर्तिताः ॥ ४२ ॥
वीथीद्वयञ्चैकपक्षमैच्छिका क्षुद्रवीथिका ।

---

स्त्रावधि जनता शस्ता भवति । यो नृपालयः, या च न्यायवादिनां सभा, ये च ग्रामकार्यकराः कुलालाम्बष्ठरजकादयः, क्रयविक्रयजीविनो ये च वणिग्गणाः, सर्वेषां पाकादिकार्योचितपण्यशालाढ्या या चापणभूः, धनवन्तश्च ये कीर्तिताः, एतैस्सर्वैरप्युपेतोऽयं ग्रामो विश्वकर्मग्रामस्सर्वेष्वपि ग्रामेषूत्तम इति अस्य ग्रन्थकर्तुराशयः प्रतीयते ॥ ४० ॥

अथ नवमस्य देवेशग्रामस्य लक्षणमाह — **कालीति** । विशेषतो जलाधारसहितायां यस्यां वास्तुभूमौ कालीहरिहरदिक्पालचण्डीगणपतिषण्मुखादीनां बहूनां देवानामायतनं क्रियते, प्राक्पश्चिमदिग्गतं मुख्यमार्गद्वयं च कल्प्यते । पक्षद्वयगृहोपेतानां

नानाजातिभिराकीर्णा मण्टपारामसंवृता ॥ ४३ ॥

पण्यजीविभिराकीर्णा शिल्पज्ञैरपि भूषिता ।
धनाढ्यसदनोपेता गोवाजिगणसङ्कुला ॥

वास्तुभूमिरियं नाम्ना देवेशग्राम ईरितः ॥ ४४ ॥

अथ दशमस्य विश्वेशग्रामस्य लक्षणम् ॥

दक्षिणोत्तरगाः पञ्च वीथ्यस्सुविपुला यदि ।
प्राक्प्रतीचीगताः पञ्च वीथ्यश्च क्षुद्रकोणगाः ॥ ४५ ॥

---

वीथीनां त्रिंशत्कमेकपक्षगृहयुतं वीथीद्वयञ्चाहत्य द्वात्रिंशद्वीथिकाः यथोचितं स्थाप्यन्ते । वास्तुभूमिरियं नाम्ना देवेशग्रामः कीर्त्यत इति भावः ॥

नानाजातिभिरित्यादिः स्पष्टार्थः । शिल्पज्ञा इत्यत्र लोहकारतक्षकसुवर्णकारचित्रकारसूचीकर्मविन्मुखा बहवः कार्यज्ञा इति भावः । किञ्चात्र विशेषतो गवां वाजिनां च प्रसार इति पूर्वस्मात् भेद ऊह्यः ॥ ४४ ॥

अथ दशमस्य विश्वेशग्रामस्य लक्षणमाह — **दक्षिणोत्तरगा इति** । यस्यां वास्तुभूमौ दक्षिणोत्तरमुखा विपुलाः पञ्च प्रतोल्यस्तथैव सममानाः प्राक्प्रतीचीगताः क्षुद्रवीथिकाख्योपजीविभिर्युताश्च पञ्च वीथ्यः कल्प्यन्ते । सेयं वास्तुभूमिर्विश्वेशग्राम इति विबुधैः सन्निगद्यत इति लक्षणार्थः ॥

प्राकारेण समायुक्तमैशगेहं तु मध्यमम् ।
वणिग्जनसमाकीर्णं परिखाद्यैस्समन्वितम् ॥ ४६ ॥

मठमण्टपकूटाद्यैश्शिल्पशालादिभिर्युतम् ।
द्विसहस्रजनोपेतं यद्वास्तु परिगण्यते ॥ ४७ ॥

नाम्ना विश्वेश्वरग्रामः कथितो विबुधोत्तमैः ॥ ४८ ॥

---

कीदृशलक्षणान्वितो ग्राम इति चेत उच्यते —यथास्मिन्ग्रामे दीर्घेणोन्नतेनैकेन प्राकारेण समावृतमैशायतनं मध्यवास्तुभूमिभाक्कारयेत् । पक्षयोरुभयोरपि द्वे द्वे वीथ्यौ निर्माय तादृशैशगेहप्राकारसमीपगां चैकामतिविपुलामितरप्रतोल्यपेक्षया वैशाल्याधिक्यसंयुतां वीथीं निर्मापयेदित्यर्थः । देवालयमुखगोपुरसमीपगामेकामतिविपुलामितरप्रतोल्यपेक्षया वैशाल्याधिक्यसंयुतां वीथीं निर्मापयेदित्यर्थः । देवालयमुखगोपुरसमीपगा चैषा वीथी तु पक्षद्वयगृहान्विता कार्या । अस्या एव वीथ्या 'देवस्य सन्निधिवीथी' इति नामान्तरम् । तथा देवायतनवप्रसमीपगायाः प्रतोल्याः 'माठवीथी' इति च विन्ध्यस्य दक्षिणदेशेषु प्रायशो व्यवहार इति समयः । विन्ध्यस्योत्तरे देशे तु तस्या एव सन्निधिवीथ्याः 'सहीका' इति भाषया प्रसिद्धिरित्यलं विस्तरेण । वणिग्जनसमाकीर्ण इत्यादिकः स्पष्टार्थः । किञ्चामुं ग्रामं लघुपरिखया वा समावृतं पृथुपरिखया वा समावृतं च कारयेदिति वाक्यार्थस्सुगमः ॥ ४८ ॥

अथैकादशस्य कैलासग्रामस्य लक्षणम् ॥

समुद्रतीरगां भूमिमथवा गिरिसानुगाम् ।
वर्तुलां वास्तुभूमिं वा चतुरश्रामथापि वा ॥ ४९ ॥

उत्तमां भूमिमासाद्य भवनादिकृते शुभम् ।
मुख्यमार्गयुतं प्राच्यां परिखावप्रयुक्तथा ॥ ५० ॥

देवतायतनं मध्यवास्तुगं गोपुरान्वितम् ।
वापीकूपतटाकादि वारुण्यां कल्पितं यदि ॥ ५१ ॥

वणिग्जनसमाकीर्णं निषद्यादिभिरन्वितम् ।

---

अथैकादशस्य कैलासग्रामस्य लक्षणमाह — **समुद्रतीरगामित्यादिना** । समुद्रतीरगा भूमिः, गिरिसानुस्थिता भूमिः, वर्तुला भूमिः, चतुरस्रा च भूमिः । एवंविधास्सर्वा अपि वास्तुभूमयो यदि उत्तमगुणोपेतास्तदा तासु भवनादिकं कार्यमित्युक्तत्वात् कैलासनामभाजोऽस्य ग्रामस्य भूमिस्समुद्रतीरगा वा गिरिसानुगा वा स्वीकार्येत्याशयः ॥

किञ्च, ग्रामस्यास्य मुख्यो मार्गः प्राच्यां दिशि कल्पनीयः । किञ्चास्य सर्वत्र परिखा वा वप्रभित्तिर्वा एतदुभयं वाऽवश्यं कार्यम् । गोपुरान्वितं देवागारं तु ग्रामस्यास्य मध्यभागे निर्मापणीयम् । वारुण्यां दिशि जलाशयः कार्यः । अपि

ब्राह्मणैस्समतां यातैरन्यैश्च बहुभिर्युतम् ॥ ५२ ॥

दक्षिणोत्तरगं वीथीचतुष्कं विपुलं मतम् ।
स्थलानुकूलं निर्माय चोपवीथीश्च सर्वतः ॥ ५३ ॥

प्राक्प्रतीचीगता वीथीः कल्पयेत्स्वेच्छया बुधः ।
तद्वास्तु विबुधैः प्रोक्तं नाम्ना कैलासनामभाक् ॥

अथ द्वादशस्य नित्यमङ्गलग्रामस्य लक्षणम् ॥

चतुर्दिक्स्थचतुर्द्वारं महागोपुरसंयुतम् ।

---

चास्मिन्ग्रामे ब्राह्मणजनसंख्या यावती वर्तते तावत्येव संख्या इतरेषां सर्वेषामपि जनानां भवितव्येति चान्यो नियमः। वणिग्जनसमाकीर्णा विपण्यादयस्तु स्थलानुकूल्येन तत्र तत्र स्थाप्या इति भावः। अत्र ग्रामे विपुलं वीथीचतुष्कं दक्षिणोत्तर-दिग्गामि भवेत्। तथैव वीथीचतुष्कमपि प्राक्प्रतीचीदिग्गतं कार्यम्। क्षुद्रवीथिकामुपवीथीं तु स्थलसौकर्यानुगुणं सर्वतः प्राच्यादिषु भागेषु कारयेत्। एतादृशलक्षणान्वितोऽयं ग्रामः कैलासनामभागिति शिल्पसिद्धान्ते निगद्यत इति स्फुटम् ॥ ५४ ॥

अथ द्वादशस्य नित्यमङ्गलग्रामस्य लक्षणमाह —
**चतुर्दिक्स्थचतुर्द्वारमिति**। यत्र स्थले प्राच्यादिषु चतसृषु दिक्षु चतुर्मार्गकल्पनं निर्मीयते। तेषां चतुर्णां प्राच्यादिद्वाराणामुपरि

महापथेन संयुक्तं सर्वतः परिखावृतम् ॥ ५५ ॥
वीथ्यष्टकसमोपेतचतुर्भागसमन्वितम् ।
मघवन्मित्रवरुणयक्षाख्याधिपसंयुतम् ॥ ५६ ॥

सर्वभागास्तुल्यमाना नोपवीथ्यादि कीर्तितम् ।

---

त्रितलसमन्वितं पञ्चतलसमन्वितं वा गोपुरं च क्रियते । तादृशचतुर्द्वारमार्गस्तु प्रतिदिशं बहुदूरदेशमार्गसहितश्च क्रियते । यच्च वास्तुस्थलं सर्वतः परिखया वृतञ्च क्रियते । तस्य नित्यमङ्गलग्राम इति नाम प्रसिद्धम् ॥

अस्य ग्रामस्य लक्षणान्तराणि यथा—अस्य समग्रां वास्तुभूमिं सूत्रप्रसारणेन सममानं चतुर्भागं कृत्वा एकैकस्मिन्नपि भागे विपुलं वीथ्यष्टकं कारयेत । आहत्य चतुर्ष्वपि भागेषु द्वात्रिंशद्वीथ्यो भवन्तीत्याशयः । अत्र तु क्षुद्रवीथीं वा उपवीथीं वा कुत्रापि न कारयेदिति नियमः ॥

किञ्चात्र पूर्वोक्तवास्तुभूभागचतुष्कस्य इन्द्रः, रविः वरुणः, यक्षेशश्च मुख्या अधिदेवता इत्युक्तत्वात्, एकैकास्मिन्नपि भागे तादृशेन्द्रादिदेवानां तत्तद्भागाधिपानामालयः कार्य इति । यथा—पूर्वोक्तवास्तुभूमौ प्राच्यां दिशि इन्द्रस्यायतनं कार्यम् । दक्षिणस्यां दिशि रवेरायतनम्, प्रतीच्यां दिशि वरुणस्यायतनम्, उदीच्यां दिशि धनाधिपस्यायतनमिति विवेकः । एते

हरेर्हरस्य देवीनां काल्यादीनां रवेरपि ॥ ५७ ॥

गोपुरेण समायुक्तं सभामण्टपसंयुतम् ।
तटाकाद्यैस्समायुक्तं भवनं मध्यवास्तुभाक् ॥ ५८ ॥

षट्सहस्राधिकजनैः संयुतं च समन्ततः ।
वणिग्जनसमाकीर्णं तन्तुवायादिभिर्युतम् ॥ ५९ ॥

ग्रामकार्यकरैस्सर्वैरन्यैश्च बहुभिर्युतम् ।
नरपालालयोपेतं न्यायवित्सभया युतम् ॥

निर्माणं यत्र स ग्रामो नित्यमङ्गलनामभाक् ॥ ६० ॥

---

देवाः क्रमशस्तत्तद्वास्तुभूवासिनां जनानां बलारोग्यपुष्टिधनवृद्धि-प्रदा मता इति प्रतीतिः ॥

एतेषामिन्द्रादिदेवानां क्षुद्रायतनमेव कार्यम् । महाभवनं तु हरेर्लक्ष्म्याः, हरस्य गौर्याश्च । अन्यासां काल्यादीनां नगरग्रामाधिदेवीनामायतनन्तु महागोपुरसभामण्टपतटाकादिनिर्माणसहितं कारयेदित्यर्थः । कुत्र ? नित्यमङ्गलस्यास्य ग्रामस्य मध्यभाग एव । अत्र सर्वत्र नानाजातिजनानां षट्सहस्रसंख्याया अधिकानामपि वास इति । किञ्चायं ग्रामः बहुविधवणिग्जनोपेतः तन्तुवायादिभिः कुविन्दादिभिर्वस्त्रकारादिभिः सहितः कुलालाम्बष्ठादिग्रामकार्यकरैश्च सहितः न्यायवित्सभया युतश्च भवतीति । अयमेव सर्वेषु

अथ मानकथनम् ॥

इष्टिका च शिला दारुरयःकीलादयोऽप्यमी ।
वास्तुकर्मणि चान्यत्र वस्तुसंज्ञमुदीरितम् ॥ ६१ ॥

तद्वस्तु मानयेच्छिल्पी मानदण्डेन सर्वतः ।
तस्मान्मानं शिल्पिवर्गैरवश्यं ज्ञेयमीरितम् ॥ ६२ ॥

मानज्ञानविहीनैस्तु कर्म कर्तुं न शक्यते ।
कृतश्च कर्म वैफल्यं भजते नात्र संशयः ॥ ६३ ॥

---

ग्रामेषूत्तम इति केषाञ्चिन्मतम । तदात्वे वैद्यशालापाठशाला-द्युपयोगिनीनां शालानां निर्माणमपि कार्यमिति प्रपञ्चितम ॥

'प्राचीं गता मुख्यवीथी, इत्यादिना एतावता प्रबन्धेन द्वादशविधग्रामाणां समग्रलक्षणमुक्तं भवति । एकत्र सल्लक्षण-मुपहितं तदपेक्षया गुरुणि ग्रामान्तरे तदेव लक्षणमनुसन्धेयमिति न्यायविदां क्रममनुसृत्यैवात्र दिव्येन विश्वकर्मणा ग्रन्थकर्त्रा एतादृशलक्षणमुक्तमिति भावः । ग्रामेष्वेषूपपादितानां वीथ्या-दीनामायामादिमानन्तु माननिरूपणानन्तरमुक्तं ज्ञेयम । अत्र तु यान्यनुक्तानि लक्षणानि तानि सर्वाणि यथाक्रमं ज्ञेयानि सूक्ष्मदर्शिभिरिति नोक्तं विस्तरेणेति ॥ ६० ॥

इत्थंप्रकारेण द्वादशधा प्रतिपादितानां ग्रामाणामुत्तरत्र प्रतिपादयिष्यमाणानां नगराणामन्येषाञ्च शिल्पकार्याणामत्यन्तो-

तन्मानं बहुधा प्रोक्तं तज्ज्ञेयं सूक्ष्मचक्षुषा ।
स्वर्गे लोके मानमादौ गुरुणा संप्रकीर्तितम् ॥ ६४ ॥

विविधं तच्च मघवा प्रोक्तवान्सुरसंसदि ।
दैवेन नन्दिना तच्च बहुधाविष्कृतं पुरा ॥ ६५ ॥

तदेव विविधं प्रोक्तं नारदेन महर्षिणा ।
मानमेवं बहुविधं कथितं पूर्वसूरिभिः ॥ ६६ ॥

देवमानुषभूपालप्रासादेषु गृहेषु च ।
मण्टपेषु विमानेषु गोपुरे तोरणेऽपि च ॥ ६७ ॥

सोपानेषु प्रतोलीषु वापीकूपादिकेषु च ।
विविधासु च शालासु चन्द्रशालादिकासु च ॥ ६८ ॥

डोलादिषु गवाक्षेषु खट्वासु प्रतिमासु च ।
उपपीठेषु पीठेषु सिंहवक्त्रादिकेषु च ॥ ६९ ॥

अन्येषु शिल्पकार्येषु यन्मानं तच्च योजयेत् ।
मानाभावे क्रियादीनां न शोभा न बलादिकम् ॥

---

पयोगिमानलक्षणमाह — इष्टिका च शिलेत्यादिना । इष्टिकाशिलादारुखण्डायःकीलादीनां गृहभवननिर्माणोपयोगिनां वस्तुनामभाजां मानन्तु शिल्पी मानदण्डेन मानयेदित्यर्थः । तस्माच्छिल्पिभिरवश्यं मानज्ञानं सम्पादनीयमित्युपदेशः । मानज्ञानविहीनैरित्वत्यादिः स्पष्टार्थः ॥

द्रव्यनाशश्चापयशो भवत्येव न संशयः ।
तस्मान्मानं शिल्पिवर्गैरवश्यं ज्ञेयमीरितम् ॥ ७१ ॥

अथ अङ्गुलादिमानलक्षणम् ॥

परमाण्वादिमानन्तु प्रसिद्धं सुरसंसदि ।
न ग्राह्यं नापि विज्ञेयं मानवैस्तु कदाचन ॥ ७२ ॥

तस्मान्मानवमानन्तु प्रोच्यते फलदायि तत् ।
शालिव्रीहिस्तु सर्वत्र सिद्धमानोदयो मतः ॥ ७३ ॥

---

पूर्वं स्वर्गलोके गुरुणा प्रोक्तं मानमिन्द्रः पुनरपि बहुविधं व्याचकार । तदेव नन्दिदेवेन भगवता पुनरपि बहुविधमाविष्कृतम् । महर्षिणा नारदमुनिना च पुनरपि तदेव मानं बहुप्रकारमुक्तमित्युक्तत्वात् प्रथमतो गुरुशिल्पशास्त्रं, तदनु मघवच्छिल्पं, ततो नन्दिशिल्पं, पश्चान्नारदशिल्पशास्त्रञ्च क्रमादेवं सञ्जातमित्युन्नेयम् । देवमानुषभूपालेत्यादिः स्पष्टार्थः ॥ ७१ ॥

परमाण्वादीति । यत् परमाण्वादिमानं परमाण्वणुवालाग्रस्थधूल्यादिमानं सुरलोके प्रसिद्धं प्रमाणम् । तत्सर्वथा मानवैर्न ग्राह्यमेव । तस्मात्सर्वत्र वास्तुकर्मणि शस्तं सर्वैरपि सुलभवेद्यं मानवं मानमेवोच्यते । यथा — ब्रह्मसृष्टिषु शालिव्रीहिस्तावत् गुञ्जाफलवत् सर्वदेशेष्वपि सममान एव

त्रैव्रीहिभिस्त्रिभिर्युक्तमङ्गुलं मानवं मतम् ।
द्वादशाङ्गुलसंयुक्तो [1]वितस्तिरभिधीयते ॥ ७४ ॥

वितस्तिद्वयसंयुक्तं [2]हस्तमानमुदीरितम् ।
हस्तमानद्वयोपेतो [3]धनुर्मुष्टिरितीरिता ॥ ७५ ॥

धनुर्मुष्टिद्वयोपेतो [4]दण्ड इत्यभिधीयते ।
दण्डद्वयेन संयुक्तो [5]नृपदण्ड इतीरितः ॥ ७६ ॥

नृपदण्डद्वयोपेतो [6]ब्रह्मदण्ड इति स्मृतः ।
इत्यादि बहुधा मानं शास्त्रेषूक्तं मनीषिभिः ॥ ७७ ॥

---

दृश्यते । तस्मात्स एव व्रीहिः सर्वप्रमाणानामाद्यं लक्षणमिति बोध्यम् ॥

तादृशव्रीहित्रयदैर्घ्ययन्मानमङ्गुलमिति कथ्यते । तादृशाङ्गुलद्वादशकस्य वितस्तिरिति नाम । तादृशवितस्तिद्वयस्य हस्तमानमिति नाम । तादृशहस्तमानद्वयस्य धनुर्मुष्टिरिति नाम । तादृशधनुर्मुष्टिद्वयस्य दण्ड इति नाम । तादृशदण्डद्वयं नृपदण्डमानमिति नामभाग्भवति । तादृशनृपदण्डद्वयस्य ब्रह्मदण्ड इति नाम च प्रसिद्धमेव । एतादृशमानं सकलं मानवमानमिति शिल्पशास्त्रेषु प्रसिद्धं शिल्पिभिरवश्यं ज्ञेयमिति भावः ॥

---

1. சாண் 2. முழம் 3. கஜம் 4. 6 அடிக்கோல் 5. 12 அடிக்கோல் 6. 24 அடிக்கோல்.

दारुणा पट्टवस्त्रेण लोहैर्वा वल्कलादिभिः ।
मानसूत्रमिदं कार्यं शिल्पिभिश्शास्त्रपारगैः ॥ ७८ ॥

वेरनिर्माणकार्येषु धनुर्मुष्टिरुदीरिता ।
विमाने देवपीठेषु वह्निशालादिमासु च ॥ ७९ ॥

हस्तमानन्तु संयोज्यं कार्यज्ञैश्शिल्पिनां वरैः ।
दण्डेन मानयेद्ग्रामनगरादीन्नृपेण वा ॥ ८० ॥

घण्टापथश्च शृङ्गाटं चत्वरं मानवं गृहम् ।
निषद्यां विपणिं मार्गशालां सस्याक्षितिं तथा ॥

दण्डेन क्ष्मापदण्डेन मानयेच्छिल्पकोविदः ।
पुष्कलं ग्राममानञ्च गिरिदुर्गवनानि च ॥ ८२ ॥

---

'इत्यादि बहुधा मानम्' इत्युक्तत्वात् इदं भूमानम । सुवर्णादितुलारोपणमानन्तु अन्यदेव । आज्यादिमानकं प्रस्थमानमप्यन्यदेवेत्यन्यमानजालं सूक्ष्मदर्शिभिरूह्यम् । एतन्मानलक्षणं त्वस्मत्कृतायां शिल्पकलाव्याख्यायां विस्तरशः प्रपञ्चितम् ; तत्सर्वमपि तत्रैव ज्ञेयम ॥

शालिव्रीहिस्त्वित्यारभ्य क्रमशः प्रदर्शितमिदं भूमानं दण्डेन वा पट्टवस्त्रकेण वा लोहेन वा वल्कलादिभिर्वा कार्यमिति शिल्पज्ञाः । श्रेष्ठया शमीशाखया, निम्बशाखया, खदिरतरुशाखया, नक्तमालशाखया, ताम्रपित्तलादिलोहेन वा कृतो

तरङ्गिणीं तटाकञ्च नृपप्रासादकन्तथा ।
उपकार्यांश्च विविधामवरोधांश्च शिल्पिराट् ॥ ८३ ॥

मानयेन्नृपदण्डेन सर्ववास्तुप्रमाणवित् ।
देवप्रासादशालादीन्ब्रह्मदण्डेन मानयेत् ॥

स्थिरधीरप्रमत्तश्च मानविच्छिल्पकोविदः ॥ ८४ ॥

---

दण्डः मानदण्ड इति नाम भजते । कौशेयादिपट्टवस्त्रेण वा रजतादिना, शृङ्खलादिना, वल्कलादिना वा कृतं मानसूत्रमिति नामभाग्भवतीति प्रसिद्धिरूढ्या ॥ ७८ ॥

एतादृशमानदण्डादिना करणीयमाह — बेरनिर्माण-कार्येष्वित्यादिना । हरिहरलक्ष्मीकाल्यादिबेरनिर्माणकाले पूर्वोक्तेन धनुर्मुष्टिमानेन तादृशबेरादिषु मुखादि मानयेत् । तथा विमानं देवमग्निशालादींश्च हस्तदण्डेन मानयेत् । ग्रामपुर-नगरादीन् दण्डमानेन नृपदण्डमानेन वा शिल्पी मानयेत् । चतुष्पथवीथीं, वलभीं, चत्वरं, मनुजभवनं, विपणिं, निषद्यां, मार्गशालां, सस्यभूमिं च दण्डेन वा नृपदण्डेन वा मानयेत् । तथा समग्रमुत्तमं ग्रामं, गिरिं, दुर्गं, वनं, नदीं, तटाकं, नृप-प्रासादं राजभवनं, शुद्धान्तादिभवनानि च नृपदण्डेनैव मानये-दित्युपदेशः । सर्वाण्यपि देवभवनानि ब्रह्मदण्डेनैव मानयेदित्येवं दण्डादितत्तन्माननियमनोपदेशः शास्त्रचोदित इति वरम् । तत्र

अथ मण्डकादिग्रामवीथीनां मानकथनम् ॥

मण्डकग्रामवीथीनां दैर्घ्यं दण्डशतं भवेत् ।
दण्डद्वयेन वैशाल्यङ्कथितं शास्त्रपारगैः ॥ ८५ ॥

प्रस्तरग्रामवीथ्यस्तु शतद्वयसमन्विताः ।
सार्धदण्डद्वयेनैव वैपुल्यमिह कीर्तितम् ॥ ८६ ॥

बाहुलीकग्रामवीथ्यो द्विशताधिकदैर्घ्यगाः ।
दण्डत्रयेण वैपुल्यं तच्च प्रोक्तं बुधोत्तमैः ॥ ८७ ॥

पराकग्रामवीथ्यास्तु दैर्घ्यं पञ्चशतं मतम् ।
दण्डत्रयेण वैशाल्यं कथितं शास्त्रकोविदैः ॥ ८८ ॥

चतुर्मुखे पूर्वमुखे याश्च वीथ्यः प्रकीर्तिताः ।
तासां दैर्घ्यं पञ्चशतं मानमुक्तं मनीषिभिः ॥ ८९ ॥

---

तत्र मानगणनसमयेषु शिल्पिना कोविदेन स्थिरधीयुताऽप्रमत्तेन च भवितव्यमिति भावः ॥ ८४ ॥

'दण्डेन मानयेद्ग्रामनगरादीन्नृपेण वा' इत्युक्तत्वात् धनुर्मुष्टिद्वयप्रमाणोपेतेन दण्डदारुणा पूर्वोक्तमण्डकादिद्वादशविधग्रामाणां मानं करणीयमित्याह — **मण्डकग्रामवीथीनामित्यादिना** । तत्र मण्डकग्रामवीथीदैर्घ्यन्तु शतदण्डप्रमाणं, वैपुल्यं दण्डद्वयप्रमाणमिति शिल्पज्ञा वदन्तीति भावः ॥

दण्डत्रयेण वैशाल्यमुपवीथ्यस्त्रिदण्डकाः ।
मङ्गलग्रामवीथीनामपि तत्कीर्तितं बुधैः ॥ ९० ॥

विश्वकर्मग्रामवीथीदैर्घ्यं षट्शतदण्डकम् ।
सार्धदण्डत्रयं मानं वैपुल्यं तु निगद्यते ॥ ९१ ॥

---

अत्र तावत्प्रमाणवचनेषु मण्डकादिग्रामवीथीनां दैर्घ्यमानं दण्डेन मानेन मानं कार्यमित्यत्र न विवादः । तन्मानं युज्यत एव । परन्तु तादृशवीथीप्रतोलिकादिवैपुल्यं तु नृपदण्डेनैव मानं युक्तमिति शिल्पज्ञानामाशयः । ग्रन्थकर्त्रा तु दण्डेनेत्युक्तत्वादेवमाशङ्का । तस्या एवमेव परिहारस्सुगमः । दैर्घ्यायामादिलक्षणवचनानामपि सामरस्यमपि बोध्यम् । एवमुत्तरत्रापि ।

द्वितीयस्य प्रस्तरग्रामस्य वीथ्यस्सर्वा अपि शतद्वयदण्डदैर्घ्यवत्यः सार्धदण्डद्वयविपुलाश्च । तृतीयस्य बाहुलिकग्रामस्य वीथ्यस्सर्वा अपि किञ्चिदधिकशतद्वयदण्डदैर्घ्यवत्यो दण्डत्रयविपुलाश्च । चतुर्थस्य पराकग्रामस्य सर्वास्वपि वीथीषु पञ्चशतदण्डदैर्घ्यं दण्डत्रयवैशाल्यञ्चोक्तं । भवति क्षुद्रवीथीनां वैशाल्यन्तु दण्डद्वयप्रमाणमित्ययं भेद ऊह्यः । सप्तमस्य मङ्गलग्रामस्य सर्वास्वपि वीथीषु तदेव प्रमाणमुक्तम् । चतुर्मुखपूर्वमुखग्रामयोः यत् प्रमाणं दैर्घ्ये वैशाल्ये चोक्तं तदेव मानमिति पूर्वेणान्वयः ।

देवेशग्रामवीथीनां दैर्घ्यं पञ्चशतं मतम् ।
दण्डत्रयेण वैपुल्यं तन्न्यूनाः क्षुद्रवीथिकाः ॥ ९२ ॥

विश्वेशग्रामवीथीषु तदेवोक्तं मनीषिभिः ।
कैलासग्रामवीथीनां दैर्घ्यं सप्तशतं मतम् ॥ ९३ ॥

वैपुल्यन्तु चतुर्दण्डं मानमुक्तं मनीषिभिः ।
नित्यमङ्गलवीथीनामपि तन्मानमीरितम् ॥ ९४ ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे
ग्रामलक्षणकथनं नाम
सप्तमोऽध्यायः ॥

---

अष्टमस्य विश्वकर्मग्रामस्य वीथीमानं तु दैर्ध्ये षट्शतं दण्डप्रमाणं ; वैशाल्ये तु सार्धदण्डत्रयं मानमिति । क्षुद्रवीथीनामुपवीथीनान्तु मानंतदपेक्षया किंचिन्न्यूनत्वेन शिल्पिभिरेव निर्धार्यमित्याशयः ॥

नवमदशमयोर्देवेशग्रामविश्वेशग्रामयोः वीथीनां दैर्घ्यन्तु सप्तशतदण्डप्रमाणम् । वैशाल्यञ्चतुर्दण्डप्रमाणमानितम् । क्षुद्रवीथीनान्तु पूर्ववदेवोह्यमिति भावः इत्येवंप्रकारेण पूर्वप्रतिपादितानां सर्वेषामपि ग्रामाणां वीथीवर्गदैर्ध्यवैशाल्यप्रमाणमुक्तं भवति । तेषु ग्रामेषु तत्र तत्र वास्तुभागे कल्पनीयगृहभवनसौधशालाकूप-

वाप्यादीनां बहुविधानां शिल्पकार्याणां समग्रं लक्षणं तु अस्मिन् शास्त्रे तत्र तत्र क्रमशः प्रतिपाद्यते । तत्सर्वमपि तत्र तत्र ज्ञेयम् ॥

---

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
**ग्रामलक्षणकथनं नाम**
**सप्तमोऽध्यायः ॥**



अथ खेटादिलक्षणकथनं नाम

## अष्टमोऽध्यायः ॥

लोकरक्षाकरैः पूर्वं नारदेन प्रचोदितैः ।
अतीन्द्रियज्ञैर्मुनिभिर्धर्मत्राणपरायणैः ॥ १ ॥

ब्राह्मणाः क्षत्रिया वैश्याश्शूद्राश्चत्वार इत्यमी ।
विभक्ता जातिभेदेन तथान्यैरपि लक्षणैः ॥ २ ॥

चातुर्वर्ण्यस्थितिः सम्यग्रक्षिता सकलैरपि ।
गुरुदेवार्चनपरैर्निर्दोषै र्विजितेन्द्रियैः ॥ ३ ॥

---

अथ खेटादिलक्षणकथनात्मकमष्टमाध्यायमारभते —

अस्मिन्नध्याये सङ्कीर्णजातीनामावासभूतखेटखर्वटादिक्षुद्रग्रामादीनामन्येषाञ्च स्थलविशेषाणां लक्षणं बहुधा वक्तुं तादृशसङ्कीर्णजातिजनोत्पत्तिक्रममादौ विशिनष्टि — **लोकरक्षाकरैरित्यादिना** 'लोकरक्षाकरैः' इत्यादिश्लोकाः स्पष्टार्थाः । तथापि किञ्चिद्व्याख्यायते । यथा–पुरा नारदेन महर्षिणा प्रचोदिता अतीन्द्रियज्ञाः धर्मत्राणपरायणाः अत्रिभृगुवसिष्ठादिमहर्षयः इमे ब्राह्मणाः इमे क्षत्रियाः, इमे वैश्याः इमे शूद्राः इत्येवं जनांश्चतुर्धा व्यभजन् । चतुर्वर्गफलप्रदमतिविपुलं महच्छास्त्रं च प्रणीय, तेभ्य उपदिश्य, वैदिकं धर्ममबाधं स्थापयामासुः तेनोपदेशेन सर्वेऽपि ते सदाचारास्सद्गुणसंपन्ना गुरुदेवार्चन-

मद्वंश्याः स्थपतिश्रेष्ठास्तक्षका मनुवंशजाः ।
मयस्य तनयाः सूत्रधारिणस्त्वष्टृवंशजाः ॥ ४ ॥

शास्त्रपारङ्गतास्सर्वे चेमे भूम्यां हितैषिणः ।
पुत्रादीन् जनयामासुस्तत्र तत्र सहस्रशः ॥ ५ ॥

तत्कृतं तु क्रियाजालं त्रिषु लोकेषु विश्रुतम् ।
गतेषु बहुकालेषु तेषु मृग्येषु भूतले ॥ ६ ॥

ब्राह्मणाद्या नरास्सर्वे कामक्रोधवशङ्गताः ।
अगम्यागमनोत्साहाद्भेजिरे बहुपातकम् ॥ ७ ॥

---

पराः निर्दोषा विजितेन्द्रियाश्च सन्तस्तमेव वैदिकं धर्मं चिराय रक्षितवन्तो मद्वंश्याः विश्वकर्मवंशजाः स्थपतिवर्याः, मनुपुत्राः, तक्षकवर्याः, मयसुताः सूत्रधारिणः, त्वष्टृसुताः वर्धकिप्रभृतयः इमे सर्वेऽपि शास्त्रज्ञानक्रियासु कुशलान्पुत्रपौत्रादीन्बहुधा भूतले जनयामासुः । तत्कृतं हर्म्यादिकार्यजालं देवादीनामपि विस्मय-करमभूत् । गतेषु बहुषु कालेषु तेषु स्थपत्यादिषु च भूलोके विरलेषु सत्सु, विप्राद्याः केचित्कामक्रोधादिवशगास्सन्तो मोहं पापञ्चासाद्य, अगम्यागमनं कृत्वा दुष्टां गतिं भेजिरे ॥

अगम्यागमनं नाम विप्रः क्षत्रियाण्याङ्गच्छति, क्षत्रियोऽपि ब्राह्मण्यां, एवं क्षत्रियो वैश्यायां, वैश्यश्शूद्रायां,

पातकाद्बुद्धिहीनास्ते रौरवं नरकं ययुः ।
तज्जाता बहुधा लोके जनाः सङ्कीर्णजातयः ॥ ८ ॥

करणोग्रो मागधश्च वैदेहो रथकारकः ।
वृषलः कुम्भकारश्च मालाकारश्च चर्मकृत् ॥ ९ ॥

लोहकारस्स्वर्णकारश्शङ्खकारस्तथैव च ।
तन्तुवायाश्च पालाका गोपाला भारवाहिनः ॥ १० ॥

---

तेऽपि तज्जातास्त्वपीति । एवंप्रकारेण भिन्नजातियोनिषूद्भूता जनास्सङ्कीर्णजातय इति नामभाज इति पङ्क्त्यर्थो विज्ञेयः ॥ ८ ॥

पूर्वोक्तसङ्कीर्णवर्णजातानां नामानि, तेषां कार्यादिकं च विशिनष्टि — **करण इत्यादिना** । करणः, तेषु तेषु ग्राम-पुरादिषु राजकीयबलिभूम्यादिप्रमाणवित् लेखको गणक इति नामान्तरभाक् । 'शूद्राविशोस्तु करणः' इत्याद्यमरसिद्ध-प्रमाणवचनानि, अन्यानि, निघण्ट्वन्तरवचनानि च द्रष्टव्यानि । उग्रः, उग्र इति च वार्तानिवेदकः । मागधः, प्रभातादि-समयनिवेदकः । वैदेहोऽन्तःपुरचारो कञ्चुकीति केचित् । अन्ये तु लेखवाहीति । परे तु पादसंवाहक इति ॥

रथकारकश्शकटरथादियाननिर्माता तक्षः । वृषल अक्षराद्यनभिज्ञ इति केचित् । सीरादिना तत्तत्समयोचित-कृषिवर्धक इत्यन्ये । कुम्भकारः मालाकारः चर्मकारश्च प्रसिद्धाः ।

वागुराजीविनो व्याधा भृतकाश्च किरातकाः ।
शबराश्च पुलिन्दाश्च चोरा मार्दङ्गिकास्तथा ॥ ११ ॥

कुशीलवाश्चारणाश्च शौण्डिकाश्च नटास्तथा ।
रजका मुण्डिनश्चान्य एते सङ्कीर्णजातिजाः ॥ १२ ॥

सदाचारविहीनैस्तैस्सर्वैश्च करणादिभिः ।
लोकोपकारं बहुधा कर्तुं व्यवसिता नृपाः ॥ १३ ॥

---

लोहकारस्ताम्रपित्तलादिलोहक्रियाकारी । स्वर्णकारः प्रसिद्धः । शङ्खकार ऊर्मिलादिमणिगुंफनकारः । शिलातक्षका इत्यन्ये । तन्तुवायः प्रसिद्धः । पालाकाश्चित्रकारिणः । गोपालाः प्रसिद्धाः । भारवाहिनो भारवहनभृतिजीविनः । वागुराजीविनो मत्स्यग्राहिणः । व्याधाः पक्षिग्राहिणः । भृतका भृत्याजीविनः । किराता मृगयावेत्तारः । शबरास्सस्यभूम्या मृगयागमनेन च जीविनः । पुलिन्दाः प्रसिद्धाः । चोराः पथिकानां द्रव्याद्यपहारिणः । मार्दङ्गिका मृदङ्गवादिनः । कुशीलवा गायकाः । चारणा राजकीयवार्ता निवेदिनः । शौण्डिका मदिराजीविनः । नटाः रजकाः मुण्डिन अंबष्ठाः । अन्य इत्यनेन पारशवगजपालाश्वपालादयश्च गृह्यन्ते । एतादृशास्सर्वेऽपि जनास्सङ्कीर्णयोनय इति वैदिका वदन्तीति भावः ॥ १२ ॥

अथ सङ्कीर्णवर्णजातानां तेषाङ्कालक्रमेण भूपादिमानन-

मुनीनामुटजं निन्युस्तानुपायैस्सहस्रशः ।
परावरविदस्ते च मुनयो लोकरक्षकाः ॥ १४ ॥

अनुगृह्य च तान्सर्वांस्तेषां मोहं व्यपोह्य च ।
शास्त्रं बहुविधङ्कृत्वा क्रियाश्चाध्यापयञ्छनैः ॥ १५ ॥

मुनिप्रसादनात्तेषां मतिरौज्ज्वल्यभागभूत् ।
तया धिषणया ते तु क्रियादौ पाटवं गताः ॥ १६ ॥

तदाप्रभृति लोकेस्मिन्नृपादिबहुमानतः ।
क्रियाकौशलवन्तश्च बभूवुः कीर्तिशालिनः ॥ १७ ॥

---

मभूदित्यादिश्रेष्ठयमाह — सदाचारविहीनैरिति । तत्र तत्र देशेषु तादृशसङ्कीर्णजातिजातेषु जनेषु बहुधा व्याप्तेषु सत्सु, धर्मशीलाः पूर्वतनभूपालास्तान्निरीक्ष्य तैरेवान्येषां सकलजीवराशीनामपि उपकारजालं सम्पादयिषवस्तान्सान्त्ववचनादिना महर्षीणामुटजद्वारान्निन्युः । परमकारुणिकाः धर्मरक्षका लोकहितैषिणः ते च महर्षयस्तान् जनाननुगृह्य तदर्थं बहुविधं बृहच्छास्त्रं निर्माय तेषां मोहादिकं दुराचारांश्चापोह्य विविधाः क्रिया अध्यापयामासुः । महर्षीणामनुग्रहमहिम्ना संप्राप्तसूक्ष्मधियस्ते सर्वे स्थपत्यादयो जनाः तत्तत्कलासु नैपुण्यं प्राप्य, तदाप्रभृति लोके भूपालेभ्योऽन्येभ्यः धनकनकादिबहुमतिमवाप्य

केचिच्चक्रू राजसेवां केचिदासंश्च चित्रकाः ।
केचित्सूक्ष्मधिया मान्यास्स्थपतेर्लक्ष्यभासुराः ॥
केचिन्मान्यक्रियाशक्तिं प्राप्य धर्मपरायणाः ।
अन्ये च ... ... केचिद्वाजिवारणरक्षकाः ॥
इत्यादिबहुकार्येषु नैपुण्यं भेजिरे परम् । १९ ॥

तत्र प्रथमस्य खेटस्य लक्षणम् ॥

खेटस्य वास्तुभूमिस्तु प्रायः काननमध्यगा ।
शबरैश्च पुलिन्दैश्च संयुता मांसजीविभिः ॥ २० ॥

---

स्वकरकौशलमहिम्ना भवननिर्माणादिविविधकार्यनिर्माणेन सर्वेषाञ्जीवानामुपकारान्बहुविधान्कृत्वा सत्कीर्तीश्चावापुः ॥

तेषु केचित्स्थपत्याद्युत्तमजातिलिङ्गभूतयज्ञसूत्रधारणवेदपठनादावधिकारमवापुः । अन्ये तु तद्धीना अपि स्वस्वकार्योचितबहुमानमपि लेभिरे । एवं प्रसिद्धानां पूर्वोक्तकरणादिक्रियाकाराणां तेषामावासभूमिस्तावत्खेटखर्वटपल्लीघोषाभीरभेदेन पञ्चविधा भवति । तल्लक्षणानि च क्रमशो लक्ष्यन्त इति भावः ॥१९ ।

अथाद्यस्य खेटस्य लक्षणमाह — खेटस्येति । खेटस्य वास्तुभूमिस्तावत् प्रायशोऽरण्यमध्यभाक्कथिता । एकवीथीप्रभृति दशवीथ्यन्तास्तत्र स्थाप्याः । क्षुद्रवीथ्यादयस्तु तत्र तत्र स्थलानुकूल्येन बहवः । प्रायशः पर्णादिरचितपटलवद्भिरेव गृहैरुपेता

पर्णगेहान्विता विष्वगथ वेष्टिकगेहभाक् ।
एकादिदशवीथ्यन्ताः क्षुद्रवीथ्यस्समन्ततः ॥ २१ ॥

अथ द्वितीयस्य खर्वटस्य लक्षणम् ॥

वास्तुभूमिः खर्वटस्य नदीतीरगता मता ।
रसालसालवकुलैस्तिन्त्रिणीवेणुपाटलैः ॥ २२ ॥
कदम्बैर्नारिकेलैश्च श्रीपर्णैस्तिलकैरपि ।
छायावृक्षसमाकीर्णा निष्कुटारामसंवृता ॥ २३ ॥
दशादिविंशद्वीथीभिरावृता च समन्ततः ।
शतगेहा मुख्यवीथी तन्मध्ये कालिकागृहम् ॥

---

क्वचिदिष्टिकानिर्मितगृहोपेता च बहुविधमांसविक्रयशीलैस्स्वयमपि मांसेन जीविभिश्शबरैः पुलिन्दैर्जनैर्नीचैरावृता च भवेत् । एतादृशलक्षणान्वितग्रामविशेषस्य खेटग्राम इति संज्ञेति प्रसिद्धिः ॥ २१ ॥

अथ द्वितीयस्य खर्वटस्य लक्षणमाह — **वास्तुभूमि-रिति** । खर्वटवास्तुभूमिस्तावत्प्रायशः नदीतीरगतैव स्यात् । रसालादि छायावृक्षसमूहभरिता निष्कुटोपेता वा आरामावृता भवेत् । किञ्चात्र दशादिविंशद्वीथ्यस्समन्ततस्तत्रतत्र स्थलानु-कूल्येन क्षुद्रवीथ्युपेताः कार्याः । तासु वीथीषु शतगेहभासुरा एका मुख्यवीथी अतिदीर्घा निर्मापणीया । तस्या एव मुख्यवीथ्या

वागुराजीविभिश्चान्यैर्भृतकैश्च कृषीवलैः ।
मदिरागेहसंयुक्ता विपण्यादिभिरावृता ॥ २५ ॥

अथ तृतीयस्य पल्लीग्रामस्य लक्षणम् ॥

वनमध्यङ्गता वापि गिरिसानुसमीपभाक् ।
आरामभूमध्यगता पल्लीभूमिस्तु सौख्यदा ॥ २६ ॥
मधूकैस्तिन्त्रिणीभिश्च रसालैर्नारिकेलकैः ।
पनसैश्च शिरीषैश्च संवृता च समन्ततः ॥ २७ ॥
सङ्कीर्णा बहुभिर्वर्णैर्मेषगोवाजिरक्षकैः ।
दशादिविंशद्वीथिभिस्संयुता च समन्ततः ॥ २८ ॥

---

मध्ये तद्वास्तुनाथालयो वा पल्लीदेव्यालयो वा कालीकराल्यादिदेवीनामालयो वा स्थाप्यः । अपि चायं खर्वटः वागुराजीविभिर्भृतकैरन्यैश्च कृषीवलैश्च समाकीर्णश्च भवति । अपि चेयं खर्वटभूमिस्तावन्मदिरागृहोपेता क्षुद्रविपण्यादिसहिता चेति सूरयः ॥ २५ ॥

अथ तृतीयस्य पल्लीग्रामस्य लक्षणमाह — **वनमध्यंगतेति** । पल्लीभूमिस्तावत्प्रायशो वनमध्यगता अथवा गिरिसानुसमीपभाग्वा शस्ता । पक्षद्वयेऽपि रसालसालमधूकादिबहुविधशीतलवृक्षावृतारामध्यगता स्वीकार्या । तादृशमधूकपनसादिवृक्षैः पल्लीनिवासिनामतिसौख्यादिकं भवेदिति भावः । मेषरक्षकै-

वापीकूपादिभरिता विपण्या क्षुद्रया युता ।
सहस्रजनसङ्कीर्णा पल्लीभूमिरितीरिता ॥ २९ ॥

अथ चतुर्थस्य घोषग्रामस्य लक्षणम् ॥

घोषभूमिश्शैवलिनीतीरभाग्वा वनान्तभाक् ।
गिरिसानुगता वापि सर्वकालेषु सौख्यदा ॥ ३० ॥
वानीरबिल्वकुन्दाद्यैर्मालत्यादिभिरन्विता ।
चूतादि फलवृक्षैश्च सर्वतस्तु समावृता ॥ ३१ ॥

---

गोरक्षकैर्वाजिरक्षकैश्चान्यैर्वर्णजैरपि सहस्रजनसंख्योपेता दशादिविंशद्वीथिकाभिरुपवीथिकाभिस्समन्ततः सहिता च क्षुद्रविपण्या वापीकूपादिभिरुपेता चैतादृशलक्षणान्विता भूमिः पल्लीभूमिरुच्यत इति ॥ २९ ॥

अथ चतुर्थस्य घोषग्रामस्य लक्षणमाह — **घोषभूमिरिति**। घोषस्य वास्तुभूमिस्तावत्प्रायशो नदीतीरगता भवेत् । तादृशभूमेरलाभे सर्वर्तुसमयेष्वपि सकलजीविनामप्यत्यन्तसुखदा वनमध्यगता वा स्यात् । वनमध्यगता उत्तमभूमिस्सर्वत्र शस्तेति मतिः । अथवा महीधरपार्श्वगता वा महीधरसानुस्थिता वा भवेदिति तादृशभूमिप्राप्तिविषये विकल्पः ।

किञ्च वानीरकुन्दनारिकेलरसालपनसादिबहुफलप्रदवृक्षयुता वा भूमिघोषाय प्रशस्तेति । एतादृशभूमिस्सस्यभूमिसंवृता-

सस्यभूम्यावृता विष्वक्सुखग्राह्य जलान्विता ।
द्वात्रिंशद्वीथिकोपेता क्षुद्रवीथ्युपवीथियुक् ।
गोभिर्गोपालकैश्चापि सर्वतस्संवृता शुभा ॥ ३२ ॥

अथ पञ्चमस्याभीरग्रामस्य लक्षणम् ॥

आभीरभूश्शैवलिनीतीरभाग्वा वनान्तभाक् ।
सर्वतस्सूक्ष्मसिकता पुष्पगन्धाद्यगन्धिनी ॥ ३३ ॥
मण्डलाख्यतृणैर्घासैरन्यैश्च बहुभिर्युता ।
नारिकेलरसालादिफलवृक्षैस्समन्विता ॥ ३४ ॥
सर्वतो हस्ततोयाढ्या भूमिरेवंविधा मता ।
त्रिंशद्वीथियुता क्षुद्रवीथियुक्च समन्ततः ॥ ३५ ॥

---

सर्वतः सुलभलभ्यतोयैर्वापीकूपतटाककुल्यादिभिरुपेता च स्यात् । क्षुद्रवीथीभिस्तिर्यग्वीथीभिर्मुख्यवीथीभिश्च सहिता च आहत्य संख्यया द्वात्रिंशद्वीथीयुता कार्या । किञ्चास्मिन्घोषाख्ये ग्राम इतरजनसंख्यापेक्षया गोपालजनसंख्याधिक्यं च भवतीति घोषभूमिलक्षणार्थः ॥ ३२ ॥

अथ पञ्चमस्याभीरग्रामस्य लक्षणमाह — **आभीरभूरिति ।** आभीरभूलक्षणमिदं सुगमम् । तथापि कचिद्व्याख्यायते । यथा — त्रिंशद्वीथीत्यत्र क्षुद्रवीथ्यो मुख्यवीथीभिस्समेता आहतिक्रमे द्वात्रिंशत्संख्या मतेति । गवामन्येषाञ्च जीवानां सन्ततं

वापीकूपतटाकाद्यैरन्विता सुखदायिनी ।
ग्रामदेव्यालयोपेता वारुण्यां दिशि कालिका ॥ ३६ ॥
गोपनाथस्य सदनमथवा नृपमन्दिरम् ।
कारयेन्मध्यभागेऽस्या निषधादींश्च सर्वतः ।
गोपालभवनाधिक्यं गवामपि च कीर्तितम् ॥ ३७ ॥

---

सुखदायिनी वापीतटाकादिरचना कुल्या वा समन्ततः कल्प्या । अस्या आभीरभूम्याः वारुण्यां दिशि ग्रामदेवीभवननिर्माणं कार्यम् । तत्रैव गोपसङ्घाध्यक्षस्य सभा च निर्मापणीया । अथवा तत्र वारुण्यां दिशि राजकीयकार्यालयो वा कार्यः ॥

केचिद्राजवासमन्दिरमेवात्र कार्यमिति । तच्चिन्त्यम् । कुतः ? "निगमादिनगर्यस्तु नृपयोग्या उदीरिताः" इत्यस्मिन्नेवाध्याये 'पद्मनगरीषु एवं कीर्तितं भूपमन्दिरम्' इत्युक्तत्वाच्च सर्वथात्राभीरभूम्यां राजसदननिर्माणस्याप्रसङ्गात् । अन्येषां मुख्यलक्षणानामभावाच्चेत्यलमतिविस्तरेण ॥

तस्माद्ग्रामदेव्यालयकल्पनं, गोपसंघाध्यक्षकार्यशालाकल्पनमित्येतस्यैव लक्षणद्वयस्यात्रोक्तत्वाद्घोषभूमिलक्षणादस्य आभीरलक्षणस्यापौनरुक्त्यमिति शास्त्रज्ञाः ॥ ३७ ॥

खेटस्य वास्तुभूमिरित्यारभ्य खेटखर्वटपल्लीघोषाभीराख्यानां सङ्कीर्णजातिग्रामाणां समग्रं लक्षणं प्रतिपाद्याधुना उत्तरत्र प्रति-

आद्यस्तु निगमः प्रोक्तस्कन्धावारो द्वितीयकः ।
द्रोणकस्तु तृतीयस्स्याच्चतुर्थः कुब्जको मतः ॥ ३८ ॥

पट्टणं पञ्चमं षष्ठश्शिबिरस्तु प्रकीर्तितः ।
...............चारस्सप्तमो वाहिनीमुखः ॥ ३९ ॥

निगमादिनगर्यस्तु नृपभोग्या उदीरिताः ।

तत्र प्रथमस्य निगमनगरलक्षणम् ॥

वनमध्यगतो वापि गिरिसानुगतोऽपि वा ॥ ४० ॥

सदातोयातीरभाग्वा रक्षकैरभिसंवृतः ।
निगमो दुर्गसंयुक्तो वप्रेणापि समावृतः ॥ ४१ ॥

---

पादयिष्यमाणवहुविधनगरलक्षणोप बृह्मणभूतात्मकं निगमादि-सप्तविधनगरलक्षणं प्रस्तौति — आद्य इति । तत्र प्राथमिको निगमः । द्वितीयस्स्कन्धावारनामकः । द्रोणकस्तृतीयः । कुब्जकश्चतुर्थः । पञ्चमः पट्टणनामभाक् । षष्ठः शिबिरनामा । सप्तमस्तु वाहिनीमुख इति सप्तविधो नगरभेदः ॥

एवं सप्तविधभेदत्वेन प्रतिपादिता इमे नगरादयो न ग्रामलक्षणेषु निवेशनीया, नापि पद्ममुखादिमहानगरलक्षणेषु । तस्मादिदं पृथक्त्वेन निगमादिलक्षणमेवं प्रतिपादितं ज्ञेयम् ॥

एवं भूतनिगमनगरस्य वास्तुभूमिस्तावद्वनमध्यगताऽथवा गिरिसानुगता वा भवितव्या । निगमाख्यमिदं नगरं समन्ततः

चतुर्दिक्स्थचतुर्द्वारो महामार्गयुतो भवेत् ।
पीठाधिष्ठानसद्वप्रगोपुरादिसमन्वितः ॥ ४२ ॥

प्राक्प्रतीचीप्रतोल्यस्तु चत्वारिंशत्प्रकीर्तिताः ।
दक्षिणोत्तरगा विंशद्वीथ्यो दण्डत्रयायताः ॥ ४३ ॥

उपवीथीः क्षुद्रवीथीः कारयेद्बहुसंख्यकाः ।
वास्तुभूमध्यदेशे तु तुङ्गं भूपालमन्दिरम् ॥ ४४ ॥

राजकार्यकरैरन्यैः पुरकार्यकरैर्युतः ।
विपण्यादिसमोपेतो न्यायशालादिभिर्युतः ॥ ४५ ॥

---

पुररक्षकैः परिरक्षितो भवितव्यः । दुर्गेण वप्रेणापि संयुक्तो नित्यमङ्गलग्रामवदत्रापि प्राच्यादिषु चतसृषु दिक्षु महामार्गान्वितं द्वारचतुष्कं सोपपीठं निर्मापणीयम् । तादृशद्वारेषु चतुर्ष्वपि भूमौ प्रथमतः पीठस्तदुपर्यधिष्ठानन्तदुपरि सद्वप्रयुतं गमनागमनयोग्यं महाद्वारं तदुपरि पञ्चतलोपेतन्त्रितलोपेतं वा गोपुरञ्च निर्मापणीयमिति तन्निर्माणक्रमश्चोक्तो भवति । सङ्ग्रहेण सद्वप्रस्तावत्पृथुद्वारेषु करणीयसन्धिबन्धनार्गलादिरिति तेनोपेतं महाद्वारमिति निगमाख्येऽस्मिन्नगरे प्राचीदिगारब्धाः प्रतीचीगामिन्यः प्रतोलिकाश्चत्वारिंशत्संख्याकाः स्थाप्याः ॥

किञ्च दक्षिणादिगारब्धाः कौबेरदिग्गामिन्यस्तिर्यग्वीथ्यस्तावद्विंशतिसंख्याका भवितव्याः । एतासां प्रतोलिकादीनां

नानाजातिजनाकीर्णो वारुण्यां देवगेहभाक् ।
तुङ्गैस्सौधैरुपेतोऽयं कथितो निगमो बुधैः ॥ ४६ ॥

अथ द्वितीयस्य स्कन्धावारस्य लक्षणम् ॥

रणाङ्गणान्निवृत्तस्य राज्ञस्सेनानिवेशनम् ।
स्कन्धावारा इति प्रोक्तश्शिल्पशास्त्रविशारदैः ॥ ४७ ॥
गिरिपार्श्वगता भूमिरथवा गिरिमध्यभाक् ।
महारण्यस्य मध्यस्था दृढदुर्गसमन्विता ॥ ४८ ॥

---

वैशाल्यन्तु दण्डत्रयमिति । किञ्चात्र शुद्धवीथीनां संख्यात्वनेका तत्र तत्र वीथीस्थितिवशात्कार्येति समयः । अपि चास्य निगमाख्यनगरस्य मध्यवास्तुभाग एवात्युन्नतं भूपालमन्दिरं निर्मापणीयम । राजकार्यकरैः पुरकार्यकरैश्च बहुभिरावृत निपण्यादीत्यादिः स्पष्टार्थक एवेति निगमनगरलक्षणमुक्तं भवति ॥ ४६ ॥

अथ द्वितीयस्य स्कन्धावारस्य लक्षणं विशिनष्टि — रणाङ्गनादिति । रणाङ्गणान्निवृत्तस्य भूपालस्य सेनानिवेशभूमिस्तावत्स्कन्धावारनामभाग्भवतीति शिल्पवेत्तारः । अस्य स्कन्धावारस्य वास्तुभूमिस्तु गिरिपार्श्वगता मता । अथवा गिरिमध्यस्थिता महारण्यमध्यस्थिता वा भवेत् । सर्वथा शत्रुसेनाभिरनाक्रान्ता भवितव्येति समयः । स्कन्धावारस्यास्य दक्षिणभागे भूपालभवनमुत्तरभागे सेनेशभवनञ्च निर्मापणीयमिति ग्रन्थान्तरेषु दृश्यते वचनम् ॥

राज्ञस्सेनापतेस्सौधैरन्वितो दक्षिणे स्थले ।
दृढैकद्वारसंयुक्ता निषिद्धान्यजना तथा ॥ ४९ ॥

वाजिवारणयोधानान्निवेशैर्बहुभिर्युता ।
महायुधानां शालाभिस्सर्वतस्संवृता मता ॥ ५० ॥

अथ तृतीयस्य द्रोणकनगरस्य लक्षणम् ॥

द्रोणकस्तु महीनेतुस्सदनेन विराजितः ।
पूर्ववद्वप्रसंयुक्तो गोपुरेण समन्वितः ॥ ५१ ॥

---

अत्र तु दक्षिणायामेव दिशि राज्ञस्सेनापतेरपि सौधनिर्माणमभिहितमपि कवेराशयभेद इति । अत्रापि गुणोत्कर्षानेव पश्यामः । यथा यदि तावदभिभवादिसमये प्राप्ते तान्रिपूंस्तद्योधादींश्च निरसितुमालोचनादिकञ्च कर्तुं सेनापतिभूपालयोरेकत्र स्थले सान्निध्यमेव शक्यमिति ॥

अपि चेदन्नगरपर्यायं दृढं परैरनभिभाव्यमेकद्वारयुतं भवितव्यम् । किञ्चात्र पद्मादिनगरवत्सर्वजनानामपिसततङ्गमनागमनन्नाभिहितम् । परन्तु कालौचित्येन तेषाङ्गमनादिरिति वाजिनां, वारणानां, योधानाञ्च सदनैरुपेतश्शतघ्न्यादिमहायुधशालासमेतो रक्षकैर्यामिकैरपि संरक्षितो वास्तुभागोऽस्येति स्कन्धावारलक्षणार्थः स्फुट एव ॥ ५० ॥

अथ तृतीयस्य द्रोणकनगरस्य लक्षणमाह — द्रोण-

चतुर्दिक्स्थचतुर्द्वारोऽथवा द्वारद्वयान्वितः ।
आरामैर्निष्कुटैश्चापि कुल्याभिराभिसंवृतः ॥ ५२ ॥

कृषीवलादिसंयुक्तस्सस्यक्षेत्रसमावृतः ।
धनधान्यसमृद्धानां सदनैर्बहुभिर्युतः ॥ ५३ ॥

दशतिर्यद्वीथिकास्स्युः पञ्चाशद्दीर्घवीथिकाः ।
मठमण्डपसंयुक्तो वापीकूपादिभिर्युतः ॥ ५४ ॥

शिवहर्म्यसमोपेतो मध्यभागेऽथ वारुणे ।
ब्राह्मण्यादिचतुर्वर्णैरन्वितो राजसेवकैः ॥ ५५ ॥

दुर्गेण संयुतः कुब्जो विशालस्थलभाञ्जतः ।
नृपगेहन्तु दशभिर्भागैनैकेन कारयेत् ॥ ५६ ॥

---

कास्त्विति । द्रोणकनगरभूम्यामत्र भूपालमनोरथानुगुणं समीचीनस्थले राजभवनं निर्मापणीयम् ; पूर्ववदित्यनेन पूर्वप्रतिपादितस्कन्धावारस्येवात्रापि द्रोणकनगरे नगरं परितो वप्रनिर्माणञ्च कार्यमिति प्रतीयते । किञ्च प्राच्यादिचतुर्दिक्ष्वपि सगोपुरन्द्वारचतुष्कं वा नगरद्वारद्वयं वा कार्यमिति । अपि च नगरस्यास्य मध्यभागे प्राच्यां वा दिशि शिवमन्दिरनिर्माणङ्कार्यम् । राजसेवकैर्बहुविधैर्विप्रादिचतुर्वर्णजैश्च समन्वितमिदं द्रोणकनगरमित्यर्थः । आरामैर्निष्कुटैरित्यादिना प्रतीयते ॥ स्पष्टमन्यत् ॥५५॥

अथ चतुर्थस्य कुब्जनगरस्य लक्षणमाह — दुर्गेनेति ॥

एकाननन्तु कौबेर्यां कल्पयेच्छिल्पकोविदः ।
वैश्यसंख्याधिक्यवच्च पण्यवीथीभिरावृतः ॥ ५७॥

उदीच्यामथ वारुण्यान्देवतायतनं शुभम् ।
पुरकार्यकरैस्सर्वैरन्वितश्च समन्ततः ॥ ५८ ॥

राजवीथीद्वयोपेतः प्रादक्षिण्यप्रमाणतः ।
प्रतोलिकाभिर्वह्वीभिर्वीथीभिरभिसंवृतः ॥ ५९ ॥

---

निम्नत्वोन्नतत्वरहितेऽतिविशाले पूर्वोक्तनिगमद्रोणकनगरवैशाल्यापेक्षया अतिविशाले समस्थले कुब्जनगरमिदं दुर्गाख्यपरिघयाऽगाधया संवृतं कल्पयेत् । किञ्च नगरस्यास्य सर्वां वास्तुभूमिं दशभागां विभज्य तत्रैकभागप्रमाणे स्थले नृपभवनमपि निर्मापणीयम् । किञ्चास्य नगरस्य कौबेर्यामेव दिशि मुख्यमेकं द्वारं स्थाप्यम् । किञ्चात्र नगर उदीच्यां वारुण्यां वा दिशि देवतायतनङ्करणीयम् ॥

अपि चात्र प्राचीदिगारब्धा राजवीथी तावत् प्रतीचीदिशं स्पृशेत् । तथैव दक्षिणदिगारब्धाऽन्या राजवीथी कौबेरीं दिशञ्च । एवं प्रादक्षिण्यक्रमेणात्रत्या वीथीः प्रतोलिकादींश्चान्तर्निक्षिप्य तद्बहिर्वलयाकारेण प्रादक्षिण्यक्रमेण एतद्राजवीथीद्वयेनावृतमिदं नगरं कार्यमिति । किञ्च नगरेऽस्मिन्वीथीप्रतोलिकादीनां संख्यानेका मता । यथास्थललाभं ताश्च कारयेदिति बहुवस्तु-

अथ पञ्चमस्य पट्टणनगरस्य लक्षणम् ॥

पारावारतटे वापि भूधरोपत्यकातटे ।
स्वादुतोयस्थले वाऽपि पत्तनङ्कारयेद्बुधः ॥ ६० ॥

महामार्गेण संयुक्तं सर्वतः परिघावृतम् ।
वीथ्यष्टकसमोपेतभागद्वादशभूषितम् ॥ ६१ ॥

एकपादप्रमाणेन स्थलेन नृपमन्दिरम् ।
मध्ये वा दिशि वारुण्यां दुर्गोपेतं प्रकल्पयेत् ॥ ६२ ॥

---

भरितैः पण्यवीथीसन्दोहैरुपेतं तत्रत्यवैश्याद्यनेकजनोपेतं चेति कुब्जनगरलक्षणार्थः ॥ ५९ ॥

अथ पञ्चमस्य पट्टणस्य लक्षणमाह पारावारतट इति । पत्तनस्य वास्तुभूमिस्तु प्रायशस्समुद्रतीरगता श्लाघ्या । तदलाभे पर्वतस्यासन्नभूमिगता वा स्यात् । अथ यत्र स्वादुतोयं सुखलभ्यं सर्वैरपि सततं सुलभग्राह्यं तत्र वा स्थले पत्तनाख्यन्नगरमिदं कल्पयेदित्यर्थः । किञ्चेदन्नगरं प्राच्यादिषु चतसृष्वपि दिक्षु महागोपुरसहितनगरं द्वारचतुष्कोपेतङ्कल्पनीयम् । तत्र द्वारस्थलं तत्तद्दिग्देशगतेन महामार्गेण संमिलितङ्कार्यम् ॥

अपि च पत्तनमिदं परितः परिखा खननीया । किं च पत्तनस्यास्य सर्वामपि वास्तुभूमिं द्वादशभागां विभज्य तत्रैक भागप्रमाणस्थले नृपमन्दिरङ्कल्पनीयम् । तादृशनृपमन्दिरन्तु

गोपुरेण समायुक्तं सभामण्टपभूषितम् ।
कल्पयेद्दिक्षु सर्वत्र देवतायतनं बहु ॥ ६३ ॥

उपवीथीः क्षुद्रवीथीरनेकाश्च प्रकल्पयेत् ।
अयुताधिकसंख्यात्र जनता संप्रकीर्तिता ॥ ६४ ॥

चित्रादिसद्नोपेतं यामिकैरपि रक्षितम् ।
प्रतिदेशमिदं स्थाप्यं जनानां बहुसौख्यदम् ॥ ६५ ॥

अथ षष्ठस्य शिबिरनगरस्य लक्षणम् ॥

भूपालस्सचिवस्सेनानायको बलिकारकः ।
न्यायविच्च सभाध्यक्षो ये चान्ये राजपूरुषाः ॥ ६६ ॥

---

तद्वास्तुभूमेर्मध्यगतं वा वारुणीदिग्गतं वा सपरिखञ्च भवितव्यम् । अवशिष्टेष्वेकादशभागेषु एकैकस्मिन्नपि भागे अष्टौ महावीथ्यः स्थाप्याः । आहत्यात्र नगरे महावीथीनां संख्या अष्टाशीतिकेति । उपवीथ्यः, क्षुद्रवीथ्यश्चानेकास्तत्तत्स्थलानुकूलं स्थाप्याः । अपि चास्मिन्पत्तननगरे मण्टपसभाशालागोपुराद्यन्वितं बहुदेवतायतनं तत्र तत्र कार्यम् । किञ्चात्र क्वचित्पाठशाला, क्वचिच्चित्रशाला, क्वचिद्वैद्यशालेति, बह्वयश्शालाश्च कल्पनीयाः । अयुताधिकजनसंख्यान्वितमेतादृक्पत्तनाख्यन्नगरं सकलजनसुखप्रदविविधकल्पनोपेतं प्रतिदिशं कल्पयेत् शिल्पकोविद इति पत्तननगरलक्षणार्थः ॥ ६५ ॥

अथ षष्ठस्य शिबिरस्य लक्षणमाह **भूपाल** इति ।

तेषान्तत्कालवासाय कल्पनं शिबिराख्यकम् ।
दारुखण्डैश्शिलाभिर्वा लोहैर्वा पट्टवस्त्रकैः ॥ ६७ ॥

---

भूपालः, सचिवः, सेनानायकः, बलिकारकः, राजकीयकरग्रहीता, न्यायवित्, प्राड्विवाकादिः, सभाध्यक्षा, राजकीयसभायां तत्तत्कार्यालोचनादिवादिनोऽन्ये च ये सुहृदो राजकार्यकरा राजपुरुषादय एतेषां निवासाय तत्तत्समयेषु तात्कालिकं यत्कल्पनं तत्र तत्र क्रियते तच्छिबिरमित्युच्यते । तच्छिबिरं दारुखण्डैर्वा-शिलाभिर्वा ताम्रलोहफलकादिभिर्वा पट्टवस्त्राद्यैर्वा तत्तत्कालदेश-स्थलानुगुणं नानारक्षणयुतं निर्माणमभिमतम् । एतादृशद्रव्यैः-शिबिरं निर्मापयेदिति पिण्डितार्थः । तदेव शिबिरमिष्टिकाभिर्वा शिलाभिर्वा बहुविधपीठशयनखट्वादिसौकर्ययुतङ्कल्प्यम । तदा तत्कल्पनमचलशिबिरनामभाग्भवति ॥

यत्तु पटवस्त्रेण वा फलकाभिर्वा कल्प्यते तच्चलशिबि-रनामभाग्भवतीति प्रसिद्धिः । एतद्विविधमपि शिबिरं तत्र तत्र नगरस्य बहिर्दूरस्थले कार्यम । अथवा वनमध्यभागे स्थाप्यम । आहोस्विद्वटवकुलकदम्बपुन्नागरसालादिप्रच्छायभूरुहशीतलतले वा कल्प्यमिति ॥

नन्वत्र शिलाभिर्निर्मिते निबिडस्थले निवासः कथं श्रेयस्करः? शिलागेहन्देवतानामित्युक्तत्वादिति चेन्न । निवासोऽत्र क्षत्रियाणामेव विहितत्वात । अन्यजनवासस्थलन्तु नैयत्येन

इष्टिकाभिस्तथा कल्प्यं नगरस्य बहिस्तु वा ।
वनान्ते वा सानुभागे वटादेश्शीतले तले ।
चलं वाप्यचलं वापि कारयेच्छिल्पकोविदः ॥ ६८ ॥

अथ सप्तमस्य वाहिनीमुखस्यलक्षणम् ॥

पारावारेण नद्यास्तु सङ्गमो यत्र दृश्यते ।
तत्रस्थन्नगरन्नाम्ना वाहिनीमुखमीरितम् ॥ ६९ ॥

---

शिलापटलादि हीनमेव सत्सँपत्करमित्युत्तरत्र विहितत्वात् । इदं शिलाभिर्निर्मितं शिविरं क्षत्रियाणां न हानिदम् । परन्तु जयादि-श्रेयस्करमेव । "अष्टाभिर्लोकपालानां मात्राभिर्निर्मितो नृपः" इत्यादि वचनपर्यालोचनया देवक्षत्रिययोर्लक्षणं प्रायशस्तुल्यमिति प्रतीतेश्चेत्यलमिति ॥

यदि तावदिदं शिविरं इष्टिकाभिर्वा, शिलाभिर्वा, दारुफलकादिभिर्वा रचितं स्थिरवास्तुभूमौ, तथाप्यत्र न सौधादि-निर्माणकरणमभिमतम् । किन्तु यावन्मुख्यसौकर्यन्तावदेवात्राभि-हितमिति बोध्यम ॥ ६८ ॥

अथ सप्तमस्य वाहिनीमुखस्य लक्षणमाह — **पारावारे-णेति** । यत्र स्थले समुद्रेण नदीसङ्गमो दृश्यते तत्र स्थले नद्यास्सव्यतीरभागे वाऽपसव्यतीरभागे या समुद्रस्य दक्षिणभागे वा कृतं नगरं नाम्ना वाहिनीमुखमित्युच्यते । सर्वथात्र भारते

चतुरश्रा वास्तुभूमिरथवा दैर्घ्यभाङ्गता ।
दुर्गेण सहितं वापि प्राकारावृतमेव वा ॥ ७० ॥

परितो रक्षकोपेतं दृढैकद्वारसंयुतम् ।
नदीसेतुपथेनेदं द्वारं सम्मिलितन्तु वा ॥ ७१ ॥

शताधिका मुख्यवीथीश्चोपवीथीस्त्वनेकशः ।
कारयेदिक्षु सर्वत्र बहुपण्यगृहान्वितम् ॥ ७२ ॥

---

वर्षे समुद्रस्यदक्षिणेतरभूभागाप्राप्तिः सृष्टिक्रमतोज्ञेया सूक्ष्मदर्शिभिः । कथंभूतं वाहिनीनगरमिति चेदुच्यते नगरस्यास्य वास्तुभूमिः चतुरश्रा वा दीर्घा वा यथास्थलप्राप्तिः स्वीकार्येति ॥

किञ्चेदन्नगरन्दुर्गापरपर्यायनामकपरिखयावृतं कार्यम् । तदा न प्राकारभित्तिकल्पनम् । दुर्गाख्यपरिखानिर्माणाभावे प्राकारनिर्माणमवश्यं कार्यमित्याशयः । किञ्च नगरस्यास्य मुखद्वारं दृढमेकं सततमपि रक्षकैः परिरक्षितं भवेत् । समीपस्थनदीतीरमार्गेण तद्द्वारमार्गस्य योजनङ्कार्यम् । तादृशनद्यास्तत्र सेतुनिर्माणाभावोऽपि न दोषायेति मतिः । किञ्चेदं नगरं शताधिकाभिर्मुख्यप्रतोलिकाभिरनेकाभिरुपवीथीभिः क्षुद्रवीथीभिश्च सहितं नानाजातिजनाकीर्णं, न्यायशालादिबहुविधशालासमेतं द्वादशसहस्राधिकजनावासभरितं च कल्पयेत् ॥

इत्थंप्रकारेण खेटादीनां निगमादीनाञ्च लक्षणं प्रायशस्स-

नानाजातिसमाकीर्णं नानाशालासमन्वितम् ।
सहस्रद्वादशाधिक्यजनता चात्र कीर्तिता ॥ ७३ ॥
इत्थं निगममुख्यानां पुराणां मानमीरितम् ।
यन्नोक्तन्तत्तु सर्वत्र युक्त्या ज्ञेयं विशारदैः ॥ ७४ ॥

इति विश्वकर्मप्रणीते **विश्वकर्मवास्तुशास्त्रे**
खेटादिलक्षणनिरूपणं नाम
अष्टमोऽध्यायः ॥

---

ङ्ग्रहेण प्रतिपादितम् । यत्र यत्र यन्नोक्तं तत्र तत्र तल्लक्षणं सर्वमपि शिल्पिवर्यैः स्वयमेवोह्य करणीयमिति ॥ ७४ ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
खेटादिलक्षणकथनं नाम
अष्टमोऽध्यायः ॥



अथ पद्मादिनगरलक्षणनिरूपणं नाम

## नवमोऽध्यायः ॥

पद्मकस्सर्वतोभद्रो भद्रो विश्वेशपूर्वकः ।
कार्मुकः प्रस्तरश्चैव स्वास्तिकश्च चतुर्मुखः ॥ १ ॥

श्रीप्रतिष्ठा च नगरी बलिदेवः पुरन्तथा ।
देवमानुषभेदेन द्विविधं नगरं मतम् ॥ २ ॥

वैजयन्तश्च नगरमन्यच्च पुटभेदनम् ।
गिरिवारिगुहाभेदान्नगरं तत्त्रिधा मतम् ॥ ३ ॥

मुखाष्टकश्च नगरं नन्द्यावर्तमथोत्तरम् ।
प्रसिद्धा राजधानी च कीर्तिता नगरोत्तमा ।
लोकानन्दकरास्सर्वे यशस्सम्पद्विवृद्धिदाः ॥ ४ ॥

---

॥ अष्टमोऽध्यायः ॥

अथास्मिन्नध्याये नवमे पद्मादिनगरलक्षणं प्रतिपादयितुं आदौ तेषां नामानि सुखबोधायाह शास्त्रकारः — **पद्मक** इति ॥ (1) पद्मकनगरं (2)सर्वतोभद्रनगरं,(3)विश्वेशभद्रनगरं,(4)कार्मुकनगरं (5) प्रस्तरनगरं (6) स्वास्तिकनगरं (7) चतुर्मुखनगरं (8) श्रीप्रतिष्ठानगरं (9) बलिदेवनगरं (10) पुरं (11) देवनगरं (12) मानुषनगरं(13) वैजयन्तनगरं, (14)पुटभेदननगरं (15)गिरिनगरं (16)जलनगरं (17) गुहानगरं(18)अष्टमुखनगरं (19) नन्द्यावर्त-

पद्मादिनगरीस्थं यत् तत्स्थानं देवनामकम् ।
कीर्त्यते सुखबोधाय शिल्पिकार्यहिताय च ॥ ५ ॥

चतुरश्रादिभेदेन तेऽपि भिन्नप्रदेशिनः ।
गगनं स्थानभेदश्च संख्यां भूम्याश्च लक्षणम् ॥ ६ ॥

---

नगरं (20) राजधानी इत्येवं नाम्ना प्रसिद्धानि पद्मादिनगराण्युत्तमानि विंशतिसंख्याकानि कथितानि पूर्वैस्सर्वेषां जीवानामानन्दकराणि यशसां सम्पदाञ्च तत्रत्यानां वर्धनशीलानीति ॥ ४ ॥

पद्मादिराजधान्यन्तासु विंशतिनगरीषु विद्यमानवास्तुभूभागमाकाशादिदेववर्गनामकथनेन व्यनक्ति । कुतः ? सुलभबोधाय । तत्तद्भागकल्पनीयनृपभवनदेवालयमनुष्यगृहमठमण्टपतटाकादिविविधशिल्पकार्यनिर्माणादिस्थापनाय च तादृशाकाशादिदेववर्गनाम्नामकथने बहुविधनिर्माणयोग्यतत्तद्भागस्फूर्तेः झटित्यसंभवाच्च सप्तमाध्यायोक्तप्रकारेण वास्तुभूमिः चतुरश्रायतादिभेदेन बहुविधैव तादृशवास्तुभूभेदेन देववर्गोऽपि स्थानभेदभागेन निर्णीयेत ॥

यथा — आकाशादिदेवाश्चतुरश्रवास्तुभूमौ एकद्वित्र्यादिकोष्ठगता भवेयुः । एतत्सर्वमप्यत्रत्योद्धारमण्डलदर्शनेन सुलभवेद्यमिति गणनाज्ञैरेतादृशस्थानभेदज्ञैस्संख्याज्ञैर्भूम्यादिद्रव्यलक्षणज्ञैस्सूत्रप्रसाराद्यनेकप्रमाणज्ञैः स्थपतितक्षककलशकारादिभि-

स्थपतिर्यो न जानाति स निन्द्यो मूढ एव हि ।
तस्मात्सर्वमिदं ज्ञेयं शिल्पिभिः कार्यसिद्धये ॥ ७ ॥

आकाशः पवनो मित्रो वह्निर्मेषश्च * पुष्पकः ।
दौवारिकश्च गन्धर्वस्सुग्रीवो दन्तकस्तथा ॥ ८ ॥

रोगश्शोषो भुजङ्गश्च किन्नरो भास्करस्तथा ।
ईशानो भूधरो रुद्रो भृङ्गो मीनश्च सोमकः ॥ ९ ॥

आपो विवस्वान्सावित्रो वासवो भागदेवताः ।
चतुरश्राधिपाः प्रोक्ता वास्तुशास्त्रविशारदैः ॥ १० ॥

---

रेव नगरनिर्माणाय निर्माणस्थाननिर्णयश्च ज्ञेयः । स्थपत्यादयो ये च यदि स्थानभेदाद्यनभिज्ञास्तदा ते मूढा निन्द्या एव, परिहरणीयाश्च ॥

तस्मात्तक्षकादिवर्गैः पूर्वोक्तगणनस्थानभेदसूत्रप्रसारादिबहुविधनगरलक्षणज्ञानमवश्यं सम्पादनीयमित्यर्थः ॥ ७ ॥

अथाद्यं चतुरश्रवास्तुभागं देववर्गनामकथनेन व्यनक्ति —

**आकाश** इति । आकाशदेवः, पवनदेवो, मित्रदेवो, वह्निदेवो, मेषदेवः, पुष्पदेवो, दौवारिकदेवो, गन्धर्वदेवस्सुग्रीवदेवो, दन्तदेवो, रोगदेवश्शोषदेवो, भुजङ्गदेवः, किन्नरदेवो, भास्करदेवः, ईशानदेवो, भूधरदेवो, रुद्रदेवो, भृङ्गदेवो, मीनदेवस्सोमदेवः, आपदेवो, विवस्वान्देवस्सावित्रदेवो, वासवदेव इत्येवं

---

* 'पुष्पकः' इति 'पुष्पदन्तो' व्यवह्रियते ।

रुद्रो रुद्रजयश्चोभौ भृङ्गराजश्च भृङ्गकः ।
आपश्चैवापवत्सश्च इन्द्र इन्द्रजयस्तथा ॥ ११ ॥

ईशानकोणाद्यधिपौ यमलौ संप्रकीर्तितौ ।
आकाशः पवनो मेषो गन्धर्वो दन्तकस्तथा ॥ १२ ॥

रोगश्शोषः किन्नरश्च भास्करो भूधरस्तथा ।
पुष्पकश्च भुजङ्गश्च सावित्रो रविसोमकौ ॥ १३ ॥

भल्लाटो वह्निदेवश्च मित्रो दौवारिकस्तथा ।
सुग्रीवश्च इमे देवाः दीर्घवास्त्वधिपा मताः ॥ १४ ॥

---

पञ्चविंशतिसंख्याका इमे देवा उत्तरपूर्वां दिशमारभ्य प्रादक्षिण्यक्रमेण चतुरश्रवास्तुभूभागाधिपाः कथिताः ॥

अत्रोक्ते देववर्गे रुद्रभृङ्गापेन्द्रा इमे देवाश्चत्वारो यमलौ । तस्मान्नामान्तरभाजश्च । यथा रुद्रो रुद्रजयः, भृङ्गो भृङ्गराजः, आप आपवत्सः, इन्द्र इन्द्रजय इति यमलभूता इमे सर्वेष्वपि वस्तुष्वीशानादिचतुर्दिक्कोणाधिपाः प्रोक्ताः ॥ ११ ॥

अथ द्वितीयं दीर्घवास्तुभूभागं देववर्गनामकथनेन व्यनक्ति — **आकाश** इति ॥

आकाशदेवः, पवनदेवो, मेषदेवो, गन्धर्वदेवो, दन्तदेवो, रोगदेवश्शोषदेवः, किन्नरदेवो, भास्करदेवो, भूधरदेवः, पुष्पकदेवो, भुजङ्गदेवस्सावित्रदेवो, रविदेवशशिदेवौ, भल्लाट-

आकाशमेषगन्धर्वा दन्तको रोगशोषकौ ।
किन्नरो भास्करश्चैव भूधरो मीनसोमकौ ॥ १५ ॥

दौवारिकश्च मित्रश्च वह्निरीशो जयन्तकः ।
मण्डलाकारभूमिस्था इमे देवाः प्रकीर्तिताः ॥ १६ ॥

---

देवो, वह्निदेवो, मित्रदेवो, दौवारिकदेवस्सुग्रीवदेव इत्येवं विंशतिसंख्याका इमे देवाः पूर्ववत् । उत्तरपूर्वां दिशमारभ्य प्रादक्षिण्यक्रमेण दीर्घवास्तुभूभागाधिपाः कथिता इत्यर्थः ॥ १४ ॥

अथ तृतीयं वर्तुलवास्तुभूभागं देववर्गनामकथनेन व्यनक्ति—

**आकाश** इति । आकाशदेवो, मेषदेवो, गन्धर्वदेवो, दन्तदेवो, रोगदेवश्शोषदेवः, किन्नरदेवो, भास्करदेवो, भूधरदेवो, मीनदेवस्सोमदेवो, दौवारिकदेवो, मित्रदेवो, वह्निदेवः, ईशानदेवो, जयन्तदेव इत्येवं षोडशसंख्याका अमी देवाश्च पूर्ववत् ईशानादिचतुष्कोणाधिपाः प्रादक्षिण्यक्रमात्स्थिता इति ॥

एवं प्रसिद्धवास्तुत्रयस्थास्तत्तद्भागाः देववर्गनामकथनेनाविष्कृताः । अन्येषां मर्दलाकारादिवास्तुभूभागानां मण्डकादिग्रामभूभागानां च क्रमस्तत्रतत्र दिङ्नियमनेन स्थपत्याद्युपदेशेन च बोध्यः । पद्माद्युत्तमास्थिरवास्तुषु एतेषु प्रायशः शिल्पलक्षणानि पूर्वोक्ताकाशादिदेवनामनिर्देशेनोक्तानीत्ययं क्रमो ज्ञेयः ॥

अथ पूर्वोक्तचतुरश्रादिवास्तुभूभागानां सदेवानां मण्डलं

पद्मादिनगरीष्वेवं तत्तद्भागाधिदेवताः ।
एषां नाम्नेह निर्दिष्टं यत्स्थलं पुरलक्षणम् ।
ज्ञात्वा तत्सकलं शिल्पी कल्पनं कल्पयेत्क्रमात् ॥१७॥

---

सुखबोधायात्र लिख्यते । यथा पूर्वपश्चिमयो रेखाषट्कं विलिख्य तथैव दक्षिणोत्तरयोस्सममानं रेखाषट्के च विलिखिते चतुरश्रवास्तुमण्डलभूभागाः पञ्चविंशतिकोष्ठभाजो भवन्ति । तेषु कोष्ठेषु पूर्वोक्तक्रमसंख्यया ईशानदिशमारभ्य प्राथमिके कोष्ठे आकाशदेवो द्वितीये कोष्ठे पवनदेवस्तृतीयकोष्ठे मित्रदेव इत्यादि-क्रमेण विलिख्य त एव तत्तद्भागाधिपा इति क्रमशो ज्ञेयाः । एवमेव पूर्वपश्चिमयो रेखापञ्चकं विलिख्य दक्षिणोत्तरयोः रेखाषट्के सममाने लिखिते सति तदा दीर्घवास्तुभूभागाः विंशति-कोष्ठभाजो भवेयुः । तेषु कोष्ठेषु पूर्ववदाकाशादिविंशतिदेवा लेख्याः । अनेनैव प्रकारेण पूर्वपश्चिमयो रेखात्रयं विलिख्य दक्षिणोत्तरयोश्च रेखात्रये लिखिते मण्डलवास्तुभागाः स्फुटाः । तत्रत्य-कोष्ठेषु तदुक्तदेवांश्च लिखेदित्यर्थः । सर्वेष्वप्येतेषु वास्तुषु मध्यभूस्थानं वास्तुपुरुषस्थानमिति च विज्ञेयम् । एतेषां मण्डलञ्चतुर्थाध्यायोक्तरीत्या भल्लाटादिदेवसमेतं देवालयवास्तु-मण्डलं सप्तमाध्याये नित्यमङ्गलग्रामलक्षणोक्तत्रासवादिदेवसहितं मनुष्यवास्तुमण्डलं च क्रमादत्र लिख्यते ॥ यथा —

## १. चतुरश्रवास्तुदेवभागः ॥

| | | | | |
|---|---|---|---|---|
| 1<br>आकाशदेवः | 2<br>पवनदेवः | 3<br>मित्रदेवः | 4<br>वह्निदेवः | 5<br>मेषदेवः |
| 16<br>ईशानदेवः | 17<br>भूधरदेवः | 18<br>रुद्रदेवः | 19<br>भृङ्गदेवः | 6<br>पुष्पकदेवः |
| 15<br>भास्करदेवः | 24<br>सावित्रदेवः | 25<br>वासवदेवः | 20<br>मीनदेवः | 7<br>दौवारिकदेवः |
| 14<br>किन्नरदेवः | 23<br>विवस्वान् देवः | 22<br>आपदेवः | 21<br>सोमदेवः | 8<br>गन्धर्वदेवः |
| 13<br>भुजङ्गदेवः | 12<br>शोषदेवः | 11<br>रोगदेवः | 10<br>दन्तकदेवः | 9<br>सुग्रीवदेवः |

## २. दीर्घवास्तुदेवभागः ॥

| | | | |
|---|---|---|---|
| 1<br>आकाशदेवः | 2<br>पवनदेवः | 3<br>मेषदेवः | 4<br>गन्धर्वदेवः |
| 14<br>रविदेवः | 15<br>शशिदेवः | 16<br>भल्लाटदेवः | 5<br>दन्तकदेवः |
| 13<br>सावित्रदेवः | 20<br>सुग्रीवदेवः | 17<br>वह्निदेवः | 6<br>रोगदेवः |
| 12<br>भुजङ्गदेवः | 19<br>दौवारिकदेवः | 18<br>मित्रदेवः | 7<br>शोषदेवः |
| 11<br>पुष्पकदेवः | 10<br>भूधरदेवः | 9<br>भास्करदेवः | 8<br>किन्नरदेवः |

## ३. मण्डलवास्तुदेव भागः ॥



## ४. देवालयवास्तुभागदेवाः ॥

भल्लाटदेवः मृगदेवः मित्रदेवः

शूलिदेवः



वरुणदेवः

गन्धदेवः पूषणादेवः जयन्तदेवः

९. मनुष्यालयवास्तुभागदेवाः ॥



अथ सूत्रादिमानकथनम् ॥

ऊर्ध्वमानमधोमानं भूमिमानञ्च वर्तुलम् ।
तिर्यङ्मानञ्च मुनिभिर्मानान्युक्तानि पञ्चधा॥ १८ ॥

---

अस्य किलाध्यायस्यारम्भे प्रतिपादितानां बहूनां नगराणां उपरि च प्रतिपादयिष्यमाणानां अनेकविधशिल्पकार्याणां अतिव्याप्त्यादिरहितं तत्तल्लक्षणं वक्तुमादौ सूत्रादिमानसङ्केतार्थकपदादिविषयमाह — ऊर्ध्वमानमित्यादित्रयोविंशतिश्लोकैः॥

द्रव्यसङ्ग्रहणाध्यायोक्तद्रव्यादिष्वन्येषु च कर्तव्यानां सकलशिल्पकार्याणां मानं तु पञ्चविधमिति शास्त्रज्ञैर्मुनिभिरुदीरितम्। तद्यथा — ऊर्ध्वमानम्, अधोमानम, भूमिमानम्, वर्तुलमानम, तिर्यङ्मानमिति । अस्य विशदार्थस्तु — भित्तिस्तम्भविमानप्राकारगोपुरेषु, अन्येषु मनुष्यालयभित्तिगवाक्षादिषु चोपर्युपरि यन्मानं क्रियते तदूर्ध्वमानमिति । भूलंबन (Vaise) वापीकूपतटाकजलाशयादिषु यन्मानं तदधोमानमिति । निम्नत्वोन्नतत्वरहितवास्तुभूमिषु सर्वास्वैन्द्रीदिशमारभ्य वारुणदिग्गतं वा, दक्षिणाशामारभ्य कौबेरीदिग्गतं वा यत्सूत्रप्रसारादिमानं क्रियते तद्भूमानमिति । वर्तुलमानं तावद्वास्तुभूमिं परितो मण्डलाकारेण वा चतुरश्रेण वा गमनयोग्यं मानम् । तिर्यङ्मानन्तु हर्म्यपटलावरणाद्यर्थं कल्पितासु भित्तिषु वा,

दण्डमानं भागमानं गण्यमानमिति त्रिधा ।
सर्वेषु शिल्पकार्येषु तदुत्थं मानमीरितम् ॥ १९ ॥

---

तिर्यग्दारुषु स्तम्भादिषु वा तादृशोर्ध्वभागमानानुगुणमधःस्थले तत्र तत्र तिर्यक्सूत्रप्रसारणेन यन्मानं निम्नत्वोन्नतत्वरहितं समचत्वरादिभूमानञ्च क्रियते तदिति । एवं सर्वेष्वपि शिल्पकार्येषु तावन्मानं पञ्चविधमेव भवतीत्यर्थः ॥

नन्वत्र मानपञ्चकं नोपपद्यते। ग्रन्थान्तरेषु मतान्तरेषु वा मानसंख्याधिक्यवचनं तस्याप्येतन्मानपञ्चक एवान्तर्भावात् । किञ्चात्रानुपदमेव ग्रन्थकर्त्रा प्रतिपादितगण्याख्यमान एव तादृशमानादेरप्यन्तर्भावादित्यलम ॥ १८ ॥

एवं सर्वविधशिल्पकार्येष्वपि मुख्यत्वेन प्रतिपादितमिदं मानपञ्चकमपि दण्डमानेन वा भागमानेन वा गण्यमानेन वा मेयम् । किञ्च पूर्वप्रतिपादितपरिपाट्या भूभित्तिस्तम्भादीनां दण्डेन मानम् । तत्र तत्र चित्रादिद्विमुखस्तम्भत्रिमुखस्तम्भादिषु, अन्येष्वपि कल्पनेषु स्थलान्तरेषु कल्प्यमानकम्पवाजनगलक्षेपणपट्टिकादीनान्तु मानं दशादिभागेन मानं कार्यम् । मण्टपादिषु निर्माणेष्वन्येष्वपि कल्पनेषु एकद्वित्र्यादिसंख्यागणनमेव कार्यम् । अस्य विशदार्थस्तु कस्यचिन्मण्टपस्य वामभागे द्वादश स्तम्भा यदि कल्पितास्तथैव दक्षभागे च द्वादश स्तम्भाः स्थाप्या

जन्मभूर्भूमिदारिश्च जगती च वसुन्धरा ।
मेदिनी विपुला क्ष्माद्याः कल्पनारम्भवाचकाः ॥

पादाङ्घ्रिचरणाद्यास्तु स्तंभार्थद्योतका मताः ।
क्षेपणं पट्टिका पद्मः कर्णो वाजनकन्धरौ ॥ २१ ॥

कुमुदः कुम्भकश्चैव कीलश्च मकरस्तथा ।
प्रतिमान्तरितालिङ्गसोपानप्रतिवाजनाः ॥ २२ ॥

---

इत्यादिन्यूनत्वविषमत्वनिरासकं समसंख्यागणकमिति । एवं मानमानान्तरालिकभेदादिश्च शिल्पिभिरवश्यं ज्ञेय इत्यर्थः ॥१९॥

एवं तत्तत्रोक्तसंकेतसंख्यादिमानं पर्यायवाचकार्थश्च ज्ञेयः । ते च प्रकरणवशादर्थान्तरसंख्यान्तरनिवेदिनः । यथा 'भूः', 'भूमिः', 'रसा', 'विश्वम्भरा', 'धरित्री', इत्यादिपदानि क्वचित्प्रमाणवाक्येषु भूम्याउपरि कल्प्यमानभित्त्यधिष्ठानादि-कल्पननिर्माणारम्भस्थलार्थकानि । अन्यत्र तान्येव भूर्भूमिरचला विश्वम्भरेत्यादिपदानि एकसंख्यार्थद्योतकानि । एवमेकमेव वचनं क्वचित्संख्यावाचकत्वेन, क्वचिन्निर्माणारम्भस्थलनिवेद-कत्वेन च भानाच्छिल्पिवर्गैरित्यादिप्रकरणार्थश्च सूक्ष्मं ज्ञेयः । 'पादः', 'अङ्घ्रिः', 'चरणः', इत्यादयः स्तम्भपर्याय-वाचकाः । 'क्षेपणं', 'पट्टिका', 'पट्टः', 'पद्मः', 'कर्णः', 'वाजनः', 'कन्धरः', 'कुमुदः', 'कुम्भः', 'कीलः',

कम्पश्च क्षुद्रकम्पश्च चित्रकार्योत्तमा मताः ।
अधिष्ठानेषु पीठेषु सोपाने मण्टपेषु च ॥ २३ ॥

स्तम्भेष्वपि च डोलासु तिर्यग्दारुषु भित्तिषु ।
द्वारेषु च कवाटेषु विमाने गोपुरेषु च ॥ २४ ॥

क्षेपणादिप्रमाणानि सम्यग्ज्ञेयानि शिल्पिभिः ।
चन्द्रो भूमिर्नायकश्च सार्वभौमादयस्तथा ॥ २५ ॥

एकसंख्यार्थजनको रविर्देवः प्रकीर्तितः ।

---

'मकरः', 'प्रतिमा', 'अन्तरितम्', 'आलिङ्गं', 'सोपानं', 'प्रतिवाजनं' 'कम्पः', 'क्षुद्रकम्पः', इत्यादयस्तत्रतत्राधिष्ठानपीठसोपानस्तम्भादिषु कल्प्यमानबहुविधरचनाविशेषार्थद्योतकाः ॥

एतेषां प्रमाणादिकन्तु अस्मिन् शास्त्रे प्रतिपादितेषु तेषु तेष्वध्यायेषु शिल्पकलादीपिकादिग्रन्थेषु विस्तरशः प्रपञ्चितम तत्रैव द्रष्टव्यमिति ॥ २५ ॥

अथ सङ्केतसंख्यार्थकपदानि कथयति— **चन्द्रो भूमिरित्यादिना**। 'चन्द्रः', 'इन्दुः', 'विधुः', 'सुधांशुः', 'निशापतिः', 'कलापतिः', इत्यादयः चन्द्रपर्यायवाचकाश्च, तथा 'भूः', 'भूमिः', 'अचला', 'विपुला', 'विश्वंभरा, 'धरित्री', 'मेदिनी', क्षोणीत्यादिभूपर्यायवाचकाश्च, तथा 'नायकः', 'अधिपतिः', 'यजमानः', 'सार्वभौमः', चक्रवर्तीत्याद्यधि-

अश्विनौ यमलौ दृष्टिः पक्षो बाहुः करस्तथा ॥ २६ ॥

संख्याद्वयार्थजनको भल्लाटो नायको मतः ।
गुणः कालः पावकश्च लोकश्च भुवनं तथा ॥ २७ ॥

संख्यात्रयार्थजनको मृगदेवोऽधिपो मतः ।
श्रुतिस्समुद्रो वर्णश्च दिग्युगायनकृन्तथा ॥ २८ ॥

---

नेतृपर्यायवाचकाश्च प्रमाणवचनपठनप्रकारेण एकसंख्याबोधका इत्यर्थः ॥

किञ्च 'चन्द्रसंख्या क्षेपणन्तु भूमिसंख्या गलस्तथा' इत्यादिवचनानामेव संख्या ऊह्या । एवमुत्तरत्रापि बोध्यम् । एतादृशैकसंख्यार्थपदानां सूर्योऽधिपतिरिति शास्त्रनियमः ॥

एवं नासत्यावश्विनौ दस्रौ यमलौ यमौ युग्मावित्यादिवाचकाश्च,तथा लोचनं नयनं नेत्रं दृष्टिरित्यादिदृष्टिपर्यायवाचकाश्च, पूर्वपक्षापरपक्षौ बाहुः करो भुज इत्यादिभुजपर्यायवाचकाश्च संख्याद्वयबोधकाः । एतादृशसंख्याद्वयपदानां भल्लाटदेवोऽधिपतिः ॥

एवमग्निर्वैश्वानरो धनञ्जयोऽनलः पावक इत्याद्यग्निपर्यायवाचकाश्च, तथा 'लोकः', 'जगती', 'जगत्', 'भुवनं', गुणः', 'कालः' इत्यादिवाचकाश्च संख्यात्रयबोधकाः । अस्यास्संख्याया मृगदेवोऽधिपतिः ॥

संख्याचतुष्कार्थकरः पुष्पदेवोऽधिपो मतः ।
प्राणो भूतस्सायकश्च तथेन्द्रियमुखो मतः ॥ २९ ॥

पञ्चसंख्यार्थजनकः पवनोऽधिपतिर्मतः ।
अरिवर्गश्च शत्रुश्च ऋतुरङ्गं रसस्तथा ॥ ३० ॥

षट्संख्यावाचकः प्रोक्तो वास्तुनाथोऽधिपो मतः ।
शैलो ऋषिर्धातुरश्वश्छन्दो वारस्स्वरस्तथा ॥ ३१ ॥

---

श्रुतिर्वेदो निगम इत्यादिश्रुतिपर्यायवाचकाश्च, तथा समुद्रः पारावारो नदीशो जलधिर्जलनिधिरित्यादिसमुद्रपर्यायवाचकाश्च, तथा वर्णो दिग्युगमायनक इत्यादयश्च संख्याचतुष्कबोधकाः । अस्यास्संख्यायाः पुष्पदेवोऽधिपतिः ॥

* प्राणवाचकाः, भूतवाचकाः, सायकवाचकाः, इन्द्रियमुखवाचकाश्च संख्यापञ्चकार्थबोधकाः । अस्याः संख्यायाः पवनोऽधिपतिः ॥

तथा अरिवर्गवाचकाः शत्रुवाचकाः ऋतुवाचकाः अङ्गवाचकाः रसवाचकाश्च संख्याषट्कार्थबोधकाः । अस्याः संख्यायाः वास्तुनाथोऽधिपतिः ॥

एवं शैलः पर्वतो महीधरो भूभृदचल इत्यादिपर्वतपर्यायपदानि, तथा ऋषिर्धातुरश्वश्छन्दो वारस्स्वर इत्यादीनि च

---

* पञ्चषट्संख्यावाचकानां व्याख्यापङ्क्तिः मातृकायां लेखकप्रमादात् त्यक्ता । मूलश्लोकानुसारेण पङ्क्तिपूरणं कृतम् ।

सप्तसंख्यावाचकस्तु किन्नरो नायको मतः ।
वसुर्नागो वारणश्च सिद्धिस्सम्पत्सुखं तथा ॥ ३२ ॥

अष्टसंख्यावाचकस्तु पशुनाथोऽधिपो मतः ।
ग्रहो निधिश्च रन्ध्रश्च द्वारदेवालयस्तथा ॥ ३३ ॥

नवसंख्यावाचकश्च शशिदेवोऽधिपो मतः ।
अवतारोऽङ्गुळिर्दिक् च पङ्क्तिमुख्यश्च वाचकः ॥३४॥

भृङ्गराजाधिपः प्रोक्तो दशसंख्यानिवेदकः ।
इत्यादिबहुधा संख्या प्रसिद्धा वास्तुकर्मणि ॥ ३५ ॥

---

पदानि संख्यासप्तकबोधकानि । अस्यास्संख्यायाः किन्नरदेवोऽधिपतिः ॥

एवं वारणः करी कुम्भी दन्तीत्यादिगजपर्यायपदानि, वसुर्नागसिद्धिस्सम्पदित्यादिपदानि च संख्याष्टकबोधकानि । अस्यास्संख्यायाः पशुनाथोऽधिपतिः ॥

एवं ग्रहो निधी रन्ध्रं द्वारमित्यादिपदानि नवसंख्यार्थबोधकानि । अस्याश्शशिदेवोऽधिपतिः । अवतारोऽङ्गुलिः पङ्क्तिरित्यादिपदानि दशसंख्यार्थबोधकानि। अस्याः भृङ्गराजोऽधिपतिः॥

इत्थं मुख्यानां दशावधिसंख्यानां पर्यायपदादीनि शिल्पशास्त्रप्रमाणसंकेतद्योतकान्यत्रोक्तानि । एकादशाद्युपरितनसंख्याबोधकपदानि तत्र तत्र ग्रन्थान्तरप्रमाणान्तरवचनेषु स्वयमेवोह्यं

**एवं सङ्केतमानञ्च ज्ञेयं शिल्पक्रियापरैः ।**
**वासवात्सूत्रविन्यासो ब्राह्मणानां हितप्रदः ॥ ३६ ॥**

**याम्यात्तु सूत्रविन्यासः क्षत्रियाणां हितप्रदः ।**
**वारुण्यास्सूत्रविन्यासश्शुभदो वैश्यशूद्रयोः ॥ ३७ ॥**

**देवतायतने शस्तस्सूत्रन्यासस्तु याम्यभाक् ।**

---

शिल्पकार्यश्रद्धालुभिरिति ॥ ३६ ॥

अथ सर्वेष्वपि नगरादिवास्तुषु कल्प्यमानं सूत्रप्रसारक्रममाह — **वासवादित्यादिना** । तत्तन्निर्माणाय स्वीकृते समीकृते वास्तुस्थले सूत्रन्यासो वा दण्डन्यासो वा प्रथमतः प्राचीं दिशमारभ्य प्रतीचीदिग्गामी यथा भवेत् तथा मानं कार्यमिति । अयञ्च क्रमः ब्राह्मणगृहेषु कृतश्चेच्छुभप्रद इति समयः । क्षत्रियाणां भवनादिनिर्माणस्थलेषु सूत्रन्यासो वा दण्डन्यासो वा दक्षिणां दिशमारभ्योदीचीदिङ्मुखतया उदीचीदिग्गामि मानं कार्यम् । अयञ्च क्रमः क्षत्रियाणां जयादिशुभप्रद इति । वैश्यशूद्रयोर्गृहेषु वारुणीं दिशमारभ्य प्राचीं दिशं यथा मानदण्डो गाहेत तथा मानङ्करणीयमिति । अयञ्च क्रमः वैश्यानां शूद्रजातानाञ्च क्षेमसम्पत्कर इति भावः ॥

किञ्च सर्वेष्वपि मानवगृहेषु मन्दुरागोष्ठादिषु च याम्यदिग्गामी सूत्रन्यासो न श्रेयस्कर इति भावः । सोऽपि देवा-

मानदण्डमुखान् शिल्पी कल्पनात्पूर्ववासरे ॥ ३८ ॥

यथाविध्यर्चयेद्गन्धपुष्पाद्यैस्तत्पतीनपि ।
नगरारम्भसमये शकुनं वीक्ष्य सर्वतः ॥ ३९ ॥

जयशब्दमुखैर्विप्रैर्वाचयेत्स्वस्तिवाचनम् ।
दिवसे विमले प्रातः कल्पयेन्नगरं नवम् ॥ ४० ॥

तत्र प्रथमस्य पद्मनगरस्य लक्षणम् ॥

पद्मस्य वास्तुभूमिस्तु चतुरश्रा समस्थला ।
सदातोयाशैवालिनीतीरस्था वा विशेषतः ॥ ४१ ॥

---

लयेषु न दोषायेति मतिः । नगरपुरग्रामभवनादिनिर्माणाय निर्दिष्टदिनात्पूर्वमेव शिल्पी स्वायुधतदधिपतींश्च यथाविधि गन्धपुष्पाद्यैरभ्यर्च्य तादृशनिर्माणारम्भसमये सर्वतो दिक्षु शुभशकुनं च निरीक्ष्य ब्राह्मणैस्स्वस्तिवाचनं पाठयित्वा मेघाच्छादनवृष्टिपातादिकालुष्यरहिते विमले शुभे दिने पद्मादिनगरनिर्माणं कुर्यादिति समष्ट्यर्थो बोध्यः ॥ ४० ॥

अथाद्यस्य पद्मनगरस्य लक्षणमाह — **पद्मस्येति** । पद्मनगरवास्तुभूमिस्तु चतुरश्रा निम्नत्वोन्नतत्ववर्जिता भवितव्या । एतादृशलक्षणान्वितोत्तमभूमिस्तावद्यदि सततजलनदीतीरगता भवेत्, तादृशलक्षणान्विता च लभ्येत यदि, तदात्यन्तं जीवानां सुखप्रदेति भावः । एतावता वाक्येन नदीतीरगतायामुत्तमवास्तु-

सहस्रद्वयदण्डेन भूपालेन प्रमाणिका ।
चतुर्दिक्स्थचतुर्द्वारं गोपुरेण समन्वितम् ॥ ४२ ॥

देशान्तरपथेनापि तद्द्वारं संयुतं भवेत् ।
मुखद्वारान्निर्गता या राजवीथीति कथ्यते ॥ ४३ ॥

---

भूम्यामेतादृशपद्मनगरनिर्माणङ्कार्यमिति प्रतीयते ॥

कीदृशं पद्मनगरमिति चेत् — उच्यते । पद्मादीनां विंशतिनगराणां दैर्घ्यायामादयस्तु प्रायशो नृपदण्डेनेति शास्त्रकारेण विश्वकर्मणा प्रतिपादितत्वात् तादृशनृपदण्डसहस्रमस्य नगरस्य दैर्घ्यम् , आयामश्च तथैव दण्डसहस्रप्रमाणङ्कार्यमिति ॥

तथा चोपरिवक्ष्यमाणविश्वतोभद्रनगरवदस्यापि पद्मनगरस्य चतुरश्रत्वलक्षणमभिहितं भवति । नृपदण्डप्रमाणन्तु पूर्वोक्तमानकथनप्रकरणे उपपादितम् । किञ्चास्य नगरस्य प्राच्यादिषु चतसृषु दिक्षु देशान्तरगामिना महामार्गेण संयुक्तं सगोपुरं द्वारचतुष्कं समसूत्रे तत्तद्दिङ्मध्यभागे कल्पनीयम् । तादृशद्वारचतुष्कमेव मुखद्वारं, मुख्यद्वारं, गोपुरद्वारं, नगरद्वारमित्यादिबहुविधनामभाग्भवति । तच्च तत्र तत्र ज्ञेयम् ॥

किञ्च तादृशमुखद्वारान्निर्गता या राजवीथी सैव महावीथीति कथ्यते । अपि च नगरदक्षिणद्वारनिर्गता तादृशमहावीथी उत्तरद्वारप्रवेशिनी भवितव्या । तथैव पूर्वपश्चिमयोरपि दिग्भाग-

शतद्वयं प्रतोलीनां संख्या चात्र प्रकीर्तिता ।
वीथीनां क्षुद्रवीथीनां संख्यानेका समन्ततः ॥ ४४ ॥
ईशाने भूधरे चैव विप्राणान्तु गृहस्थितिः ।
मुख्यशालाश्च याः प्रोक्ता विपण्यश्च विशेषतः ॥ ४५ ॥
सर्वतः कारयेद्दिक्षु यथा भूलाभतो बुधः ।
गोपुरादिसमोपेतदेवगेहन्तु रुद्रके ॥ ४६ ॥

---

येरिति । एतादृशराजवीथीचतुष्कस्य वैशाल्यं तु इतरवीथ्यपेक्षया द्विगुणितमानकं कार्यम् । सुधया निर्मितास्सौधाः । तादृशसौधोज्ज्वलैर्भवनादिभिरुभयपक्षगतैस्समन्विता प्रतोलीत्युच्यते । तादृशप्रतोलीनां शतद्वयावधीनामत्र नगरे निर्माणमभिहितं भवति । तिर्यग्वीथिकानाम्नीरुपवीथीः क्षुद्रवीथीश्च बह्वीस्तत्र तत्र यथास्थलविभवं कल्पयेत् । किञ्च नगरेऽस्मिन्नीशानभागे, भूधरभागे च ब्राह्मणानां सदनङ्कल्पनीयम् । नृपहर्म्यन्तु आपदेवस्य भागे वा वासवभागे वा स्थापनीयम् । वह्निदेवादिदन्तदेवान्तस्थलविशेषभागेषु वैश्यशूद्रादीनां निलयादिः कार्यः ॥

न्यायशालापाठशालावैद्यशालाचित्रशालादयस्तु तत्र तत्र दिग्भागे यथाभूलाभवैशाल्यादिसहिताः कार्याः । गोपुरमण्टपतटाकादिसहितमीश्वरभवनन्तु नगरस्यास्य रुद्रभागे रुद्रदेवभागे कल्पनीयम् । अत्रोक्तभूधरादिभागबोधस्तु पूर्वलिखितचतुरश्रवास्तुमण्डलनिरीक्षणेन सुलभलभ्यः ॥

नानाजातिजनाकीर्णं रक्षकैरपि रक्षितम् ।
नाम्नेदं पद्मकं प्रोक्तं वास्तुशास्त्रविशारदैः ॥ ४७ ॥

अथ द्वितियस्य सर्वतोभद्रनगरस्य लक्षणम् ॥

सर्वतोभद्रनगरभूमिः परिखयावृता ।
दैर्घ्यायामादिमानन्तु पूर्ववत्परिकीर्तितम् ॥ ४८ ॥

---

एवं सर्वत्रापि क्रमः । 'यन्नोक्तं तत्तु सर्वत्र युक्त्या ज्ञेयं विशारदैः' इत्यष्टमाध्यायान्त्यश्लोकोक्तरीत्या ग्रामकार्यकरपुरकार्यकरकुलालाम्बष्ठादयः क्रयविक्रययोग्याविपण्यादयोऽन्ये च ये नगरकार्ययोग्या राजकार्यकरा लेखवाहकाः भृत्यादयः, ये तु स्वर्णकारादयस्तैस्सर्वैरपि समेतमिदं पद्मनगरमिति बोध्यम् । तादृशोपजीविनां वणिजादीनां च गृहादीन्यथास्थलानुगुणं कल्पयेदित्यर्थः । एतद्वचनगर्भितमेव । किंचेदं नगरं यामिकैः रक्षकैश्च सततं रक्षणीयम् नानाजातिजनाकीर्णञ्च भवतीति स्पष्ट एव लक्षणवाक्यार्थः ॥ ४७ ॥

अथ द्वितीयस्य सर्वतोभद्रनगरस्य लक्षणमाह — **सर्वतोभद्रेति** । सर्वतोभद्राख्यस्यास्य नगरस्य दैर्घ्यायामादिमानं तु पूर्ववदेव कीर्तितम् । पद्मनगरस्य यन्मानमुक्तं तदित्यर्थः । यथास्य नगरस्य वास्तुभूमिश्चतुरश्रा, प्राक्प्रत्यग्भागयोः नृपदण्डसहस्रं मानं, तथा दक्षिणोत्तरयोरपि भागयोर्नृपदण्डसहस्रकमिति ।

चतुर्दिक्स्थचतुर्द्वारिङ्गोपुरेण समन्वितम् ।
देशान्तरपथेनापि तद्द्वारं संयुतं भवेत् ॥ ४९ ॥

नात्रोपवीथीशिल्पज्ञः क्षुद्रवीथीश्च कल्पयेत् ।
समसूत्रा राजवीथीः कल्पयेत्ताश्च सर्वतः ॥ ५० ॥

प्रतोलीनां पञ्चशतं संख्या चात्र निगद्यते ।

---

किञ्च नगरमिदं पूर्ववन्नदीतीर एव कल्पनीयमिति नियमः । परन्तु केचिन्नदीतीरभागे वा वनमध्यभागे वा सस्यावृतभूमिभागे वा यत्कुत्र वा शुभलक्षणान्वितस्थले तादृशविशालसमभूप्राप्ति-स्तत्रेदं नगरङ्कल्पयेदिति । तथापि सुलभलभ्यस्वादुतोयान्वितायामेव भूम्यां कल्पनीयमिति सर्वेषामपि नगराणां मुख्यलक्षणञ्च बोध्यम् ॥

किञ्च नगरस्यास्यापि पट्टनगरस्येव प्राच्यादिषु चतसृष्वपि दिक्षु देशान्तरगामिना महामार्गेण संयुक्तं सगोपुरं द्वारचतुष्कं समसूत्रभागे कल्पनीयम् । परन्तु नगरमिदं नैर्ऋत्येन दुर्गाख्य-परिखया संवृतं कार्यमित्यादिभेद ऊह्यः ॥

पूर्वस्माद्भेदकलक्षणान्यत्र प्रतिपादयति । यथा — नगरेऽस्मिन्नुपवीथीः क्षुद्रवीथीश्च कल्पयेत् । सर्वत्र समन्तत उभयपक्षभवनान्विताः प्रतोलीरेव सममानभागस्थले समरज्जु कल्पयेत् । प्रतोलीशब्दार्थः पट्टनगरलक्षणे उक्तः । तादृश-

मध्यभागे राजवेश्म यदि भूभृत्प्रधानकम् ॥ ५१ ॥

देवप्रधानिके चैशं मन्दिरङ्कारयेद्बुधः ।
भूधरे रुद्रके भागे भृङ्गे मीने च सोमके ॥ ५२ ॥

आपोविवस्वद्भागेषु सावित्रेषु यथाक्रमम् ।
ब्राह्मणक्षत्रसद्मानि स्थापयेच्छिल्पकार्यवित् ॥ ५३ ॥

---

प्रतोलीनां संख्या आहत्यात्र पञ्चशती विहिता भवति। प्राक्प्रत्यग्भागयोः दक्षिणोत्तरभागयोरपि सर्वत्र तादृशप्रतोलीनां वैशाल्यं समसंख्याकं सर्वत्र कारयेदिति ॥

ग्रन्थान्तरे तु सर्वतोभद्रनगरस्य पुरद्वारान्निर्गता या महावीथी राजवीथी, तादृशराजवीथीचतुष्कस्य वैशाल्यं नृपदण्डपञ्चकम् । इतरासां प्रतोलिकादीनां नृपदण्डत्रयं वा नृपदण्डचतुष्कं वा विषमरहितं कल्पनीयमिति । तस्मादयमेव नियमोऽत्र युज्यत एव ॥

किञ्चैतादृशलक्षणान्वितं सर्वतोभद्रनगरं द्विविधं भवति । यथा — देवप्रधानकं, राजप्रधानकञ्चेति । यदि राजप्रधानकं तदा अस्या नगरवास्तुभूम्या मध्यमभागे वासवाख्ये साट्टालं सपरिखं ससालं राजभवनं कल्पनीयम । यदि देवप्रधानकं तदा सभामण्टपास्थानमण्टपकल्याणमण्टपप्राकारविमानादिसहितं शिवस्य विष्णोर्वा हर्म्यं कल्पयेदिति समयः ॥

तत्रैव न्यायशालादीन्कल्पयित्वा विधानतः ।
अवशिष्टे देवभागे सर्वेषां निलयादिकम् ॥ ५४ ॥

अथ तृतीयस्य विश्वेशभद्रनगरस्य लक्षणम् ॥

विश्वेशभद्रनगरविन्यासः पूर्ववद्भवेत् ।
चतुरश्रस्थले वापि दीर्घवास्तुस्थलेऽथवा ॥ ५५ ॥

---

किञ्चात्र नगरे भूधररुद्रभृङ्गमीनसोमापविवस्वद्भागेषु प्रादक्षिण्यक्रमेण राजबन्धूनां क्षत्रियाणां, सचिवस्य सेनापतेरन्येषां राजकार्यकराणां च भवनादिकं स्थाप्यम् । एतेष्वेव भागेषु न्यायशालापाठशालाचित्रशालाप्रमुखा बहुविधा नगरयोग्या-श्शालाश्च कल्पनीयाः ॥

एतावता वाक्येनास्य नगरस्य भागनवकभूमौ विप्र-क्षत्रियभवनानि विविधाश्च शालाः कल्प्या इत्युक्तं भवति । अवशिष्टेषु षोडशभागेषु वैश्यानां शूद्राणामन्येषाञ्च नानावर्ण-जातानां राजसेवापराणां भृत्यादीनां निलयः । तथैव बहुविध-पण्यजालसमृद्धविपणिपरम्परादयश्च कल्पनीयाः । नवरत्न-पट्टवस्त्रादिविक्रयशीलवणिग्गणैर्नानाजातिजनैश्चोपेतमिदं नगरं नयनानन्दकरं नगरेषूत्तममिति च केषाञ्चिन्मतमिति सर्वतो-भद्रनगरलक्षणार्थः ॥ ५४ ॥

अथ तृतीयस्य विश्वेशभद्रनगरस्य लक्षणमाह — विश्वे-

भागैस्तु दशभिर्भागद्वयेन शिवमन्दिरम् ।
सप्राकारत्रयं तुङ्गगोपुरेण समन्वितम् ॥ ५६ ॥

ब्राह्मणाधिकसंख्याकस्तदर्धे वा तदर्धके ।

---

शेति । विश्वेशभद्रनगरमिदं सर्वतोभद्रनगरवत् चतुरश्रभूमौ स्थापयेत् । तादृशभूम्यलाभे नदीतीरस्थे वा अन्यत्र वा दीर्घभूभागे शुभलक्षणान्विते नगरस्थापनमिदं विहितं भवति । कीदृशलक्षणान्वितमिदं नगरमिति चेत् तदाह—देशान्तरागतमहामार्गेण सहितं सगोपुरं द्वारद्वयमेवात्र कार्यम् । तादृशद्वारद्वयन्तु नगरस्य प्राक्प्रत्यग्भागयोर्वा दक्षिणोत्तरभागयोर्वा समसूत्रस्थले कल्पनीयमिति भावः ॥

नगरस्यास्य वास्तुभूमिं दशधा विभज्य तत्र भागद्वयप्रमाणकं प्राकारत्रयसहितं तुङ्गगोपुरमण्टपादिभासुरञ्च शिवमन्दिरं यथेष्टस्थले स्थापयेत् । कुतः ? सर्वथास्य विश्वेशनाम्ना प्रसिद्धिमत्त्वादिति । नगरमध्यभागे यदि विश्वेश्वराख्यस्य शिवस्य मन्दिरकल्पनं, तच्च शिल्पविदामभिमतमेवेत्यपि च समयः । 'तदर्धे वा तदर्धके भागे' इत्युक्तत्वात् अत्रावशिष्टभागाष्टकस्थलेषु अथवाहत्य भागक्रमे पञ्चभागे वा ब्राह्मणानां सदनादिकमत्र नगरे कल्पनीयम् । तथा च ब्राह्मणगृहाणां ब्राह्मणानाञ्च संख्याधिक्यमत्र इतरजनतद्गृहापेक्षयेति मुख्यव्यवस्था । अवशिष्ट-

भागे चान्यनिवासादि कारयेच्छिल्पकोविदः ॥ ५७ ॥

महावीथीचतुष्कन्तु परितो देवमन्दिरम् ।
मुखवीथीसमायुक्तं मठमण्टपसंयुतम् ॥ ५८ ॥

नृपहर्म्यसमोपेतो रक्षकैरपि रक्षितः ॥ ५९ ॥

---

स्थले ब्राह्मणगेहप्रमाणादेः किञ्चित्किञ्चिन्न्यूनत्वशालीन्येव इतरेषां जनानां गेहादाविति चान्यो नियमः । तथापि नृपभवननिर्माणस्यात्रोक्तत्वात्तादृशविप्रगेहापेक्षया बहुधा विपुलं शिवमन्दिरान्न्यूनभागं राजभवनं कल्पयेत् । पूर्वोक्तदेवगेहं परितश्चतसृष्वपि दिक्षु उभयपक्षगृहान्वितया मुख्यवीथ्या मठादिभिर्मण्टपादिभिश्च सहितया संमिलितं महावीथीचतुष्कं कारयेत ॥

तथा च तादृशशिवमन्दिरस्य पुरतो मुखवीथीं मठादियुतां, तां च देवभवनञ्च परितो महावीथीचतुष्कनिर्माणमिति । अन्यासां वीथीनां क्षुद्रवीथीनां च शतानि स्थाप्यानि तत्र तत्र स्थलानुकूल्यभाञ्जीति । ' नृपभवनसहितमिदं नगरम् ' इत्युक्तत्वात् अत्र नगरे न्यायशालादिबहुविधशालानां क्रयविक्रयादियोग्यबहुविधपण्यशालानां निर्माणानि, अन्येषां च राजकार्यकराणां निवेशनानि नानावर्णजानां जनानां गृहभवनादीनि च स्थलानुगुणं कल्प्यानीति शास्त्रकारोपदेशः ॥ ५९ ॥

अथ चतुर्थस्य कार्मुकनगरस्य लक्षणम् ॥

कार्मुकाकारवत्त्वात्तन्नगरं कार्मुकाख्यकम् ।
कीर्त्यते शिल्पशास्त्रज्ञैर्वास्तुलक्षणपण्डितैः ॥ ६० ॥

नद्यास्तीरे समुद्रस्य तीरे वास्य प्रकल्पनम् ।
दृढदुर्गसमोपेतं प्राकारावृतवास्तुकम् ॥ ६१ ॥

सहस्रदण्डदैर्ध्यं वा तदर्धं वा तदर्धकम् ।
एकाननं प्रकर्तव्यं गोपुरेण युतं तु वा ॥ ६२ ॥

---

अथ चतुर्थस्य कार्मुकनगरस्य लक्षणमाह — कार्मुकेति । नगरस्यास्य वास्तुभूमिस्तावत्प्रायशः कार्मुकाकारवती । तस्मादस्य कार्मुकनगरमिति अन्वर्थं नाम कीर्त्यते शिल्पज्ञैर्वास्तुशास्त्रज्ञैश्चेति भावः । नदीतीरे वा समुद्रतीरे वा दृढपरिखासहितं सप्राकारञ्चेदं नगरं स्थापयेत् । प्राकारावृतवास्तुकमित्यनेन यावद्वास्तुभूविस्तारस्तावत्पर्यन्तमतितुङ्गं दृढं प्राकारकल्पनं कार्यम् । तदन्तश्च प्रतिभागं नृपभवनमात्रं वा उपप्राकारं बहिःप्राकारभित्त्यपेक्षया किञ्चिदुत्तुङ्गं स्थापनीयमिति च प्रतीयते । एतत्सर्वमप्यस्यातिदार्ढ्यापादनायेति मतिः ॥

किञ्च धनुराकारनगरस्यास्य दैर्घ्यन्तु नृपदण्डानां सहस्रं वा पञ्चशती वा तदर्धं वेति विकल्पः स्थलविशेषाधीन इति भावः । तादृशमानयुतस्यास्य मुखद्वारमेकमेव सगोपुरं च ।

तद्द्वारं यदि कौबेर्यां शुभदं भूभृतां मतम् ।
तीरे वा मध्यभागे वा राजहर्म्यं प्रकल्पयेत् ॥ ६३ ॥

बहुरक्षास्थानयुतं चक्रिकाणां गृहैर्युतम् ।
प्रतोलीनान्तु वैशाल्यं भूपदण्डत्रयादिकम् ॥ ६४ ॥

विपणीनां शतैर्युक्तं सहस्रैश्च वणिक्स्थलैः ।
नानाजातिजनैर्युक्तं नाविकाद्यैश्च सर्वतः ॥ ६५ ॥

---

तच्च यदि कौबेर्यां कृतं तन्नृपाणां विशेषतो जयादिप्रदमिति भावः । तथाकरणाशक्यविषयेऽपि न दोषायेति सिद्धान्तः ॥

किञ्च नद्यास्समुद्रस्य वा तीरे कल्पितस्यास्य नगरस्य प्राकारस्य नातिसमीपे बहुरक्षोपेतं बहुशालासहितं भूपमन्दिरं नानासौधलसितं स्थापयेत् । किञ्च तादृशभूपहर्म्यं परितो वा तत्समीपे एकस्मिन्भागे चक्रिकाणामत्यन्तं धनिनां सौधादीनि स्थापयेत् । इदञ्च लक्षणं पद्मनगरसर्वतोभद्रनगरयोरपि प्रसज्यते । विस्तरभयात्तत्र नोक्तमिति भावः । अपि च 'प्रतोलीनान्तु वैशाल्यं भूपदण्डत्रयादिकम्' इत्युक्तत्वात्, अत्र विपण्यादीनां प्रतोल्यादीनां च विशालतायास्सर्वथा दण्डत्रयन्यूनता न कार्या । परन्तु यथास्थलविभवं भूपदण्डानां चतुष्कं वा पञ्चकं वा योजनीयमिति । अन्यत्सर्वं सुगममेव ॥

किञ्च नगरस्यास्य लक्षणान्तराणि तु पत्तनलक्षण-

अथ पञ्चमस्य प्रस्तरनगरस्य लक्षणम् ॥

प्रस्तरग्रामवत्सर्वमत्रापि नगरे मतम् ।
विशेषलक्षणान्यत्र कथ्यन्ते कार्यसिद्धये ॥ ६६ ॥

दृढदुर्गसमोपेतं द्वारोपद्वारसंयुतम् ।
पञ्चभिस्तु शतैर्दण्डैर्दैर्घ्यं वैशाल्यमेव च ॥ ६७ ॥

प्राकारकुड्यसहितमथवा दीर्घवास्तुकम् ।
मध्यभागे भूपहर्म्यं वारुण्यामीशमन्दिरम् ॥ ६८ ॥

---

प्रकरणोक्तान्येवेति देवालयन्यायशालादीनां राज्यसेविनामन्येषाञ्च गृहादीनां निर्माणं तत्र तत्र स्थलविभवतः करणीयमिति कार्मुकनगरलक्षणार्थः ॥ ६५ ॥

अथ पञ्चमस्य प्रस्तरनगरस्य लक्षणमाह — **प्रस्तर इति** । पूर्वोक्तसप्तमाध्याये प्रस्तरग्रामस्य यानि लक्षणान्युक्तानि तान्येव प्रायशोऽत्रापि प्रस्तरनगरे सम्पद्यन्ते । झटिति शिल्पक्रियास्फूर्तये विशेषलक्षणान्याह — **दृढदुर्गेत्यादिना** । प्रस्तरनगरस्यास्य वास्तुभूमिस्तु नृपदण्डानां पञ्चशतदैर्घ्यवती वैशाल्ये च तत्प्रमाणवत्येव कार्या । अयमेवोत्तमः पक्षः ॥

अथवा क्वचित्तत्संख्याहीनप्रमाणके दीर्घवास्तुभूभागे वा एतन्नगरनिर्माणमपि नाकीर्तय इति मतभेदः । सर्वथेदं नगरं दृढपरिखया प्राकारभित्त्या चावृतं कृत्वा तदन्तर्बहुशो द्वाराणि

सर्वा वीथ्यो द्विपक्षास्स्युरेकपक्षा बहिः स्थिताः ।
शतसंख्यां प्रतोलीनामन्या बह्वीश्च कल्पयेत् ॥ ६९ ॥

---

तदन्तरुपद्वाराणि च कार्याणि । कथमेवङ्करणम् ? उच्यते — परम्परया अत्यन्तरक्षणाय दार्ढ्याय शोभायै चेति । किञ्चैतादृश-प्रस्तरनगरस्य पूर्वोक्तप्रस्तरग्रामस्येव प्राक्प्रतीचीप्रतोलयश्चतस्रो दक्षिणोत्तरयोरपि तथैव चतस्रः प्रतोल्यः ॥

किञ्चैतासां वीथीनामुपवीथीनाञ्च मध्ये या तिर्यग्वीथी संपद्यते, तस्या एव मध्यवीथीति व्यवहारः प्रसज्यते । तत्रापि विशेषः यथा — प्राची मध्यवीथी, दक्षिणमध्यवीथी, प्रत्य-ङ्मध्यवीथी उत्तरमध्यवीथीत्येवं नामकनो बोध्यः । किञ्च अत्र क्षुद्रवीथीनामुपवीथ्यादिमेलनप्रसक्तिरेव न संभवति । सर्वेष्वपि नगरेष्वेव तच्छङ्का न कार्या । पट्टणपुटभेदनराजधान्यादिषु तु तादृशक्षुद्रवीथीनामपि क्वचिद्भागे क्षुद्रोपवीथीसङ्गम इत्येवं भेदश्च तत्र तत्रोह्यो विचक्षणैरित्यलम् ॥

किञ्चास्य नगरस्य मध्यमभागे भूपमन्दिरं, वारुण्यां दिशि शिवस्य मन्दिरञ्च क्रमात्स्थापयेत् । एतादृशनृपभवन-प्रत्यङ्मुखीं शिवमन्दिरप्रत्यङ्मुखीञ्च प्रतोलिकामुभयपक्षसदनो-पेतामितरवीथ्यपेक्षयातिविपुलाञ्च कारयेत् । किञ्च नगरेऽस्मि-न्नाहतिक्रमे चतसृणां प्रतोलीनां षण्णवतिसंख्याकानां वीथीनां,

बह्वीभिः पण्यवीथीभिर्न्यायशालादिभिर्वृतम् ।
हीनसंख्या द्विजातीनामत्रोक्तं बहुवर्णके ॥ ७० ॥

अथ षष्ठस्य स्वस्तिकनगरस्य लक्षणम् ॥

स्वस्तिकाख्यनगर्यास्तु वास्तुभूर्वर्तुलाकृतिः ।
तस्माद्वर्तुलमानेन मानयेच्छिल्पपण्डितः ॥ ७१ ॥
नदीतीरे गिरेस्सानौ समुद्रस्य तटेऽथवा ।
सप्राकारं सदुर्गञ्च कल्पयेत्स्वस्तिकं पुरम् ॥ ७२ ॥

---

बह्वीनां क्षुद्रवीथीनाञ्च कल्पनं च स्थलाधीनदैर्घ्यायामवदिति भावः। पण्यवीथीरनेकाः न्यायशालादींश्च तत्र तत्र प्राच्यामुदीच्याञ्च दिशि कल्पयेत् । किञ्चात्र इतरवर्णजनगृहाणां जनतायाश्चाधिक्यं विप्रगेहविप्रजनताया इति पूर्वस्माद्भेद ऊह्यः ॥ ७० ॥

अथ षष्ठस्य स्वस्तिकनगरस्य लक्षणमाह — स्वस्तिकेति । नदीतीरे वा, गिरेस्सानुभागे वा, समुद्रस्य तटे वा यथाभूलाभं वर्तुलाकारवास्तुभुवि इदं स्वस्तिकनगरं स्थापयेदित्यर्थः । सूत्रमानप्रकरणोक्तरीत्या वास्तुभूमिमिमां वर्तुलमानेन सूत्रविच्छिल्पी मानयेदिति शास्त्रनियमश्शुभकरः ॥

किञ्चास्य नगरस्य लक्षणान्तराणि यथा — नगरमिदं परिखयावृतं, तदन्तस्तून्नतेनैकेन प्राकारेण संरक्षितञ्च कार्यम् । अपि चात्र वीथीनियमादिकन्तु ईशानान्निर्ऋत्यन्तं, आग्नेया-

ईशानादिचतुष्कोणभागारब्धास्तु वीथिकाः ।
प्राच्यादिसमसूत्रान्तादारब्धास्ताः प्रतोलिकाः ॥ ७३ ॥
एवं वीथ्यष्टकं मध्यभागस्थानगतं मतम् ।

---

द्वायव्यान्तं दीर्घां वीथीङ्कृत्वा तथैव समसूत्रं प्रागादिप्रत्यगन्तां दक्षिणाद्युत्तरान्ताञ्चातिदीर्घां वीथीं स्थापयेत् । तथाकरणे नगरस्य मध्यभागे वास्तुनाथभागं निर्दिशेत् । तथा च तादृशवास्तुनाथभागात् पूर्वोक्तरीत्या अष्टौ वीथ्यस्स्युः । अस्य विशदार्थस्तु — अष्टदलपद्मबन्धस्सर्वत्र प्रसिद्धः । तादृशपद्मस्य मध्यभागः कर्णिकास्थानमित्युच्यते । तत्र कर्णिकास्थानवदस्मिन्नगरे वास्तुस्थानमिति, अष्टदलस्थाने अत्राष्टौ वीथ्य इति विवेकः ॥

वर्तुलाकारवास्तुभूमिनिर्मितेऽस्मिन्स्वस्तिके ईशानादिकोणचतुष्के वीथीनिर्माणम्, तत्र च जनावास इत्यादिको न दोषावह इति तात्पर्यम् । कुत एवम्? 'ईशानादिचतुष्कोणभागारब्धास्तु वीथिकाः' इत्यत्रैव शास्त्रकारेणोक्तत्वात् । एवमादिषु क्वचिन्नगरादिलक्षणेषु तादृशदिक्कोणा न दोषकरा इति शिल्पसमयः । नो चेदत्र स्वस्तिकरूपवीथ्यष्टकस्यासंभव इति साधुः ॥

तथा च कर्णिकास्थानस्थितस्य वास्तुनाथभागस्यारम्भे पूर्वोक्तवीथ्यष्टकस्थितानां अन्यगृहादीनां सूक्ष्मत्वमुपर्युपरि क्रमेण

मानसूत्रप्रसारेऽत्र यदि तिर्यक्प्रदर्शिते ॥ ७४ ॥

चतुश्शतं वा दण्डानां त्रिशतं वा स्थलोत्तमे ।
तस्मिन्वा मध्यभागे वा भूपहर्म्यं प्रकल्पयेत् ॥ ७५ ॥

अथवा न्यायशालादीन्कल्पयेच्छिल्पकोविदः ।
उदीच्यामीशगेहं स्यात्तत्राद्यानां गृहान्वयः ॥ ७६ ॥

वह्नेरीशस्य भागे वा भूपहर्म्यं प्रकल्पयेत् ।
अथवा राजकार्यार्थिशाला वा त्रिविधा मताः ॥ ७७ ॥

---

मानाधिक्यमिति च बोध्यम् । उत्तमवास्तुभूलाभे नगरस्यास्य तिर्यङ्माने भूपदण्डानां त्रिशतमेवालम्, तद्भिन्ने स्थले भूपदण्डानाञ्चतुश्शतमिति दैर्घ्यायामादिमानमुक्तं भवति । तादृशमध्यभागाख्यवास्तुनाथभागे न्यायशालां वा नृपभवनं वा कारयेत् ॥

किञ्च नगरस्यास्योदीच्यां दिशि दौवारिकसोमभागयोर्मध्ये शिवस्य विष्णोर्वा मन्दिरनिर्माणं करणीयम् । तत्रैव दौवारिकमित्रजयन्तसोमाख्यदेवभागेषु विप्राणां निलयाः स्थाप्याः । पूर्वोक्तमध्यभागाख्यवास्तुनाथस्थाने राजकीयन्यायशाला यदि कृता, तदा वह्निदेवभागे वा ईशानदेवभागे वा भूपालहर्म्यं निर्मापणीयमित्यर्थः । प्रथमतः प्रतिपादितरीत्या नगरमध्य एव राजभवनं यदि कल्पितम्, तदा वह्नेर्भागे वा ऐशे वा तादृशन्यायशालादीन् राजकार्यकराणामालयादींश्च कल्पयेदिति भावः ॥

आकाशान्मीनपर्यन्तं नानाजातिगृहान्वयः ।
सद्वस्तुनिवहैः पूर्णास्तन्मध्ये पण्यवीथिकाः ॥ ७८ ॥

दुर्गाश्रया च या वीथी चैकपक्षा च वर्तुला ।
तस्यामेव कुलालादिनिलयान्कारयेद्बुधः ॥ ७९ ॥

---

किञ्चावशिष्टेष्वाकाशादिमीनदेवान्तभागेषु वैश्यशूद्रादि-नानावर्णगृहनिर्मितिश्शस्ता भवति । तेषां दशविधानामाकाशादि-मीनान्तभागानां मध्य एव समुचिते स्थले बहुवस्तुभरिताः पण्यवीथ्यः कल्पनीयाः । किञ्चामुं नगरं परितः परिखाया अन्तर्भागे पूर्वोक्तप्रकारेणान्तर्गतां वा बहिर्भूतां वा वर्तुलाकारां कांचिद्वीथीं निर्मापयित्वा तस्यामेव वीथ्यां कुलालाम्बष्ठरजकादीनां निवेश-नादि कार्यमिति समयः ॥

किञ्चैतस्याः वर्तुलाकाराया वीथ्याः वैशाल्यापेक्षया द्विगुणितं दिक्कोणभाजां वीथीनाम् , तदपेक्षया प्राच्यादिचतुस्सम-सूत्रस्थितानां वीथीनाञ्च वैशाल्यं द्विगुणितं करणीयमिति विवेकः । तथा च वर्तुलाकारवीथ्याः वैशाल्यं नृपदण्डद्वयम् । कोणगतानां वीथीनां नृपदण्डत्रयम् । प्रागादीनान्तु दण्डचतुष्कं वा सार्ध-दण्डचतुष्कं वेति क्रममानकथनम् । एतावता वाक्येनास्य महावीथीनवकमेव । तथा न क्षुद्रवीथीप्रसक्तिः । एवं स्वस्तिक-नगरलक्षणार्थो बोध्यः ॥ ७९ ॥

अथ सप्तमस्य चतुर्मुखनगरस्य लक्षणम् ॥

सर्वतोभद्रनगरे मानं यत्समुदीरितम् ।
तदर्धं वा तदर्धं वा मानं कुर्याच्चतुर्मुखे ॥ ८० ॥

न चात्र राजभवनं न दुर्गं नापि गोपुरम् ।
प्राच्यादौ तु चतुर्भागे चतुर्द्वारसमन्वितम् ॥ ८१ ॥

---

अथ सप्तमस्य चतुर्मुखनगरस्य लक्षणमाह — **सर्वतोभद्रनगर** इति । सर्वतोभद्रनगरे यन्मानं विहितं तत्रार्धं वा तदर्धं वा मानमत्र चतुर्मुखनगरे करणीयमिति स्थलानुकूलविकल्पः । अस्य विवृतिर्यथा — सर्वतोभद्रनगरस्येवास्यापि चतुरश्रैव वास्तुभूमिः स्वीकार्या । तत्र सर्वतोभद्रकस्य प्राक्प्रत्यग्भागयोर्नृपदण्डसहस्रकं मानं, दक्षिणोत्तरभागयोश्च तथैवेत्युक्तम् । तदर्धमित्युक्ते तादृशनृपदण्डानां पञ्चशती वा तदर्धं वात्रेति विकल्पः ॥

किञ्चात्र चतुर्मुखनगरे न राज्ञां वासभवनं निर्मापणीयम् । परन्तु राजकीयव्यवहारशालादय इत्यग्रे स्फुटम् । नापि परिखासङ्कुलनम् । न च गोपुरनिर्माणमत्र कार्यम् । परन्तु साधारणभूमौ तादृशायामदैर्घ्यादिसहितं प्राच्यादिषु चतसृषु दिक्षु समसूत्रस्थं द्वारचतुष्कं साधिष्ठानसद्वज्रकवाटार्गळादि कारयेत् । किञ्चात्र नगरे प्राचीप्रत्यग्भागयोर्वा दक्षिणोत्तरभागयोर्वा उभयपक्षगृहान्वि-

प्रतोलीनां शतैर्युक्तमुपवीथीशतेन च ।
बह्वीभिः क्षुद्रवीथीभिस्संयुतश्च समन्ततः ॥ ८२ ॥

शिवस्य मन्दिरं मध्यभाग एवात्र कल्पयेत् ।
सप्राकारं सभाशालातटाकाद्यैश्च संयुतम् ॥ ८३ ॥

देवप्राकारमभितो महावीथ्याः प्रकल्पनम् ।
तद्बहिश्च महावीथ्यस्तद्बाहिश्च तथा मताः ॥ ८४ ॥

---

तानि विशालानि प्रतोलीनां शतानि निर्मापणीयानि । तथैव तत्तिर्यग्वीथीनां संख्याशतञ्च कृत्वा तत्र तत्रानेकाः क्षुद्रवीथीश्च स्थापयेत् ॥

किञ्च नगरस्यास्य मध्यभाग एव शिवस्य मन्दिरनिर्माणं कार्यमिति च शास्त्रनियमः । तादृशशिवमन्दिरमतिविशालं उत्तुङ्गप्राकारावृतं सभामण्टपतटाकादिसहितं च कल्पयेत् । तादृशदेवमन्दिरप्राकारमभितो बहिरतिविशालमुभयपक्षगृहान्वितं समचतुस्सूत्रं महावीथीचतुष्कं स्थापयेत् । अस्याः प्रथमावरण-वीथीति नामान्तरम् । एवमेवैतादृशप्रथमावरणवीथीरभितो बहिरति-विशालं पूर्ववदेव उभयपक्षसदनान्वितं समचतुस्सूत्रं महावीथी-चतुष्कं कल्पयेत् । अस्याः द्वितीयावरणवीथीति नामान्तरम् । एवमेवैतादृशद्वितीयावरणवीथीरभितो बहिरतिविशालमुभयपक्ष-सदनान्वितं समचतुस्सूत्रं महावीथीचतुष्कं च कार्यम् ।

एवं द्वादशवीथीषु ब्राह्मसद्मानि कारयेत् ।
सावित्रे वाथवा मीने भागे भूपक्रियालयः ॥ ८५ ॥

आकाशादीशपर्यन्तं वैश्यादीनां गृहान्वयः ।
तन्मध्ये पण्यवीथीनाञ्चतुष्कं स्थापयेद्बुधः ॥ ८६ ॥

धान्यादिकं दिशि प्राच्यां याम्यां हेमादिकं स्मृतम् ।

---

अस्यास्तृतीयावरणवीथीति नामान्तरञ्च भवति । तथाचाहत्य संख्यायां आवरणत्रयस्थानां एतादृशवीथीद्वादशकानां प्राची प्रथमावरणवीथीति दक्षिणा प्रथमावरणवीथी, प्रतीची प्रथमावरणवीथी, उदीची प्रथमावरणवीथीति व्यवहारश्च बोध्यः । एवमेव प्राची द्वितीयावरणवीथीत्यादिकमप्यूह्यम् । एवमग्रेऽपि बोध्यम् ॥

एतादृशवीथीद्वादशके ब्राह्मणानामेव वसतिस्थलं स्थापनीयम् । न तत्रान्यगृहादीति । अपि चावशिष्टे सावित्रदेवभागे वा मीनदेवभागे राजकीयव्यवहारशालादयः कार्याः । ततः प्रान्तवास्तुभूमौ आकाशभागादीशानदेवभागपर्यन्तं भागषोडशकं वैश्यशूद्राद्यालयान्वितं स्थापनीयम् । किञ्च तत्र तत्र प्राच्यादिषु चतसृष्वपि दिक्षु निषद्यानां स्थानं कार्यम् । तत्रापि चान्यो नियमः । यथा वा— प्राचीविपण्यां बहुविधधान्याढकमाषमुद्गगोधूमचणकतिलादीनां मरीचीप्रमुखसंभारवस्तूनां तैलाज्यदधि-

वस्त्रादिकं वारुणे स्यादुत्तरे गन्धमुख्यकम् ॥ ८७ ॥

एवंविभागिनीस्तत्र निषद्या द्रव्यसङ्कुलाः ।

जनता दशसाहस्रसंख्या चात्र प्रकीर्तिता ॥ ८८ ॥

अथाष्टमस्य श्रीप्रतिष्ठितनगरस्य लक्षणम् ॥

यत्र लक्ष्म्यादिदेवीनां प्रतिष्ठा मुख्यका मता ।

नाम्ना तां शिल्पशास्त्रज्ञाश्श्रीप्रतिष्ठापुरं विदुः ॥ ८९ ॥

---

क्षीरगुडादीनां वार्ताकपटोलिकाशाकुटादिशाकप्रमुखानामन्येषां बहुविधभक्ष्यभोज्यवस्तूनां क्रयविक्रयस्थानं कल्पयेत् ॥

तथा दक्षिणाविपण्यां हेमरजतताम्रपित्तलादिभाण्डादिक्रयविक्रयस्थानं कार्यम् । एवमेव प्रतीचीविपण्यां बहुविधपट्टवस्त्रकम्बलदुकूलाद्याच्छादनक्रयविक्रयस्थानं निर्मापणीयम् ॥

किञ्चोदीचीविपण्यां कस्तूरीकुङ्कुमकर्पूरादिगन्धद्रव्याणां मल्लीचम्पककुन्दकुसुमजातीनां क्रयविक्रयस्थानं च तत्र तत्र स्थलानुकूलङ्करणीयमिति । अपि च अयुतजनसंख्यानिवासश्चात्रेत्येवमादयो भेदास्सर्वतोभद्रनगरस्येव ज्ञेयाः ॥ ८८ ॥

अथाष्टमस्य श्रीप्रतिष्ठानगरस्य लक्षणमाह — यत्रेति । लक्ष्मीगौर्यादिलोकमातृवर्गस्यात्र प्रतिष्ठितत्वान्मुख्यदेवतात्वेन श्रीप्रतिष्ठानगरमित्यस्यान्वर्थनामकथनक्रमः । अत्र केचिद्भिन्नमतयो यथा वा कालेन हीनं प्राचीनमिति वचनाद्यत्र कुत्र वाऽरण्यमध्ये

वर्तुला वास्तुभूमिस्तु चतुरश्रायताऽथवा ।
उत्तमैव रसा ग्राह्या श्रीप्रतिष्ठापुरोत्तमे ॥ ९० ॥

पञ्चभिस्तु शतैर्दण्डैर्नृपाख्यैर्मानमीरितम् ।

---

ग्रामान्ते वा सानुप्रदेशे वा प्राचीनजनैरध्युषितं वा तदर्थं तद्वासात्पूर्वमेव लक्ष्म्यादिमातृभिरेव यत्प्रतिष्ठितं तदेव नगरं श्रीप्रतिष्ठानगरमिति ॥

एतच्चिन्त्यम् ; 'यत्र लक्ष्म्यादिदेवीनां प्रतिष्ठा मुख्यका मता' इत्यत्र वचनशैल्या नगरेऽस्मिंल्लक्ष्म्यादिदेव्य एव मुख्यदेवताः, न हरिहरादय इति भानात् । किञ्चात्रैवोत्तरत्र देवप्रतिष्ठितं नगरं देवनगरमिति व्युत्पत्त्या तन्नगरलक्षणस्याप्युक्तत्वात् । कुत्रापि देवप्रतिष्ठानगरं देवीप्रतिष्ठानगरमित्यादिव्यवहाराप्रसिद्धेश्च, देवनगर एव देवीनगरव्यवहारसंभवाच्चेति तन्मते सर्वथा पौनरुक्त्यदोषप्रसङ्गादनादरणीयमित्यलं विस्तरेण ॥

अतो नगरस्यास्य वास्तुभूमिस्तावत् वर्तुलाकारा चतुरश्रा वा दैर्घ्यान्विता वा भवतु । सर्वथा नद्यास्तीरस्थैव भवितव्या । तदलाभे नद्याः नातिदूर एव वा प्रदेशे नगरमिदं निर्मापयेदिति भावः । किञ्च परीक्षाप्रकरणोक्तरीत्या उत्तममेदिन्यामेव इदं नगरं निर्मापयेदित्येवकारेण मध्यमा भूर्न ग्राह्येति समयः । अत एवास्य पुरोत्तमत्वमिति भावः ॥

प्राक्प्रत्यग्गोपुरोपेतमुखद्वारद्वयोज्ज्वलम् ॥ ९१ ॥
सदुर्गं वा ससालं वा कारयेच्छिल्पकोविदः ।

---

किञ्च नृपदण्डानां पञ्चशतं मानं अस्य दैर्घ्यस्येति । यदि वर्तुलभूम्याश्चतुरश्रभूम्या वा लाभे तदा तत्संख्यानुगुणमेव शिल्पिभिर्मानज्ञैर्मानं निर्णेतव्यमिति विवेकः । अपि चेदं नगरं सपरिखं कार्यम् । तदा न प्राकारभित्तिस्थापनं विहितम् । अथवा प्राकारभित्तिस्थापनमेवालम् , न दुर्गकरणमित्यर्थः ' सदुर्गं वा ससालं वा ' इति वाक्येन प्रतीयत इति ॥

अन्यश्च सूक्ष्मार्थस्सर्वैरप्यवश्यं ज्ञेयः । कोऽयमर्थः ? अत्र नगरलक्षणाध्याये स्थलान्तरे च सर्वत्र अस्य चतुरश्रवास्तुभूमिः, अस्य दीर्घवास्तुभूमिः, अस्य वर्तुलवास्तुभूमिरित्यादि विविच्य तत्त-द्वास्तुनामपठनपूर्वकं यत्र लक्षणमुक्तम् , तत्रैव किलाकाशादिदेवभाग-करणीयमठमण्टपन्यायशालाभूपहर्म्यादिकल्पनवचनमभिहितम् । यत्र वैकल्पिकेन वचनेन तद्वास्तुनाम न निर्णीतं, तत्र स्थले सर्वत्र प्राच्यादिभागकथनवचनप्रदर्शनादित्ययं क्रम ऊह्यः । अन्यथा तत्तल्लक्षणविशिष्टस्थानज्ञानवैपरीत्यापत्तेश्चेति ॥

अपि चेदं नगरं यजमानेच्छया सपरिखं वा सप्राकारं वा कृत्वा प्राच्यामुदीच्यां च दिशि सगोपुरं साधिष्ठानं मुखद्वारद्वयं करणीयम् । इदमेव नगरगमनागमनमार्गो नान्यत्रेति मतिः ॥

चतुर्भागामिमां भूमिं विभजेन्मानसूत्रकैः ॥ ९२ ॥
प्रतिभागं प्रतोलीनां द्वात्रिंशत्संख्यया स्मृता ।
वीथीनामिह मानं तद्द्विगुणं परिकीर्तितम् ॥ ९३ ॥
मध्ये लक्ष्म्यादिदेवीनां मन्दिरं कारयेद्बुधः ।
तटाकमण्टपारामप्राकारमुखगोपुरैः ॥ ९४ ॥
संयुक्तं शुभदं प्रोक्तं प्राङ्मुखं सर्वजीविनाम् ।
तन्मन्दिरं तु परितो विप्रवीथीः प्रकल्पयेत् ॥ ९५ ॥

---

किञ्च नगरस्यास्य सर्वां वास्तुभूमिं सूत्रेण चतुर्धा विभज्य प्रतिभागं द्वात्रिंशत्प्रतोलिकाकल्पनं कुर्यात् । आहत्याऽस्मिन्नगरेऽष्टाविंशत्यधिकशतप्रतोलिका भवन्तीत्यर्थः । तद्द्विगुणमिति वचनेनाहत्य वीथीनां संख्या तु षट्पञ्चाशदधिकद्विशतमिति फलति । तथा चात्र नगरे आहतिक्रमे चतुरशीत्यधिकात्रिशतं (384) वीथीनां संख्येति । तस्मान्नात्र क्षुद्रवीथीकल्पनप्रसक्तिः । प्रतोलिका-वीथीलक्षणं कथितपूर्वमेव ॥

किञ्च नगरस्यास्य मध्यम एव भागे पूर्वोक्तलक्ष्म्यादि-मातृवर्गाणां मन्दिरं तटाकबहुमण्टपारामादिलक्षितं एकप्राकारेण वा प्राकारत्रयेण वा संवृतं गोपुरोज्ज्वलमुखद्वारं च कार्यविच्छिल्पी कारयेदित्यर्थः । अस्य किल लक्ष्म्याद्यालयस्य प्राङ्मुखनिर्माणन्तु तन्नगरवास्तव्यानां सर्वजीवानामपि शुभप्रदमिति शास्त्रीयविश्वासः ॥

भूपहर्म्यन्तु वारुण्यामन्यत्रान्यगृहस्थितिः ।
वणिजां तुङ्गहर्म्याणि कौबेर्यां वा नृपान्तिके ॥ ९६ ॥

याम्यां दिशि निषद्यास्तु तत्रैव बहुशालकाः ।
नाम्नेदं नगरं प्राहुश्श्रीप्रतिष्ठेति सूरयः ॥ ९७ ॥

---

किञ्च चतुर्मुखनगरलक्षणकथितावरणवीथीशैल्याऽत्रापि तादृशदेवीमन्दिरं परितो विप्रसद्मभासुरमावरणवीथीचतुष्कमावरणवीथ्यष्टकमावरणवीथीद्वादशकं वा क्वचित्स्थाप्यमिति । भूपालहर्म्यन्तु नगरवास्तुस्थले वारुण्यां दिशि कारयेत् । किञ्च तादृशभूपालहर्म्यं परितो वा समीपे वा धनिकानां वणिजां चक्रकराणां च भवननिलयादीनि कारयेत् । अथवा नगरस्यास्योदीच्यां दिशि कल्पनीयमिति स्थलानुकूलविकल्पः । अवशिष्टभूमिवास्तुभागेषु वैश्यशूद्राद्यनेकविधजनानां आवासगेहानि स्थापयेत् ॥

अपि च नगरस्यास्य दक्षिणस्यां दिशि विशाला बहुविधपण्यवीथी निर्मापणीया । तस्यामेव दिशि भागान्तरेषु न्यायशालां, पाठशालां, विद्याशालां, वैद्यशालां, नाटकशालामन्याश्च विविधाश्शालाः स्थापयेदित्यर्थः । अत एतादृशलक्षणान्वितमयुताधिकजनसंख्यान्वितं च इदं नगरं श्रीप्रतिष्ठानगरमित्युच्यत इति ॥

अथ नवमस्य बलिदेवनगरस्य लक्षणम् ॥

त्रिकोणभूम्यां कलितं बलिदेवपुरं स्मृतम् ।
करालीं चण्डिकां मारीं चल्याद्याश्चोग्रदेवताः ॥ ९८ ॥
स्थापयित्वा विशेषेण तर्पयेत्ताश्च भूपतिः ।
सुखादिसिद्धये सर्वजीवानां भूभुजामपि ॥ ९९ ॥

---

अथ नवमस्य बलिदेवनगरस्य लक्षणमाह — त्रिकोण-भूम्यामिति । न हि तावल्लोके सर्वत्र नगरादिनिर्माणायोत्तम-भूमिस्वीकारनियमः संभवति । कचिद्देशविशेषेषु, स्थलविशेषेषु च वनमध्ये वा, सस्यावृतभूभागे वा, गिरिसानुप्रदेशे वा, नदीतीरे वा, नदीद्वयस्य सङ्गमस्थले वा, अन्यत्र यदि त्रिकोणाकाराया वास्तुभूमेर्लाभस्तदा तस्यामेव वास्तुभूमौ क्लृप्तं नगरं बलिदेव-नगरमिति नामभाग्भवति । कुतः? तादृशबलिप्रधानदेवतानां तत्र स्थापनात् । तादृशदेवतानां तत्र प्रतिष्ठापने तत्रत्यानां सर्वेषां प्राणिनां तादृशत्रिकोणाकारवास्तुभूमिजनितदोषानुदयः संभवतीति भावः । अतस्तासां देवतानां नामान्याह — करालीमिति । पूर्वोक्तरीत्या संप्राप्तायां त्रिकोणाकारभूम्यां निम्नत्वोन्नतत्वरहिते स्थलानुगुणे नगरं निर्माय तन्मध्यभागे वा प्राच्यां दिशि करालीं वा देवीं, चण्डिकां वा देवीं, मारीं वा देवीं चल्लीदेव्याद्या-श्चान्या देवता वा स्थापयित्वा, ताश्च प्रतिवर्षं बहुविधबल्यन्न-दानोत्सवादिना भूपालादिस्तर्पयेदिति । कुतः? तदानीमेव

न चात्र राजसदनं न दुर्गं नापि गोपुरम् ।
नानाजातिजनाकीर्णं यथेष्टद्वारसंयुतम् ॥ १०० ॥

वीथीभिः क्षुद्रवीथीभिरनेकाभिस्समन्वितम् ।
पण्यशालासमोपेतं कुर्याच्छिल्पविशारदः ।
षट्सहस्राधिकजनैस्संयुतं बलिदेवकम् ॥ १०१ ॥

---

तद्वास्तुवासिनां सर्वेषामपि प्राणिनां दुष्टज्वरादिपीडाराहित्यं, यथाकालवर्षगोसस्यादिसम्पदश्च वर्धन्त इति भावः ॥

किञ्च तादृशोग्रदेवीनां स्थापनेन तादृशवास्तुदोषपीडाराहित्यादिकञ्च कामिकागमे स्कान्दादिपुराणेषु च उपपादितं द्रष्टव्यम् ॥

केचिदत्र नगरे करालीं कालीं चण्डीं मारीं चल्लीमन्याश्च देवताः स्थापयेदिति । तत्सर्वं यथाविभवं यथास्थलसौकर्यं यजमानेच्छाधीनमिति वयं वदामः ॥

किञ्चात्र नगरे न राजसदनपरिखागोपुरादिकल्पननियमः । परन्तु यथास्थलविभवं यथेष्टस्थले नगरद्वारसमेतं बह्वीभिर्वीथीभिः क्षुद्रवीथीभिश्च समावृतं बहुविपणिशालासमेतं नानाजातिजनावासार्हगेहादिलसितञ्च स्थापयेदिति । जनता त्वत्र षट्सहस्रसंख्याधिकेति बलिदेवनगरलक्षणार्थः ॥

किञ्च नगरमिदं न श्रोत्रियवासार्हमिति केचित् । अन्ये

अथ दशमस्य पुरस्य लक्षणम् ॥

वनमध्यगतं वापि गिरिपार्श्वगतं तु वा ।
सुखलभ्यजलोपेतमारामादिसमन्वितत् ॥ १०२ ॥
सहस्रदण्डावधिकदैर्घ्यायामसमन्वितम् ।
महामार्गेण संयुक्तं दक्षिणोत्तरवक्त्रकम् ॥ १०३ ॥

---

तु मत्स्यमांसाशादिजनावासार्थमेव कल्पितमिदं नगरमिति ॥

अथ दशमस्य पुरस्य लक्षणमाह — **वनमध्यगतं** वेति । साधारणपुरनायकस्यास्य वास्तुभूमिस्तु वनमध्यगता वा गिरेः पार्श्वगता वा स्वीकार्या । अथवा यत्र सततं सुखलभ्यं स्वादुजलं तत्र वा भूम्यामिदं नगरं स्थापयेदिति भावः । यदि संभवे वा रसाल-पनसनारिकेलवकुलादिफलतरुबृन्दमण्डितारामभूमिभागे तत्रास्य नगरस्य निर्माणमप्यतिसुखायेति मतिः ॥

किञ्च नगरमिदं चतुरश्रवास्तुभूभाग एव निर्मापणीयमिति प्रतीयते । अन्यथा चतुर्भागविभजने समचतुरत्वादिसामरस्या-नापत्तेः । तस्मादस्य पुरस्य वास्तुभूमिस्सर्वतोभद्रनगरवच्चतुरश्रैव भवति । मानविषये तु तदर्धमेव । यथा वा प्राक्प्रत्यग्भागयो-स्सूत्रमानं नृपदण्डसहस्रकं, दक्षिणोत्तरभागयोरपि सूत्रमानं तथैव नृपदण्डसहस्रकं इति । किञ्चात्रान्यो विशेषः । यथा सर्वतोभद्रनगरस्य तु नृपदण्डसहस्रकमेव प्रमाणमुक्तम् । अत्र तु सति विभवे तदधिकप्रमाणतयापि मानकरणमिति ॥

तत्पादमानसंयुक्तचतुर्भागविभाजितम् ।
मध्यस्थराजभवनं दुर्गरक्षकरक्षितम् ॥ १०४ ॥
प्रत्यग्दिग्देवतागारं प्राकारेणाभिरक्षितम् ।
नाम्नेदं नगरं प्रोक्तं पुरं शिल्पविशारदैः ॥ १०५ ॥
तन्तुवायास्स्वर्णकारा लोहकारादयः परे ।

---

किञ्चैतादृशचतुरश्रभूमिस्थापितस्यास्य पुरस्य दक्षिणाया-मुदीच्यां च दिशि समसूत्रं मुखद्वारद्वयं साधिष्ठानं कल्पनीयम् । तदुपरि गोपुरकल्पनं तु ऐच्छिकमिति भावः । किञ्चैतादृश-मुखद्वारद्वयमपि तत्तद्दिग्भागे देशान्तरागतमहामार्गेण संमिलितङ्कार्यम् । किञ्च पुरमिदं सममानं चतुर्भागं विभज्य तेषां भागानां मध्ये वास्तुमध्यस्थाने राजभवनं परिखावृतं रक्षकैर्यामिकै-श्चाभिरक्षितं निर्मापयेत् ॥

एतावता प्रबन्धेन प्रायशो नगराणां, ग्रामाणाञ्च वास्तुभू-सीमापर्यन्तं परिखावृतत्वमुपपादितम् । अत्र तु पुरे नगरमध्यस्थापि-तस्य राजभवनमात्रस्यैव परिखासमावृतत्वमुक्तमिति पूर्वस्माद्भेदो लक्ष्यः ॥

किञ्चात्र समभागं विभाजिते पूर्वोक्तभागचतुष्कस्थले प्रत्यग्दिग्गतभागे प्राकारेणैकेन वा प्राकारत्रयेण वा अभिरक्षितं प्राचीमुखमिन्दिरामन्दिरं विष्णुमन्दिरं वा तदुभयमपि वा स्थापयेत् । अपि च प्राचीदिग्भागेषु तन्तुवायास्स्वर्णकाराः

तेषां गृहाणि स्थाप्यानि प्राच्यां शिल्पविशारदैः ॥
दक्षिणस्यां निषद्याश्च वैश्यशूद्रालयांस्तथा ।
स्थापयेद्वारुणे भागे द्विजातीनां गृहाणि च ॥ १०७ ॥

तत्रैव क्षत्रबन्धूनां धनिकानां गृहाणि च ।
कौबेर्यान्तु सभाशालाश्चानेकाः कल्पयेत्सुधीः ॥ १०८ ॥
राजकार्यकराणाञ्च मन्त्रिसेनेशयोरपि ।
सद्मानि तत्र कार्याणि पुरेऽस्मिन् शिल्पकोविदैः ॥

---

लोहकाराः तक्षकाः स्थपतयस्तैलविक्रयिणोऽन्ये च यन्त्रक्रिया-कारिणस्तेषां सदनादिकं स्थापयेत् ॥

दक्षिणदिग्भागे तु बहुविधपण्यजालसमृद्धविपणीरनेकाः कल्पयेत् । तत्स्थानसमीप एव क्रयविक्रयादिकार्यव्यग्राणां वैश्यानां शूद्रजानामन्येषां भवनादीनि यथास्थलानुकूलस्थापितवीथीभांजि कार्याणीत्यर्थः । वरुणदिग्भागे तु पूर्वोक्तदेवतालयसमीप एव वा तं परितो वा ब्राह्मणानां निलयादीन् क्षत्रियबन्धूनां हर्म्यशाला-दींश्च स्थापयेत् ॥

एवमुत्तरदिग्भागे तु राजकीयकार्यकराणामावासादीन्, न्यायशालादिबहुविधशालाः, मन्त्रिणो हर्म्यादिकं, सेनापतेरपि भवनादिकञ्च यथाक्रमं स्थापयेत् । एवं भागचतुष्टयाख्ये उपपुर-चतुष्ककल्पने विहिते पुरस्यास्य मध्यभागे राजभवने चात्युन्नते

अथैकादशस्य देवनगरस्य लक्षणम् ॥

कालेन हीनं प्राचीनमिति शास्त्रविदो विदुः ।
तस्माद्युगान्तरे देवैस्स्थानं यत्कल्पितं पुरा ॥ ११० ॥
तदेव देवनगरमिति शिल्पविनिश्चयः ।

---

परिखावृते-कल्पिते नगरमिदं विच्छित्तिविशेषशालि नयनानन्दकरञ्च भवेदिति शिल्पविदां समयः ॥

किञ्चात्र पुरे पूर्वोक्तरीत्या विभक्तभागचतुष्कस्य तन्मध्यस्थितराजभवनस्य मध्ये निर्माणादिरहितस्वल्पभूभागस्य वर्तनमभिप्रेतम् । कुतः ? तत्रैव स्थले एकदेशे खलु राजभवनपरिखानिर्माणम् । तस्मादेतद्भागचतुष्काद्राजभवनस्य मार्गस्तु तादृशपरिखापराधीन इति भावः । किञ्चैवंरीत्या परिखावृतनृपभवनवास्तुभूमौ कल्प्यगोपुरस्थापनमुखकरणमार्गकरणादिलक्षणन्तु अस्मिन्नेव शास्त्रे द्वादशत्रयोदशाध्याययोरुक्तत्वात् नात्र तल्लक्षणमुपपाद्यत इति ज्ञेयम् ॥

अथैकादशस्य देवनगरस्य लक्षणमाह — कालेनेति । अस्मिन्काले कृतमित्यादिचिह्नरहितं यद्वास्तु तदेव प्राचीनं नगरमिति । तच्च चिराय कालेन वा युगान्तरे वा भवितव्यमिति शिल्पसमयः । शैल्याऽनया युगान्तरेषु देवैर्यत्कृतं तद्देवनगरमिति प्रसिद्धिः । कथं देवेन कल्पितमिदमिति निर्णेतुं शक्यमित्यत्राह —

नदीतीरे वनान्ते वा भूधरस्य तटेऽपि वा ॥ १११ ॥

प्रासादभवनाद्येषु जीर्णैरङ्गैस्तु सर्वतः ।
व्यक्ताव्यक्तैरनेकैश्च लक्षणैस्तच्च निर्दिशेत् ॥ ११२ ॥

रसालैः पनसैरन्यैः केसरैश्च वटादिभिः ।
गवां सञ्चारतो वापि गरुत्मद्वासतोऽपि वा ॥ ११३ ॥
स्वयम्भूलिङ्गदृष्ट्या वा निर्दिशेद्देवपत्तनम् ।

---

**नदीतीर** इत्यादिना । युगान्तरेषु देवनिर्मितनगरं तावत्प्रायशो गङ्गायमुनागोदाशतद्रूनर्मदादीनां पुण्यसरितां तीर एव लक्ष्यं भवेत् । अथवा पुण्यस्थले वनमध्यभागेऽतिरमणीयस्थले दृश्यम् । आहोस्विदुत्तुङ्गशिखरितटभागे वा सूक्ष्मतो दृश्यं भवेत् । इत्थमव्यक्तलक्षणमुक्तम् ॥

अथ व्यक्तानि लक्षणानि कानिचिदाह — **प्रासादभवनाद्येष्विति** । पूर्वं देवनिर्मितेषु शिलामयेषु अतिविपुलप्रासादभवनहर्म्यमण्टपपृथुलतटाकतटादिषु कालवशाज्जीर्णानि भिन्नानि वा तत्तत्स्थलानि अयथायथक्रमाणि निरीक्ष्य वा तल्लक्षणं वाच्यम् । अथवा रसालपनसकेसरबिल्ववटादीनामुत्तमतरूणामतिबहुलशाखादीनां निरीक्षणेन वा, स्वेच्छया गोसञ्चारवशेन वा, गरुत्मदादिनिवासेन वा स्वयम्भूलिङ्गादितत्तद्देवप्रतिकृतिदर्शनाद्वा इदं देवनगरमिति निर्दिशेदित्यर्थः ॥

नात्र कल्प्यो दिङ्नियमो नापि कार्या बलिक्रिया ॥
स्वीकृत्य तन्मुख्यभागं निर्माणादि प्रकल्पयेत् ।
भूपालस्येच्छया तत्र वर्धनं कारयेद्बुधः ॥ ११५ ॥
चातुर्वर्ण्यगृहोपेतं नृपहर्म्यादिभूषितम् ।
न्यायशालादिसहितं सदुर्गं वा ससालकम् ॥ ११६ ॥

---

किञ्चैतादृशलक्षणैर्देवनगरे निश्चिते सति तत्र प्राच्यादि-दिङ्नियमः समसूत्रप्रसारादिमाननिर्णयो बलिदानादयश्च न कार्याः । यथा वा स्थले प्रतिमाचिह्नं वीथ्यादिलक्ष्म च दृश्यते, तदनुकूलमेव तत्र भवनादिनिर्माणं कारयेदित्यर्थः ॥

किञ्च तत्रत्यान् लिङ्गादिदेवान्सर्वथा न चालयेत् । तादृशलिङ्गादिदेवप्रतिमानां मुखाद्यवयवेषु भिन्नत्वादिदोषे यदि दृष्टे तदा तांस्तु देवान् शिलाद्याच्छादितान् कृत्वा तत्रैव स्थाने तदीयप्रतिमां नवीकृत्य आगमोक्तरीत्या मन्त्रजलसंप्रोक्षणादिना पूजार्हां विरचय्य पञ्चपर्वादिवर्षोत्सवविशेषपूजानैवेद्यादि-समर्पणेन तोषयेदित्यर्थः ॥

अपि च नगरेऽस्मिन्दैवते पूर्वकृतवीथ्यादिचिह्नं यद्यत्र दृश्यते, तदेव स्थलं तदेव मानञ्च मुख्यत्वेन स्वीकृत्य नवभवनादि कारयेत् । सार्वभौमादिमहीपालेच्छया तादृशदेवनगरस्य वैशाल्यादिवर्धनकरीः वीथ्यन्तनिर्माणादिक्रियाः नवं कृत्वा तत्स्थलं सपरिखं वा सप्राकारं वा कारयेत् ॥

लिङ्गादिदेवांस्तत्स्थानाच्चालयेन्न कदाचन ।
जीर्णोद्धरणकार्येण नवीकुर्यान्नृपोत्तमः ॥ ११७ ॥

अथ द्वादशस्य मानुषनगरस्य लक्षणम् ॥

नृपादिभिर्धर्मशीलैर्जयसन्तानसिद्धये ।
निर्मितं शिल्पविद्भिर्यत्तन्मानुषमुदाहृतम् ॥ ११८ ॥

नृपदण्डत्रिशतकप्रमाणस्वीकृते स्थले ।
प्राच्यां मुखद्वारयुतं प्रतीच्यामीशगेहभाक् ॥ ११९ ॥

---

अपि चात्र नगरे नगरलक्षणोक्तरीत्या चातुर्वर्ण्यजानां गृहाणि पट्टधरस्य महीनेतुर्भवनं न्यायशालादींश्च स्थलानुकूलं स्थापयेदिति देवनगरलक्षणार्थो ज्ञेयः ॥ ११७ ॥

अथ द्वादशस्य मानुषनगरस्य लक्षणमाह — **नृपादिभिरिति** । नरपालादिभिर्धर्मपरायणैः सत्कुलप्रसूतैः सुचरितैः जयादिसिद्धये वा, सन्तानप्राप्तये वा, स्वीयजननीजनकप्रमुखानां स्वस्य वा पारलौकिकसुखासिद्ध्यर्थं वा, यशसे शाश्वताय वा, प्रजानां हिताय महापुण्यसिद्धये वा, स्वीयैरेव सद्द्रव्यैर्यन्नगरं निर्मितं भवति, तन्मानुषनगरमिति शिल्पिभिरुदीर्यत इत्यर्थः । यथाविभवं, यथाभूलाभं, स्वीकृतस्य वास्तुस्थलस्य प्रमाणन्तु नृपदण्डात्रिशतीसंख्याकं भवति ॥

तत्रैव भूपहर्म्येण सहितं रहितं तु वा ।
ब्राह्मणादिचतुर्वर्णवीथ्यो द्विशतसंख्यकाः ॥ १२० ॥
मठमण्टपसंयुक्ता निषद्यादिभिरन्विताः ।
अन्नशालादिभिर्युक्ताष्षट्सहस्रजनाधिकाः ॥ १२१ ॥

---

किञ्च नगरस्यास्य प्राग्भागे मध्यसूत्रस्थाने एकमेव मुखद्वारं सगोपुरं वा स्थापनीयम् । तत्समसूत्रायां प्रतीच्यां दिशि सगोपुरं, सप्राकारं समण्टपादि परमेश्वरस्य, विष्णोर्वाऽऽलय-निर्माणं स्थापनीयम् । तत्रैव प्रतीचीभागे भूपालमन्दिरञ्च कल्प्यम् । अथवा भूपमन्दिराकरणे भूपाज्ञाकराणां प्रतिनिध्या-दीनां भवनं वा कार्यम् । आहोस्वित्तस्मिन्नेव भागे न्यायशाला-दीन्वा स्थापयेत् इति इच्छाधीनविकल्पः ॥

किञ्च ब्राह्मणादिचतुर्वर्णजातानामपि आवासभवनादी-न्ग्रामलक्षणोक्तरीत्या तत्र तत्र यथाक्रमं यथाभूप्राप्ति स्थापयेदिति मर्यादा । किञ्च नगरस्यास्य वीथीसंख्या तु द्विशतं शास्त्रचोदितं भवति । क्षुद्रवीथ्यस्त्वनेका इति भावः । किञ्च तासु च ब्राह्मण-वीथीषु क्वचित्प्रदेशे यत्यादीनामावासयोग्यमठादीन्देवोत्सवार्थं मण्टपादींश्च यथाविभवं कल्पयेत् । किञ्च देशान्तरागतपण्यजाल-निबिडनिषद्यादींश्च तत्र तत्र स्थापयेत् ॥

किञ्चात्र नगरे लक्षणान्तरं च मुख्यकोटित्वेन कल्प्यम् ।

लिङ्गादिदेवांस्तत्स्थानाच्चालयेन्न कदाचन ।
जीर्णोद्धरणकार्येण नवीकुर्यान्नृपोत्तमः ॥ ११७ ॥

अथ द्वादशस्य मानुषनगरस्य लक्षणम् ॥

नृपादिभिर्धर्मशीलैर्जयसन्तानसिद्धये ।
निर्मितं शिल्पविद्भिर्यत्तन्मानुषमुदाहृतम् ॥ ११८ ॥

नृपदण्डत्रिशतकप्रमाणस्वीकृते स्थले ।
प्राच्यां मुखद्वारयुतं प्रतीच्यामीशगेहभाक् ॥ ११९ ॥

---

अपि चात्र नगरे नगरलक्षणोक्तरीत्या चातुर्वर्ण्यजानां गृहाणि पट्टधरस्य महीनेतुर्भवनं न्यायशालादींश्च स्थलानुकूलं स्थापयेदिति देवनगरलक्षणार्थो ज्ञेयः ॥ ११७ ॥

अथ द्वादशस्य मानुषनगरस्य लक्षणमाह — **नृपादिभिरिति** । नरपालादिभिर्धर्मपरायणैः सत्कुलप्रसूतैः सुचरितैः जयादिसिद्धये वा, सन्तानप्राप्तये वा, स्वीयजननीजनकप्रमुखानां स्वस्य वा पारलौकिकसुखासिद्ध्यर्थं वा, यशसे शाश्वताय वा, प्रजानां हिताय महापुण्यसिद्धये वा, स्वीयैरेव सद्द्रव्यैर्यन्नगरं निर्मितं भवति, तन्मानुषनगरमिति शिल्पिभिरुदीर्यत इत्यर्थः । यथाविभवं, यथाभूलाभं, स्वीकृतस्य वास्तुस्थलस्य प्रमाणन्तु नृपदण्डात्रिशतीसंख्याकं भवति ॥

तत्रैव भूपहर्म्येण सहितं रहितं तु वा ।
ब्राह्मणादिचतुर्वर्णवीथ्यो द्विशतसंख्यकाः ॥ १२० ॥
मठमण्टपसंयुक्ता निषद्यादिभिरन्विताः ।
अन्नशालादिभिर्युक्ताष्षट्सहस्रजनाधिकाः ॥ १२१ ॥

---

किञ्च नगरस्यास्य प्राग्भागे मध्यसूत्रस्थाने एकमेव मुखद्वारं सगोपुरं वा स्थापनीयम् । तत्समसूत्रायां प्रतीच्यां दिशि सगोपुरं, सप्राकारं समण्टपादि परमेश्वरस्य, विष्णोर्वाऽऽलय-निर्माणं स्थापनीयम् । तत्रैव प्रतीचीभागे भूपालमन्दिरञ्च कल्प्यम् । अथवा भूपमन्दिराकरणे भूपाज्ञाकराणां प्रतिनिध्यादीनां भवनं वा कार्यम् । आहोस्वित्तस्मिन्नेव भागे न्यायशालादीन्वा स्थापयेत् इति इच्छाधीनविकल्पः ॥

किञ्च • ब्राह्मणादिचतुर्वर्णजातानामपि आवासभवनादीन्ग्रामलक्षणोक्तरीत्या तत्र तत्र यथाक्रमं यथाभूप्राप्ति स्थापयेदिति मर्यादा । किञ्च नगरस्यास्य वीथीसंख्या तु द्विशतं शास्त्रचोदितं भवति । क्षुद्रवीथ्यस्त्वनेका इति भावः । किञ्च तासु च ब्राह्मण-वीथीषु क्वचित्प्रदेशे यत्यादीनामावासयोग्यमठादीन्देवोत्सवार्थं मण्टपादींश्च यथाविभवं कल्पयेत् । किञ्च देशान्तरागतपण्यजाल-निबिडनिषद्यादींश्च तत्र तत्र स्थापयेत् ॥

किञ्चात्र नगरे लक्षणान्तरं च मुख्यकोटित्वेन कल्प्यम् ।

वणिग्जनैस्समाकीर्णं तन्तुवायादिभिर्युतम् ।
ग्रामकार्यकरैर्युक्तं पुरकार्यकरैस्तथा ॥ १२२ ॥

विशेषतो याय जूकयूपस्तम्भेन वा युतम् ।
गणनाथादिदेवानामालयान्दिक्षु कल्पयेत् ॥ १२३ ॥

---

तत्किमिति चेदुच्यते — अनाथदरिद्रादिजनानां रक्षणायान्नशालाः यथावर्णक्रमं स्थाप्याः । आदिशब्देन गोसंरक्षणशालादयो गृह्यन्ते । बहुविधैर्वणिग्जनैः तन्तुवायस्वर्णकारलोहकारतक्षकादि-ग्रामकार्यकरैः पुरकार्यकरैश्चित्रकारादिभिश्च निबिडितेऽस्मिन्मानुष-नगरे जनता षट्सहस्रावधिका कीर्तिता । नातः परमनुमन्यते शास्त्रज्ञैः । अयन्तु क्रमस्सर्वत्रानुष्ठेयः । किञ्च सर्वत्र ग्रामनगर-लक्षणेषु स्थलानुकूलमेव जनसंख्या विहिता भवति । उक्तजनता-धिक्यसंभवे रोगासौकर्यपीडाद्युत्पत्तेरिति भावः ॥

किञ्चात्र नगरे दिशास्वष्टसु मध्यस्थले या गणपतिषण्मुख-काल्यादिदेवमन्दिरं स्थापनीयम् । अपि चात्र श्रोत्रियादि-ब्राह्मणोत्तमैर्यायजूकैर्वा यथाविभवं यागादिकर्म कारयित्वा तदावेदकं यूपस्तम्भञ्चोदीच्यां प्राच्यां वा दिशि निखातयेत श्रेयोर्थिभिर्नरपालाद्यैः ॥

एतादृशलक्षणान्वितस्यास्य नगरस्य धर्मनगरमिति

अथ त्रयोदशस्य वैजयन्तनगरस्य लक्षणम् ॥

पारावारतटस्था वा नद्यास्तीरगताऽथवा ।
वनान्तस्था वास्तुभूमिर्वैजयन्तस्य कीर्तिता ॥ १२४ ॥

नृपदण्डसहस्रान्तप्रमाणा चतुरश्रका ।
वासवादिदिशानाथस्थानेषूपपुराष्टकम् ॥ १२५ ॥

स्थापयित्वाथ तन्मध्ये भूपहर्म्यं प्रकल्पयेत् ।
सप्राकारं सपरिखं रक्षकैरभिरक्षितम् ॥ १२६ ॥

---

नामान्तरमुदीर्यत इति केचिदुशन्ति । अन्ये तु यागनगरमिति । यथादेशव्यवहारो बोध्य इति वयं वदामः ॥ १२३ ॥

अथ त्रयोदशस्य वैजयन्तनगरस्य लक्षणमाह —पारावारतटस्थेति । वैजयन्तनगरनिर्माणाय समुद्रतीरस्थितैव वास्तुभूमिः प्रायशः स्वीकार्या । अयमेवेत्तमः पक्ष इति भावः । तादृशभूम्या अलाभे नदीतीरस्थिता वा, आहोस्विद्वनमध्यस्थिता वेति विकल्पो भूप्राप्तिविषयक इति भावः । सा च वास्तुभूमिः प्रतिदिशं सर्वतोभद्रनगरवत् नृपदण्डसहस्रप्रमाणोपेता चतुरश्रा च भवितव्या ॥

किञ्च तामिमां वास्तुभूमिं वासवादिदिक्पालस्थानभागप्रमाणकं भागाष्टकं मानेन विभज्य तन्मध्यभागे भूपालहर्म्यं सप्राकारं, सपरिखं यामरक्षकैस्सेनाभिश्च सन्ततमभिरक्षितञ्च

कूटकोष्ठसमायुक्तचतुर्द्वारसमन्वितम् ।
ऐन्द्यान्तु राजबन्धूनां भवनानि प्रकल्पयेत् ॥ १२७॥

मन्त्रिसेनेशहर्म्याणि राजकार्यालयांस्तथा ।
आग्नेय्यान्तु कुलालादिगृहाणां कल्पनं मतम् ॥ १२८॥

दक्षिणस्यान्तु वैश्यानां भवनानि प्रकल्पयेत् ।

---

कल्पयेत् । किञ्च तादृशभूपालहर्म्यस्थानस्य प्राच्यादिषु चतसृषु दिशास्वपि कूटकोष्ठादिसहितं द्वारचतुष्कं परिखान्तर्गतमेव कारयेदिति भावः । कचित्तादृशद्वारचतुष्कस्य परिखाया बहिःस्थले निर्माणमप्यभिप्रेतमिति समयः ॥

किञ्च पूर्वोक्तेन्द्रादिदिक्पालस्थानभागप्रमाणकं विभक्तस्य भागाष्टकस्योपपुरमिति नामान्तरम । एतादृशोपपुराष्टकसमावृतराजभवनोपेतत्वमेवास्य वैजयन्तनगरस्य मुख्यं लक्षणमिति भावः । किञ्च तादृशोपपुराष्टके कल्पनीयक्रममाह — ऐन्द्यामित्यादिना । नगरस्यास्य प्राग्भागगते प्रथमोपपुरे भूपालबन्धूनां भवनानि, मन्त्रिणस्सेनापतेरप्युत्तुङ्गानि हर्म्याणि, न्यायशालादींश्च यथाक्रमं स्थापयेत् । एवमाग्नेयभागगते द्वितीयोपपुरे कुलालाम्बष्टरजकादिग्रामपुरकार्यकराणां यामरक्षिणां योधानां हस्तिपकानां वाजिरक्षिणामन्येषां च बहूनां सेवाकराणां गृहाणि कल्पयेत् । एवं याम्यभूभागगते तृतीयोपपुरे क्रयविक्रयशीलानां वणिजामन्ये-

षां च धनिनां वैश्यकुलोत्पन्नानां भवनहर्म्यादीनि स्थापयेत् ॥

किञ्च तस्मिंस्तस्मिन्स्थाने तादृशभवनादि कर्तुं विप्रादि-जातिभ्यो भूमिपालेनाज्ञा दातव्येति सर्वत्र समयः । अत्र केचिद्वदन्ति । यथा — सर्वत्र लक्षणस्थलेषु 'कल्पयेद्बुधः', 'प्रकल्पयेन्नृपः' इत्यादिवचनशैल्या भूपालेनैव एवं तत्तत्स्थानगतभवनाद्युपेतं समग्रं नगरमिदं निर्मापणीयम् । ततस्तत्तज्जातिभ्यो वासाय देयमिति । अयन्तु शास्त्रानभिज्ञाना-माशय इत्येव ब्रूमः । कथम् ? कालत्रयेऽपि सार्वभौमेनाप्येकेन पुरुषेणैतादृशलक्षणान्वितनगरस्यैकस्यापि निर्मातुमशक्यत्वात् । तस्माद्भूपालादिभिर्नगरनिर्माणे कृते आरब्धे वा तदा अस्म-दुक्तरीत्या शास्त्रेषु निर्दिष्टे तत्तत्स्थाने भवनादि कर्तुं तत्तज्जाति-जनेभ्य आज्ञा दातव्या । तदात्वे शास्त्रोक्तं प्रजारक्षणादिफलं, राष्ट्राभिवृद्ध्यादिकञ्च भवेदिति भावः ॥

किञ्च चातुर्वर्ण्यकुलाचारादिभ्रंशे राजराष्ट्रबाधादिक-मपकीर्तिर्नरकप्राप्तिश्चेत्यादिविषयः पुराणादिषु प्रसिद्धः । तस्माद्यथास्थानं भवनादिकरणमेव सर्वेषां प्राणिनां श्रेयस्करमिति प्रकृतमनुसरामः ॥

किञ्च तस्मिन्नेव याम्यभागगते तृतीयोपपुरे स्वर्णरत्नादि-विक्रयस्थानं, पट्टदुकूलादिविक्रयस्थानं, नवरत्नपरीक्षास्थानादिकं

नैर्ऋत्यां स्वर्णकारादिसदनानि प्रकल्पयेत् ।
वारुण्यां शूद्रजातानामन्येषां च गृहस्थितिम् ॥ १३० ॥
धान्यादिद्रव्यसंपूर्णविपणीस्तत्र कारयेत् ।
वायव्यां चित्रकारादिपुरकार्यकरालयाः ॥ १३१ ॥
उदीच्यां विप्रगेहादिपाठशालादयस्तथा ।
सगोपुरं देवगृहं स्थापयेत्तत्र भूपतिः ॥ १३२ ॥
ऐशान्यां राजभृत्यानामावासान्कारयेन्नृपः ।

---

युक्त्या कल्पनीयम् । एवं निर्ऋतिभागगते चतुर्थोपपुरे स्वर्णकार-लोहकारतक्षकसूत्रधारितन्तुवायतैलविक्रयिणामन्येषां च पुरग्राम-कार्यकराणां भवनादिकं कल्पनीयम् ॥

तथैव वरुणदिग्भागगते पञ्चमोपपुरे शूद्रजातानामन्येषाञ्च सङ्करजात्युत्पन्नानां गृहादिकं कारयेत् । किञ्चास्मिन्नेव स्थले विविध-धान्याढकचणकगोधूमजीरकमरीचितैलादिवस्तुपरिपूर्णमापणश्रेणिं स्थापयेत् । तथैव वायव्यभागगते षष्ठोपपुरे चित्रकारवाद्यकार-माल्यकारयन्त्रकारादिनगरक्रियाकारिणामन्येषाञ्च भृतिजीविना-मालयादीन्स्थापयेत् ॥

किञ्च तथैवोदग्भागगते सप्तमोपपुरे ब्राह्मणानां भवनानि पाठशालां वैद्यशालाञ्चित्रशालाद्यनेकाश्च शालाश्शास्त्रज्ञैर्यथाक्रमं स्थापयेत् । तथैवेशानकोणभागगतेऽष्टमोपपुरे राजकार्यधुरन्धराणां,

एवमष्टोपनगरसंयुतं वैजयन्तकम् ॥ १३३ ॥

अथ चतुर्दशस्य पुटभेदननगरस्य लक्षणम् ॥

क्वचिच्छङ्खाकृतिर्भूमिर्विधात्रा निर्मिता पुरा ।
नदीतीरगता वापि वनमध्यगताऽथवा ॥ १३४ ॥
पर्वतान्तिकभाग्वापि सस्यक्षेत्रावृतापि वा ।
लब्धा यदि नृपस्तस्यां कारयेत्पुटभेदनम् ॥ १३५ ॥

---

वेतनजीविनामन्येषां चोत्तमकुलजातानामत्यन्तं धनाढ्यानां भवनानि प्रकल्पयेत ॥

एषूपपुरेष्वष्टसु कल्प्यमानप्रतोलिकानां वीथीनां क्षुद्रवीथीनाञ्चायामादिमानन्तु तत्तत्स्थलेषु कल्पनीयतत्तद्वीथीनामादिद्योतकक्रियादिस्वरूपादिकं च स्वयमेवोह्यं विचक्षणैरिति नात्र तत्प्रपञ्चितम् । तादृशलक्षणानि तत्तत्प्रकरणेषु द्रष्टव्यानीति वैजयन्तनगरलक्षणार्थः ॥ १३३ ॥

अथ चतुर्दशस्य पुटभेदननगरस्य लक्षणं विशिनष्टि — **क्वचिदित्यादिना** । पुरा सृष्टिकाले ब्रह्मणा क्वचिच्छङ्खाकृतिर्भूमिस्सृष्टा । सा च भूमिः प्रायशो नदीतीरस्था भवेत् । अथवा वनमध्यस्था, आहोस्वित्पर्वतसमीपप्रदेशस्था वा भवेत् । अथवा सस्यक्षेत्रावृता वा भवेत् । एतादृशस्थलस्थां भूमिं शङ्खाकृतिं तत्तल्लक्षणैर्निर्णीयास्यां पुटभेदनाख्यं नगरमिदं स्थापयेदित्यर्थः ॥

देवागारं नृपागारं स्थापयेदुन्नते स्थले ।
अन्येषां निम्नदेशे तु सदनानि प्रकल्पयेत् ॥ १३६ ॥

समा भूमिर्यदि प्राप्ता चतुरश्राकृतिं नयेत् ।
सालत्रयेण संवीतं पञ्चसालेन वा वृतम् ॥ १३७ ॥

सदुर्गं प्राङ्मुखद्वारं दुर्भेद्यमरिसैनिकैः ।
कारयेच्छिल्पिभिर्भूपो नगरं पुटभेदनम् ॥ १३८ ॥

---

यदीदृश्यां पर्वतसमीपस्थायां शङ्खाकारायां वास्तुभूमौ क्वचित्प्रदेशेऽत्यन्तमुन्नतभागः, प्रदेशान्तरेऽत्यन्तं निम्नभागश्च, तदा तादृशोन्नतस्थले, देवालयम्, राजसदनानि, राजकीयव्यवहारशालादींश्च यथाक्रमं कारयेत् । निम्ने भागे विप्रवैश्यशूद्रादीनां बहूनां जनानामावासभागं ग्रामनगरलक्षणवत् विभज्य तेषु सद्मानि कारयेदिति समीकरणानर्हनिम्नोन्नतादिवास्तुभूमिविषयक्रमो बोध्यः ॥

यदि सैव शङ्खाकारवास्तुभूमिर्निम्नोन्नतस्थलरहिता लब्धा, तदा तां चतुरश्राकृतिकां सूत्रमानेन नीत्वा, तस्यामिदं पुटभेदननगरं स्थापयेत् । किञ्च नगरस्यास्य दैर्घ्यादिप्रमाणन्तु पद्मनगरप्रमाणापेक्षया किञ्चिन्न्यूनसंख्याकमिति भावः । तादृशवैशाल्याद्यलाभेऽधः प्रदर्शितलक्षणान्वितं कार्यमिति । कथम् ? नगरमिदमगाधपरिखावृतं प्राङ्मुखद्वारमरिसेनादुर्भेद्यदार्ढ्यान्वितदुर्ग-

मध्यभागस्थितं भूपमन्दिरं सुन्दराकृति ।
सदुर्गं वा सयोधं वा प्राकारावृतमेव वा ॥ १३९ ॥
प्रतिसालं प्रतोलीनां द्वात्रिंशत्कल्पनं मतम् ।

---

भित्त्यादिसहितं कृत्वा तन्मध्ये नृपमन्दिरं सुन्दराकृति प्रकल्पयेत् । तादृशनृपमन्दिरं परितः क्षुद्रपरिखां कारयेत् । अथवा तद्योधावृतमुन्नतप्राकारावृतं वा स्थापयेदिति तत्रापि नियमो बोध्यः ॥

किञ्च पूर्वोक्तपरिखातटनृपभवनभागयोर्मध्यस्थितां सकलां वास्तुभूमिं त्रिधा, पञ्चधा वा विभज्य, तत्र प्राकारत्रयं वा प्राकारपञ्चकं वा वीथ्याद्यन्वितं कारयेत् । किञ्च तत्र तत्र प्राकारेषु प्रतिप्राकारं द्वात्रिंशत्संख्याकाः प्रतोल्यः स्थापनीयाः । तथा चाहतिक्रमे प्राकारत्रयपुटभेदनेऽष्टाविंशत्युत्तरशतसंख्याकाः वीथ्य इति भावः । एवं प्राकारपञ्चकनगरे वीथीसंख्या यथासंख्यं ज्ञेया ॥

अत्र प्रतिसालं प्रतोलीनामित्युक्तत्वादर्थान्तरं चोदेति । यथा चतुर्मुखनगरलक्षणोक्तरीया अत्रापि पुटभेदने नगरे प्राची प्रथमावरणवीथी, दक्षिणा प्रथमावरणवीथीत्यादिव्यवहारवत्त्वात् एकैकस्मिन्नपि प्राकारे प्राच्यां द्वात्रिंशत्प्रतोलीनां कल्पनं, दक्षिणायां द्वात्रिंशत्प्रतोलीनां कल्पनमित्याद्यर्थः प्रतीयते । लक्षणमिदमपि स्वीकार्यमेव तादृशरीत्या अतिवैशाल्यभूमिविषये इति । किञ्च,

वीथ्यादीनां प्रमाणं तद्द्विगुणं त्रिगुणन्तु वा ॥ १४० ॥

गृहस्थापनकार्येषु यदुक्तं लक्षणं पुरे ।

तत्सर्वमत्र कथितं शिल्पशास्त्रविशारदैः ॥ १४१ ॥

---

सर्वत्र प्रतोलीसंख्यापेक्षया, द्विगुणितसंख्या वीथीनां उत क्वचित्त्रिगुणितसंख्येति यथास्थलविभवं विकल्पः ॥

इत्थं निर्मिते अतिविशाले प्राकारत्रये, प्राकारपञ्चके वा कल्पनीयब्राह्मणादिस्थानस्थापनलक्षणं तु पुरनगरोक्तवदेवात्रापि करणीयमिति शिल्पशास्त्रज्ञाः । यथा पूर्वोक्तप्राकारत्रयेऽपि प्राचीभागे तन्तुवायस्वर्णकारलोहकारतक्षकस्थपतितैलविक्रयिणा-मन्येषां च भवनादीनि स्थापयेत । तथैव पूर्वोक्तप्राकारत्रयेऽपि दक्षिणभागे बहुविधपण्यजालभरितपण्यवीथीः क्रयविक्रयादिकार्य-व्यग्राणां वैश्यानां, शूद्राणामन्येषाञ्च वर्णानां भवनानि स्थापयेत् ॥

एवं वरुणदिग्गतप्राकारत्रये समुचिते स्थले शिवस्य, विष्णोर्वा, निलयं कृत्वा तमभितस्तत्प्रान्त एव वा ब्राह्मणानां भवनानि, क्षत्रियबन्धूनां हर्म्याणि च प्रकल्पयेत । तथैवोत्तर-दिग्गतप्राकारत्रयस्थलेऽपि राजकार्यकराणां वेतनजीविनामावास-स्थानानि न्यायशालादिबहुविधशालाः, मन्त्रिसेनेशयोर्भवनानि च यथाक्रमं, यथास्थलविभवं स्थापयेदित्यर्थः ॥

अथ पञ्चदशस्य गिरिनगरस्य लक्षणम् ॥

क्वचिद्भूपतिना स्थाप्यं नगरं गिरिमूर्धनि ।
दुष्प्रापमरिसेनाभिस्तदाहुर्गिरिपत्तनम् ॥ १४२ ॥
गिरेस्तु क्षुद्रकायस्य परितः परिखा मता ।

---

किञ्चात्र नगरस्यैकमुखकल्पनप्रसङ्गेऽपि प्रतिप्राकारं चतसृष्वपि दिक्षु गमनागमनयोग्यं महाद्वारचतुष्कं स्थापयेदिति भावः । अयञ्च क्रमस्सर्वत्र वीथीनाम । अन्यथा प्रजादीनां गमनागमनश्रमादि जायेतेति मतिः । एतादृशलक्षणान्वितं पुटभेदननगरं सर्वर्तुसुखकरतटाकादिविविधनिर्माणलसितमित्याहुश्शिल्पशास्त्रज्ञाः इति ॥ १४१ ॥

अथ पञ्चदशस्य गिरिनगरस्य लक्षणमाह — क्वचिदिति । सार्वभौमेन वा तदाज्ञाकारिणा भूपालादिना वा क्वचिद्देशेषु शत्रुसेनाभिरप्रधंर्ष्यं गिरिमूर्धनि वा गिरिमध्यभागे वा नगरं स्थापयितुमपि शक्यम् । तादृशनगरस्य 'गिरिनगरम्' इति नाम विदुः ॥

किञ्च यदि तावत्तादृशनगरस्थापनायाधारभूतः पर्वतः क्षुद्रकायो नातिविशालो दण्डमेयप्रमाणको लब्धस्तदा तादृशपर्वतस्य सानुभाग एवागाधां परिखां कारयेत ॥

यदि तादृशाधारपर्वतः पृथुलदेहो बहुसानुतटो दण्डायै-

गिरौ तु तुङ्गे महति यत्स्थानं भूपयोग्यकम् ।
तत्र रक्षां प्रकुर्वीत सालाद्यैश्चायुधादिभिः ॥ १४३ ॥

राजकार्यकराणाञ्च मन्त्रिसेनेशयोरपि ।
योधानां योधपालानां भृत्यानामपि रक्षिणाम् ॥१४४॥

द्विसहस्राधिकानामप्यन्येषां भवनान्यपि ।
निषद्यादींश्च शिल्पज्ञैः कारयेद्गिरिपत्तने ॥ १४५ ॥

---

रप्रमेयप्रमाणको बहुवनयुक्तस्तदा तस्मिन् पर्वते समुचिते स्थले यस्मिन्भागे रिपुभिरयोध्यं राजभवनं निर्मीयते, तत्स्थलमभितश्शतघ्न्याद्यायुधस्थापनस्थलं प्राकारादिभिस्सन्ततरक्षकैः कुन्ताद्यायुधधारिभी रक्षितञ्च प्रकल्पयेत् । यदि शक्यं स्थले तदा तादृशराजभवनमगाधपरिखावृतं कारयेदिति च समयः ॥

अपि चात्र गिरिनगरे स्थलानुकूलं यथेष्टमुखद्वारोपेते राजकार्यकराणां सर्वेषां वेतनजीविनां, मन्त्रिणस्सेनापतेर्योधानां साङ्गानां योधनाथादीनामन्येषां राजसेवाकारिणां भृत्यानां यामरक्षकाणां चावासस्थानानि द्विसहस्राधिकानामन्येषां नगरप्रजानाञ्च वासस्थानानि यथास्थलशक्ति स्थापयेत् ॥

किञ्चारोहणसोपानमार्गसहितेऽत्र गिरिनगरे तत्रत्यानां सततसौकर्याय बहुविधपण्यजालस्थापनयोग्यविपण्यश्च स्थाप्याः । किञ्च नात्र देवमन्दिरस्थापनमिति केचित् । वयन्तु मण्डरू-

अथ षोडशस्य जलनगरस्य लक्षणम् ॥

जलाशयस्य मध्ये वा नदीमध्येऽथवा कृतम् ।
नगरं तद्विदुः प्राज्ञा नाम्ना सलिलपत्तनम् ॥ १४६ ॥

---

ग्रामवदत्रापि गिरिनगरे वारुण्यां दिशि देवालयं सगोपुरमण्टपादिं स्थापयेदिति । तथात्व एव भूपालादीनां श्रेयोजन्मसाफल्यादिकम् इति ॥ १४५ ॥

अथ षोडशकस्य जलनगरस्य लक्षणमाह—जलाशयस्येति । पूर्वोक्तसार्वभौमेन वा भूपालादिना वा जलमध्ये क्वचिन्नगरं स्थापयितुमपि शक्यम् । तस्मात्तादृशनगरस्य जलनगरमिति नाम विदुः । तादृशजलनगराधारवास्तुभूमिस्तावत बृहज्जलाशयादि-जलमध्यगता वा, नदीद्वयस्य मध्ये वा वर्तितव्या । नदीद्वयमित्यत्र सततजलप्रवाहवत्या एकमुखगामिन्याः नद्याः क्वचित्स्थलविशेषे किञ्चित्स्थलं पुलिनवत् त्यक्त्वा पक्षयोर्गमनं प्रसिद्धम् । पुनरपि पूर्ववदेकमुखगमनत्वस्यापि दृष्टत्वात्तादृशनद्याः पुलिनवद्यत्स्थलं त्यक्तं, तस्मिन्वा स्थले नगरमिदं निर्मापणीयमिति भावः । अन्यथा नदीद्वयमध्यगतस्यास्य नगरस्य नदीतरङ्गावृतत्वजलनगरत्वादि-लक्षणाभावादिति ॥

अथवाऽत्र प्रतीयमानेन 'नदीमध्येऽथवा कृतम्' इति वचनेन एकस्या एव नद्यास्तत्तद्दिक्परावर्तनादिस्थलविशेषे प्रायशः परिखावद्वर्तुलाकारतया गमनस्यापि क्वचिद्दृष्टत्वात् तादृश-

सदुर्गं वा ससालं वा वनावलयावृतं तु वा ।
मध्यभागे राजहर्म्यं सौधावलिसमुज्ज्वलम् ॥ १४७ ॥

---

स्थलविशेषे वा नगरमिदं कल्प्यमित्यर्थो वा बोध्यः । 'जलाशयस्य मध्ये वा' इत्यत्र किञ्चिद्यथा जलाशयः समुद्रः, तदावृते काश्यपीभूसमीपस्थे स्वल्पभूमिके द्वीपे नगरमिदं निर्मापणीयमिति, तत्पक्षे द्वीपनगरमित्यस्य नाम । एतदपि ग्रन्थकर्तुरनभिमतमेव । कुतः? 'गिरिवारिगुहाभेदात्' इति पठितत्वादित्यलं विस्तरेण ॥

सर्वथा रिपुबलादिभिर्दुरधिगमजलावृतत्वमेवास्य नगरस्य मुख्यं लक्षणमिति मन्तव्यम् । एवं बहुजलावृतस्याप्यस्य नगरस्य परिखाकरणमप्यतिबलाबाधकमिति ॥

अथवा जलमध्ये तादृशपरिखाकरणसौकर्याभावे नगरस्यास्य प्राकारभित्तिर्वा स्थापनीया । आहोस्वित्तादृशजलमध्ये यदि विशेषभूलाभः, तदा वनदुर्गं वा कल्प्यम् । वनदुर्गलक्षणमग्रे वक्ष्यामः । तस्मादेतादृशलक्षणान्वितस्यास्य जलनगरस्य मध्यभागेऽत्युन्नतं, सशिखरं, राजहर्म्यं स्थापयेत् । इदन्तु तादृशवैशाल्यादिहीनं क्षुद्रनगरमिति मन्तव्यम । कुतः? तादृशजलमध्ये नगरनिर्माणार्हवास्तुभूमेरसंभवात् इति भावः ॥

तस्मादत्र नगरे मन्त्रिसेनेशराजकार्यप्रधानयोधादीनां स्थानं, भूपस्य च हर्म्यमरिभिरभेद्यं प्रकल्पयेत् । किञ्च जलमध्ये यदि

मण्डकग्रामवद्वीथीः कल्पयेद्यादि भूतले ।
अथवा प्रान्तभागेषु स्थापयेच्च महापुरम् ॥ १४८ ॥

नानाजातिजनाकीर्णं निषद्यादिभिरन्वितं ।
न्यायशालादिभिर्युक्तं देवालयसमुज्ज्वलम् ॥ १४९ ॥

अथ सप्तदशस्य गुहानगरस्य लक्षणम् ॥

तत्तद्देशवशाद्भूपैर्गिरिसानुगुहादिषु ।
निर्माप्यं नगरं नाम्ना गुहानगरमीरितम् ॥ १५० ॥

ऊर्ध्वगामिन्यधोगामिन्यथवा मध्यगामिनी ।

---

विशेषभूलाभे मण्डकग्रामोक्तलक्षणवद्वीथीस्संस्थाप्य तत्र नगरजना- निष्टान् स्थापयेदिति पक्षान्तरम् । अथवा एतादृशस्वल्पजनाध्युषित- नगरनिर्माणानभ्युपगमे पूर्वोक्तवज्जलमध्यभागे ससचिवादिराज- भवनमेवात्र निर्मापयित्वा, तदन्तिकस्थे नदीतीरभूमिभागे महच्च नगरं नानाजातिजनवासगृहाद्युपेतं, सनिषद्यं, न्यायशाला- देवालयादिसहितं च निर्मापयेदित्यर्थः । अयञ्च पक्षः स्पृहणीयतमो वास्तुशास्त्रविदामिति भावः ॥ १४९ ॥

अथ सप्तदशस्य गुहानगरस्य लक्षणं व्यनक्ति — तत्तदिति । पूर्ववद्भूमिपालैः कश्चिद्देशविशेषे स्थलविशेषे वा स्वावासस्थानादिरक्षणार्थं वा गिरिसानुषु गुहासु वा स्थाप्यं नगरं गुहानगरमीर्यत इति शिल्पसमयः ॥

तिर्यग्गामिन्यपि गुहा तस्यां कल्प्यो नृपालयः ॥
अथवा चायुधागारं कोशागारमथापि वा ।
योधानां निलयं वापि कल्पयेच्छिल्पकोविदः ॥

समीकृते स्थले तत्र प्राक्प्रत्यग्भागयोर्दश ।
दक्षिणोत्तरयोर्विंशद्वीथीनाङ्कल्पनं मतम् ॥ १५३ ॥

---

किञ्च, महापर्वतस्था तादृशगुहा च क्वचिदूर्ध्वभागगामिनी भवेत् । क्वचिदधोभागगामिनी, क्वचित्तु मध्यगामिनी, स्थलान्तरे तिर्यग्गामिनी वा सृष्टिक्रमतो दृश्या । तादृशीषु सर्वास्वपि गुहासु या वासार्हविशालस्थलोपेता लभ्या, तस्यामेव गुहायां समीकृतायां भूमिपालस्य मुख्यं हर्म्यं मन्त्रिसेनेशादीनामावासस्थानानि च वातातपप्रसारयोग्यानि यथास्थलविभवं प्रकल्पयेत् ॥

अथवा तत्र गुहाभूमौ तादृशनृपाद्यालयनिर्माणयोग्यस्थलसौकर्याद्यभावे तदा तादृशगुहायां आयुधगृहं वा धनगृहं वा सेनानां निलयं वा स्थापयित्वा गुहामुखान्तभूभागेषु तादृशनृपभवनादिसमेतं महच्च नगरं निर्मापयेदित्येवं तत्तत्स्थलसौकर्याधीनो विकल्पो बोध्यः ॥

यदि पर्वतगुहान्तर्वा गुहामुख एव वा कल्पनार्हविशेषभूलाभस्तदा यथाशक्ति समीकृतायां स्थल्यां प्राक्प्रत्यग्भागयोर्दश

अन्याश्चानेकसंख्याकाः क्षुद्रवीथ्यन्वितास्तथा ।
पुरन्दरदिशि स्थाप्यं देवस्थानं सगोपुरम् ॥ १५४ ॥
मध्यभागे निषद्यादीन् न्यायशालान्तु वारुणे ।
महापुरं प्रकर्तव्यमथवान्तिकभूमिषु ।
नानादेशागतजनैस्सङ्कीर्णश्च समन्ततः ॥ १५५ ॥

अथाष्टादशस्याष्टमुखनगरस्य लक्षणम् ॥

वनमध्यगता वापि गिरिपार्श्वस्थितापि वा ।
मुखाष्टकनगर्यास्तु वास्तुभूर्वर्तुला मता ॥ १५६ ॥

---

वीथ्यः, दक्षिणोत्तरभागयोस्तिर्यग्वीथ्याद्युपेता विंशतिवीथ्यः प्रकल्प्याः । किंच तत्र प्राच्यां सगोपुरदेवगृहम्, मध्यभागे विपण्यादिशालाः वारुणे भागे न्यायशालादिकांश्च यथाक्रमं स्थापयेदित्यर्थः । एवं गुहान्तर्वा गुहामुखे वा स्थापितं नगरं सहस्रत्रयावधिकैरेव जनैरुपेतं भवेदित्याशयः ॥

अथवा गुहान्तर्वा गुहामुखे वा एतादृशनगरार्हस्थलालाभे पूर्वोक्तरीत्या भूपालेच्छया तत्र गुहायां धनागारादीन् स्थापयित्वा, गुहान्तिकभूभागेषु समुचितेषु नानाजातिसमाकीर्णं नाना-शालासमेतं महामार्गयुतं बहुरक्षोपेतं महानगरं वा कल्पयेदिति विकल्पः ॥ १५५ ॥

अगाधपरिखोपेता रक्षकैरपि रक्षिता ।
आकाशे दन्तके भागे किन्नरे मीनके तथा ॥ १५७ ॥
कोणद्वारचतुष्कन्तु संस्थाप्यं शिल्पकोविदैः ।
प्राच्यादिषु च दिक्ष्वत्र समसूत्रप्रमाणकम् ॥ १५८ ॥
साधिष्ठानं सवज्रञ्च द्वारचतुष्कं प्रकीर्तितम् ।

---

अथाष्टादशकस्याष्टमुखनगरस्य लक्षणं विशिनष्टि—**वनमध्यगतेत्यादिना** । अष्टमुखनगरस्य वास्तुभूमिस्तावत् वनमध्यस्था वा, गिरिसमीपस्था वा, वर्तुलाकारैव स्वीकार्या । किञ्च तादृशवास्तुभूमिमभितः अगाधां पृथुलां परिखां कल्पयित्वा, रक्षकवर्गांश्च तत्र नियोजयेत् ॥

किञ्च वर्तुलाकारामेतद्वास्तुभूमिं सकलामपि षोडशभागां मानसूत्रेण विभज्य, तत्राकाशभागे, दन्तकभागे, किन्नरभागे, मीनकभागे च नगरद्वारचतुष्कं स्थापयेत् । एवं प्राच्यादिषु चतसृष्वपि दिक्षु समसूत्रविन्यासे द्वारचतुष्कञ्च स्थापयेत् । तथा च नगरस्यास्य द्वाराष्टकत्वं संपादितम् । तत्रैको नियमः । यथा — पूर्वोक्तप्राच्यादिचतुर्दिङ्मध्यस्थं मध्यद्वारचतुष्कमपि वैशाल्यौन्नत्याधिक्यवत् कारयेत् । तदपेक्षया किञ्चिद्वैशाल्यादिहीनमेव दिक्कोणगतस्य द्वारचतुष्कस्य मानमुदीरितमिति ॥

किञ्चात्र नगरे वास्तुभूभागस्य समन्ततः परिखागाधा

दुर्गान्तर्दुर्गवीथ्येका स्थापितव्या सदेवता ॥ १५९ ॥

मित्रादयश्चतुर्भागाः सर्वतोभद्रवन्मताः ।
तन्मध्ये भूमिपालस्य हर्म्यं कुर्याद्विचक्षणः ॥ १६० ॥

दन्तकादिद्वारमार्गा मध्यगास्संप्रकीर्तिताः ।

---

कल्पनीया । तादृशपरिखाया अन्तर्भागे परिखाभित्तिसमीपे एका दुर्गवीथी एकपक्षा वास्तुस्वरूपवत् वर्तुलाकारैव निर्मापणीया । अस्यामेव दुर्गभित्तिवीथ्यां मारीचल्लीकालीकरालयाद्युग्रदेवीना-मालयादीन्कारयेत् इति भावः ॥

किञ्चास्यां नगरवास्तुभूमौ मित्रवल्लीशजयन्ताख्यान् भागांश्चतुरः सर्वतोभद्रवच्चतुरश्रान् समस्थलान् कृत्वा धनिकानां श्रीकराणाञ्चक्रिणामन्येषाञ्च मन्त्रिसेनानायकप्रमुखानां भवनानि हर्म्याणि च स्थापयेत् । एतद्भागचतुष्कस्य नगरस्य च यन्मध्य-स्थानं तत्र भूपालस्य सप्राकारादि महन्मन्दिरं निर्मापणीयम् । पूर्वोक्तदिक्कोणस्थितद्वारचतुष्कारब्धा मार्गाः एतन्नगरमध्यभूत-मित्रादिचतुर्भागस्थप्रतोलीभाजः कार्याः । तादृशदन्तकिन्नरादि-कोणभागस्थलेष्वेव क्षुद्रवीथ्यादीनां कल्पनमत्राभिमतम् । मित्रादिषु चतुर्षु भागेषु उभयपक्षसदनोपेताः प्रतोलिका एव स्थाप्याः इति च भावः ॥

अथात्र नगरे कल्पनस्थापनक्रमो यथा—प्राचीदिग्भागस्थयो-

दन्तके रजकादीनां किन्नरे लोहकारिणाम् ॥ १६१ ॥

मीनके चित्रकाराणामाकाशे राजसेविनाम् ।
निलयान्कल्पयेच्छिल्पी वास्तुभूमिवशादिह ॥ १६२ ॥

दौवारिके च सोमे च राजशालादिका मताः ।
विपणिश्रेणिका स्थाप्या मेषगन्धर्वभागयोः ॥ १६३ ॥

भूधरे भास्करे भागे विप्रदेवालयादिकाः ।
युक्त्यान्यत्कारयेच्छिल्पी यजमानेच्छयाऽथवा ॥

---

मेषगन्धर्वभागयोर्विहिततण्डुलादिबहुविधद्रव्यभरिताः विविधाश्च विपणीः स्थापयेत् । आग्नेयदिग्गतदन्तकभागे ग्रामकार्यकरपुरकार्यकरकुलालांबष्ठरजकादीनामावासादिकं कल्पयेत् । याम्यदिग्गतरोगशोषभागयोर्वैश्यानां शूद्राणामन्येषाञ्च भवनादिकं स्थापयेत् । निर्ऋतिदिग्गतकिन्नरदेवभागे स्वर्णकारलोहकारतक्षकस्थपतिप्रमुखानां आवासादिकं कल्पयेत् ॥

किञ्च वरुणदिग्गतभूधरभास्करभागयोः प्राकारगोपुरमण्टपतटाकादिसहितं देवालयं ब्राह्मणानामावाससदनानि च स्थापयेत् । वायुदिग्गतमीनकभागे चित्रकारवाद्यकारनटनर्तकादीनां आवासस्थानानि प्रकल्पयेत् । उत्तरदिग्गतदौवारिकसोमभागयोः बहुविधराजकार्यालयादीनां स्थानं विहितम् । एवमीशानदिग्गताकाशभागे राजसेविनां भृत्यानां योधानां च स्थानानि

अथैकोनविंशतितमस्य नन्द्यावर्तनगरस्य लक्षणम् ॥

नन्द्यावर्तनगर्यास्तु वास्तुभूश्चतुरश्रका ।
समुद्रतीरभाक्सैव प्रशस्ता परिकीर्तिता ॥ १६५ ॥
सहस्रदण्डाधिकमप्यत्र मानमुदीरितम् ।
भुजङ्गगमनाकारपरिखावृतवास्तुकम् ॥ १६६ ॥
आग्नेयादिचतुष्कोणमुख्यद्वारचतुष्ककम् ।

---

प्रकल्पयेत् । किञ्चात्र नगरे अन्यद्यत्कल्पनजालं करणीयं तत्सर्वमपि शिल्पी युक्त्यादिभिः भूपालादियजमानेच्छया कारयेदिति अष्टमुखनगरलक्षणार्थः ॥ १६४ ॥

अथैकोनविंशतितमस्य नन्द्यावर्तनगरस्य लक्षणमाह—

**नन्द्यावर्तनगर्यास्त्विति** । नन्द्यावर्तनगरवास्तुभूमिश्चतुरश्रैव स्वीकार्या । सा चोत्तमलक्षणान्विता समुद्रतीरभाग्यदि तदाऽत्यन्तं सौकर्यदायिनीति भावः ॥

किञ्च नगरस्यास्य दैर्घ्ये चायामे च नृपदण्डसहस्राधिकमेव प्रमाणमुक्तं भवति। तादृशप्रमाणोपेतामतिविशालामिमां नगरवास्तुभूमिं परितो भुजङ्गगमनाकारामगाधां परिखां स्थापयेत् । किञ्च नगरस्यास्यैतादृशपरिखाकल्पनमशक्यमिति अर्वाचीनाः ॥

किञ्चात्र नगरे मुख्यमार्गद्वारकल्पनन्तु विशेषविच्छित्तिशालि स्थलविशेषभाक्च। यथा आग्नेयादिषु चतुर्दिक्कोणेषु नगरमुखद्वार-

दक्षिणाननमाग्नेयद्वारं कुर्याद्विचक्षणः ॥ १६७ ॥
प्रत्यङ्मुखन्तु नैर्ऋत्यं वायव्यं चोत्तराननम् ।
ऐशान्यं प्राङ्मुखोपेतं द्वारवक्त्रमितीरितम् ॥ १६८ ॥

महाङ्गणसमोपेतमन्तस्तद्द्वारमीरितम् ।
महाङ्गणात् प्रतोलीनामारम्भञ्च प्रकल्पयेत् ॥ १६९ ॥
आग्नेय्यारब्धवीथीनां वायव्यां निर्गमो भवेत् ।

---

चतुष्कं स्थापयेत् । तत्राप्यन्यो नियमः । कथम्? आग्नेयदिग्गतं द्वारं दक्षिणामुखं कार्यम् । तथा निर्ऋतिदिग्गतं द्वारं प्रतीचीमुखं कार्यम् । वायव्यदिग्गतं द्वारमुत्तरदिङ्मुखं स्थापनीयम् । तत्रेशानदिग्गतं द्वारं पूर्वदिङ्मुखञ्च प्रादक्षिण्यक्रमेणैव स्थापयेदिति ॥

किञ्च तत्र तत्रैवंरीत्या दिक्कोणस्थलेषु स्थापितस्यैतादृशकोणद्वारचतुष्कस्यान्तर्भागे तत्र तत्र महान्त्यङ्गणानि प्रकल्पयित्वा तानि मण्टपादिना वा शालादिभिर्वा संमिलितानि कारयेत् । किञ्च तादृशाङ्गणादारभ्यैवात्रत्यानां प्रतोलिकादीनां कल्पनङ्कार्यमिति समयः ॥

अपि चात्र नगरे तावद्वीथ्यादीनां कल्पनन्तु किञ्चिद्विच्छित्तिविशेषशालि । यथा वा पूर्वोक्तदक्षिणामुखद्वारारब्धानां वीथीनां निर्गमो वायव्यामेव दिशायां स्थाप्यः । तयोर्दिशोर्मध्ये न साक्षात्तिर्यक्प्रसारत्वं कल्पनीयम । परन्तु नन्द्यावर्ताकृतिरेव मुख्यतो वीथीनां स्थाप्या ॥

नैर्ऋत्यारब्धवीथीनामैशान्यां निर्गमो भवेत् ॥ १७० ॥

नन्द्यावर्ताकृतिस्तत्र गणनीया प्रधानका ।
एवं प्रतोलिकाश्रेण्यस्तिस्रः पञ्चाथ सप्त वा ॥ १७१ ॥

उपवीथीरनेकाश्च चतुर्भागेषु कल्पयेत् ।

---

यथा — आग्नेयदिग्भागद्वारस्था वीथ्यस्तावत्क्रमेण किञ्चिद्दूरमुदङ्मुखं गत्वा परावृत्य तदपेक्षया बहुदूरं प्रत्यङ्मुखं गत्वा पुनरपि पूर्ववदुदङ्मुखगमने वायुदिग्गतोत्तराननमुखद्वार-समीपगाः स्युरित्यर्थः । अयमेव नन्द्यावर्तक्रमो बोध्यः । अनयैव रीत्या निर्ऋतिदिग्भागगतद्वारारब्धा वीथ्यस्तावत्क्रमेण किञ्चिद्दूरं प्राङ्मुखङ्गत्वा परावृत्य तदपेक्षया बहुदूरमुदङ्मुखङ्गत्वा पुनरपि किञ्चिद्दूरं प्राङ्मुखगमने ऐशान्यकोणगतद्वारसमीपभाजः स्युरिति क्रमः ॥

किञ्चैतादृशलक्षणान्विताः प्रतोलिकाः प्रतिदिशं तिस्रो वा, पञ्च वा, सप्त वा, यथास्थलविभवं स्थापनीयमिति पञ्च वा सप्त वेत्येतेन लक्षणवाक्येन यथास्थलविभवं वीथीनिर्माणमिति प्रतीत्या पूर्वोक्तनृपदण्डसहस्राधिकत्वन्यूनत्वप्रमाणमप्यस्य नन्द्यावर्त-नगरस्य क्वचिदुत्तमस्थलविशेषे संभाव्यमित्यर्थश्च ध्वन्यते । अपि चात्र नगरे बहुसंख्याश्चोपवीथीः क्षुद्रवीथीश्च तत्र तत्राग्नेयादिभाग-चतुष्केऽपि बहुविशाले स्थले स्थापयेत् ॥

यत्र प्रतोलिकायोग्यस्तत्र न्यायसभा मता ॥ १७२ ॥
वारुण्यां दक्षिणामूर्तेस्स्थानङ्कुर्याद्विचक्षणः ।
उदीच्यां भूमिपालस्य मन्दिरस्थापनं मतम् ॥ १७३ ॥

ब्राह्मणादिचतुर्वर्णस्थानानि स्थापयेत्क्रमात् ।
नानादेशागतैः पूर्णं प्रयुताधिकसंख्यकैः ॥ १७४ ॥

ग्रामकार्यकरैस्सर्वैः पुरकार्यकरैरपि ।
संयुक्तं नगरं नाम्ना नन्द्यावर्तमुदीरितम् ॥ १७५ ॥

---

किञ्चात्र पूर्वोक्तप्रतोलिकात्रयस्य यत्र सङ्गमो नगरमध्यभागे वास्तुनाथस्थाने संभवति, तत्र किल नगरवास्तुमध्ये वास्तुनाथालय-सहिता न्यायशालादिबहुविधाश्शालाः स्थाप्याः । किञ्च नगरस्यास्य वारुण्यान्दिशि दक्षिणामूर्तेरन्येषां देवानाञ्च मन्दिरं मण्टपगोपुरादिलसितं करणीयम् ॥

तथोदीच्यां दिशि भूपालमन्दिरादिकं स्थाप्यम् । ब्राह्मण-क्षत्रियवैश्यशूद्रादीनां भवनादिकं तु वैजयन्तनगरलक्षणोक्तरीत्या वा नगरान्तरलक्षणानुगुण्येन वा तत्र तत्र समुचिते भागे प्रकल्पयेत् । किञ्चेदं नगरं ग्रामकार्यकरैः पुरकार्यकरैरन्यैरपि शिल्पादिकर्मज्ञैः वणिक्प्रभृतिभिः नानादेशागतैर्नानाजातिभिरयुत-संख्याधिकैरुपेतं बहुविधविपण्यादिलसितं च स्थापयेदिति सङ्क्षेपेण नन्द्यावर्तनगरलक्षणार्थो ज्ञेयः ॥ १७५ ॥

अथ विंशतितमस्य राजधानीनगरस्य लक्षणम् ॥

सार्वभौमो दयाशीलो धर्मत्राणपरायणः ।
सिंहासनस्थस्सचिवैर्भूपालाद्यैरभिष्टुतः ॥ १७६ ॥

राजते यत्र तद्वास्तु राजधानीति सोत्तमा ।
समुद्रतीरभाग्वापि नदीतीरास्थिताथवा ॥ १७७ ॥

सहस्रत्रयदण्डान्ता वास्तुभूमिरुदाहृता ।
दुर्गावृतामिमां भूमिमथवा भूपमन्दिरम् ॥ १७८ ॥

दक्षिणोत्तरदिग्भागमुखद्वारेण मण्डितम् ।

---

अथ विंशतितमस्य राजधानीनगरस्य लक्षणमाह — **सार्वभौम** इत्यादिना । यस्मिन्नगरे दयादिगुणोज्ज्वलः सामन्तभूपालादिसेवितस्सार्वभौमः सिंहासनस्थो राजते, तस्य राजधानीति प्रसिद्धं नामेति शिल्पसमयः । सा च समुद्रतीरभाग्यदि विशेषतः श्लाघ्या । तदलाभे नदीतीरस्था स्वीकार्येति मतिः । तदलाभे कदलीनारिकेलमल्लीचम्पकादिवृद्धिदायिन्यां वनभूमौ वा नगरमिदं स्थापयेदिति भावः । अयमधमः पक्ष एव ॥

किञ्च सहस्रत्रयभूपदण्डप्रमाणोपेता चतुरश्राकृतिरेव वास्तुभूमिरेतन्नगरनिर्माणाय स्वीकार्येति प्रमाणक्रमः । वित्तादिशक्तिमत्त्वे राजधानीमिमां परितः परिखामगाधां स्थापयेत् । अथवा एतन्नगरस्थसावित्रभागभाजो भूपहर्म्यस्यैव तादृशपरिखा-

सावित्रे भूपहर्म्यन्तु पताकाद्यैश्च शोभितम् ॥ १७९ ॥
विजयस्तम्भयुक्तं वा सेनाभिरभिरक्षितम् ।
सामन्तप्रमुखादीनां तत्रैव स्थानमीरितम् ॥ १८० ॥
धनाकराणां धनिनां चक्रकाणाञ्च वासवे ।
मनोहराणि तुङ्गानि भवनानि प्रकल्पयेत् ॥ १८१ ॥
विवस्वदापभागस्थं स्थानमुक्तं द्विजन्मनाम् ।
तत्रैव मन्दिरं कल्प्यं दुर्गायाश्च शिवस्य च ॥ १८२ ॥

---

कल्पनं कार्यम् । किञ्चास्यां राजधान्यां दक्षिणोत्तरयोर्भागयोर्मुख-द्वारद्वयमेव साधिष्ठानगोपुरादि स्थापनीयम् । निर्माणादिकार्य-सौकर्यद्योतनायात्र शास्त्रकारेण तत्तद्देवभागनिर्देशः प्रतिपादित इति तत्सर्वं स्वयमेवोह्यं शिल्पकार्यज्ञैः ॥

किञ्च नगरेऽत्र सावित्रभागेऽतिविशालं सार्वभौमालयं पताकादिमण्डनजालमण्डितमतितुङ्गं विजयस्तम्भलसितं वा स्थापयेत् । पूर्वोक्तरीत्या नगरमिदं परितोऽगाधां रिपुभिरलङ्घ्यां परिखां कृत्वा, तत्र तत्र कोणादिभागेषु योधनलोकस्थानं च स्थापयेत् । किञ्च तत्रैव सावित्रभागे सार्वभौमभवनस्यान्तिक एव सामन्तभूपालानां मन्त्रिकुलस्य सेनानायकस्यान्येषां राजविश्वास-पात्राणां भवनानि प्रकल्पयेत् । अपि चात्र वासवदेवभागेऽति-धनिकानां चक्रकराणामाढ्यानाञ्च मनोहारिणीस्तुङ्गभवनश्रेणीः प्रकल्पयेत् ॥

गणनाथस्य मन्दस्य रवेरपि च नन्दिनः ।
वासुदेवस्य च हरेर्लक्ष्म्यादीनाञ्च मन्दिरम् ॥ १८३ ॥

प्राकारगोपुरोपेतं तटाकाद्यैश्च शोभितम् ।
सोमके राजबन्धूनां वैश्यानां मीनके तथा ॥ १८४ ॥

शूद्राणां भृङ्गराजे च भवनानि प्रकल्पयेत् ।
स्वर्णकारादिसदनं रुद्रके भूधरेऽपि च ॥ १८५ ॥

भागेष्वेतेषु विपणीर्विशालाः पण्ययोग्यकाः ।

---

विवस्वदापभागयोर्ब्राह्मणानां नानागोत्राणां भवनानि स्थापयेत्। किञ्च तेषां ब्राह्मणभवनानां मध्ये स्थलान्तरे वा दुर्गायाः, शिवस्य विश्वेशादिलिङ्गमूर्तेः, गणाधिपतेः, षण्मुखस्य, मन्दसूर्यादिनवग्रहदेवानां वा, नन्दिदेवस्य वा, एतेषां सर्वेषां मन्दिराणि गोपुरप्राकारमण्टपतटाकादिसहितानि प्रकल्पयेत् । तथैव तत्रैव भागे स्थलान्तरे केशवस्य हरेर्लक्ष्मीनारायणस्य लक्ष्मीनरसिंह्मरूपिणो वा श्रीरामस्य वासुदेवस्य वा लक्ष्म्यादितत्तद्दिव्यमाहिषीणाञ्च मन्दिरं सगोपुरादि प्रकल्पयेत ॥

अपि चात्र सोमभागे क्षत्रियकुलस्य भवनानि निर्मापयेत् । मीनदेवभागे वैश्यानां वणिजां सत्कुलजातानां भवनादीन्स्थापयेत् । भृङ्गराजभागे शूद्राणामावासस्थानं कल्पनीयम् । रुद्रभूधरभागयोस्स्वर्णकारलोहकारस्थपतितक्षकादीनां भवनानि

कारयेच्छिल्पकार्यज्ञैरनेकास्तुङ्गभूस्थिताः ॥ १८६ ॥

विद्याशाला वैद्यशाला न्यायशालाश्च भूपतिः ।
क्रियाशाला रङ्गशालाश्चित्रशालादिकास्तथा ॥ १८७ ॥

कारयेच्च विधानेन शिल्पकार्यविचक्षणैः ।
भटानामालयश्रेणिराकाशे परिकीर्तिता ॥ १८८ ॥

कुलालादिगृहश्रेणिं स्थापयेत्पवने तथा ।
वाद्यकारादिनिलयान्मित्रभागे प्रकल्पयेत् ॥ १८९ ॥

वह्निभागे नटादीनामालयान्परिकल्पयेत् ।

---

स्थापयेत् । एतेषु भागेषु पूर्वोक्तभूधररुद्रभृङ्गराजमीनसोमापविवस्वत्सावित्राख्येषु भागेष्वत्रैवावशिष्टस्थलेषु तुङ्गभूमिस्थाः, बहुविधपण्यजालस्थापनयोग्या विविधविपणिश्रेणीश्च स्थापयेदित्यर्थः ॥

अपि चात्रैव भागे स्थलान्तरे विद्याशालां, वैद्यशालां, न्यायशालां, क्रियाशालां, तत्तत्कल्पनशिल्पादिशिल्पबोधनशालां, रङ्गशालां, नाटकशालां, चित्रशालामन्याश्च विविधा नगरयोग्याश्च शालाः प्रकल्पयेत् । किञ्च राजभटानां योधादीनामालयश्रेणीराकाशभागे स्थापयेत् । कुलालाम्बष्ठरजकलेखवाहकादीनां पुरकार्यकराणां निलयान् पवनभागे स्थापयेत् । तथा वाद्यकारादीनामालयश्रेणीं मित्रभागे प्रकल्पयेत् । वह्निदेवभागे

गणिकाभवनश्रेणिर्मेषभागे प्रकीर्तिता ॥ १९० ॥

मत्स्यग्राहिगृहश्रेणिं पुष्पके तु प्रकल्पयेत् ।

चर्मकारगृहश्रेणिर्भागे दौवारिके मता ॥ १९१ ॥

अन्नशालास्तु विविधा भागाष्टकसमीपकाः ।

अथ गन्धर्वभागे वा तां शालान्तु प्रकल्पयेत् ॥ १९२ ॥

आरामभूमिस्सुग्रीवे दन्तके मदिरागृहम् ।

रोगे पुरोहितस्थानं शोषके दर्शनालयम् ॥ १९३ ॥

गजशालां भुजङ्गे तु किन्नरे वाजिशालकाम् ।

भास्करे यात्रिकस्थानमीशाने द्यूतशालकाः ॥

कारयेत्तु विधानेन तत्र तत्र महीपतिः ॥ १९४ ॥

---

नटनर्तकादीनामालयश्रेणिं, मेषभागे दासीभवनानि, पुष्पकभागे मत्स्यग्राह्यादिनीचजातीनामालयश्रेणिं, दौवारिकभागे चर्मादिकार्यकराणामालयश्रेणिं च यथाक्रमं स्थापयेत् ॥

किञ्च पूर्वोक्तभूधररुद्रादिभागाष्टक एवावशिष्टे समुचिते स्थलविशेषे दीनदरिद्रेभ्यो विविधा अन्नशालाः प्रकल्पयेत् । अथवा गन्धर्वभागे तामन्नशालां स्थापयेदिति विकल्पः । सुग्रीवभागे आरामादिस्थानं, दन्तकभागे सुराविक्रयस्थानं, रोगभागे पुरोहितस्थानं च निर्दिशेत् ॥

किञ्च शोषदेवभागेऽत्युन्नतं द्वादशतलाधिकोपेतं, समन्ततो

नरेन्द्रः पृथिवीपालः पद्मस्याधिपतिर्मतः ।
सर्वतोभद्रकस्येशो महाराजः प्रकीर्तितः ॥ १९५ ॥

अस्त्रग्राहः प्रस्तरस्य नायकश्शास्त्रचोदितः ।
पट्टभाक् श्रीप्रतिष्ठायाः पुरस्य युवभूमिपः ॥ १९६ ॥

नेता माण्डलिकः प्रोक्तो मुखाष्टकपुरस्य तु ।
सार्वभौमोऽधिपो राजधान्या एवं क्रमो मतः ॥

---

नगरशोभानिरीक्षणार्थं आलोकनमण्टपविशेषञ्च स्थापयेत् । किञ्च भास्करभागे यात्रिकाणां नानादेशागमनशीलानां विश्रान्तिस्थानमीशानभागे द्यूतशालाञ्च तत्र तत्र यथाविधि शिल्पकार्यज्ञैरेवं सार्वभौमादयः स्थापयेयुरिति सङ्ग्रहेण राजधानीनगरलक्षणार्थः कथितः ॥ १९४ ॥

एतावता प्रबन्धेन विस्तरशः प्रतिपादितानां पद्मादिनगराणामीशितारः के इत्याकाङ्क्षायां तदधिपान्विशिनष्टि — नरेन्द्र इति । नरेन्द्राख्यो महीपालः पद्मनगरस्याधिपतिः । पद्मनगरे नरेन्द्राख्य एव राजा वासमवाप्य तत्रत्यप्रजारक्षणादि यथाक्रमं कुर्यादिति भावः । एवमुत्तरत्रापि ज्ञेयम् । सर्वतोभद्रनगरस्य महाराजलक्षणवानेव क्षत्रियो नायक उक्तः । प्रस्तरनगरस्य अस्त्रग्राहाख्यो नेता, श्रीप्रतिष्ठानगरस्य पट्टभागधिपतिः, पुरनगरस्य युवराजः, मुखाष्टकनगरस्य माण्डलिको मण्डलाधि-

शास्त्रज्ञैर्मुनिभिः प्रोक्तमन्यत्सामन्तनायकम् ।
इत्येवं नगरग्रामलक्षणं वेद्यमीरितम् ॥ १९८ ॥

नगरादिषु दुर्गेषु पालिका वज्रपीठिकाः ।
कूटकोष्टादयश्चान्ये स्थलयोग्याः प्रकीर्तिताः ॥ १९९ ॥

---

पतिर्नेता, राजधान्यास्सार्वभौम एवाधिपतिरिति । अयं क्रमश्शास्त्रेषु मुनिभिरुदीरित इति भावः ॥

किञ्चात्रोक्तानां नगरान्तराणां सामन्तादय एव भूमिनायका अधिपतय इत्ययमर्थश्च क्रमाद्बोध्यः । इत्यादिनगरलक्षणमवश्यं शिल्पिभिर्ज्ञेयमित्युपदेशः । नरेन्द्रमहाराजमाण्डलिकाधिपादिभूपलक्षणन्तु ग्रन्थान्तरेषु द्रष्टव्यम् । विस्तरभयान्नात्र प्रपञ्च्यते ॥१९८

अथ मण्डकादिषु ग्रामेषु, पद्मादिषु नगरेष्वपि तत्र तत्र स्थानविशेषेषु कल्पनीयकल्पनाप्रकारादिकं शिल्पिने कार्यज्ञाय सूचयति — **नगरादिष्वित्यादिना** । नगरादिस्थानगतेषु दुर्गेषु परिखासु वा दुर्गभित्तिषु वा या पालिका इष्टिकादिभिः पङ्क्तिस्ताट्टशदुर्गभित्तिषु दिशास्वष्टसु तन्मध्ये च शोभार्थं करणीया ये कूटकोष्ठादयः क्षुद्रगोपुरतुल्याः कल्पनाविशेषाः, दुर्गद्वाराणां करणीयदृढभूमिलम्बाधिष्ठानोपरि तुलास्थापनकपाटकरणार्गलादिसंयोजनादयो ये एताद्दशान् रचनादिविशेषांस्तत्तत्स्थलनगरकार्यानुकूलं कार्यज्ञशिल्पी स्थापयेदित्यर्थः ॥

नलीकस्थानयोग्यं यच्छिखाकोष्ठमुदीरितम् ।
योधावरणसाला ये ये चान्ये कल्पनादयः ॥ २०० ॥

तान्सर्वाञ्छिल्पकार्यज्ञो योजयेत् सन्धिकर्मणा ।
मुख्यद्वारादिभागेषु स्थाप्या वैनायकालयाः ॥ २०१ ॥

दण्डद्वयं क्षुद्रवीथ्या मानमुक्तं मुनीश्वरैः ।
वीथ्यां तद्द्विगुणं प्रोक्तं त्रिगुणं वा चतुर्गुणम् ॥ २०२ ॥

नगरादिषु सर्वेषु युक्त्या तन्मानयोजनम् ।

---

किञ्च राजभवनसमीपस्थपरिखादुर्गभित्तिषु नगरादिसमीपस्थ-दुर्गभित्तिष्वपि रिपुसैन्यनिरासाय योधानामाच्छादनस्थानं गूढस्थानं यत्कल्पनीयं, नलिकाद्यायुधस्थापनस्थानं यत्, यच्च शिखाकोष्ठाख्यं मुखीकरणकल्पनाविशेषः, एतानि सर्वाण्यपि शिल्पकार्यज्ञः तत्र तत्र दुर्गभित्त्यादिस्थानेषु प्राकारभित्त्यन्त-भागेष्वपि समुचिते स्थले कल्पनाविशेषसन्धिकर्मादिक्रियया दृढं शोभाकरञ्च कल्पयेदित्यर्थः । किञ्च मतिमान् शिल्पी तत्र तत्र नगरादिषु ग्रामादिषु च मुखद्वारभागेषु प्राणिनां सकलविध-विघ्ननिवारणकारणभूतस्य गणनाथस्य क्षुद्रमन्दिरं वा बृहन्मन्दिरं वा यथाविभवं स्थापयेत् ॥

किञ्च नगरादिषु तत्र तत्र क्षुद्रवीथ्याः साधारणदण्डद्वय-वैशाल्यमुक्तम् । वीथीनां वैशाल्यं दण्डचतुष्कं, प्रतोलिकादिषु

राजवीथीषु मार्गेषु विपण्यादिषु शिल्पवित् ॥ २०३ ॥

दण्डषट्कप्रमाणेन वैशाल्यं कल्पयेत्क्रमात् ।
देवमानुषपैशाचराक्षसाख्याः प्रकीर्तिताः ॥ २०४ ॥

नाराचा वास्तुभागेषु वीथ्यन्ताश्च त्रिकोणकाः ।
न तत्र कल्पनं कुर्यात्प्राणिनां हानिदं हि तत् ॥ २०५ ॥

---

दण्डाष्टकं दण्डद्वादशकं वा वैशाल्यं कल्पयेत् । किञ्च राजवीथीषु देशान्तरगमनयोग्यसहामार्गेषु विपण्यादिषु अन्यत्रापि स्थानविशेषेषु वैशाल्यं नृपदण्डषट्कप्रमाणादि करणीयमित्यादयो ये कल्पनाप्रकारास्तत्तत्स्थलानुकूलाः करणीयाः ॥

अपि च तत्र तत्र ग्रामनगरादिवास्तुषु कल्पनीयानां वीथीनां गृहादीनां चान्तरालभागे वीथ्यन्तरगृहान्तरारंभस्थले च वीथीनां सङ्गमस्थाने त्रिकोणादिक्षुद्रभूभागे च यत्स्थानं स्वल्पभूमिकं तस्य नाराचस्थलमिति नाम । देवमानुषपैशाचराक्षसाख्यरूपभेदेन सा च नाराचभूमिश्चतुर्विधा भवति । देवमानुषनाराचभूम्यां मेषवृषभमहिषादिस्थलादिकं कश्चित्कारयेत् । न दोषायेति केचित् । तच्च सर्वथा न कार्यमेवेत्यन्ये । पैशाचराक्षसाख्यनाराचभागेषु क्षुद्रकुटीरादिकल्पनमपि प्राणिनां पीडाकरमेव । तस्मादेतेषु चतुर्विधेषु नाराचभूभागेषु कल्पननिर्माणादयो न कार्या एव । सर्वथा एते भागाः कल्पनादिशून्याः कार्या इति भावः ॥

वीथ्यादिसंमुखं गेहं तथा गोपुरसम्मुखम् ।
विषमस्थलसंयुक्तं निम्ननिम्नेतरान्वितम् ॥ २०६ ॥

आर्जवेन विहीनश्च कर्तरीकृतमेव च ।
शास्त्रविच्छिल्पकार्यज्ञः कारयेन्न कदाचन ॥ २०७ ॥

तटाकादिसमायुक्तं निष्कुटादिसमन्वितम् ।
विश्रान्तिस्थानकं कुर्यात्तत्र तत्र समन्ततः ॥ २०८ ॥

---

अपि च ग्रामनगरादिषु तत्र तत्र वीथीप्रसारणस्य प्रतोलिकादिप्रसारस्य मण्टपगोपुरदुर्गद्वारादिप्रसारस्यार्गलीभूतवत सम्मुखत्वेन स्थितं भवनमपि न श्रेयसे । तादृशसंमुखगृहादिकं न कारयेदित्यर्थः ॥

किञ्च वीथ्यादिषु विषमस्थलस्थं गृहं, तथात्यन्तं निम्नस्थलस्थं गृहादिकमत्युन्नतस्थलभागगृहादिकं, एकस्यामेव वीथ्यां पङ्क्तिशोभानर्हमार्जवादिरहितं च न कारयेदित्युपदेशः ॥

किञ्चैकस्यामेव वीथ्यां प्रतोलिकायामेकं भवनं उपरिभागे पञ्चभौमयुतं, अन्यद्भवनमेकसौधयुतमित्यादिरूपं कर्तरीकृताख्यदोषसहितञ्च न स्थापयेत् । परन्तु काश्चिद्वीथ्यः पञ्चभौमगृहान्विता एव कार्याः । काश्चिद्वीथ्यो भौमत्रयसहिताः कार्याः । वीथ्यन्तराण्येकभौमगृहान्वितानि कार्याणीत्येवं नगरप्रतोलिकास्थापननिर्माणादिक्रमश्च ज्ञेयः ॥

ऐशान्यभागे वोदीच्यां दक्षिणस्यामथापि वा ।
सन्निकृष्टनदीतीरे श्मशानं निर्दिशेद्बहिः ॥ २०९ ॥

न वल्मीकसमीपे वा निम्नोन्नततलेऽथवा ।
यथा न धूमप्रसरस्तथा कार्यं पुरादिषु ॥ २१० ॥

आग्नेय्यामथ वायव्यां वारुणे वा क्वचित्पुरे ।
चेरीश्चण्डालजातीनां कल्पयेच्छिल्पकर्मवित् ॥ २११ ॥

---

अपि च पद्मादिनगरेषु समन्ततस्तत्र तत्र यथास्थललाभं तटाकादीनारामादीन्प्राणिनां विश्रान्तिस्थलं च सजलादिरचनं स्थापयेत । नगराणां ग्रामाणाञ्च सर्वत्रेशानादिशायां वोदीच्यामथवा दक्षिणस्यां वा दिशि श्मशानभूमिः कल्प्या । पुण्यनद्यादिषु सन्निकृष्टस्थलस्थेषु सत्सु तदा तदनुगुणं तत्तीर एव श्मशानभूमिः कल्प्या । सर्वथा यथा श्मशानधूमादिप्रसरो नगरादिषु न प्रसज्येत, तथा कार्य इति भावः । किञ्च तादृशश्मशानभूमिस्तु न वल्मीकादिसमीपस्थाने कल्प्या । तथैव विविधतरुषण्डमण्डितवनमध्यगता च न कल्पनीया । तथा नातिनिम्नस्थले नात्युन्नतस्थले चेति समयः ॥

अपि च ग्रामाणां नगराणां चाग्नेये भागे वा, वायव्यभागे वा, वारुणे वा भागे चण्डालानामावासभूमिं चेरीं दूरत एव स्थापयेत । एवं ग्रामनगरादिषु सर्वत्र वास्तुभागेषु तत्र तत्र

ग्रामादिमेषु सर्वेषु गोविश्रान्तिस्थलादिकम् ।
खलञ्च निर्दिशेच्छिल्पी मानदण्डेन सर्वतः ॥ २१२ ॥

कालिकद्रव्यराशीनां विक्रयस्थानकं तथा ।
विदुषां परिषत्स्थानमपि कल्प्यं पुरादिषु ॥ २१३ ॥

ऐन्द्रजालिकभूमिञ्च तथान्यांश्च विनिर्दिशेत् ।
इत्यादि बहुधा स्थानं नगरादिषु कीर्तितम् ॥
विज्ञाय शिल्पी तत्सर्वं स्थापयेन्नगरादिषु ॥ २१४ ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे

नगरलक्षणकथनं नाम

नवमोऽध्यायः ॥

---

गोमहिषादीनां विश्रान्तिस्थलम्, व्रीहितिलचणकाढकगोधूमादिसमीकरणार्हां खलभूमिं, तैलयन्त्रणस्थानञ्च यथाक्रममानं कल्पयेत् । किञ्च नगरादिवास्तुस्थानेषु तेषु तेषु वारेषु मासेषु वा तत्तत्स्थलादागतबहुविधपण्यद्रव्यविक्रयस्थानं (சந்தை) च करणीयम् ॥

किञ्च पुरादिषु विदुषां परिषत्सम्मेलनस्थानं, ऐन्द्रजालिकादिक्रीडाप्रदर्शनार्हञ्च स्थलं स्थापनियम । इत्यादिबहुविधस्थान-

भेदांश्च तत्रत्यकल्पनाभेदांश्च ये जानते शिल्पकलाविदः त एवैतादृश-नगरादिनिर्माणाय योज्या इति भावः ॥ २१४ ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां

**पद्मादिनगरलक्षणनिरूपणं नाम**

**नवमोऽध्यायः ॥**



अथ दुर्गलक्षणकथनं नाम

## ॥ दशमोऽध्यायः ॥

दुर्गाणां स्थापनं प्रायो भूपानामात्मरक्षकम् ।
तस्माच्छिल्पिगणैः कार्यं न तत्र नगरादिकम् ॥ १ ॥

क्वचिद्यदि कृते तस्य निर्माणं रचयेत्क्रमात् ।
गिरिकाननभेदेन तद्द्वादशकमीरितम् ॥ २ ॥

तत्र प्रथमस्य गिरिदुर्गस्य लक्षणम् ॥

गिरिसानौ गिरेर्मध्ये मूर्ध्नि वा यत्प्रकल्प्यते ।
गिरिदुर्गमिति प्रोक्तं मुनिभिश्शास्त्रपारगैः ॥ ३ ॥

---

॥ दशमोऽध्यायः ॥

अथेदानीं दुर्गलक्षणकथनात्मकं दशमाध्यायमारभते- **दुर्गाणां स्थापनमित्यादिना** । तत्र तत्र वङ्गाङ्गादिदेशस्थलेषु दुर्गस्थापनं तावत्प्रायशो भूपालादीनां, क्षत्रबन्धूनामन्येषाञ्च योधादीनां रक्षणार्थमेव । तस्मात्तादृशदुर्गेषु पद्मादिपुरलक्षणवत् प्रतोलिकाराजवीथ्याद्युपेतं नगरं शिल्पी न स्थापयेत् । तेषु पर्वतादिदुर्गेषु तावत्तादृशभूवैशाल्याद्यसंभवादिति भावः । तथापि क्वचिद्दुर्गेषु क्षुद्रपुरादिकं कल्प्यम् । तच्च स्थपत्यादयो यथाक्रमं स्थापयेयुरिति मर्यादा ॥

तानि च दुर्गाणि गिरिवनादिभेदेन द्वादशसंख्यानि

मध्यस्थदेवप्रासाददेवमन्दिरभूषितम् ।
मन्त्र्यादिपरिवाराणां भवनाद्यैस्समन्वितम् ॥ ४ ॥
प्राचीमुखं प्रकर्तव्यमथवोत्तरादिङ्मुखम् ।
भटैः खड्गधरैरन्यैस्समन्तात्संवृताङ्गणम् ॥ ५ ॥

---

भवन्ति । यथा तत्र तत्र देशेषु गिरिसानौ वा गिरिमध्यभागे वा गिरिशिखरभागे वा कल्पितं नगरं गिरिनगरनामभाग्भवतीति प्रसिद्धिः । तादृशगिरिनगरस्य मध्यभागे कुलदेवतालयोपेतं भूपाल-भवनं निर्मापणीयम् ॥

तच्च भवनं परितो यथास्थलप्राप्तवीथीर्निर्माय तस्यां मन्त्रिसेनापतिप्रमुखानां राजकार्यधुरन्धराणां भूपबन्धवादीनां, योधादीनाञ्च भवनस्थानादीनि प्रकल्पयेत् । किञ्चैवंरीत्या गिरिमध्यभागे रचितस्य नगरस्यास्य मुख्यं द्वारं प्राचीमुख-मुदङ्मुखं वा कल्पनीयम् । किञ्च नगरमभितः खड्गाद्यायुध-धारिभिर्वीरभटै रक्षिताङ्गणावृतपरिखावीथीयुक्तञ्च स्थापयेदित्यर्थः ॥

किञ्चात्र गिरिदुर्गनगरे परिखाविधानङ्कार्यमिति वक्तव्यमेव । कुतः ? नियमेनैतेषां नगराणां परिखोपेतत्वस्यैव मुख्याङ्गत्वादिति । तथापि पर्वतशिखरादौ यथाशक्ति गिरिदुर्गनगरमभितः परिखासालप्राकाराद्यावृताङ्गणं पूर्वोक्तरीत्या शिखाकोष्ठनलीक-स्थापनार्हस्थलयोधाच्छादनस्थलदृढकवाटाभेद्याधिष्ठानसहितं मति-

अथ द्वितीयस्य वनदुर्गस्य लक्षणम् ॥

वनमध्यगतं दुर्गं वनदुर्गमुदीरितम् ।
ऊर्ध्वस्थं भूमिभागस्थमन्तस्थं चेति तत्त्रिधा ॥ ६ ॥
ऊर्ध्वस्थं तुङ्गभूमिस्थं भूमिस्थं भूतलाश्रितम् ।
सुरङ्गाश्रितमन्तस्थं बोध्यं शिल्पपरायणैः ॥ ७ ॥
शिलापरम्परातुङ्गभागस्थे दृढभित्तिके ।
रक्षकैर्यामिकैरन्यैः परीते च समन्ततः ॥ ८ ॥

---

मान् शिल्पाचार्यः कल्पयेदिति सङ्क्षेपेण गिरिदुर्गनगरलक्षणार्थः कथितः । परैरनभिभाव्येऽतिदुर्गमे गिरिशिखरादिस्थलविशेषेऽस्य नगरस्थापनस्योक्तत्वात् । अत्र राजसेवकेतरजनानामावासनिलयादिकरणवैफल्याद्यसुखसंभवप्रसङ्गान्नात्र तदुक्तमिति भावः ॥

अथ द्वितीयस्य वनदुर्गस्य लक्षणमाह — **वनमध्यगतमिति**। वनमध्यविरचितं दुर्गं वनदुर्गमिति । तच्च दुर्गन्तावत् ऊर्ध्वदुर्गं, भूदुर्गमन्तर्दुर्गमिति त्रिधा भवति । विधातृसृष्टिवशात् स्वाभाविकोन्नतस्थले वा शिलादिकार्यकरैर्भृत्यादिभिरुपर्युपरि दृढकल्पितशिलावलीभिरुन्नते वा स्थले तादृशवैशाल्यादियुतं यत्कल्पितं तदेवोर्ध्वदुर्गनगरमिति । साधारणभूमिभागाश्रितं दुर्गं भूदुर्गम् । सुरङ्गादिमार्गस्थं दुर्गमन्तर्दुर्गमिति एतेषामर्थो बोध्यः ।

तेषां लक्षणान्याह — **शिलेति** । पूर्वोक्तरीत्या स्वाभाविको-

दुर्गे प्रागानने स्थाप्यं भूमिपालस्य मन्दिरम् ।
मन्त्र्यादिपरिवाराणां भवनानि प्रकल्पयेत् ॥ ९ ॥

सुरङ्गादुर्गके स्थाप्यं योधायुधधनादिकम् ।
तलाश्रितं तु यद्दुर्गं तुङ्गप्राकारसंयुतम् ॥ १० ॥

नलीकस्थानभाक्कोणेष्वन्तर्द्वाराश्रितं तथा ।
प्रस्तरोक्तप्रमाणेन कारयेदन्यकल्पनम् ॥ ११ ॥

---

न्नतत्वाभावे ऊर्ध्वदुर्गनगरार्हां भूमिं शिलादिभिरतितुङ्गाङ्कृत्वा तामभितः परिखामगाधां च कारयेत् । किञ्च तद्दुर्गमभितः दृढप्राकारभित्तीः स्थापयेत । एवञ्चतसृष्वपि दिक्षु बहिरन्तश्च यामरक्षकादियोधाङ्गणादीनि च स्थापयेत् । किञ्च दुर्गमिदं प्राचीमुखद्वारं सगोपुरङ्कृत्वा मध्यभागे भूपालसचिवादि-भवनानि कल्पयेदित्यर्थः ॥

द्वितीये सुरङ्गादुर्गे तु सर्वथा न मनुष्यागारादीनि स्थापयेत् । परन्तु समरादिसमयेषु भूपयोधादीनां तिरोधान-स्थानम् , आयुधस्थापनस्थानं, धनादिश्रेष्ठद्रव्यस्थापनार्हस्थानानि चातिदृढानि रहस्योपेतानि कारयेदिति भावः ॥ १० ॥

तृतीये साधारणभूतलाश्रितदुर्गे तु अगाधपरिखावृतवास्तुके कानि लक्षणानीत्याकाङ्क्षायामाह — तलाश्रितमिति । वन-मध्यभागे स्थापितं वनदुर्गमिदं तुङ्गप्राकारभित्त्यावृतं कृत्वा

अथ तृतीयस्य सलिलदुर्गनगरस्य लक्षणम् ॥

पारावारेण नद्या वा संवृतं स्थलमुत्तमम् ।
कथितं शिल्पशास्त्रज्ञैर्नाम्ना सलिलदुर्गकम् ॥ १२ ॥

भूपालस्येच्छया कार्यमन्तर्दुर्गप्रकल्पनम् ।
दुर्गभित्तेरुभयतस्तूपकुड्यसमन्वितम् ॥ १३ ॥

---

विशेषतः कोणेषु प्राच्यादिष्वपि स्थानभागेषु शतघ्न्याद्यायुधस्थापनस्थलं तत्र तत्रान्तर्द्वारभागेषु समरादिसमयेषु रक्षाकरं कल्पनाजालञ्च कल्पयेत् । किञ्च दुर्गस्यास्य मध्ये भागे भूपालादिभवनानि विविधशालादिकञ्च यथाक्रमं स्थापयेत् । क्वचित्तु स्थले एतादृशदुर्गस्यान्तर्बहिर्यथाभूलाभं क्षुद्रमुपपुरं वा प्रस्तरनगरोक्तलक्षणोपेतं वा शिल्पी कल्पयेदिति केषाञ्चिदाशयः ॥

अथ तृतीयस्य सलिलदुर्गनगरस्य लक्षणमाह — **पारावारेणेति** । समुद्रेण वा, नद्या वा महत्या, महता जलाशयेन वा यद्विशालस्थलमावृतं, तच्च स्थलं कल्पितं दुर्गनगरनिर्माणमपि सलिलदुर्गनगरमिति शास्त्रज्ञा वदन्तीत्यर्थः । इदमेव द्वीपदुर्गमिति केचित् ॥

किञ्चात्र दुर्गकल्पनप्रकारस्तु भूपालेच्छाधीनः । कथमिव ? पूर्वोक्तागाधसमुद्रजलाशयादितरङ्गावृतायां अस्यां द्वीपभूम्यां नगरपरिखावदस्यापि परिखानिर्माणङ्करणीयम् ॥

मध्यस्थराजभवनममात्यादिस्थलोज्ज्वलम् ।
स्थलानुकूलतः स्थाप्यमन्यवासादिकं पुनः ॥ १४ ॥
सेनावासं ससम्भारं स्थापयेच्च समन्ततः ।
ससालं सहितं वीरैर्यामिकैस्तटरक्षकैः ॥ १५ ॥

---

अथवा एतन्मध्यस्थानगतभूपतिभवनं परित एव तादृशागाधपरिखाकल्पनं वा स्थापनीयम् । अथवा स्थलद्वयेऽपि परिखाकल्पनं वेति विकल्पः । तन्नेतृसौकर्यद्योतक इति भावः । सर्वथाऽत्र कल्पनीयदुर्गभित्तेरुभयपक्षेऽपि उपभित्त्यादिवप्रादिकं स्थापयेत । कुतः ? अत्यन्तदार्ढ्यापादनाय, चिरकालस्थितये च । किञ्च नगरपरिखापेक्षयाऽस्य दुर्गस्य इदमेव मुख्यं वैलक्षण्यं बोध्यम् । किञ्चात्र दुर्गमध्यभाग एव भूपालभवनमभितोऽमात्यसेनेशयुवराजप्रमुखानां भवनानि स्थापनीयानि । अपि चात्र सलिलदुर्गनगरे लभ्येत यदि विपुलं स्थलं, तदा तत्र मानुषनगरवद्वा पुरवद्वा महानगरं क्षुद्रनगरमथवा नानाजातिजनगृहसहितं विपण्यादिविविधशालावलीभिरुपेतं च करणीयमिति ॥

किञ्चात्र दुर्गे क्षोणीपतिभवनसमीपे वा स्थलान्तरे समुचिते सेनानिवेशः स्थाप्यः । कीदृशलक्षणोपेतः ? व्रीहिपलालतण्डुलाढकमुद्गगोधूमचणकमरीचितैलभाण्डादिसंभारभरितः । किञ्च पूर्वोक्तरीत्या अत्रत्यराजभवनमभितः पुरमभितश्च परिखा-

अथ चतुर्थस्य इरिणदुर्गस्य लक्षणम् ॥

सलिलैस्तरुषण्डैश्च लताद्यैश्च विवर्जिते ।
दुष्प्रवेश्ये स्थले तुङ्गे सोपानालिसमन्विते ॥ १६ ॥

निम्ने वाऽथ स्थले क्लृप्तमिरिणं दुर्गमिष्यते ।
दुर्लङ्घ्यामरिसेनाभिरभेद्याश्च समन्ततः ॥ १७ ॥
परिखां पृथुसालाश्च कल्पयेच्छिल्पकर्मवित् ।

---

कल्पने कलितेऽपि एकादिप्राकारसमावृतवीथ्युपेतं दुर्गतटपुरतटादिस्थललक्षणशीलैः कुन्ताद्यायुधधारिभिः यामरक्षकैर्वीरभटैश्च रक्षणीयसन्निवेशसहितं शिल्पी कल्पयेदिति सलिलदुर्गनगरलक्षणं सङ्क्षेपेणोक्तम् । अन्यत्सर्वं शिल्पचतुरैरेव स्वयमूह्य कल्पनीयमिति भावः ॥ १५ ॥

अथ चतुर्थस्य इरिणदुर्गस्य लक्षणमाह— सलिलैरिति । सलिलैर्वृक्षैर्लताभिश्च हीने प्राणिभिर्दुष्प्रवेश्ये तुङ्गे वा निम्ने वा स्थले कल्पितं दुर्गमिरिणदुर्गमित्युच्यते । स्वभावतस्तुङ्गेऽपि स्थले भवनाद्यर्थं पुनरपि सोपानपरम्पराभिरुन्नतत्वं कार्यम इति समयः । अथवा एतादृशइरिणदुर्गे निम्नस्थलस्यापि तादृशभवनादिनिर्माणोचितसोपानपङ्क्तिरचना स्थाप्येति क्रमः । अरिभिरलङ्घ्यामायुधादिभिरभेद्यामगाधां परिखामुत्तुङ्गप्राकारं चात्र वास्तुस्थले क्रमाद्रचयेत् ॥

तन्मध्ये भूमिपालस्य द्वारोपद्वारसंयुतम् ॥ १८ ॥

नानाशालासमोपेतं नलिकादिस्थलान्वितम् ।
प्रच्छन्नमार्गसंयुक्तं भवनं रचयेद्बुधः ॥ १९ ॥

मन्त्र्यादिपरिवाराणां भवनानि समन्ततः ।
सेनास्थानंससंभारं सायुधं यंत्रगर्भितम् ॥
योगो दूरतरस्थेन मार्गेणास्य सुरक्षकः ॥ २० ॥

---

किञ्चात्रापि नगरमध्यभागे भूपालहर्म्यमुत्तुङ्गं करणीयम् । कीदृशलक्षणान्वितम् ? द्वारोपद्वारयुतमत्यन्तरक्षणार्थं बद्धद्वारोपेतमित्यर्थः । तत्र च प्रथमतः पूर्वभागे तुङ्गमेकं द्वारं कल्पयित्वा, तत्पश्चाद्भागे तद्वदेव द्वारान्तरम् तदन्तः पुनरपि द्वारान्तरमित्यादिक्रमेण भवननिर्माणानुकूलं प्रतिदिशं सप्तद्वारस्थापनं वा कार्यमिति भावः ॥

किञ्च तद्भूपहर्म्यं नानाशालान्वितं तत्तद्दिक्कोणेषु नलीककुन्ताद्यायुधस्थापनस्थलोपेतं भवनान्तः सुरङ्गादिप्रच्छन्नमार्गोपेतञ्च स्थापयेत् । किञ्चात्र दुर्गे समुचिते स्थले सेनास्थानं ससंभारं नानायुधनिर्माणस्थापनस्थानसहितं व्रीहिपलालतण्डुलाढकतैलादिद्रव्यराशिस्थापनस्थानोपेतं बहुविधयन्त्रगर्भितं रिपुभिरज्ञातरचनोपेतं च स्थापयेदित्यर्थः ॥

किञ्च इरिणदुर्गस्यास्य प्रवेशमार्गो भटादिरक्षासहितः बहु-

अथ पञ्चमस्य दैवतदुर्गस्य लक्षणम् ॥

क्वचिद्भूधरमार्गेषु नद्यास्तीरादिषु स्थलम् ।
सहजागाधपरिखासंवृतं तत्तु दैवतम् ॥ २१ ॥

तत्रैव दुर्गनगरं स्थापयेत्स्थलयोग्यकम् ।

---

दूरस्थेन देशमार्गेणोपेतः कल्पनीयः । तस्मादत्र भूपालसचिवसेनेशादिराज्यकार्यकारिणामेवावासस्थानकल्पनं विहितम् । निषिद्धश्चेतरजनभवनादिकल्पनामिति भावः । किञ्चेदं इरिणदुर्गं इतरजनानामत्यन्तासौख्यप्रदमित्यादि इरिणदुर्गलक्षणपदेनैव प्रतीयत इति भावः ॥ २० ॥

अथ पञ्चमस्य दैवतदुर्गस्य लक्षणमाह— क्वचिदिति । भूम्यां क्वचित्प्रदेशे पर्वतसमीपस्थलेषु वा महानद्यादितीरभागेषु वा वनमध्यादिप्रदेशेषु वा जगत्सृष्टिक्रमतस्स्वाभाविकागाधपरिखावृतं स्थलं प्रायशो लभ्यम् । तादृशस्थले सार्वभौमादिभिर्भूपालैर्दुर्गं करणीयम् ॥

किञ्चैवंरीत्या स्वाभाविकपरिखावृतस्य तस्य वास्तुस्थलस्य यदि वैपुल्यादिकं तदा तदनुकूलं राजभवनादिमात्रं वाऽन्येषां जनानामावासभवनसहितं वा दुर्गसंविधानं रचयेदित्यर्थः ॥

किञ्च सर्वथा तामेव स्वाभाविकां परिखां स्थलानुकूलं

युग्मायुग्मपदोपेतं द्वारोपद्वारसंयुतम् ॥ २२ ॥
सप्राकारंससैन्यञ्च मध्यस्थक्षत्रमन्दिरम् ।
योधावाससमोपेतमायुधागारसंयुतम् ॥ २३ ॥
एकानेकतलोपेतशालाभिश्च समुज्ज्वलम् ।

---

नवीकृत्य तन्मध्ये तादृशवास्तुस्थलानुकूलं भूपभवनसाचिवादिवासस्थानानि यथाक्रमं रचयेदित्यर्थः ॥

तच्च राजभवनं कीदृशलक्षणान्वितम् ? **युग्मायुग्मपदोपेतमिति** । युग्मपदानि तावत् भवनान्तः कल्पनीयशालादीनामन्येषाञ्चत्वरादीनां च परस्परभित्त्यादिमेलनस्थानानि । अयुग्मपदानि तु तादृशचत्वरादिभिः शालादीनामसंमिलितानि तलानि । पदानीमानि तावत् विवाहादिसमयेषु बहुजननिवेशार्हाणि । समरादिसमयेषु च बहुविधोपकारकाणीति भावः ॥

अत एतादृशेषु युग्मायुग्मपदेषु उपरिभागेषु योधायुधादीनि स्थाप्यानीति केचित् । अत एतादृशयुग्मायुग्मपदोपेतं पूर्वोक्तरीत्या द्वारोपद्वारसंयुतं, एकादिबहुप्राकारावृतं, प्रतिप्राकारं सेनानिवेशस्थलसहितञ्च कल्पयेदिति पूर्वेणान्वयः ॥

किञ्च तत्र राजभवनमध्ये वा तत्पार्श्वे वा स्थलान्तरे आयुधागारं स्थापनीयम् । राजकीयावरोधहर्म्याणि, भूपावासहर्म्याणि च एकादिपञ्चभौमावधिकानि, प्रतिभौमं बहुशालासहितानि च कल्पनीयानीति समयः ॥

अमात्यादिपरिवाराणां भवनाद्यैश्च संयुतम् ॥ २४ ॥

अथ एकमुखद्विमुखचतुर्मुखदुर्गलक्षणम् ॥

नदीनदीशतीरे वा गिरिसानौ समस्थले ।
चतुरश्रं कृतं दुर्गमेकाननमुदीरितम् ॥ २५ ॥
अगाधां परिखाङ्कुर्यादलङ्घ्यामरिसैनिकैः ।
द्वारोपद्वारसंयुक्तं नलीकस्थानशोभितम् ॥ २६ ॥

---

• किञ्चैतादृशदैवतदुर्गेऽमात्यादिपरिवाराणामावासस्थानादिकं बहुकल्पनोज्ज्वलं स्थलानुकूलं भूपमन्दिरं परितस्तत्समीपां एव वा रचयेत । अपि च पूर्वोक्तरीत्या एतादृशस्वाभाविकपरिखावृतदुर्गमध्यस्थापितराजभवनमभितो दुर्गान्तरोपपुरादिकल्पनादिकं तत्तत्स्थलविभवेच्छाधीनं कल्पनीयमिति शिल्पसमयविदः ॥ २४ ॥

अथैकमुखादिदुर्गत्रयलक्षणं विशिनष्टि — **नदीति** । एकमुखादिदुर्गनिर्माणाय वास्तुभूमिस्तावत्प्रायशो नदीतीरगता वा समुद्रतीरगता वा गिरितटभूमिगता वा भवितव्या । सा च भूस्समस्थला चतुरश्रा च स्वीकार्येति मतिः । तामिमां स्वीकृतां वास्तुभूमिं अरिभिरलङ्घ्यागाधपरिखावृतां कृत्वा तन्मध्ये भूपालभवनं स्थापयेदिति क्रमः ॥

कीदृशलक्षणान्वितं भूपभवनम् ? पूर्वोक्तशैल्या द्वारोपद्वार-

प्राकारपञ्चकोपेतं दिग्भद्रेण विराजितम् ।
मध्यस्थभूपसदनमावृतं मन्त्रिहर्म्यकैः ॥ २७ ॥

कूटकोष्ठादिसहितमनेकाट्टालसंयुतम् ।
एकाननन्तु प्राङ्‌निष्ठं द्विमुखं दक्षिणोत्तरम् ॥ २८ ॥
चतुर्वक्त्रश्चतुर्दिक्स्थं दुर्गस्यास्य विधीयते ।

---

संयुतं नलीकाद्यायुधस्थापनस्थानसहितं प्राकारत्रयेण वा प्राकार-पञ्चकेन वा समन्ततः क्रमशः संवृताङ्गणं कूटकोष्ठादियुतमेकादि-सप्तभौमविराजितम् । पुनः कथंभूतम्? दिग्भद्रेण विराजितम् । दिग्भद्रस्तावत्तत्र तत्र सौधभित्त्याद्युपरिभागेषु कल्पनीयक्षुद्र-विमानपञ्जरादिरचनाविशेषः, तेनोपेतमित्यर्थः ॥

किञ्चैतादृशलक्षणान्वितनृपभवनस्य बहिः प्रदेशे प्राकारे सचिवभवनानि, द्वितीयप्राकारे सेनापतितदीयभवनानि, तृतीय-प्राकारे न्यायवित्प्रमुखाणां सुहृदां राजबन्धुवर्गजनानाञ्च भवनानि, चतुर्थप्राकारे भिषग्वरपुरोहितादिसदनानि, पञ्चमप्राकारे शुद्धान्त-रक्षकयामरक्षकयोधदूतलेखवाहकप्रमुखाणां विविधभृत्यवर्गजनानां निलयांश्च स्थापयेदित्येवं क्रमश्च बोध्यः ॥

किञ्चैतादृशभवनावलीभिर्बहुविधशालादिभिर्विपण्यादिभिश्च विराजितमिदं दुर्गं त्रिधा भवति । यथा — एकमुखदुर्गम्,

दृढार्गलसमोपेतकवाटद्वयशोभितम् ॥ २९ ॥
सोपकुड्यां दुर्गभित्तिं रचयेदश्मनिर्भराम् ।
स्थलानुकूलतः स्थाप्यमन्यावासस्थलादिकम् ॥ ३० ॥

अथ नवमस्य कूर्मदुर्गस्य लक्षणम् ॥

प्रलोभनाय शत्रूणां स्तम्भनाय च युक्तितः ।
वनमध्ये गिरेस्सानौ कल्पितङ्कूर्मदुर्गकम् ॥ ३१ ॥

---

द्विमुखदुर्गं चतुर्मुखदुर्गञ्चेति । पुरन्दरदिशि स्थापितेनैकेन मुखद्वारेणोपेतं एकमुखदुर्गमिति दक्षिणोत्तरमुखयोः स्थापितेन मुखद्वारद्वयेनोपेतं द्विमुखदुर्गम् । प्राच्यादिचतुर्दिङ्मध्यभागे समचतुस्सूत्रं वा स्वस्तिकाकाररीत्या परस्परं किंचिद्व्यत्यस्तस्थलस्थितं वा स्थापितेन मुखद्वारचतुष्केणोपेतं चतुर्मुखदुर्गम् इत्यन्वर्थनाम बोध्यम् । एतादृशदुर्गत्रयेऽपि पूर्वोक्तप्राकारपञ्चकाद्यावृतत्वमवश्यं करणीयमिति शिल्पसमयः ॥

अपि च तादृशद्वारं तादृशार्गलमधिष्ठानादिकवाटद्वयसहितं च कल्पयित्वाऽत्यन्तदाढ्यादिकारिणीं मुखभित्तिं दुर्गभित्तिमिलितां कारयित्वा दृढशिलपावलीभिः कवाचितमुखभद्रसहितञ्च स्थापयेत् । यदि स्थलवैशाल्यादिविभवः तदनुकूलमत्र दुर्गे क्षुद्रनगरलक्षणान्वितानि वा महानगरलक्षणान्वितानि वा इतरजनावासभवनादीनि च यथाक्रमं स्थापयेदिति संक्षेपेण लक्षणमुक्तं भवति ॥ ३० ॥

अथ कूर्मदुर्गलक्षणमाह — प्रलोभनायेति । सार्वभौमादि-

इष्टिकाभिदारुखण्डैश्चणवस्त्रपटादिभिः ।
प्रच्छन्नमार्गसंयुक्तं कल्पनं यन्त्रगर्भितम् ॥ ३२ ॥

पञ्चषैस्सालकैर्युक्तं पङ्काद्यैश्च समन्वितम् ।
तात्कालिकं कल्पनञ्च परमोहकरं परम् ॥ ३३ ॥

---

भिर्भूपालैः कचित्स्वात्मवैरिबृन्दप्रतारणार्थं समरादिसमयेषु युक्त्या आयुधादिभिस्तांश्च रिपूंस्तम्भीकर्तुञ्च क्षममिष्टिकादारुखण्डचणपटादिभिर्स्तात्कालिकः कल्पितः स्थलविशेषः कूर्मदुर्गमित्युच्यते । एतत्तु दुर्गं वनमध्यस्थले वा गिरिसानुभागे वा कल्पयित्वा तदन्तर्बहुविधयन्त्रगर्भितं प्रतारणस्थलञ्च स्थापयित्वा तद्द्वारेषु सुरङ्गादिप्रच्छन्नमार्गञ्च रचयेदित्यर्थः ॥

किञ्चैतादृशदुर्गमभितः पङ्कपरागादिचयैर्वा भित्तिभ्रमकरसुधाधवलितदारुखण्डादिकल्पितसालैरावृतं वा रचयेत् । एतादृशलक्षणान्वितं तात्कालिकमस्थिरं दुर्गमुद्वीक्ष्य रिपवस्ते तु भ्रमादृढदुर्गमिति भ्रान्तियुतास्स्वसैनिकायुधादिप्रेरणवशाद्व्यर्थीकृतबला भवेयुरिति भावः । तदन्तःस्थलवर्तिनो नरपालादयस्तु तादृशरिपुसेनानिरोधक्षण एव पूर्वोक्तप्रच्छन्नमार्गेण बहिर्निष्क्रम्य दुर्गान्तरमुरुबलं रक्षकमाश्रयेयुरिति समरकलाकोविदः ॥

तस्मादेतदर्थङ्कल्पितस्यास्य कूर्मदुर्गस्य पांसुदुर्गं पङ्कदुर्गमिति च नामान्तरं केचिदुशन्तीति मतिः ॥ ३३ ॥

अथ दशमस्य पारावतदुर्गस्य लक्षणम् ॥

सञ्जाते तुमुले युद्धे स्वयमागत्य भूमिपः ।
स्वात्मरक्षादिकं कर्तुं कृतं तात्कालिकं स्थलम् ॥ ३४ ॥
पारावताख्यं निर्दिष्टं दुर्गलक्षणपण्डितैः ।
स्यन्दनैर्वारणैरश्वैर्योधैरायुधधारिभिः ॥
परितो रक्षितं दुर्गं मूलसैन्यैरनेकधा ॥ ३५ ॥

अथैकादशस्य प्रभुदुर्गस्य लक्षणम् ॥

वनमध्ये गिरेस्सानौ दुष्प्रवेश्यस्थलेऽथवा ।
अगाधपरिखोपेतं क्षुद्रपुर्या समन्वितम् ॥ ३६ ॥

---

अथ पारावतदुर्गलक्षणमाह — **सञ्जात** इति । मिथो भयङ्करसमरसंभवे सञ्जाते सति कश्चिद्भूपतिः स्वात्मरक्षणार्थं रथादिचतुरङ्गसेनाबलाभिरक्षितं तात्कालिकं यत्स्थलं करोति, तत्पारावतदुर्गमिति उच्यत इति दुर्गलक्षणज्ञा वदन्तीति भावः ॥

तत्रापि तादृशसेनास्थापने प्रथमतः स्यन्दनबलस्थापनं तदन्तर्वारणपङ्क्तिस्तदन्तर्वाजिश्रेणिस्तदन्तः पदातिरायुधधारीत्येवं पङ्क्तिशः स्थापनक्रमादयो महाभारतरामायणस्कान्दादिषु प्रतिपादिता द्रष्टव्याः ॥ ३५ ॥

अथ एकादशस्य प्रभुदुर्गस्य लक्षणमाह — **वनमध्य** इति । वनमध्ये वा गिरिसमीपतले वा अन्यत्र दुरधिगमे स्थले

एकाननेन संयुक्तं द्वारोपद्वाररक्षितम् ।
मध्ये छन्नपथोपेतं प्राकारद्वादशावृतम् ॥ ३७ ॥
क्षुद्रोपक्षुद्रकर्णाढ्यं विमानैरपि मण्डितम् ।
मध्यस्थभूपभवनं दुर्गान्तरसमावृतम् ॥ ३८ ॥

---

वा कल्पितं दुर्गं प्रभुदुर्गनामभाग्भवति । कीदृशलक्षणान्वितं प्रभुदुर्गमिति चेदाह — समन्ततोऽगाधपरिखासंवृताङ्गणं, वास्तुमध्यभागे चतुर्मुखनगरवत्प्रतोलिकाशताढ्यक्षुद्रपुरयुक्तं प्राच्यां वोदीच्यां वा मुखद्वारेणैकेनातितुङ्गगोपुरेणोपेतं पूर्वोक्तरीत्या तत्र तत्र दुर्गादिस्थलेषु सर्वत्र द्वारोपद्वारकल्पनावशादरिभिरभेद्यं मध्यभागे समुचिते स्थले सुरङ्गादिच्छन्नपथसहितं च । पुनः कीदृशम् ? दुर्गमिदं तावत् द्वादशप्राकारभित्तिसमावृतं नगरमध्यभागाख्यवास्तुनाथस्थलकल्पितभूमिपालभवनमञ्जुलम् । तादृशभूपभवनं परितो दुर्गान्तरकल्पनञ्च कार्यमिति भावः । दुर्गान्तरं नाम परिखान्तरमित्यर्थः । तादृशपरिखायाः बहिःस्थितपरिखायाश्च मुखद्वारं क्षुद्रोपक्षुद्रकर्णाढ्यं कारयेत् ॥

कर्णस्तावत्तत्र तत्र दुर्गभित्तिषु त्रिकोणवर्तुलचतुरश्राकारयूषकाख्यकल्पनाविशेषः कलरवावासस्थानम् । कर्णप्रमाणहीनः क्षुद्रकर्णः । तस्मादपि हीनप्रमाणक उपक्षुद्रकर्णः । तैस्सहितमित्यर्थः । किञ्च अष्टस्वपि दिशासु विमानाकारक्षुद्रगोपुरसहितदुर्गभित्तिमत् ॥

युग्मसंख्यकवाटादियुक्तभागत्रयोज्ज्वलम् ।
ससैन्यं सायुधागारं चिरसंभारसंभृतम् ॥
योधयंत्रस्थलोपेतं प्रभुदुर्गमुदीरितम् ॥ ३९ ॥

अथ द्वादशस्य युद्धदुर्गस्य लक्षणम् ॥

भूपालैर्देशसीमान्ते दुष्प्रवेशस्थलेऽथवा ।
युद्धार्थं कल्पितं दुर्गं युद्धदुर्गमितीर्यते ॥ ४० ॥

---

अपि च तादृशमुखद्वारस्य पूर्वभागेऽन्तर्भागे बहिश्च स्थानत्रयस्थलेष्वपि द्विद्विकवाटसहितद्वारान्तर्द्वारकल्पनाविशेषसहितत्वमपि अखिलाभेद्यरक्षणार्थं चेति । तत्संयुतं तादृशमुखद्वारमेकमिति यावत । किञ्चास्य दुर्गस्य मध्यमभागे राजभवनसमीपे वा समुचिते स्थले यन्त्रनिर्माणस्थलमायुधनिर्माणस्थलं चिरकालोपभोग्यबहुविधसंभारभरितसेनानिवेशस्थलं योधानामावासस्थलं च युक्त्या शिल्पी कल्पयेदिति भावः ॥

एतादृशलक्षणान्वितं प्रभुदुर्गनामकमिति पूर्वेणान्वयः । पूर्वोक्तदुर्गगणादस्यैतादृशभेदाः, भेदान्तराणि च स्वयमेवोह्यानीति प्रभुदुर्गलक्षणार्थः प्रतिपादितः ॥ ३९ ॥

अथ द्वादशस्य युद्धदुर्गस्य लक्षणमाह — भूपालैरिति । भूपालैस्सार्वभौमादिभिस्स्वदेशसीमान्ते वा दुष्प्रवेश्ये स्थलान्तरे वा प्रायशो युद्धार्थङ्कृतं दुर्गं युद्धदुर्गमिति व्यवह्रियते । कीदृश-

महादुर्गसमोपेतं नलीकस्थानभीकरम् ।
युद्धभित्त्यङ्गणोपेतमन्तर्वा बहिरेव वा ॥ ४१ ॥

कोणाष्टकं कोणषट्कमथवा स्थलयोग्यकम् ।
छन्नमार्गैरनेकैश्च सोपानावलिभिर्युतम् ॥ ४२ ॥

---

लक्षणान्वितम ? परिखान्तरापेक्षयाऽत्यन्तमगाधया परिखया वैपुल्याधिक्ययुतया संयुतं स्थलं महादुर्गमित्युच्यते । तादृशमहादुर्गेण समन्ततस्संवृतम् । किञ्च तादृशकुड्यदुर्गस्योपरि रिपुसेनानिरासाय नलीकाद्यायुधस्थापनस्थलं कल्पनीयमित्यर्थः ॥

किञ्च तादृशदुर्गभित्तेः बहिःस्थले वाऽन्तःस्थले वोभयत्र वा महाशाला वास्तुभूम्यनुगुणं स्थापनीया । तत्राप्येको नियमः । अन्तः कल्पिता शाला नानाजनवासार्हा । बहिः कल्पिता तु केवलं योधादियुद्धशीलानां निवेशार्थमिति विवेकः । किञ्च तादृशशालाङ्गणं तु अष्टकोणषट्कोणभूमिकल्पितं वा समतलस्थितं दुर्गाकारबद्धा करणीयमिति यावत ॥

किञ्चास्य युद्धदुर्गस्य मुखद्वारमेकं वा मुखद्वारद्वयं मुखद्वारचतुष्कं वा नृपेच्छया कार्यमिति भावः । किञ्चात्र बहुद्वारकल्पनस्य समरादिसमयेषु भयंकरत्वादस्य दुर्गस्य मुखद्वारमेकमेवालमिति शिल्पविदः । तादृशमुखद्वारस्य च सुरङ्गादिकल्पनं सोपानपङ्क्तिच्छादितं च करणीयम् । कुतः ? समरादिसमयहित-

मध्यस्थराजभवनं सालद्वादशकावृतम् ।
मन्त्र्यादिभवनोपेतं चिरसंभारपूरितम् ॥ ४३ ॥

बहुभिर्दुर्गकूटाख्यैः कल्पनैश्च समन्वितम् ।
वराकनसमोपेतं बहिश्शालासमन्वितम् ॥ ४४ ॥

---

प्रदत्वात् । केन प्रकारेण? तादृशसुरङ्गादिवर्त्मना वैरिसैनिकनिरसनादिबहुविधविजयकार्योपयोगिभटादिसञ्चरणविशेषात् । एवमेव नगरस्य वीथीकूटप्राकारमुखभागस्य मध्यभागस्थितस्य राजभवनस्य च सुरङ्गाद्याच्छादनमार्गकल्पनमाप्तजनवर्गैर्विरचय्य तत्रेतरजननिरासाय योधादींश्च स्थापयेदिति भावः ॥

किञ्चेदं युद्धदुर्गं प्राकारद्वादशकेन क्रमेण किञ्चित्किञ्चिद्धीनतुङ्गादिप्रमाणकेन संवृतङ्कृत्वा पूर्वोक्तरीत्या प्राकारपञ्चके स्थले भूपालसचिवसेनेशादिभवनानि कृत्वा अवशिष्टेषु प्राकारस्थलेषु इतरजनानां चातुर्वर्ण्यानामावासस्थानानि च कारयेदिति भावः । किञ्चैवमत्र युद्धदुर्गनगरे व्रीहितण्डुलाढकादिसंभारादींश्चिरकालपोषणकारिणस्तत्र तत्र निषद्यादिसमुचितस्थलेषु संपादयेत पुञ्जीकुर्यादित्यर्थः ॥

किञ्चैवमत्र युद्धदुर्गे इतरजनानां पौरजनानामावासभवनादिकल्पनं तु नृपेच्छाधीनमिति शिल्पसमयः । किञ्च पूर्वोक्तपूत्तुङ्गप्राकारद्वादशकभित्त्यादिभागेषु दुर्गकूटाख्यं कल्पनञ्च

वीथीषु क्षुद्रवीथीषु मुखभद्रकमाण्डितम् ।
युग्मसंख्यकवाटादियुक्तभागत्रयोज्ज्वलम् ॥ ४८ ॥
नानाजातिगृहोपेतं भूपालस्येच्छयाऽथवा ।

---

स्थापयेत् । दुर्गकूटो नाम आधोरणनिवेशनार्हस्थलवद्दूरतरभूभागस्वरूपादिनिरीक्षणार्थं कल्प्यमाना वेदिरुच्यते । ताभिस्सहितमिति पूर्वेणान्वयः । किञ्च वराकनं नाम तत्तत्समयनिवेदकघण्टावादनस्थलम् । तेन चोपेतमित्यर्थः । इदञ्च लक्षणं पद्मकसर्वतोभद्रवैजयन्तराजधान्यादिषु वाच्यमिति हृदयम् ॥

किञ्चात्र दुर्गाद्बहिः प्रदेशे महामार्गसमीपे जनानां विश्रान्त्यर्थं कल्पनीयमहाशालादिकं करणीयम् । किञ्च नगरेऽस्मिन् प्रतोलिकासु वीथीष्वपि क्षुद्रवीथीषु तत्र तत्र वीथ्यन्तरारम्भस्थले चतुरश्राकारा वा वर्तुलाकारा वा क्षुद्रमण्टपादयश्च स्थापनीयाः । किञ्चेदं दुर्गं युद्धदुर्गनगरं नगरमुखद्वारभागे राजभवनमुखद्वारभागे च पूर्वोक्तवदत्यन्तदार्ढ्यापादनाय द्विद्विकवाटसहितद्वारभागत्रययुतञ्च कल्पनं मञ्जुलं स्थापयेत् ॥

पूर्वोक्तमहापरिखाभित्तेरन्तर्भागे कल्पितजनावासस्थानानामधोभाग एव नगरजलधाराप्रसारणमार्गस्तदपेक्षयाऽगाधवद्दुर्गभाक्करणीय इति लक्षणमेतदपि पद्मकादिनगरेष्वपि कल्पनीयमिति भावः ॥

शालाभित्त्यङ्गणोपेतं तत्र तत्र च वास्थले ।
दुर्भेद्यमरिसेनाभिर्यन्त्रगर्भितकुड्यकम् ॥ ४६ ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे

दुर्गलक्षणकथनं नाम

दशमस्सर्गः (अध्यायः) ॥

---

किञ्चात्र युद्धदुर्गनगरे मतिमाञ्छिल्पी प्राकारभित्त्यादिस्थलेषु उपकुड्यादिकं तत्र तत्र वैरिनिरसनार्थं नानाविधयन्त्रस्थापनमन्यच्च बहुविधरक्षाकरं स्थानविशेषञ्च स्वीयकौशलयुक्त्यादिभिरूह्य यथाक्रममरिभिरभेद्यञ्च कारयेदिति सङ्क्षेपतो दुर्गलक्षणादीनि प्रतिपादितानि ॥ ४६ ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां

द्वादशविधदुर्गविधानकथनं नाम

दशमोऽध्यायः ॥



अथ देवप्रासादभूमानकथनं नाम

## एकादशोऽध्यायः ॥

देवानां वास्तुभूमिस्तु प्रायो दैर्घ्यान्विता मता ।
पुरस्य मध्यभागे तु चतुरश्रापि सा मता ॥ १ ॥

चतुरष्टकभागाख्यो निर्णयः परिकीर्तितः ।
चतुस्सप्त चतुष्षड्वा चतुःपञ्चापि वा क्वचित् ॥ २ ॥

---

॥ एकादशोऽध्यायः ॥

अथ देवप्रासादभूमानलक्षणकथनात्मकमेकादशाध्यायमारभते — **देवानामिति** । देवालयनिर्माणाय वास्तुभूमिस्तावत्प्रायशो दैर्घ्यान्वितैव प्रशस्ता मता । कैलासनित्यमङ्गलग्रामादिषु स्वस्तिकपद्मकसर्वतोभद्रकादिनगरेष्वपि वास्तुमध्यभागे यदि तादृशदेवतागारकल्पनं तदा तादृशमध्यप्रदेशेषु चतुरश्रप्रमाणभूमिरपि स्वीकार्या न दोषायेति भावः ॥

अथ दीर्घवास्तुभूमेः चतुरश्रवास्तुभूमेश्च कीदृशं लक्षणमित्याकाङ्क्षायामेतयोर्लक्षणं स्पष्टं विशिनष्टि — **चतुरष्टकेत्यादि**श्लोकद्वयेन ॥

वैशाल्ये चतुर्भागो दैर्घ्येऽष्टभागः १
वैशाल्ये चतुर्भागो दैर्घ्ये सप्तभागः २

दीर्घवास्त्विति शिल्पज्ञैः कीर्त्यते देवतालये ।
समां समां वास्तुभूमिश्चतुरश्रां विदुर्बुधाः ॥ ३ ॥
पञ्चाशद्दण्डकं वापि शतदण्डमथापि वा ।

---

वैशाल्ये चतुर्भागो दैर्घ्ये षड्भागः ३
वैशाल्ये चतुर्भागो दैर्घ्ये पञ्चभागः ४

इत्येवं लक्षणान्वितं दीर्घवास्तुस्वरूपं चतुर्विधं शिल्पशास्त्रकोविदैरुक्तमिति भावः। यदि वैशाल्ये चतुर्भागो दैर्घ्ये च चतुर्भागप्रमाणकस्तदा तां तु वास्तुभूमिं चतुरश्रामिति च प्राहुरित्यर्थः। जनार्दननारायणचन्द्रशेखरपशुपतिप्रमुखानां प्रधानदेवमूर्तीनां लक्ष्मीगौर्यादिप्रधानदेवीविम्बानां च गर्भगेहादिकं न वर्तुलवास्तुभागे कल्पनीयम । परन्त्वस्मिन्नेव चतुरश्रदेवभूभागे वा दैर्घ्यदेवभूभागे वा स्थापनीयमिति नियमः। अस्य विशदार्थस्तु— जनार्दनपशुपत्यादीनां प्रधानदेवानां देवीनाञ्च गर्भगेहं चतुरश्रं वा दैर्घ्याधिक्यवद्वा, धनुराकृतिवद्वा गजपृष्ठाकृतिवद्वा स्थापनीयम् । अन्यत्र देवतान्तराणान्तु क्वचिद्गेहं वर्तुलाकारवदपि न दोषायेति ॥

अथ देवालयप्रमाणादिकमाह — **पञ्चाशदित्यादिना** । मण्डकादिग्रामेषु पद्मकादिनगरेष्वपि तत्र तत्र यथास्थलविभवं वैशाल्ये पञ्चाशद्दण्डप्रमाणोपेतं देवागारम् । दैर्घ्ये तु पूर्वोक्तरीत्या शतदण्डकं वा तन्न्यूनसंख्याकं वा स्थापयेदिति शिल्पविदां समयः॥

द्विशतं त्रिशतं वापि चतुःपञ्चशतानि वा ॥ ४ ॥

षट्शतं वा सप्तशतं शताष्टावधि भाषितम् ।

स्थलानुकूलं कथितं भूपालस्येच्छयाऽथवा ॥ ५ ॥

अथवा मूर्तिभेदेन देवगेहप्रमाणकम् ।

---

किञ्च स्थलवैपुल्यादिके भूपालादिनिर्मातुरिच्छायाञ्च सत्यां तदा वैशाल्ये शतदण्डप्रमाणोपेतं वा द्विशतदण्डप्रमाणोपेतं वा त्रिशतदण्डप्रमाणोपेतं वा चतुश्शतदण्डप्रमाणसहितं वा पञ्चशतदण्डमानोपेतं वा षट्शतदण्डमानोपेतं वा सप्तशतदण्डमानोपेतं वा अष्टशतदण्डमानोपेतं वा तदनुकूलदैर्घ्यसहितञ्च स्थापयेदिति विकल्पः ॥

किञ्च शताष्टकदण्डावधिकमेव वैशाल्यं देवागारस्येति च निर्णीतं प्राचीनैर्मुनीश्वरैः । तच्चात्यन्ताधिकप्रमाणवत् अशक्यकार्यमिति अर्वाचीनाः । इत्थं दण्डप्रमाणेन देवागारलक्षणमानमुक्तं शास्त्रकारेण ॥

अथापि ग्रन्थान्तरेषु काश्यपादिमतान्तरेषु च तत्तद्देवमूर्त्यादिभेदानुगुणं अगारप्रमाणं कार्यमित्युक्तत्वादिदमप्यङ्गीकृत्याह — **अथवा मूर्तिभेदेनेति** । मूर्तीनां भेदस्तावत्प्रायशो लोके दशतालादिमानवत् । पराक्रमप्रधानानां किरातवृषभारूढरघुनाथादिदेवबिम्बानां दशतालमानेन कल्पनमुक्तम् । दयाशान्त्यादि-

अथ सकलविधद्वारप्रमाणक्रमः ॥

दण्डत्रिपादमानं वा दण्डार्धं वाथ दण्डकम् ॥ ६ ॥
द्वारमानमिति प्रोक्तं शिल्पशास्त्रविशारदैः ।

---

प्रधानानां केशवमाधववासुदेवपशुपतिगङ्गाधरादिबिम्बानां कल्पनन्तु मध्यमदशतालेनेत्यादिक्रमो बहुविस्तरः ॥

तदनुकूलं तादृशबेरतालादिमानानुकूलं गर्भगेहं कल्पयित्वा तदनुगुणं पूर्वमण्टपभद्रमण्टपध्वजस्तंभबलिपीठप्राकारादिकल्पनमुत्तुङ्गरचनादिमञ्जुलं कल्पयेदित्यादिक्रमस्तु अत्र विस्तरभयात न प्रतिपाद्यत इत्यलं विस्तरेण ॥

अथ गर्भगेहद्वारादिबहुविधद्वारप्रमाणमाह — **दण्डत्रिपादमानमिति** । आयादिलक्षणे तावत सर्वेषां सुलभस्फूर्तये साधारणदण्डोऽयं षड्भागेन विभक्तः । तादृशभागक्रमेणात्र किञ्चिल्लक्षणमुच्यते । यथा सकलं देवागारद्वारं भूपालभवनद्वारमन्येषां जनानामावासगेहद्वारञ्च तादृशभागत्रयवैशाल्यवत्कृतं यदि तदा औन्नत्ये भागषट्कप्रमाणङ्कार्यमित्यर्थः ॥

अयमेव पक्षो ग्रन्थकर्तुरस्याभिमततम इति प्रतिभाति । तथापि नन्दिवास्त्वादिग्रन्थान्तरे द्वारप्रमाणस्यान्यथोक्तत्वात, तच्च सङ्ग्रहेणाह — **दण्डत्रिपादमानं वेति** । क्वचित् स्थलविशेषे कल्पनाविशेषे च द्वाराणि तावद्वैशाल्ये भागत्रयप्रमाणादिकृतानि

तदेकभागवृद्ध्यात्र सर्वद्वारप्रमाणकम् ॥ ७ ॥

---

यदि तदा औन्नत्ये सार्धचतुष्कभागप्रमाणानि वा भागत्रय-प्रमाणानि वा सममानं कार्याणीति च भेदः ॥

किमर्थमिदम्? तदापि युज्यते। कुत्र? गोपुरतलादिषु स्थलान्तरेषु च। तच्च तत्र तत्र द्रष्टव्यमिति भावः। तस्माच्छैल्याऽनया शिल्पकार्यज्ञस्सर्वाण्यपि द्वाराणि तादृशपूर्णदण्डादिभागेषु एकैक-भागवृद्धिमत्प्रमाणकानि स्थापयेदित्यर्थो निगलितः। तत्प्रमाण-द्योतकोऽयमुद्धारोऽत्र सुलभस्फूर्तये लिख्यते — राजधान्यादिषु कचिन्महानगरेषु स्थलविभवतः कल्पितसप्तप्राकारावृतदेवागारे तु द्वादश द्वाराणि स्थाप्यानि। तेषां सर्वेषां द्वाराणां वैशाल्यौन्नत्य-प्रमाणक्रमद्योतकोद्धारो यथा— पूर्वोक्तरीत्या दण्डे षोढा विभक्ते पादप्रमाणं,नृपदण्डे षोढा विभक्ते महापादप्रमाणमिति च आयादि-लक्षणोक्तरीत्या गर्भगृहद्वारादिसर्वद्वारौन्नत्यवैशाल्यमानमत्र तादृश-पादमानेन लिख्यते। यथा—

## ॥ सर्वद्वारमानोद्धारः ॥

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| प्रथमद्वारस्य | वैशाल्ये | ३ | पादो | यदि | ६ | पादः | औन्नत्ये | कार्यः। |
| द्वितीयद्वारस्य | ,, | ४ | ,, | ,, | ८ | ,, | ,, | ,, |
| तृतीय ,, | ,, | ५ | ,, | ,, | १० | ,, | ,, | ,, |
| चतुर्थ ,, | ,, | ६ | ,, | ,, | १२ | ,, | ,, | ,, |
| पञ्चम ,, | ,, | ७ | ,, | ,, | १४ | ,, | ,, | ,, |
| षष्ठ ,, | ,, | ८ | ,, | ,, | १६ | ,, | ,, | ,, |
| सप्तम ,, | ,, | ९ | ,, | ,, | १८ | ,, | ,, | ,, |
| अष्टम ,, | ,, | १० | ,, | ,, | २० | ,, | ,, | ,, |
| नवम ,, | ,, | ११ | ,, | ,, | २२ | ,, | ,, | ,, |
| दशम ,, | ,, | १२ | ,, | ,, | २४ | ,, | ,, | ,, |
| एकादश ,, | ,, | १३ | ,, | ,, | २६ | ,, | ,, | ,, |
| द्वादश ,, | ,, | १४ | ,, | ,, | २८ | ,, | ,, | ,, |

द्वारपञ्चकहीनं तत्कारयेन्न कदाचन ।
द्वारमेकं द्वारयुग्मञ्चतुर्द्वारमथापि वा ॥ ८ ॥
महाधिष्ठानसंयुक्तङ्गोपुरैश्च समुज्ज्वलम् ।

---

एतदधिकप्रमाणवास्तुद्वारेष्वपि संख्याप्रमाणक्रम एवमेवोह्य इति । किञ्चात्रोद्धारे प्रतिपादितेषु द्वारेषु नवमादिद्वादशान्तानि गोपुरद्वाराणीति समयः । द्वारान्तराणि तु गर्भगेहालिन्दमुख-मण्टपद्रव्यशालादेवीगृहपरिवारगृहादिस्थलेषु तत्प्रमाणवन्ति स्थाप्या-नीति भावः । पूर्वप्रतिपादितरीत्या इमान्येव द्वारलक्षणानि सर्वेष्वपि मानवगेहादिषु संयोज्यानीति पिण्डितार्थः ॥

मतिमान् श्रद्धालुश्शिल्पज्ञश्शिल्पी नृपो वा देवागारं पञ्चद्वारविहीनं न कदापि कारयेत । मानवालयेष्वप्येवमेव । अयञ्च शास्त्रीयो नियमः । केचित्तु गर्भगेहे एव द्वारपञ्चकन्यूनत्वं सर्वथा न कार्यम् । कथम् ? गर्भगेहे वेदिकासमीपे प्राथमिकं द्वारं, ततः किञ्चिद्दूरस्थं द्वितीयं द्वारमित्यादि । अयञ्च प्रथमः कोष्ठः प्रथमकक्ष्य इति । एवमेव द्वितीयकोष्ठनिर्माणस्थले द्वारयुग्मम् । ततो द्वारपालकस्थापनार्हवेद्युपेतं द्वारं पञ्चममिति । अयञ्च पक्षः स्पृहणीय इत्येव ब्रूमहे । ग्रामनगरस्थापितदेवागारेषु सर्वेष्वप्ययमेव क्रमो यजमानेच्छया कल्पनीय इति प्रकृतमनुसरामः ॥

प्राचीमुखं प्रकर्तव्यं प्रायशो देवमन्दिरम् ॥ ९ ॥

गन्धर्वभागे वाग्नेय्यां कीर्तितः पचनालयः ।
भल्लाटे दन्तके वापि यागशाला विधीयते ॥ १० ॥

---

किञ्चैतादृशलक्षणान्वितगर्भगेहोपेतं देवागारं प्रायशः प्राङ्मुखमेव कार्यम् । क्वचिच्छिवमन्दिरे विष्णुमन्दिरे च तत्तत्क्षेत्रपुराणादिप्रमाणवशाद्वा, तत्तद्देवमूर्तिलक्षणवशाद्वा दक्षिणमुखद्वारं, पश्चिममुखद्वारं , उत्तरमुखद्वारञ्च कल्पनीयमिति च संप्रदायविदः । तत्रापि देवागारस्य भूमिलम्बनपूर्वकस्थापितमहाधिष्ठानस्थितगोपुरसहितं द्वारमेकं, द्वारयुग्मं वा, द्वारचतुष्कं वा यथाविभवं स्थापयेदिति भावः । सर्वथा न द्वारत्रयम । इदञ्च भूपागारेऽपि योज्यम् । द्वारयुग्मकल्पनन्तु नगरलक्षणोक्तरीत्या प्राक्प्रत्यग्दिशोर्वा दक्षिणोत्तरयोर्वा समसूत्रं स्थापनीयमिति नियमः । क्वचिच्छिल्पाचार्येच्छया व्यत्यासससूत्रभागपि सगोपुरमुखद्वारकल्पनं विहितम् । तच्च तावत्प्रायशो नगरमध्यभागे चतुर्दिग्भद्रयुतद्वारचतुष्कोपेतमन्दिरविषयकमिति समयः ॥

किञ्च पूर्वोक्तरीत्या प्रशस्ततमे दीर्घवास्तुभूभागे स्थितस्य सकलविधदेवागारस्यापि महानसस्तावदाग्नेयदिक्कोणगतगन्धर्वभागे कल्प्यः । भल्लाटभागे वा दन्तकभागे वा यागशाला कल्प्या ॥

रोगे वा वह्निभागे वा शाला वैवाहिकी मता ।
मित्रे वा शोषभागे वा देवीस्थानं प्रकीर्तितम् ॥ ११ ॥

भास्करे भूधरे भागे परिवारांश्च कल्पयेत् ।
द्रव्यशाला भुजङ्गे स्यादुद्यानमपि तत्स्थले ॥ १२ ॥

---

रोगभागे वा वह्निभागे वा वैवाहिकशाला विवाहमण्टपो वा कल्प्यः । एवं विकल्पकथनं तु एकप्राकाराद्यावृतस्थलानुगुणमिति बोध्यम ॥

एवं मित्रभागे शोषभागे वा लक्ष्मीगौर्यादिजननीनां आवासस्थानं साधिष्ठानं, सविमानं, सालिन्दं स्थापनीयम । प्रायिकलक्षणमिदमिति मन्तव्यम, ग्रन्थान्तरेषु स्थलान्तरे तादृशलोकजननीवर्गस्थापनस्योक्तत्वादिति ॥

एवं भास्करभागे वा भूधरभागे वा अनन्तगरुडविष्वक्सेनवृषभनन्दिप्रमुखानामीश्वरभक्तानां पृथक् क्षुद्रमन्दिरं वा स्थापयेत । किञ्च पूर्वोक्तगरुडहनुमद्वृषनन्दिप्रमुखानामीश्वरभक्तानां साञ्जलीनामीशस्य पुरोभाग एव स्थापनं तु ग्रन्थान्तरचोदितमिति मतिः । भुजङ्गभागे नैवेद्यार्हद्रव्यशालां छत्रचामरवाहनादिस्थापनशालादींश्च कल्पयित्वाऽवशिष्टे तद्भागस्थले, अथवा सावित्रे रविभागे चोद्यानमीशोत्सवार्हमण्टपयुतं सतटाकं कारयेत । अथवा तटाकमुद्यानाद्बहिःस्थले देवागारवास्तुभागे

मित्रदौवारयोर्मध्ये वास्तुमध्येऽथवा पुनः ।
गर्भगेहं प्रकर्तव्यं देवादीनां शुभप्रदम् ॥ १३ ॥
वाराहं नारसिंह्मं वा श्रीधरं वा जनार्दनम् ।
अच्युतं पुण्डरीकाक्षमनन्तशयनं पुनः ॥ १४ ॥
नारायणं केशवं वा माधवं पुरुषोत्तमम् ।
वैकुण्ठनाथमथवा गोविन्दं वा त्रिविक्रमम् ॥ १५ ॥
श्रीरामं वासुदेवं वा क्षेत्रनाथमथापि वा ।

---

समुचिते स्थले प्राकारमध्यभागे वा प्राकाराणां बहिःस्थले वा यजमानेच्छया कारयेदिति तादृशवैशाल्यत्रतस्थलानुकूलविकल्पः ॥

किञ्च देवागारवास्तुमध्यप्रदेशे वा मित्रदौवारिकभागयोर्वा देवादीनां सलक्षणं शुभप्रदं गर्भगेहं निर्मापयित्वा, तदन्तश्शुद्धां देववेदीञ्च कल्पयित्वा, तदुपरि आसीनदेवबिम्बं वा शेषभोगादिषु शयानदेवबिम्बं वाऽथवा तिष्ठन्तमुज्ज्वलं देवं स्थपत्यादिभिश्शुभे मुहूर्ते स्थापयेत ॥

के ते देवा इत्याकाङ्क्षायामाह — वाराहमिति । भूदारकमादिवराहं वा नरसिंह्मं वा लक्ष्मीनरसिंह्मं वा श्रीधरं वा जनार्दनम् , अथवाऽच्युतं पुण्डरीकाक्षम , अथवाऽनन्तशायिनं नारायणं केशवं माधवम , अथवा पुरुषोत्तमं वैकुण्ठनाथं गोविन्दं त्रिविक्रमं वा दाशरथिं वासुदेवम् ,अथवा तत्तत्क्षेत्र-

पद्मनाभमुखानन्यान्स्थापयेद्विष्णुमन्दिरे ॥ १६ ॥

आसीनं वा शयानं वा तिष्ठन्तं वेदिकाश्रितम् ।
गौरीपतिं वृषारूढं सन्ध्यानटमथापि वा ॥ १७ ॥

किरातं दक्षिणामूर्तिं गङ्गाधरमथापि वा ।
चन्द्रशेखरदेवं वा पशुनायकमेव वा ॥ १८ ॥

लिङ्गमूर्तीः क्षेत्रमूर्तीस्तीर्थमूर्तींश्च सर्वतः ।
अन्याश्च देवतामूर्तीः स्थापयेच्छिवमन्दिरे ॥ १९ ॥

अथ गर्भगेहप्रमाणकथनम् ॥

देवतानां गर्भगेहं वास्तुभूमिवशान्मतम् ।
दीर्घं वा चतुरश्रं वा धनुर्वद्गजपृष्टकम् ॥ २० ॥

---

माहात्म्यादिषु निर्दिष्टं देवबिम्बं वा पद्मनाभप्रमुखानन्यांश्च देवान् वा विष्णुमन्दिरे स्थापयेदित्यर्थः ॥

शिवमन्दिरे तु गौरीकान्तं वृषारूढं, अथवा सन्ध्यानटं किरातं, दक्षिणामूर्तिं, गङ्गाधरम्, अथवा चन्द्रशेखरं पशुनायकम्, अथवा पृथिव्यादिपञ्चविधलिङ्गमूर्तीर्वा पूर्वोक्तवत्तत्तत्क्षेत्रनाथान् वा तीर्थलिङ्गादीन् वा तस्यां गर्भगेहवेदिकायां शुभे मुहूर्ते स्थापयेदिति च क्रमः ॥

किञ्चैतादृशदेवबिम्बानां सपरिवारकलत्राणां आयुध-वर्णनिर्माणादिप्रकारस्तु शिल्परत्नादिशास्त्रान्तरेषु तत्र तत्र द्रष्टव्यः ॥

दण्डद्वयं तद्द्विगुणं गर्भगेहप्रमाणकम् ।
एकैकभागवृद्ध्या तच्चतुर्दशकसीमकम् ॥ २१ ॥

सालिन्दं वा मुखद्वारं पङ्क्तिसोपानभासुरम् ।

---

अथ गर्भगेहलक्षणमाह — देवतानामिति । देवागारमध्ये कल्पनीयं गर्भगेहं तु तदगारवास्तुभूमिवशादेव स्थापयेदित्युपदेशः । अस्य विशदार्थस्तु — चतुरश्रवास्तुभूनिर्मितदेवालये गर्भगेहं चतुरश्राकारम, दीर्घवास्तुभूनिर्मितदेवालये गर्भगेहं दैर्घ्याधिक्य-प्रमाणकम, क्वचिद्धनुराकारवद्वा गजपृष्ठाकारवत्कल्पयित्वा, तादृश-गर्भगेहवैशाल्यं दण्डद्वयप्रमाणकं यदि कृतं तदा तद्द्विगुणप्रमाणं चतुर्दण्डदशदण्डपर्यन्तं वैशाल्यं यदि तदा तद्द्विगुणितदैर्ध्यञ्च योजयेदित्यपि चोपदेशः ॥

किञ्च तादृशगर्भगृहं तु भूतलादुपरि क्षुद्राधिष्ठानयुक्तं वाऽधिष्ठानरहितं वा निर्माय पञ्चषादिद्वात्रिंशत्सोपानावलीयुतं अतितुङ्गगभीराकृति स्थापयेत् । किञ्च तत्र च पूर्वोक्त-रीत्या प्रधानदेवीवेदीसमीपतलमारभ्य गर्भगेहान्ते द्वारपालकयोः स्थानमुभयपक्षयोः पञ्चाधिकद्वाराणि वा, द्वित्रिचतुर्द्वाराणि वा निर्माय तयोर्द्वारयोर्मध्ये तेषां वा द्वाराणां मध्येऽलिन्दकत्रयं वा स्थलानुगुणं कारयेदिति । तत्र च प्रत्यलिन्दं सोपानावल्यां किञ्चित्किञ्चिदौन्नत्यं क्रमेण स्थापनीयमिति नियमः ॥

दृढार्गलसमोपेतकवाटद्वयभासुरम् ॥ २२ ॥

दशहस्तादि तत्तुङ्गमानमुक्तं मुनीश्वरैः ।
कूटकोष्ठसमायुक्तं विमानैरपि मण्डितम् ॥ २३ ॥

द्वारमानक्रमेणैवं भित्तिमानञ्च कल्पयेत् ।
एकप्राकारमथवा प्राकारत्रयभासुरम् ॥ २४ ॥

---

किञ्च तादृशसोपानालिन्दसहितानि तानि तु द्वाराणि तत्र तत्र दृढार्गलसंयुतकवाटद्वयविलसितानि रचयेदिति भावः । एतादृशलक्षणान्वितगर्भगेहाभित्तितुङ्गप्रमाणं तु दशहस्तमानभाक्कारयेदिति मुनिभिरुदीरितमिति भावः । सर्वथा दशहस्तौन्नत्यमानहीनभित्तिं न रचयेदिति ॥

किञ्च तादृशगर्भगेहोपरितलं दृढं शिलावलीभिराच्छाद्य कूटकोष्ठादिसहितविमानं भासुरं शिल्पी कल्पयेदित्यर्थः । एतादृशगर्भगेहकल्पनस्योपरि विमानकल्पनादिविषयस्तत्र तत्र वेद्यः ॥

किञ्चैतादृशगर्भगेहयुतं पूर्वोक्तलक्षणसहितं शिवस्य विष्णोर्वा मन्दिरमेकप्राकारावृतम्, अथवा स्थलविभवानुगुणं प्राकारत्रयावृतं वा पञ्चप्राकारावृतमथवा सप्तप्राकारावृतं स्थापयित्वा तन्मन्दिरमध्ये शशिदेवभागे वा भल्लाटदेवभागे वा देवताभिषेकाद्यर्थं भद्रमण्टपं कल्पयेत ॥

अथवा तत्रैव भागे पूर्वमण्डपं वा स्थापयेत । अन्यत्र

शताङ्घ्रिमण्टपं वापि सहस्रांघ्रिकमण्टपम् ।
वार्षिकं मण्टपञ्चैव मासमण्टपिकं तथा ॥ २५ ॥
अन्यांश्च मण्टपाञ्छिल्पी कल्पयित्वा विधानतः ।
सचत्वरां महाशालां वार्स्थलेन समन्विताम् ।।
तत्तद्भागप्रमाणेन स्थापयेद्वास्तुमानवित् ॥ २६ ॥

इति विश्वकर्मप्रणीते **विश्वकर्मवास्तुशास्त्रे**

देवप्रासादभूमानकथनं नाम

**एकादशोऽध्यायः ॥**

---

समुचिते भागे षोडशपादमण्डपं वा शतपादमण्डपं वा सति विभवे सहस्रपादमण्टपं वा यथाक्रमं मञ्जुलचित्रादिकखचितं स्थापयेत ॥

किञ्च शिवस्य विष्णोर्वा मन्दिरे प्रथमद्वितीयप्राकारयोर्वा प्राकारान्तरे वा स्थलान्तरे वा वार्षिकोत्सवमण्टपमासोत्सवमण्टपपक्षोत्सवमण्टप वसन्तोत्सवमण्टप विहारमण्टपस्थानमण्टपादीनन्यांश्च कल्पनाविशेषान्कारयित्वा यथाक्रमं तत्र तत्र जलातपादिपातयोग्यवार्स्थलसहिता बह्वीश्च शालाश्शिल्पवित्कल्पयेदिति सङ्क्षेपेण देवागारभूमानलक्षणमुक्तं ज्ञेयम ॥ २६ ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां विश्वकर्मवास्तुशास्त्रव्याख्यायां

**देवप्रासादभूमानकथनं नाम**

**॥ एकादशोऽध्यायः ॥**

अथ नृपप्रासादभूमानलक्षणकथनं नाम

द्वादशोऽध्यायः ॥

शुभदा चतुरश्रा भूर्भूमिपानां विशेषतः ।
पुरस्य मध्यभागे वा निर्दिष्टे वा स्थलोत्तमे ॥ १ ॥

भूपहर्म्यं प्रकर्तव्यं तल्लक्षणमनोहरम् ।
गभीरपरिखोपेतं द्वारोपद्वारशोभितम् ॥ २ ॥

चूलीहर्म्यसमायुक्तं पक्षिशालाभिरन्वितम् ।

---

॥ द्वादशोऽध्यायः ॥

अथ नृपप्रासादप्रमाणकथनात्मकं द्वादशाध्यायमारभते — शुभदेत्यादिना । तत्र नानाविधनगरेषु चतुरश्रा वास्तुभूमिरेव भूपालभवनादिनिर्माणाय स्वीकार्येति मुख्यः पक्षः । सैव विजयादिसंपत्प्रदा चेति भावः । क्वचिदत्यन्तायतभूमिर्वा दैर्घ्यान्विता भूरपि न दोषायेति भावः । स तु मध्यमः पक्ष इति ॥

किञ्च पुरमध्यभागस्थितां वा पद्मकादिनगरीषु निर्दिष्टभागस्थितां वा भूमिं स्वीकृत्य तत्र राजभवनं गभीरपरिखासंवृतं द्वारोपद्वारयुतं चूलीहर्म्याख्यचन्द्रशालादिबहुशालोपेतं कूटकोष्ठाद्यलङ्कृतनवभौमभासुरं बहुशिखरवातायनादिकल्पनाविशेषैर्नयनानन्दकैरुपेतं च कारयेदिति भावः । पूर्वोक्तगभीरपरिखालक्षणं तु अनन्तराध्याये स्पष्टीकरिष्यते । तस्मात्प्राकारस्य

पञ्चाशद्दण्डमानादि दण्डपञ्चशतावधि ॥ ३ ॥

प्रमाणमिह निर्दिष्टं भूमिपालस्य मन्दिरे ।

अथवा भागमानेन कारयेन्नृपमन्दिरम् ॥ ४ ॥

सूर्यैकं वारणैकं वा तस्य मानमुदीरितम् ।

---

तादृशभूपालभवनार्हवास्तुसीम्नस्तु वैशाल्यप्रमाणं पञ्चाशद्दण्डकमारभ्य पञ्चशतीदण्डकावधिकं मुनिभिर्निर्दिष्टमिति समयविदः । तथा दैर्घ्यप्रमाणं तु तदपेक्षया द्विगुणितमिति भावः । अथवा 'चतुस्सप्त चतुष्षड्वा' इत्यत्र विवृतप्रमाणकोपेतं यथास्थललाभमिति विकल्पः ॥

इत्थं **नन्दिनारदकाश्यपादिप्राचीनानां** मतमनुसृत्य राजभवनवास्तुप्रमाणमुक्तम । क्वचित्तु भागमानमिति व्यवहारात्तमप्यङ्गीकृत्य शिल्पकार्यज्ञानां सुखबोधाय भागमानक्रममाह— **अथवेत्यादिना** । पूर्वमुखादिग्रामेषु वा पद्मकादिनगरेषु वा तादृशग्रामनगरादिनिर्माणाय यावत्संख्याकप्रमाणकभूरङ्गीकृता तां तु भुवं द्वादशभागात्मिकामष्टभागात्मिकां वा विभज्य तत्रैकभागस्थले तादृशभूपालवास्तुभवनचिह्नं स्थापयेदिति भावः ॥

तथा च तत्र भागमेकं नृपमन्दिरादिमन्दिराक्रान्तं भागैकादशकस्थलं वा भागसप्तकस्थलं वा इतरजनावासस्थानाक्रान्तं वा स्थापयेदित्यर्थोऽत्र 'सूर्यैकं वारणैकं वा' इत्यनेन

एकाननं वा द्विमुखं चतुराननमेव वा ॥ ५ ॥
मेषे वा वह्निभागे वा मन्त्रिहर्म्यं प्रकल्पयेत् ।
आकाशे वाऽथ पवने सेनानाथस्य मन्दिरम् ॥ ६ ॥
प्रासादभित्तिमभितो बहिर्वा तच्च कल्पयेत् ।
पुरोहितादिनिलयैस्सहितं वा विशेषतः ॥ ७ ॥
द्वितीयावरणे वाऽपि तृतीयावरणेऽपि वा ।
भूधरे रुद्रके भागे न्यायशाला विधीयते ॥ ८ ॥
ईशाने देवतागारं सावित्रे कोशमन्दिरम् ।

---

मूलवाक्येन प्रतीयत इति मतान्तरं तत्र नोच्यते । अत एतादृशवैशाल्यायामसहितां भूपमन्दिरवास्तुभूमिं पूर्वोक्तरीत्या अगाधपरिखावृताञ्च कृत्वा तादृशपरिखासेतुमार्गसमीपे एकाननं वा मुखद्वयमथवा मुखद्वारचतुष्कं वा स्थापयित्वा कल्पनादिकल्पविद्भूपमन्दिरनिर्माणव्यग्रो भवितव्य इति सूचितम् ॥ ५ ॥

किञ्च पूर्वोक्तरीत्या तादृशवैपुल्यादिसहितभूपभवनवास्तुभूमौ मेषभागे वह्निभागे वा सचिवहर्म्यम्, आकाशभागेऽथवा पवनभागे सेनापतिहर्म्यञ्च नृपप्रासादभित्तेरन्तःस्थले वा बहिःस्थले वा द्वितीयादिप्राकारान्तरे वा समुचितस्थले पुरोहितयामरक्षकराजकीयाप्तबन्धुसुहृदादिनिलयसहितं स्थापयेत् ॥

किञ्च भूधरभागे वा रुद्रकभागे वा न्यायशालाम्,

मित्रभागे प्रहरणस्थानमुक्तं मुनीश्वरैः ॥ ९ ॥
मध्यभागे राजवेश्म नवसौधतलावधि ।
नानाशालासमोपेतं कूटकोष्ठाद्यलङ्कृतम् ॥ १० ॥
शिखरावलिसंदृश्यं कल्पनाशतशोभितम् ।
वातायनशतोपेतं मध्यचत्वरमण्डितम् ॥ ११ ॥
पाञ्चाली मागधी चान्या शौरसेनी च वाङ्गिकी ।
कोसली चापि कालिङ्गी द्राविडीति क्रियाकला ॥

---

ईशानभागे राजकीयकुलदेवतालयम् , सावित्रभागे कोशमन्दिरं, मित्रभागे आयुधागारं, वास्तुभूमध्यभागे पूर्वोक्तनृपसौधतल-मनोहरं भूपभवननिर्माणञ्च कल्पयेदित्यर्थः ॥

एवमत्र राजवास्तुभागेषु कल्पनीयानि मन्त्रिसेनेश-भवनान्यानि कोशागारायुधागारन्यायशालाभूपभवनादीनि च पाञ्चाल्यादिक्रियाशैल्या कल्पनविशेषभासुराणि रचयेदिति शिल्पसमयः । तादृशी क्रियाशैली तावत्स्वकीयकल्पनादिप्रभावेन सर्वेष्वपि लोकेषु प्रसिद्धिमती मुख्या सप्तविधा कीर्तिता । यथा —

| | | | |
|---|---|---|---|
| 1. पाञ्चाली | क्रियाशैली | 5. कोसली | क्रियाशैली |
| 2. मागधी | ,, | 6. कालिङ्गी | ,, |
| 3. शौरसेनी | ,, | 7. द्राविडी | ,, |
| 4. वाङ्गी | ,, | | |

प्रसिद्धा शिल्पकार्येषु कल्पनाशतशोभिनी ।

---

अस्य विशदार्थः— पाञ्चालादिदेशेषु क्रियमाणभवननिर्माणादिरचना पाञ्चाली शैली । मगधादिदेशेषु क्रियमाणभवननिर्माणादिरचना मागधी शैली । शूरसेनादिदेशेषु क्रियमाणभवननिर्माणादिरचना शौरसेनी शैली । वङ्गादिदेशेषु क्रियमाणनिलयनिर्माणादिरचना वाङ्गी शैली । कोसलादिदेशेषु भवननिर्माणादिरचना कोसली शैली । कलिङ्गादिदेशेषु क्रियमाणभवननिर्माणादिरचना कालिङ्गी शैली । द्राविडादिदेशेषु क्रियमाणभवनादिनिर्माणरचना द्राविडी शैलीति क्रमार्थो ज्ञेयः । सिन्धुसौवीरादिदेशान्तराणां शैल्यन्तराणामपि सर्वेषामत्रैव सप्तविधशैलीष्वेवान्तर्भावादिदमेव मुख्यत्वेनोक्तमिति भावः ॥

किञ्च बहुविधशिल्परचनालङ्कारादिना शिल्पकार्येषु प्रसिद्धामिमां पाञ्चालीं वा मागधीमथवा शौरसेनीं कलामन्यां वाऽऽश्रित्यैव राजभवनादिमन्दिरनिर्माणं कार्यमिति शिल्पविदां समयः । किञ्च तत्रापि देशभेदेन पूर्वोक्तपाञ्चालादिक्रियाशैलीनां किञ्चित्किञ्चिद्भेदादिलक्षणेन विलक्षणतया प्रतिभाढ्यात्सार्वभौमादिभूपालवर्गस्तदितरे धनिकादयो वा स्वकीयभवनादिनिर्माणकल्पनेषु तामेव शैलीं मुख्यकोटित्वेन संयोज्य क्वचिन्निर्माणभागेषु स्वस्वदेशीयशिल्परचनाभेदांश्च प्रदर्शयेदित्यान्तरालिको भावः ॥

देशभेदेन भूपालः स्वेच्छया तां समाश्रयेत् ॥

सोमे वा दन्तके भागे भोजनागारमीरितम् ।
विशालमापभागे वा कल्पयेच्छिल्पकर्मवित् ॥ १४ ॥

किन्नरे भास्करे वाथ विहारस्थलमिष्यते ।
तत्रैवोद्यानभूमिश्च निर्दिशेत्तुष्टिहेतवे ॥ १५ ॥

---

कुतः? एवं स्वस्वदेशीयशिल्परचनापाटवकार्यकृत्प्राप्त्यादिवशादयमेव मुख्यतमः पक्षः । अथापि सार्वभौमाद्यो महाधनिकाः स्वेच्छया वा जनतुष्टये वा एकत्रैव बहुविधक्रियाशैल्युपेतभवनादिरचनां कारयेयुरित्यर्थोऽपि 'स्वेच्छया तां समाश्रयेत्' इति लक्षणवाक्येन प्रतीयते । अयं तु मध्यमः पक्ष इति शिल्पज्ञाः । किञ्च भूपालैरेवमेव कार्यं न त्वन्यैरित्यन्ये वदन्तीति प्रकृतमनुसरामः ॥

किञ्च भूपालेच्छया यया कयापि वा शैल्या भवनादिनिर्माणे कृते पूर्वनिर्दिष्टमानभागस्थानादिषु न कोऽपि भेदः, परन्तु कल्पनाविशेषष्वित्यादिकमूह्यं शिल्पकार्यज्ञैरित्यर्थोऽपि ध्वन्यते ॥ १३ ॥

किञ्चात्र राजवास्तुभूमौ सोमभागे वा दन्तकभागे वा भोजनागारं मध्यहर्म्येण मिलितं वा वियुक्तं वा कृत्वा नैऋत्येनापदेवभागे पट्टमहिष्यादिरमणीनां अन्तःपुरञ्च स्थापयेत् ॥

गान्धर्वे वारणस्थानं पुष्पके वाजिमन्दिरम् ।
भृङ्गराजकभागे च भिषक्शालादयो मताः ॥ १६ ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे
नृपप्रासादभूमानकथनं नाम
द्वादशोऽध्यायः ॥

---

अपि चात्र किन्नरस्थाने विहारस्थलं प्रमोदवर्धकं कारयित्वा तत्रैव भागान्तरे कुन्दचम्पकाशोकादिलतापुष्पनिवहैः पूगनागजम्बीरपनसरसालाम्रवकुलनारिकेलादिफलवृक्षैश्च भरित-मुद्यानञ्च स्थापयेत् । किञ्च गन्धर्वभागे गजस्थानं, पुष्पदेवभागे वाजिवन्धनस्थानं च भृङ्गराजभागे भिषग्वाद्यकारलेखवाहकयाम-रक्षकादीनां राजसेवकानामालयादींश्च कल्पयेदिति । अत्र गजाश्वस्थानन्तु भूपालसम्पन्महिमादिस्फूर्तये राज्यलक्ष्मीविवृद्धये च कतिपयानामेवोत्तमवारणानामुत्तमवाजिनाञ्च स्थानमुक्तं, न तु तेषामसंख्येयानां सततवासस्थानात्मिका शाला कर्तव्येति प्राज्ञानां शिल्पविदां समय इति सङ्क्षेपेण नृपप्रासादभूमानादिलक्षणमुक्त-मिति भावः ॥ १६ ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
**नृपप्रासादभवनादिलक्षणकथनं नाम**
**द्वादशोऽध्यायः ॥**



अथ नृपप्रासाददुर्गपरिखालक्षणकथनं नाम

## त्रयोदशोऽध्यायः ॥

प्राकारदुर्गयोर्मध्यं चतुःपञ्चषदण्डकम् ।
शालया सहितं वापि रहितं मानमीरितम् ॥ १ ॥

---

॥ त्रयोदशोऽध्यायः ॥

अथ नृपप्रासाददुर्गपरिखालक्षणकथनात्मकं त्रयोदशाध्यायमारभते — **प्राकारदुर्गयोरित्यादिना** । पूर्वोक्तभूपालभवनवास्तुसीमनि निर्मितायाः प्राकारभित्तेः परिखायाश्चान्तरालिकभूस्थलं स्वल्पप्रमाणं करणीयमित्युपदेशः । किमर्थम् ? परिखायास्तादृशप्राकारभित्तेश्चात्यन्तं दार्ढ्यापादनाय शोभायै चेति । किञ्च मतान्तरमत्र नोक्तमिति विवेकः ॥

अपि च तादृशान्तरालिकस्थलं तु वैशाल्ये चतुःपञ्चषदण्डकप्रमाणवत् , तादृशपरिखास्वरूपानुगुणशालाकल्पनेन युतं वा तेन रहितं वा स्थापनीयम् । 'शालया सहितं वापि रहितं वा' इति विकल्पस्तु भूपालेच्छाधीन इति केचित् । तच्चिन्त्यम् ॥

वयन्तु चतुर्मुखपूर्वमुखादिग्रामपरिखानिर्माणे तादृशी शाला कल्पनीयेति न नियमः । पद्मकादिनगरपरिखानिर्माणस्थलेऽवश्यं कल्प्येत्येवम् । किं अर्थंकल्पनं तत्र ? वचनस्वारस्यद्योतकमिति । विषयस्यास्य नन्दिवास्तुकाश्यपादिग्रन्थेष्वङ्गीकृतत्वाच्चेति वयं न प्रमादनिर्भराः ॥

परितः परिखाऽगाधा कर्तव्या नृपमन्दिरम् ।
चतुर्दण्डाद्यायतिस्तु दशदण्डाधिका मता ॥ २ ॥
निम्नं तद्द्विगुणं प्रोक्तं पक्षयोर्भित्तिका दृढा ।

---

किञ्च नृपप्रासादसमीपस्थितस्यास्य दुर्गस्यायतिस्तु भूपदण्डचतुष्कप्रमाणमारभ्य दशदण्डावधिका कीर्तिता । क्वचिद्राजधानीयुद्धदुर्गादिस्थलेषु दशनृपदण्डाधिकायामकल्पनमप्यभ्युपगतमेवेति समयः । तच्च विंशतिदण्डावसानकमिति मतिः । सर्वथा सर्वेष्वपि वास्तुदुर्गेषु परिखाया यावन्मानं वैशाल्यं क्रियते तन्मानद्विगुणितप्रमाणं निम्नत्वं परिखायाः करणीयमिति नियमः ॥

तत्रापि क्वचित्तन्मानद्विगुणितभागाष्टकं भागसप्तकं वा भागषट्कं वा भागपञ्चकं तालमित्येवमर्थश्चैतच्छास्त्रानन्तर्यवचनवैखर्या प्रतिभातीति शिल्पविदः । तर्हि प्रोक्तं करणीयमिति नियमवाक्यभङ्ग इति चेन्न । प्रायशः क्वाचित्कत्वादिति स्वरसार्थपरामर्शनशीलाः । कथं वा तद्भूमिलंबनविषयद्वाराऽधिष्ठानविषयादिवत् इत्यलम् ॥

किञ्च तादृशागाधपरिखाया अनिम्नभागे जलाधारतलपार्श्वयोरतिदृढं भित्तिद्वयं कल्पनीयम् । तादृशभित्तिकल्पनेऽपि क्रमेणोपर्युपरि किञ्चिद्वैशाल्यवत्पार्श्वस्थमृदादिनिरोधनचणदार्ढ्यवद्रन्ध्रत्वभिन्नत्वादिदोषहीनञ्च कल्पयेत् । तत्राप्यष्टसु वा दिशासु

वार्स्थलेन समोपेतं प्रतोल्या वा विशेषतः ॥ ३ ॥
तत्प्रान्ते वा तदन्ते वा दिक्कोणादिषु मध्यमे ।
नलीकस्थानकं कल्प्यं यन्त्रिकावेदिकायुतम् ॥ ४ ॥
मुखमेकं प्रकर्तव्यमथवा द्विगुणं मतम् ।
परिखातरणप्राका दुर्गसेतुरितीरिता ॥ ५ ॥

---

आहोस्वित् एकत्र वा स्थले स्थलद्वये वा नृपप्रासादादिसौधतलाद्गलाहकावलीवर्षितजलादिसकलजलनिर्गमस्थानाख्यक्षुद्रकुल्यास्थानं कृत्वा, तच्च तादृशपरिखागामि कल्पयेत् । इदन्तु लक्षणं सर्वविधवास्तुदुर्गपरिखासु योजनीयमिति विवेकः ॥

'प्रतोल्या वा विशेषतः' इत्युक्तेन मूलवाक्येन प्रतोल्याख्या महाकुल्या नगरवास्तुजलादिनिर्गमनार्हा कल्प्येत्युच्यते । तादृशी तु प्रतोलिकाख्या महाकुल्या वैजयन्तनगरादिषु स्थाप्येत्यर्थः । राजधान्यां विशेषत इति ॥

किञ्च तत्र परिखाभित्तौ दुर्गतलोपरि स्थितासु प्राकारादिभित्तिषु दिशास्वष्टसु वैरिसेनानिराकरणहेतुभूतं नलिकाद्यायुधस्थापनस्थलं बहुविधयन्त्रकोपेतवेदिभाक् च स्थापनीयम् । किञ्चैतादृशलक्षणान्वितस्य दुर्गस्य पूर्वप्रतिपादितनगरलक्षणोक्तरीत्या एकमुखद्वारान्वितमथवा द्विमुखं वा द्विमुखाधिकद्वारान्वितं गमनागमनार्हस्थलं स्थापयित्वा तादृशद्वारस्य पूर्वभूमेश्च दुर्ग-

रथादिगमनार्थञ्च द्वारं कुर्याद्विचक्षणः ।
दृढालम्बनसंयुक्तं गोपुराद्यन्वितं तु वा ॥ ६ ॥
कवाटद्वयसंयुक्तगोपुरद्वयभासुरम् ।
तोरणालङ्कृतं पूर्ववलिकावलिभासुरम् ॥ ७ ॥
तदन्तर्दुर्गवीथ्येका कल्पनीया सशालका ।

---

तरणसेतुमार्गनामकप्राकाराख्यं स्थलमतिदृढं कारयेत् ॥ ५ ॥

कीदृशलक्षणान्वितमिति चेत् — पक्षयोरुभयोरपि हस्तभित्तिसहितं रथगजादिगमनागमनार्हवैशाल्योपेतं, मुखचतुष्ककल्पनाविशेषेषु सिह्मवक्त्रेण वा गजवक्त्रेण याळिमुखेन वा पङ्कजादिभिर्लतादिभिश्चालङ्कृतं शृङ्खलासहितं सगोपुरं क्षुद्रमुखद्वारयुक्तं वा तादृशमुखद्वारहीनं वा स्थापयेदिति भावः ॥

किञ्च देशान्तरागतमहामार्गमिलितं तादृशपरिखासेतुमार्गं तीर्त्वा दुर्गान्तःप्रवेशस्थले दुर्गपरिखाप्राकारभित्त्युपेतं दुर्गमुखद्वारञ्च दृढमभेद्यं स्थापयेदित्युपदेशः । तच्च द्वारं रथादिगमनयोग्यवैशाल्यौन्नत्यादिनोपेतं दृढभूमिलम्बनपूर्वकस्थापिताधिष्ठानोपरि कल्पितगोपुरेण विलसद्दृढार्गलसहितद्विद्विकवाटयुतबहुद्वारस्थलोपेतं तोरणाख्यशिलापट्टिकाद्यलङ्क्रियालङ्कृतं पूर्ववलिकाख्यमुखद्वारसव्यापसव्यभागयोर्दिग्भद्रचतुष्केऽपि क्रियमाणशिलावर्तनसहितं योधाद्यायुधरक्षास्थलरक्षितञ्च स्थापयेत् ॥ ७ ॥

तत्रैव निलयः स्थाप्यो योधादीनां नृपालये ॥ ८ ॥

वराकनेन सहिता कूपकल्पनभाक्तथा ।
उत्तुङ्गभित्तिसंवीतवास्तुसीमकवारयुक् ॥ ९ ॥

पञ्जरावलिसंयुक्तमुपभित्त्यादिभाक्तथा ।

---

किञ्चैतादृशलक्षणान्वितदुर्गद्वारस्यान्तर्भागे पूर्वोक्तशैल्या जनवासार्हशालोपेता दुर्गवीथ्येका स्थाप्या । किञ्च दुर्गभित्तेश्च बहिःस्थले सर्वतश्चतुःपञ्चषदण्डप्रमाणकान्तरालिकभागे योधनिवेशनार्हशालाञ्च प्रकल्पयेत् । तत्रापि विशेषतो मुखद्वारसमीप इति भावः । तत्रैव बहुविधरक्षेति केचित् ॥

किञ्चैतादृशलक्षणान्वितद्वाराधिष्ठानोपेतेषु विंशतिकरमानमारभ्य द्वात्रिंशत्करमानाधिकेनौन्नत्येनोपेतासु दुर्गभित्तिषु तत्समीपवर्तिषु वा प्राकारभित्तिषु दिशास्वष्टसु समुचिते स्थले समयनिवेदकघण्टावादनस्थलं शोभादार्ढ्यादये क्रियमाणदशाधिककूपाख्यकल्पनस्थलं भित्तिवारकाख्यं भित्तेरुपरि पदे पदे मुखकरणरीत्या कल्पितक्षुद्रमुखकरणाख्येन कल्पनेन सहस्राधिकेन सहितं स्थलं च विविधनिर्माणजालेषु स्थापयेदित्यर्थः ॥

किञ्च तादृशक्षुद्रमुखकरणन्तु वर्तुलाकारं चापाकारं चतुरश्राकारं त्रिकोणाकारं भुजङ्गगमनाकारमित्यादिबहुविधरूपं सर्वत्रापि पारावतपञ्जरमनोहरं निर्माणं शिलया वा इष्टिकया

कारयेन्मतिमाञ्छिल्पी दुर्गभूपालवास्तुषु ॥ १० ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे
नृपप्रासाददुर्गपरिखाकथनं नाम
**त्रयोदशोऽध्यायः ॥**

---

कार्यमिति च शिल्पसमयः । किञ्च दुर्गप्राकारभित्तेः परिखाभित्तेश्चातिदार्ढ्यापादनायोपकुड्यनिर्माणमवश्यं करणीयमिति चोपदेशः ॥

किञ्चैतादृशोपकुड्यस्थापनं दुर्गभित्तेरुपरि पदे पदे कल्पनीयक्षुद्रमुखकरणञ्च सर्वेष्वपि दुर्गेषु कल्पनीयमिति भावः । इत्येवं नृपदुर्गादिसकलविधनगरदुर्गाणामपि सङ्क्षेपतो लक्षणमुक्तं ज्ञेयम् । किञ्चात्र दुर्गकरणे करणीयलक्षणान्तराणि तु शिल्पकल्पनादिकल्पनाकुशलैस्स्वयमेवोह्य यथाक्रमं स्थापनीयानीति क्रमः ॥ १० ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
**नृपप्रासाददुर्गपरिखाकथनं नाम**
त्रयोदशोऽध्यायः ॥



अथ भवनलक्षणनिरूपणं नाम

## [1] चतुर्दशोऽध्यायः ॥

भवनं तत्समाख्यातं भूपावासस्थलान्वितम् ।
चतुरश्रप्रमाणेन कल्पनेन समुज्ज्वलम् ॥ १ ॥

तदेव मालिकोपेतं सनिशान्तं विशेषतः ।
दीर्घकल्पनसंयुक्तं नानालिन्दमनोहरम् ॥ २ ॥

नानाभौमसमोपेतं नानाशालासमुज्ज्वलम् ।
विमानरचनायुक्तं बहिरान्धारिकान्वितम् ॥ ३ ॥

समन्ताद्भित्तिसंयुक्तं महाशालासमायुतम् ।
चतुरश्रैरायतैर्वा कल्पनैरपि शोभितम् ॥ ४ ॥

चूलीहर्म्यसमोपेतं मध्यालिन्दसमुज्ज्वलम् ।
कूटकोष्ठसमायुक्तं पक्षिभित्त्यादिभासुरम् ॥ ५ ॥

पञ्चभिर्दशभिर्दण्डैः कल्पनैश्च समन्वितम् ।
हर्म्यमेतदपि प्रोक्तं शिल्पज्ञैर्मुनिपुङ्गवैः ॥ ६ ॥

भूपदण्डद्वादशकमानहीनं तु नोत्तमम् ।
शताधिकं तु देवानां नेष्यते मानवे गृहे ॥ ७ ॥

तस्मात्सर्वत्र शिल्पज्ञः खण्डहर्म्ययुतं तु वा ।
शुद्धं वा मिश्रितं वापि कल्पयेत्कल्पनाक्रमात् ॥ ८ ॥

---

1. अस्मिन्नध्याये मातृकायां श्लोकाः पौर्वापर्यव्यत्यासभाजः दृश्यन्ते । व्याख्या तु प्रसक्तानुप्रसक्त्या लिखिता । तस्मात् मूलं च व्याख्या च प्रत्येकं द्रितम् ।

मध्ये वार्स्थलसंयुक्तं क्वचित्तेन विहीनकम् ।
द्वारोपद्वारसंयुक्तमेकादितलभासुरम् ॥ ९ ॥

वास्तुवेदी रङ्गवेदी देववेदीति सा त्रिधा ।
तदादिमानं कथितं दिङ्मानमपि सिद्धये ॥ १० ॥

वास्तुवेदी स्थले शाला महती सा प्रकीर्तिता ।
षडादिदशदण्डान्तं मानमस्याः प्रकीर्तितम् ॥ ११ ॥

पश्चाद्भागे पुरोभागे तदर्धा वा तदर्धका ।
क्षुद्रशालाथवा गेहं द्वाश्चतुष्कसमन्वितम् ॥ १२ ॥

सव्यापसव्ययोरेवं कल्पनं स्थापयेत्क्रमात् ।
भित्तिशालासमायुक्तं ससोपानाधिपीठकम् ॥ १३ ॥

भवने यत्समाख्यातं मानं तदधिकैर्युतम् ।
तन्मानोपेतमथवा मध्यशालाप्रकल्पनम् ॥ १४ ॥

चतुर्दिक्स्थचतुष्कूटं तन्मध्ये वार्स्थलान्वितम् ।
मध्यशालाप्रमाणेन मानं दैर्घ्यादिकं भवेत् ॥ १५ ॥

चतुर्दण्डायतिश्शस्ता तद्दैर्घ्यं भानुदण्डकम् ।
एकादिपञ्चदण्डान्तं वार्स्थलं तत्र कल्पयेत् ॥ १६ ॥

चतुष्कोणचतुश्शालां तालवारादिमेलनम् ।
मध्यशाला प्रस्तरान्ता द्वितलादिरिहोच्यते ॥ १७ ॥

वार्स्थलेन विहीनाश्चेत्तत्सीमान्तं हि कल्पनम् ।
द्वारमेलनमेवोक्तमिह सर्वत्र दैर्घ्यके ॥ १८ ॥

भित्तिशालासमायुक्तमेकद्वित्रिचतुस्तलम् ।
वातायनशतोपेतं चन्द्रशालासमन्वितम् ॥ १९ ॥

प्रासादनिर्माणयुतं सर्वर्तुसुखदं मतम् ।
हर्म्यमानाधिकोपेतं चतुर्दिग्भद्रसंयुतम् ॥ २० ॥

पूर्वशालाकलायुक्तं भित्तिशालाश्रितं तु वा ।
द्विपक्षं वा चतुःपक्षं द्विशालं वा त्रिशालकम् ॥ २१ ॥

चतुष्कोणे चतुर्दिक्षु शाला वा कूट एव वा ।
मुखीकरणवैखर्या दृढाभित्तिसमन्वितम् ॥ २२ ॥

जन्माधिष्ठानसंयुक्तमुत्तुङ्गांघ्रिकशालकम् ।
चतुर्मुखं पञ्चमुखं षण्मुखं सप्तवक्त्रकम् ॥ २३ ॥

मुखीकरणमेवोक्तं भेदशालासमन्वितम् ।
भद्राकारं भद्ररूपं भद्रहीनमथापि वा ।
कल्पनं कल्पयेच्छिल्पी युक्त्या मानादिना दृढम् ॥२४॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे
भवनलक्षणनिरूपणं नाम
चतुर्दशोऽध्यायः ॥



## चतुर्दशोऽध्यायः ॥

अथ भवनलक्षणकथनात्मकं चतुर्दशाध्यायं विशिनष्टि — **भवनं तदित्यादिना** । अस्मिन्नध्याये प्रतिपादिताः श्लोकाः क्वचित्पौर्वापर्यव्यत्यासभाजो दृश्यन्ते । तत्र हेतुर्मातृकालेखकप्रमादः, आहोस्विद्ग्रन्थकर्तुर्विश्वकर्मणः पठनशैली वा । तथापि सर्वस्फूर्तये पङ्क्त्यर्थो लिख्यते । यथा — अस्मिन्नध्याये प्रथमतो भवनलक्षणं, तदनु तदपेक्षया किञ्चित्कल्पनाविच्छित्तिविशेषशालिनो हर्म्यस्य लक्षणं, पश्चात्तदपेक्षया किञ्चित्कल्पनाविच्छित्तिविशेषशालिनः प्रासादस्य लक्षणञ्च प्रसक्तानुप्रसक्त्या प्रतिपादितं ज्ञेयम । तत्र प्राथमिकस्य भवनस्य लक्षणमाह — **भवनमिति** । परिखया प्राकारेण वा संवृते स्थले समुचिते चतुरश्रकल्पनेन निर्मितमेकसौधयुतं भवनमिति संक्षेपतो भवनलक्षणमुक्तं बोध्यम् । 'भूपदण्डद्वादशकमानहीनं तु नोत्तमम्' इत्युक्तत्वात् , अत्र भवनादिकल्पने कल्पनप्रमाणं तावत् भूपदण्डद्वादशकवैशाल्यवत्तथा दैर्ध्ये च भूपदण्डद्वादशकप्रमाणवदेव निर्दिष्टम् ॥

किञ्च तादृशकल्पनस्य मध्यभागो वास्तुवेदीति व्यवह्रियते । किमर्थम् ? तान्तु वेदीं शङ्कुस्थानवन्मुख्यप्रमाणत्वेन स्वीकृत्य तदादि चतुर्दिक्षु मानादि निर्णेतुमिति । एवं सकलविधभवनेषु हर्म्येषु प्रासादेषु, अन्येष्वपि मानवसदनेषूत्तमेषु तादृशवास्तुवेदीस्थापनं तदादिप्रमाणकल्पनमप्यवश्यं ज्ञेयं शिल्पादरैः ॥

एतादृशवास्तुवेदीस्थापनादि न मानवे क्षुद्रगेहे युज्यते। तत्र तादृशकल्पनाभावादिति केचित्। तन्मास्तु। तादृशवास्तुवेदीस्थाने चत्वरं वार्यातपादिपतनयोग्यं निर्माय तदादि मानगणनं कृत्वा सर्वतस्समुचितानि शालागृहादीनि निर्मापणीयानीत्यन्ये। वयन्तु सर्वथा साधारणदण्डद्वादशकप्रमाणहीनस्थले नेदं वास्तुवेदीस्थापनादीति ब्रूमः। तस्मादस्मिन्भवननिर्माणे तादृशवास्तुवेदीस्थाने महती शाला कार्या। तादृशशालाया वैशाल्यं भूपदण्डपञ्चकादिद्वादशान्तं कथितम्। दैर्घ्ये चैवं निर्दिष्टम्॥

कथं नु खलु शक्यमेतादृशवैशाल्यादियुतां शालामिमां कर्तुम्? युज्यत एव। कथं वा? दृढेष्टिकासुधादिभिर्मुखीकरणादिना। (मुखीकरणं=கமான்)। अस्या मुखीकरणवैखर्या विशदार्थस्तु — दारुस्तम्भादिस्थापनानर्हे स्थलेऽतिविशाले एकदण्डावधि निम्नं यथा तथा भूमिलम्बं विधाय (भूमिलम्बं = கடைகால்) तदुपरि क्षुद्राधिष्ठानमिष्टिकादिभिर्विरचय्य इष्टिकास्तम्भान्स्थापयेत्। तथा क्रमशस्तत्र तत्र स्थलानुगुणं स्थापितानामिष्टिकास्तम्भानामान्तरालिकस्थलं त्वेकादिसप्तदण्डावधिकेन वा तदधिकप्रमाणेन वा साधारणकेन मानेनोपेतं स्थाप्यम्॥

किञ्च तादृशस्तम्भान्तरालिकस्थलवैशाल्यानुगुणं स्तम्भानामौन्नत्यञ्च द्वादशहस्तप्रमाणादि स्थापयेत्। तदनु तादृशस्तम्भानां शिरोभागे निर्माणादिदार्ढ्यार्थं सुधेष्टिकाभिः क्वचिदयः-

कीलसहितैश्च परस्परस्तम्भनिर्माणोपरितनसम्मेलनात्मकं मुखी-करणं युक्त्या दृढं शिल्पी कल्पयेदित्यर्थः । एवमेतादृशमुखीकरणे एकमुखादि बहुविधं तत्रावधार्यम्। तादृशमुखीकरणोपरितले निर्माण-पटलात्मकं क्रमशो दार्ढ्यान्वितं विरचय्य तदुपरि एकादि-सौधतलनिर्माणं कार्यमित्यादिक्रमस्तु अस्मत्कृत **शिल्पकला-दीपिकाव्याख्यायां** विस्तरशः प्रतिपादितः । तच्च तत्रैव द्रष्टव्यमिति ॥

किञ्चैतावता प्रबन्धेन भवनाख्यस्य सदनोत्तमस्य मध्य-निर्माणस्थलन्तु भूपदण्डपञ्चकवैशाल्यवद्वा भूपदण्डषट्कवैशाल्य-वद्वाऽथवा तदधिकेन द्वादशदण्डावधिकप्रमाणेन युतं वा यथा-विभवं यथारुचि स्थापयित्वा चतुरश्रस्वरूपस्य तादृशमध्य-निर्माणस्थलस्य प्राच्यादिषु चतसृषु दिक्षु द्वारस्थापनं कार्यम् । अथवा प्राच्यां वारुण्याञ्च दिशि द्वारस्थापनमिति । आहोस्वि-द्वारुणीं दिशां विना दिक्स्थानत्रयेऽपीत्येवं तत्र द्वारस्थापनक्रमो ज्ञेयः ॥

किञ्चैवं तत्र द्वारस्थापनरीत्या तादृशद्वारभित्तिमिलिता-मेकादिदण्डत्रयविपुलां तालवाराख्यामुपशालां (तालवारा தாழ்வாரம்) पूर्वोक्तमध्यनिर्माणस्थलं परितः परीतां स्थापयेत । किञ्च तादृशमध्यनिर्माणस्थले कोणेषु चतुर्षु क्वचिन्मध्ये वा क्षुद्रगृहं(அறை)च निर्माय, तादृशक्षुद्रगेहेषु शयनभोजनासनादि-

कल्पनस्थानञ्च प्रकल्पयेदित्यर्थः । किञ्च पूर्वोक्तताहृशमध्य-निर्माणन्तु सुहृदादिसम्भेलनसञ्ज्ञापनार्हं अथवा तत्र स्थले वैवाहिकादिशालां वा प्रकल्प्य तथा व्यवहरेदिति च शिल्पविदां समयः । किञ्चैकेन सौधतलेनोपेतनिर्माणस्यैव भवनमिति नाम विदुः । इति संक्षेपेण प्राथमिकस्य भवनस्य निर्माणलक्षणमुक्तं भवति ॥

अथ द्वितीयस्य हर्म्याख्यस्य सदनविशेषस्य लक्षणानि यथा — भवनाख्यस्य सदनोत्तमस्य वास्तुवेदिस्थानाख्यमध्यमभागे या शाला यावत्प्रमाणोपेता कथिता तन्मानयुता वा तदधिक-मानयुता वाऽस्य हर्म्यस्य शाला कल्प्या । तत्र च 'षडादि-दशदण्डान्तं मानमस्याः प्रकीर्तितम्' इत्युक्तत्वादस्मिन्हर्म्ये कल्प्यमानशालायाः उत्तरत्र प्रतिपादयिष्यमाणप्रासादेषु कल्प्यमान-शालायाश्च वैशाल्ये दैर्घ्ये च भूपदण्डषट्कप्रभृतिद्वादशदण्डावधिकं प्रमाणं कथितमिति भावः । अस्या एव मध्यशालेति व्यवहारः ॥

किञ्चैताहृशमध्यशालां सालङ्कारां कृत्वा भौमत्रयमारभ्य भौमपञ्चकावधिकं कल्पनं विशेषतः पूर्वोक्तरीत्याऽऽपदेवभागेऽन्तः-पुरयुतं तत्र तत्र शालानां मध्ये द्वारसमीपनानालिन्दवेदिकासंयुक्तं तद्बहिर्नानाङ्गणयुतं, तद्बहिः कल्याणशालादिनानाशालासमन्वितं प्रतिभौमतलं मौलिभागे च भित्तिप्रान्ते च विमानकलशरचनोपेतं तत्र तत्रान्धारिकाख्यभारवाहिदण्डसहितं प्रतिशालं परितः

आहोस्विदुभयोः पक्षयोर्दृढभित्तियुतं कूटकोष्ठादियुतपक्षभित्त्यादिमिळितं तत्र तत्र युक्त्या वार्स्थलेपेतं च कृतं यदि तत्कल्पनं नाम्ना हर्म्यमित्युच्यत इति ॥

इत्थंप्रकारेण पूर्वोक्तरीत्या वैशाल्यायामादियुतां महतीं मध्यशालां निर्मापयित्वा पश्चाद्भागयोरथवा पुरोभागे भागत्रये वा पश्चाद्भागं विनाऽऽहोस्विद्भागचतुष्केऽपि वा तादृशमध्यशालाप्रमाणादर्धमानेनोपेतां वा तदर्धमानेनोपेतां वा स्तम्भचतुष्कादिलसितामुपशालाख्यां शालाञ्च स्थापयित्वा तत्र तत्र प्रतिभागं द्वारेणैकेन लसितमथवा द्वारद्वयोपेतं द्वारचतुष्कोपेतं वा तादृशशालानां संमेलनस्थलं सपार्श्वभित्तिकल्पनं वा कृत्वा मध्ये मध्ये मेघजलातपादिपतनयोग्यचत्वरयुतं खण्डहर्म्यञ्च पूर्वोक्तवास्तुभागस्थले यदि कल्पितं तत्कल्पनं नृपादिमहापुरुषवासयोग्यं प्रासादकल्पननामभाग्भवतीति ॥

किञ्चात्र प्रासादनिर्माणे तादृशचत्वरादिवार्स्थलं तु भूपदण्डचतुष्कायतिकं द्वादशदण्डदैर्ध्यवत एकादिपञ्चदशदण्डान्तप्रमाणञ्च कल्पयेत् । किञ्च तादृशकल्पनानुगुणमेवोपरितनद्वितीयतृतीयादिभौमस्थापनरचनायुतञ्च स्थापयेत् । किञ्चात्र प्रासादकल्पने ईशानादिचतुर्दिक्कोणेषु मध्यनिर्माणसहितं वा पृथग्वा क्षुद्रशालाचतुष्कं कार्यम् । किमर्थम्? तत्रैव खलु आगन्तुकसुहृदादिविचारणास्थलं वस्त्रभूषणादिनिक्षेपणस्थानं, कन्दुकादिक्रीडा-

सामग्रीस्थापनस्थलमित्यादि बहुविधसमयेषु उपकारकं स्थलमनेकासनस्थलभासुरञ्च कार्यमिति भावः ॥

किञ्चायमेव प्रासादः क्षुद्रकायो वास्थलहीनो यदि स्थापितस्तदा तादृशोपशालाकोणशालालिन्दशालादिसकलनिर्माणभागानामपि पूर्वोक्तशैल्या भूपदण्डद्वादशकप्रमाणसहितत्वं ज्ञेयम् ॥

अयं खण्डहर्म्यविहीनः क्षुद्रप्रासाद इति यावत् । एवं क्षुद्रप्रासादकरणे प्रासादान्तर्गतं प्रतिगृहकल्पनं द्वारोपद्वारयुतं भित्तिशालानेकवातायनादिसहितं वातादिप्रसरणयोग्यं ग्रीष्मवर्षादिषु सर्वेष्वपि समयेषु तदन्तर्वासिनां सुखदायिविविधकल्पनरचनोपेतं युक्त्या शिल्पी कल्पयेदित्यर्थः । किञ्च प्रथमोदितमहाप्रासादकल्पनेषु शालाषोडशकं जन्माधिष्ठानसोपानदृढद्वारादिभूषितं भद्रकल्पनयुतं वा तद्रहितं वा सर्वत्र मुखीकरणकल्पनोपेतं रचयेदित्यर्थः । कल्पनाक्रमप्रतिपादनं सूक्ष्मदृष्ट्या ज्ञेयमिति समष्टिवाचकार्थो बोध्यः ॥

किञ्चैवं परिपाट्याऽत्र प्रतिपादितभवनहर्म्यप्रासादाख्योत्तमकल्पनेषु मुखीकरणशालास्थापनालिन्दकल्पनाधिष्ठानसोपानादिरचनाक्रमलक्षणवाक्यविशदार्थस्तु तत्र तत्र स्थलान्तरे शिल्पकलादीपिकादिग्रन्थान्तरेषु च द्रष्टव्य इति ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
**भवनादिलक्षणनिरूपणं नाम**
**चतुर्दशोऽध्यायः ॥**



अथ पूर्वभवनलक्षणनिरूपणं नाम

## पञ्चदशोऽध्यायः ॥

प्रासादानाञ्च हर्म्याणां शालानाञ्च क्वचित्स्थले ।
पुरःप्रकल्पनं पूर्वभवनं परिकीर्तितम् ॥ १ ॥

मण्टपाकृति वा स्थाप्यं शालाकारमथापि वा ।
नानासनसमोपेतं दर्पणादिसमुज्ज्वलम् ॥ २ ॥
संयुक्तं वा वियुक्तं वा बहुचित्रसमन्वितम् ।

---

॥ पञ्चदशोऽध्यायः ॥

अथ पूर्वभवनलक्षणकथनात्मकं पञ्चदशाध्यायमारभते—**प्रासादानामिति**। पूर्वप्रतिपादितानां भवनानां हर्म्याणां प्रासादानां शालादीनां वा पुरोभागे शोभार्थं शिविकादिवाहनादेरारोहावरोहणाद्यर्थं च कल्पितः कल्पनविशेषः पूर्वभवननामभाग्भवतीति प्रसिद्धिः। तादृशपूर्वभवनकल्पनं मण्टपाकारवद्वा, शालाकारवद्वा भूपादियजमानेच्छया नानासनमकरतोरणवितानदीपस्तम्भाद्यलङ्कृतं बहुचित्रयुक्तं प्रधानभवनप्राथमिकमुखद्वारसंमिलितं वा तस्य द्वारस्य किञ्चिद्दूरे पुरोभागे वा वास्तुभूमिस्थलानुगुणं स्थापनीयामिति स्थलनिर्देशक्रमः ॥

किञ्च मण्टपाकारमेतादृशपूर्वभवनं क्वचित्स्थले दुर्गगोपुरपुरोभागे महामण्टपपुरोभागे देवालयगोपुरपुरस्स्थले चान्यत्र

पुष्टिदं याम्यभाग्द्वारं प्रागुदग्भाग्जयप्रदम् ॥ ३ ॥
पश्चिमं धनधान्यादिवर्धकं पूर्ववक्त्रकम् ।
मेधाप्रदञ्च कथितं शास्त्रज्ञैर्मुनिपुङ्गवैः ॥ ४ ॥
क्षुद्राधिष्ठानसंयुक्तं सोपानालिसमन्वितम् ।

---

कल्पनानुगुणं निर्मापणीयामिति ग्रन्थान्तरे दृश्यते वचनम । तत्कल्पनशैलीमानादिकन्तु तत्रैव ज्ञेयमिति प्रकृतमनुसरामः ॥

तस्मात्तत्र तत्र यथासौकर्यं प्राप्तेषु वास्तुस्थलेषु निर्माणादौ विरचितेऽप्यमुं पूर्वभवनाख्यकल्पनाविशेषं शास्त्रोक्तमानोपेतं दक्षिणामुखभाजं कृत्वा तादिदं कल्पनं निर्मितञ्चेत तदा तद्वास्तुवास्तव्यानां शरीरपुष्ट्यादिकं वर्धत इति शास्त्रानुग्रहो बोध्यः ॥

प्राङ्मुखमुदङ्मुखञ्च तत्रत्यं द्वारं विजयप्रदम, पश्चिममुखं धनधान्यादिवर्धकमिति च द्वारकल्पनफलनियमः । किञ्च वास्तुभूमिस्थं सर्वमपि द्वारं यदि प्राचीदिङ्मुखं कृतं तदा च तद्वास्तव्यानां मेधासुखादिवर्धकमिति च शास्त्रविश्वासपरैर्ज्ञेयमिति भावः । तस्माच्छिल्पशास्त्रज्ञैः स्थपत्यादिभिर्निर्दिष्टस्थले द्वारस्थापनादिपूर्वकं पूर्वभवनकल्पनमिदं कार्यमित्युपदेशः ॥ ४ ॥

अत एतादृशपूर्वभवनकल्पनन्तु साधारणैकदण्डप्रमाणौन्नत्यभाजा क्षुद्राधिष्ठानेन युतं पञ्चषसोपानादिभासुरं स्थापनीयम ।

इष्टिकास्तम्भयुक्तं वा दारुस्तम्भयुतं तु वा ॥ ५ ॥
कल्पनं पूर्वभवने स्थाप्यं शिल्पविशारदैः ॥ ६ ॥

अथ पूर्वभवनस्तम्भस्थापनविधिः ॥

सममानं चतुःपादमथवा दीर्घपादकम् ।
वैशाल्यपादकं वापि भद्रकं वाथ कुड्मकम् ॥ ७ ॥
वेदपादक्रमादेवं भवनं कल्पयेद्बुधः ।

---

क्वचिदेतन्मानाधिक्यवचनशैल्यादिकं मतान्तरमत्र नोच्यते । किञ्चेदं पूर्वभवननिर्माणमिष्टिकास्तम्भयुतमथवा पृथुलदारुस्तम्भयुतं निर्मापणीयमिति स्तम्भनिर्मितिभेदश्चोक्तः ॥ ६ ॥

अथैतस्य पूर्वभवनस्य स्तम्भस्थापनक्रमं तत्तद्वास्तुयोग्यं विशिनष्टि—सममानमित्यादिना । तत्राप्यत्र प्राथमिकश्चतुष्पादवर्गक्रममाह—सममानमिति । पादादिचरणवाचकाः स्तम्भार्थद्योतका इति शिल्पसमयः सर्वत्र बोध्यः । तस्मादेतादृशपूर्वभवननिर्माणार्थमादौ तत्स्थाने स्तम्भस्थापनक्रमस्तु शास्त्राधीनः, स्थलाधीनः, इच्छाधीन इति प्रकारत्रयं परम्परया प्रबलप्रमाणवदिति बोध्यम् ॥

प्रतिस्तम्भमायामे वैशाल्ये च सममानमथवा आयामाधिक्यबहुत दैर्घ्याधिक्यवदिति शिल्पकार्यविदां समयः । सर्वविधमपि कल्पनं शोभायै सुखाय च भवेदित्येवंविषयरसवैरपि कार्यशैली-

विद्भिरभ्युपगत एव । अथवा शैल्यात्र प्रतिपादितानां विविधस्थल-स्थापितानां चतुस्तम्भादिषोडशस्तम्भावधिकानां स्थानक्रमोऽत्र लिखितेनोद्धारेण सुलभबोध्यः । यथा —

### १. पूर्वभवने चतुस्तम्भस्थापनक्रमः ॥



२. पूर्वभवने प्रकारान्तरेण चतुःस्तम्भस्थापनक्रमः ॥



३. पूर्वभवने प्रकारान्तरेण चतुःस्तम्भस्थापनक्रमः ॥



पूर्वपश्चिमयोर्द्वारमथ मध्ये द्वियुग्मकम् ॥ ८ ॥

तत्रैव सव्यापसव्योपपन्नपादयुगं तु वा ।
इति षट्पादसंयुक्तभवनं परिकीर्तितम् ॥ ९ ॥

---

इत्थं पूर्वभवनादिषु चतुःस्तम्भस्थापनक्रममभिधायाधुना षट्स्तम्भस्थापनक्रममाह — पूर्वपश्चिमयोरिति । तत्र पूर्वभागे स्तम्भद्वयं स्थापयित्वा तत्पुरतस्तदपेक्षयातिवैशाल्योपेतस्थले स्तम्भचतुष्कं मुखप्रतिमुखस्थितिस्थाप्यमिति अनुलोमक्रमः । एवं प्रतिलोमे पश्चाद्भागे स्तम्भद्वयं स्थापयित्वा तत्पुरतस्तदपेक्षयातिवैशाल्योपेतस्थले स्तम्भचतुष्कं स्थापयेदिति स्थापनद्वयशैल्युक्ता । प्रकारान्तरेण स्तम्भस्थापनक्रमो यथा —

पूर्वोक्तरीत्या स्तम्भचतुष्कं यथास्थलविभक्तं यथाभिरुचि स्थापयित्वा तेषु स्तम्भेषु पूर्वस्तम्भद्वयस्योपपन्नभूतात्मकं स्तम्भद्वयमत्यन्तं पार्श्वे कल्पयेदित्यर्थः ॥

किञ्चात्रापि स्थापनेऽनुलोमप्रतिलोमक्रमौ च बोध्यौ । अतः पूर्वभवने षट्स्तम्भस्थापनप्रकारोद्धारः यथा —

२. पूर्वभवने प्रकारान्तरेण षट्स्तम्भस्थापनक्रमः ॥



सममानं पादमानं दैर्घ्यवैशाल्ययोस्तथा ।
पूर्वपश्चिमसव्यापसव्यभागाश्रितं तु वा ॥ १० ॥

विशालमध्याङ्गणयुग्द्वौ द्वौ दिक्ष्वथवा मतौ ।
महाङ्गणावृतं मध्यभागाङ्गणयुतं तु वा ॥ ११ ॥

तिर्यक्स्थानगताद्विद्विस्तम्भभागान्वितन्तु वा ।
इति नागस्तम्भयुतं भवनं परिकीर्तितम् ॥ १२ ॥

---

एवं पूर्वभवनादिषु स्थापनीयषट्स्तम्भस्थापनक्रममभिधायाधुना तादृशस्थले स्थापनीयस्तम्भाष्टकरचनाक्रममाह— **सममानमिति** । पूर्वोक्तपूर्वभवने दैर्घ्ये वैशाल्ये च परस्परं सममानभागस्थलकल्पितं स्तम्भानामष्टकं पङ्क्तिद्वयेन ज्ञेयमित्यर्थः । तृतीयप्रकारस्तु पूर्वभागे स्तम्भद्वयं, दक्षिणभागे स्तम्भद्वयं, वारुणभागे स्तम्भद्वयं उदग्भागे स्तम्भद्वयञ्च क्रमेण स्थापयित्वा तन्मध्ये महाङ्गणस्थले मुखीकरणादिसंयुतञ्च कारयेदित्यर्थः । चतुर्थप्रकारस्तु ईशानकोणे स्तम्भद्वयमाग्नेयकोणे स्तम्भद्वयं नैर्ऋतभागे स्तम्भद्वयं वायव्यभागे स्तम्भद्वयं च क्रमेण स्थापयित्वा तन्मध्ये चतुरश्रमायतं वा महाङ्गणं मुखीकरणादिसहितं स्थापयेदित्यर्थः ॥

पञ्चमप्रकारस्तु चतुःस्तम्भयुतमध्याङ्गणं कल्पयित्वा तदपेक्षयाधिकमानस्थलस्थापितस्तम्भचतुष्केनावृतं सर्वभवनं स्थापये-

दिति क्रमशैली । षष्ठः प्रकारस्तु ईशानादिचतुष्कोणभागेषु तिर्यग्रूपौ द्वौ द्वौ स्तंभौ निर्मापयित्वा मध्ये महाङ्गणं स्थापयेदिति । पूर्वभवनेषु स्तम्भाष्टकस्थापनक्रमद्योतकोद्धारः यथा ---

१. पूर्वभवने स्तम्भाष्टकस्थापनक्रमः ॥





२. पूर्वभवने प्रकारान्तरेण स्तम्भाष्टकस्थापनक्रमः ॥



३. पूर्वभवने प्रकारान्तरेण स्तम्भाष्टकस्थापनक्रमः ॥



४. पूर्वभवने प्रकारान्तरेण स्तम्भाष्टकस्थापनक्रमः ॥



५. पूर्वभवने प्रकारान्तरेण स्तम्भाष्टकस्थापनक्रमः ॥



६. पूर्वभवने प्रकारान्तरेण स्तम्भाष्टकस्थापनक्रमः ॥



दिशात्रये द्वयं प्रोक्तं मध्ये स्तम्भचतुष्ककम् ।
पार्श्वयोर्वेदपादश्च पुरतो युग्मपादकम् ॥ १३ ॥

पुरतो नागपादश्च पश्चात्पादद्वयं तथा ।
सव्यापसव्ययोर्वेदपादं मण्डलनामकम् ॥ १४ ॥

पुरतो नागपादश्च शिल्पिभिः स्थाप्यमीरितम् ।
अनुलोमादितः स्थाप्यं दिक्स्तम्भभवनं विदुः ॥ १५ ॥

---

इत्थं स्तम्भाष्टकस्थापनक्रममभिधायाधुना पूर्वभवने स्तम्भदशकस्थापनक्रमं व्यनक्ति — दिशात्रय इति । पूर्वप्रतिपादिते पूर्वभवनपुरःस्थले स्तम्भचतुष्कं स्थापयित्वा तद्बहिः प्राच्यां वा प्रतीच्यां वा दिशि स्तम्भस्थापनक्रममपहायावशिष्टे दिशात्रयस्थलेऽपि सममानभूमिस्थौ द्वौ द्वौ स्तम्भौ स्थापयेत् इत्याद्यः पक्षः ॥

द्वितीयतृतीयप्रकारौ तु सव्यभागे स्तम्भचतुष्कमपसव्यभागे च स्तम्भचतुष्कं स्थापयित्वा तत्पुरोभागे च स्तम्भद्वयं स्थापनीयम् । अत्राप्यनुलोमप्रतिलोमरीत्या प्रकारान्तरस्थापनञ्च संभवतीति क्रमार्थो ज्ञेयः ॥

एवं चतुर्थपञ्चमप्रकारौ च ज्ञेयौ । यथा पुरोभागे पङ्क्तिद्वयरीत्या स्तम्भाष्टकं क्रमशः स्थापयित्वा, पश्चाद्भागे मुख्यनिर्माणाख्यमध्यनिर्माणद्वारसमीपे स्तम्भद्वयं स्थापनीयम् । अत्रापि स्थलवैपरीत्यात्प्रकारान्तरस्थापनञ्च ज्ञेयमिति चतुर्थ-

पञ्चमस्थापनक्रमः । किञ्च मण्डलाकारप्रमाणेन, कोणभागप्रमाणेन चापाकारेण च स्तम्भदशककल्पने कल्पिते षष्ठसप्तमाष्टमादिप्रकारा भवन्तीति क्रमार्थः । एतत्सर्वमप्यत्रत्योद्धारमण्डलनिरीक्षणेन सुलभवेद्यमिति क्रमः ॥

पूर्वभवने स्तम्भदशकस्थापनक्रमद्योतकोद्धारो यथा —

## १. A. पूर्वभवने अनुलोमेन स्तम्भदशकस्थापनक्रमः ॥



१. B. पूर्वभवने प्रतिलोमेन स्तम्भदशकस्थापनक्रमः ॥



२. पूर्वभवने प्रकारान्तरेण स्तम्भदशकस्थापनक्रमः ॥



३. पूर्वभवने प्रकारान्तरेण स्तम्भदशकस्थापनक्रमः ॥



४. पूर्वभवने प्रकारान्तरेण स्तम्भदशकस्थापनक्रमः ॥



५. पूर्वभवने प्रकारान्तरेण स्तम्भदशकस्थापनक्रमः ॥



६. पूर्वभवने प्रकारान्तरेण स्तम्भदशकस्थापनक्रमः ॥



७ पूर्वभवने प्रकारान्तरेण स्तम्भदशकस्थापनक्रमः ॥



८. पूर्वभवने चापाकारेण स्तम्भदशकस्थापनक्रमः ॥



पूर्वपश्चिमयोर्भागपादं पार्श्वे द्वयन्तथा ।
अथवा पक्षयोरष्ट प्राच्यां वेदपदन्तु वा ॥ १६ ॥
मध्ये वेदपदं पूर्वप्रत्यग्भागे दिगङ्घ्रिकम् ।
अनुलोमेन युक्त्या च विविधस्थानभाक्पदम् ॥ १७ ॥

---

अथ पूर्वभवनादिमेषु निर्माणेषु स्थापनीयस्तम्भद्वादशककल्पनरचनाक्रममाह — **पूर्वपश्चिमयोरिति** । सव्यापसव्ययोर्भागयोः पङ्क्तिद्वयरीत्या स्तम्भाष्टकं सममानं स्थापयित्वोभयोरपि पक्षयोस्तद्बाह्ये स्तम्भद्वयं स्थापनीयमित्याद्यः प्रकारः ॥

द्वितीयप्रकारस्तु — पूर्वोक्तरीत्या सव्यापसव्ययोः स्तम्भाष्टकं स्थापयित्वा मध्यनिर्माणद्वारसमीपस्थं स्तम्भचतुष्टयं स्थापयेदिति तत्क्रमः । अयमेव प्रकारः प्रातिलोम्येन कल्पितश्चेत् तृतीयः प्रकारस्संभवति । चतुर्थप्रकारस्तु मध्यनिर्माणद्वारसमीपे पङ्क्तिद्वयरीत्या स्तम्भचतुष्कं तत्पुरतश्च तथैव रीत्या स्तम्भचतुष्कम् । एतेषां स्तम्भानामष्टानां मध्ये चतुरश्रमानं स्तम्भचतुष्कं स्थापनीयमिति तत्क्रमो बोध्यः ॥

किञ्च 'अनुलोमेन युक्त्या च विविधस्थानभाक्पदम्' इति शास्त्रकारेण विश्वकर्मणोपदेशः कृतः । तस्मात्पञ्चमादिद्वादशप्रकारा अस्माभिरत्र प्रदर्श्यन्ते । किञ्च लक्षणमिदं तावत्सर्वेष्वपि भवनादिस्थलेषु संयोजनीयमिति भावः ॥

द्वादशस्तम्भसंयुक्तं भवनं ज्ञेयमीरितम् ।

---

तत्र पञ्चमप्रकारो यथा — सममानं चतुरश्रं स्तम्भचतुष्कं स्थापयित्वा तेषाञ्चतसृष्वपि दिक्षु स्तम्भौ द्वौ द्वौ स्थापनीयाविति ॥

षष्ठः प्रकारो यथा — दिक्कोणेषु चतुर्षु विषमरहितं द्वष्ट्यादेर्द्विद्विसंख्याकारकं स्तम्भत्रयस्थापनं कार्यमिति तत्क्रमः । तथा चाहत्य तत्र द्वादशस्तम्भसंख्या भवेदिति भावः ॥

सप्तमः प्रकारो यथा— मध्यनिर्माणद्वारसमीपे पङ्क्तिरीत्या स्तम्भचतुष्कं स्थापयित्वा तत्पुरतः स्तम्भद्वयं पुनरपि तत्पुरतः पङ्क्तिरीत्या स्तम्भचतुष्कं तत्पुरतश्च स्तम्भद्वयं करणीयमिति ॥

अष्टमः प्रकारो यथा— कोणाकारेण मानेन पक्षयोरुभयोरपि स्तम्भाष्टकं निर्माय द्वारसमीपे स्तम्भचतुष्कस्थापनमिति । अस्य प्रातिलोम्येन कल्पने नवमः प्रकारः स्पष्ट एव । दशमः प्रकारस्तु चापाकारेण मानेन पक्षयोरुभयोरपि स्तम्भाष्टकस्थापनं तत्पुरतः स्तम्भचतुष्ककलनमिति च तद्विवेकः ॥

एकादशः प्रकारस्तु पूर्वोक्तद्वारसमीपे पङ्क्तिरीतिद्वयेन स्तम्भाष्टकं तत्पुरतश्चतुरश्रमानं चतुःस्तम्भकल्पनमिति भावः । सर्वत्र पङ्क्तिरीतिस्तावदपसव्यभागस्थाने सव्यभागस्थाने च क्रमशः कल्पितरेखाक्षरादिवत् स्तम्भस्थापनक्रम इति आन्तरालिकी शिल्पव्यवस्था ॥

एवं द्वादशप्रकारस्तु पक्षयोरुभयोरपि स्तम्भाष्टकस्थापनं तन्मध्ये चतुरश्रं स्तम्भचतुष्कस्थापनमिति च। एतेषां क्रमस्तु अत्रत्योद्धारेण स्फुटः। किञ्च प्रायशोऽयमेव स्तम्भस्थापनप्रकारः सर्वेष्वपि निर्माणेषु गुंभनार्हः, न प्रकारान्तरमिति शास्त्रकारस्याशयः। अन्यथा प्रकारान्तरेण स्तम्भस्थापने स्थलान्तरलक्षणेऽतिव्याप्त्यादि-दोषप्रसक्तिरशोभाराहित्यञ्च भवेदित्याशयः कार्यज्ञैश्शिल्पिभि-रवधार्य इत्याचार्याः॥

पूर्वभवने द्वादशस्तम्भस्थापनक्रमद्योतकोद्धारो यथा—

### १. पूर्वभवने स्तम्भद्वादशकस्थापनक्रमः॥



२. पूर्वंभवने प्रकारान्तरेण द्वादशस्तंभस्थापनक्रमः ॥



३. पूर्वभवने प्रकारान्तरेण द्वादशस्तम्भस्थापनक्रमः ॥



४. पूर्वभवने प्रकारान्तरेण द्वादशस्तम्भस्थापनक्रमः॥



९. पूर्वभवने प्रकारान्तरेण द्वादशस्तम्भस्थापनक्रमः ॥



६. पूर्वभवने प्रकारान्तरेण द्वादशस्तम्भस्थापनक्रमः ॥



७. पूर्वभवने प्रकारान्तरेण द्वादशस्तम्भस्थापनक्रमः ॥



८. पूर्वभवने प्रकारान्तरेण स्तम्भद्वादशकस्थापनक्रमः ॥



९. पूर्वभवने प्रकारान्तरेण स्तंभद्वादशकस्थापनक्रमः ॥



१०. पूर्वभवने चापाकारेण स्तंभद्वादशकस्थापनक्रमः ॥



११. पूर्व भवने प्रकारान्तरेण स्तंभद्वादशकंस्थापनक्रमः ॥



१२. पूर्वभवने प्रकारान्तरेण द्वादशस्तंभस्थापनक्रमः ॥



**सममानक्रिया सैव मध्ये वैशाल्यभाक्तथा ।**
**पक्षयोर्भेदपादैश्च युक्तं मध्येऽष्टपादकम् ॥ १८ ॥**
**चतुर्दिक्षु स्तम्भयुग्ममावारे च चतुःपदम् ।**

---

अथ पूर्वभवनादिकल्पनेषु षोडशस्तम्भस्थापनक्रमं व्यनक्ति—**सममानक्रियेति ।** पूर्वोक्ते तावत्पूर्वभवने अष्टविधया शैल्या षोडश स्तम्भाः स्थाप्याः । एषैव शैली नयनानन्दकरी मता, न प्रकारान्तराणीति भावः । तत्राद्यः प्रकारो यथा—पूर्वोक्तमध्यनिर्माणमुख्यद्वारसमीपे चतुरश्रे वा आयते वा कल्पने सममाने सममानस्तम्भपङ्क्तिचतुष्के कल्पिते आद्या शैलीति भावः ॥

द्वितीयः प्रकारो यथा — सैव कल्पना इतरस्तम्भमानापेक्षया मध्यमाङ्गणस्तंभानामतिवैपुल्यं कृत्वा स्थापिता यदि द्वितीया शैली मता ॥

तृतीयः प्रकारो यथा — पक्षयोरुभयोरपि सममानं स्तंभाष्टकं स्थापयित्वा तद्बाह्यद्वये च चतुरश्रं स्तम्भचतुष्कं स्थाप्यमिति तच्छैली ॥

चतुर्थः प्रकारो यथा — प्रथमावरणरीत्या चतुरश्रं स्तंभचतुष्कं तद्वदेव द्वितीयावरणे स्तम्भचतुष्कञ्च स्थापयित्वा पूर्वादिषु चतसृष्वपि दिक्षु यमलौ स्तम्भौ कल्पनीयाविति तदीयक्रमः ॥

कोणाकारवशात्सर्वपादाःषोडश कीर्तिताः ॥ १९ ॥

युग्मद्वयश्चतुर्दिक्षु पङ्क्तिद्वयषडङ्घ्रिकम् ।
पुरतो वेदपादश्च तत्र व्यत्यस्तमानकम् ॥ २० ॥

इत्येवं षोडशस्तम्भभवनं परिकीर्तितम् ।

---

पञ्चमप्रकारे कल्पने ईशानादिकोणभागेषु चतुर्ष्वपि पादानाञ्चतुष्कमुपन्नस्तंभशैल्या कल्पनीयमिति ॥

एवमैन्द्र्यादिचतुर्दिग्भागेषु तत्र तत्र चतुःस्तम्भयुतकल्पन-चतुष्कं स्थापयित्वा मध्ये महाङ्गणसहिते कल्पने कृते तदा षष्ठः प्रकारो व्यक्त इति ॥

सप्तमप्रकारे कल्पने तु षट्स्तम्भोपेतं पङ्क्तिद्वयं निर्मापयित्वा पूर्वभागे वा पश्चाद्भागे वा स्तम्भचतुष्कम ॥

अन्त्योक्तेऽष्टमप्रकारे कल्पने मुख्यद्वारसमीपे स्तम्भद्वयं तत्पुरतः स्तम्भचतुष्कं स्थापयित्वा तत्पुरतः पुनरपि स्तम्भद्वयं तत्पुरतः स्तम्भचतुष्कं च निर्माय पुनरपि पूर्वभागे सममानं वा वैशाल्योपेतं वा स्तम्भचतुष्कं स्थापनीयमित्यादिकः क्रमः उद्धारदर्शनेन युक्त्या ज्ञेय इति भावः ॥

इत्थं प्रतिपादितेन प्रबन्धेनैतादृशलक्षणान्विते पूर्वभवने स्तम्भानां षोडशावधिकमेव प्रमाणमुक्तं; नातः परमिति शिल्प-विदां समयः । स्तम्भषोडशकाधिक्ये तत्तु कल्पनं मण्टपलक्षण-

सर्वत्र मध्यवेद्युक्तं तद्यक्षेशाधिपं विदुः ॥ २१ ॥

न कार्या विषमा संख्या शिल्पकार्यविचक्षणैः ।

---

वदिति शिल्पिनः । अयञ्चापरो भेदो ज्ञेयः । मण्टपलक्षणानि स्तम्भानां वर्तुलत्वचतुरश्रत्वादिलक्षणानि च प्रकरणान्तरे दृश्यानि ॥

किञ्चात्र पूर्वभवनकल्पने एकत्रिपञ्चसप्तनवादिविषमसंख्या स्तंभेषु सर्वथा न कार्या । परन्तूद्धारमण्डलेऽत्र प्रतिपादितरीत्या सूत्ररीत्या निरीक्षणे स्तम्भानां युग्मसंख्यात्वमेव । इदञ्च युग्मसंख्यात्वलक्षणं सर्वेष्वपि देवालयकल्पनेषु मानुषालयकल्पनेषु च संयोजनीयमिति परमज्ञानिनां मुनिपुङ्गवानामुपदेशः श्रेयसे बोध्यः । किञ्चैवंप्रकारेण कल्पितेऽत्र पूर्वभवने पूर्वोक्तस्तम्भानां मध्ये समुचिते स्थले वेद्याख्यं स्थलविशेषं रचयेदित्युपदेशः ॥

केचित्तु नात्र वेदी स्थाप्या । कुतः ? पूर्वोक्तरीत्या शिबिकादिवाहनारोहणादिसौकर्यभङ्गवत्त्वादिति । परं तु मसृणिमभूतले रेखाकारां वेदिं रचयेदिति । अयन्तु पक्षः काचित्क इति वयं मेर्वादिभवनोत्तमेषु भूपालादिमहापुरुषवासयोग्येषु प्रासादादिषु पुरोभागे कल्पितानां पूर्वभवनानां मध्ये समुचिते स्थले इष्टिकासुधादारुखण्डादिभिर्वेद्येव कल्पनीया । सैव तत्सौकर्यादिसंपादिकेति ब्रूमः ॥

दशहस्तादिमानेन तुङ्गोच्छ्रायेण संयुतम् ॥ २२ ॥
शुद्धं वा मिश्रितं वापि मानसूत्रप्रमाणवित् ।
नानाहर्म्यकलोपेतं नानातोरणमण्डितम्
कल्पयेन्मतिमान्पूर्वभवनं मानवे स्थले ॥ २३ ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे

पूर्वभवनलक्षणनिरूपणं नाम

॥ पञ्चदशोऽध्यायः ॥

---

किञ्चैतादृशपूर्वभवनं पाञ्चालादिशैल्या एकया युतं वा शैल्यन्तरेण मिश्रितं वा यथाभिरुचि स्थापयेदिति भावः । किञ्चास्मिन्पूर्वभवने मानसूत्रादिप्रमाणविच्छिल्पकार्यतः स्थपत्यादिर्दशहस्तोत्तुङ्गादिस्तम्भक्रमं पूर्वोक्तरीत्या सक्षुद्राधिष्ठान-सोपानं स्थापयित्वा नानाविधकलाख्यचित्रविशेषरचनाविशेषभासुरं तोरणादिमनोहरं प्रकल्पयेदिति पूर्वभवनलक्षणं सङ्ग्रहेण प्रतिपादितम् । किञ्चेदं पूर्वभवनं मानवसदनेष्वेव स्थाप्यम् । न तु देवालयेष्विति च क्रमो ज्ञेयः ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां

विश्वकर्मवास्तुशास्त्रव्याख्यायां

**पूर्वभवनलक्षणकथनं नाम**

**पञ्चदशोऽध्यायः ॥**

---

१. पूर्वभवने षोडशस्तंभस्थापनक्रमः ॥



२. पूर्वभवने प्राकारान्तरेण षोडशस्तम्भस्थापनक्रमः ॥



३. पूर्वभवने प्राकारान्तरेण षोडशस्तम्भस्थापनक्रमः ॥



४. पूर्वभवने प्रकरान्तरेण षोडशस्तम्भस्थापनक्रमः ॥



८. पूर्वभवने प्रकारान्तरेण षोडशस्तम्भस्थापनक्रमः ॥



६. पूर्वभवने प्रकारान्तरेण षोडशस्तम्भस्थापनक्रमः ॥



## ७. पूर्वभवने प्रकारान्तरेण षोडशस्तम्भस्थापनक्रमः ॥



८. पूर्वभवने प्रकारान्तरेण षोडशस्तम्भस्थापनक्रमः ॥



अथ न्यायशालालक्षणनिरूपणं नाम

## षोडशोऽध्यायः ॥

सार्वभौमादिभूपानां गुणिनां नयचक्षुषाम् ।
आस्थानिकं द्विधा प्रोक्तं न्यायशालासभाक्रमात् ॥
न्यायशालास्थानिकन्तु प्रत्यहं राजपूजितम् ।
धर्मस्थापनकार्येषु साक्षीभूतमहेश्वरा ॥ २ ॥
सभा व्रतदिनास्थानं महिष्यादिभिरर्चिता ।
प्रासादे भवने हर्म्ये परिवारावृताङ्गणे ॥ ३ ॥

---

॥ षोडशोऽध्यायः ॥

अथ न्यायशालालक्षणकथनात्मकं षोडशाध्यायमुपक्रमते—सार्वभौमादिभूपानामिति । पक्षपातराहित्यकामक्रोधादिराहित्ययथोचितदण्डदयालुत्वादिसद्गुणशालिनां बहुविधन्यायशास्त्रज्ञानां सार्वभौमानां सत्क्षत्रियवंश्यानां भूपालानां च निवेशस्थलन्तु न्यायशालासभाभेदेन द्विविधमुक्तं पुराणेषु शिल्पज्ञैः । अस्य विशदार्थस्तु — प्रत्यहं भूपालादिभिर्जगतां श्रेयसे वन्दितं स्थलं न्यायशालाभिधं भवति । सभा तु महिषीपुरोहितकुलगुरुसमेतस्य भूपालस्य जन्मनक्षत्रादिवसन्तोत्सवदिनादिसमयेषु विविधेष्वनुष्ठेयानेकव्रतकरणोचितं स्थलं सभाभिधानमिति क्रमार्थो बोध्यः ॥

शुद्धां वेदीं पीठिकां वा समासाद्य महीपतिः ।
नियम्य च मनः श्रेयोवर्धनं व्रतचारणम् ॥ ४ ॥

न्यायशाला तु कथिता सर्वदेवमयी शुभा ।
सर्वशक्तिमयी सर्वप्राणिनां क्षेमवर्धिनी ॥ ५ ॥

गुणाढ्येन स्थिरधिया भूभर्त्रा नयचक्षुषा ।
सा सेव्या लोकरक्षार्थं सहामात्यपुरोहितैः ॥ ६ ॥

---

किञ्च शुद्धवेद्या समेतं, पीठिकासमेतं वा तच्च व्रतस्थलं प्रासादस्यान्तर्गृहेषु वा भवनस्यान्तर्गृहेषु, अथवा, हर्म्यस्यान्तर्गृहेषु कुलदेवतालयसमीपस्थलेषु वा व्रतोचितसामग्रीस्थापनस्थलतद्विनियोक्तस्थलदानपात्राहूतश्रोत्रियासनस्थानादियुतं कल्प्यमित्यर्थः ॥

किञ्च तादृक्सभानाम्नि व्रतस्थले नियमवद्भिर्महीपालादिभिर्लोकस्य स्वात्मनश्श्रेयसे च पञ्चेन्द्रियनियमनपुरस्सरं विविधव्रताचरणं शास्त्रनिर्दिष्टकाले कार्यमित्यादिलक्षणन्तु व्रतरत्नाकरादिग्रन्थेषु विस्तरशः प्रतिपादितं तत्र द्रष्टव्यमिति भावः ॥

द्वितीयस्य न्यायशालाख्यकल्पनविशेषस्य सर्वदेवमयत्वं, सर्वशक्तिमयत्वं, सर्वजीववर्गक्षेमकरत्वञ्चोपपादितम । किञ्च तादृशन्यायशालाख्योत्तमकल्पने स्थापितं सिंहासनन्तु दयादिगुणशालिभिरचञ्चलधीभिः सत्क्षत्रियकुलजातैरमात्यपुरोहित-

तस्मात्सर्वप्रयत्नेन तां कुर्याल्लक्षणान्विताम् ।
समस्थलां सावयवां सदेवां शिल्पकल्पनैः ॥ ७ ॥
देश्या पौरेति सा न्यायसभा तु द्विविधा मता ।
जन्माधिष्ठानसंयुक्तां चतुर्दिग्द्वारभूषिताम् ॥ ८ ॥
नयवाद्यासनोपेतां सामन्तासनसंयुताम् ।

---

सहितैर्नयविद्भिर्भूभुजादिभिरेव जगतां श्रेयसे समाक्रमणीयम् । त एव भूपालास्तादृशसिंहासनारोहणायार्हा भवन्तीति क्रमः ॥

तस्मात्तान्तु न्यायशालां समस्थलां साङ्गामष्टदिक्पालादिप्रतिकृतिमञ्जुलां शिल्पी यथामानं कल्पयेदित्युपदेशः । सा च न्यायशाला देश्या पौरेति द्विविधा भवति । देशे भवा देश्या । राजधान्यादिपुरेषु कल्प्या पौरेत्यर्थः ॥

तत्राद्याया न्यायशालाया लक्षणमाह — **जन्माधिष्ठानमिति** । जगतीपट्टपद्मदलकम्पवाजनादिरचनासंयुतनिर्मितिरुत्तुङ्गकल्पना अधिष्ठानमित्युच्यते । तल्लक्षणमग्रे वेद्यम् । पुरोभागे गमनागमनयोग्येन पञ्चादिदशावधिकसोपानसंयुतेनाधिष्ठानकल्पनेन सहितां तां न्यायशालां स्थापयेत् ॥

किञ्च पूर्वादिषु चतसृष्वपि दिक्षु चतुर्द्वारकल्पनसमेतां नयवादिनां निवेशार्हासनैर्युक्तां समुचितेषु समयेष्वागमनशीलानां सामन्तभूपालादीनामासनोपेताञ्च कल्पयेदित्यर्थः ।

शालाकारां सभाकारां वर्तुलां चतुरश्रकाम् ॥ ९ ॥

भूपालस्येच्छया वापि राजकार्यानुकूलतः ।

कोशागारयुतां देश्यां कल्पयेच्च सदेवताम् ॥ १० ॥

चक्रवर्तेः पट्टभाजो युवराजस्य भूभुजः ।

नरेन्द्रस्य क्षत्रियस्य महाराजस्य भूपतेः ॥ ११ ॥

सामन्तस्य महीनेतुरासनेन समुज्ज्वलाम् ।

पौरां तु न्यायशालाख्यां मानसूत्रेण कल्पवित् ॥

विभज्य स्थानभेदादीन्स्थापयेल्लक्षणान्विताम् ।

---

किञ्चैतादृशीं तत्तद्देशेषु कल्पनीयां देश्यां न्यायशालां शालाकारनिर्मितिभाजं वा सभाकारनिर्मितिभाजं वा भूपालादिवाञ्छानुगुणं तत्तद्राजकार्यविचारार्होपशालासहितां देशीयकोशागारनिर्माणयुक्ताञ्च कल्पयेदित्यर्थः ॥

तत्र च वर्तुलाकारत्वचतुरश्रत्वादिकल्पनाभेदश्च यजमानाधीन इति भावः । नात्र मतान्तरमाविष्क्रियते ॥ १० ॥

अथान्त्यायाः पौराया न्यायशालाया लक्षणमाह—

चक्रवर्तेरित्यादिना । चक्रवर्तीत्यपरनामधारिणे सार्वभौमाय, पट्टधराय, युवराजाय, नरेन्द्राख्यक्षत्रियाय, महाराजाय, माण्डलिकाय, सामन्तभूपालाय च तादृशीं पौरां न्यायशालां यथाक्रमं स्थापयेदिति तच्छालानिवेशनार्हक्षत्रियजातिभेदः कथितः ।

मध्यशालाप्रमाणन्तु भानुदण्डक्रमीरितम् ॥ १३ ॥

तदर्धं वा तदर्धं वा पूर्वशालाप्रमाणकम् ।

उपशालाभद्रकाख्यैरन्वितं च समन्ततः ॥ १४ ॥

---

किञ्च सार्वभौमादिसामन्तभूपावधिकं परम्परया किञ्चित्किञ्चिदधिनेतृत्वविरुदवाहित्वादिलक्षणभेदेऽपि स्वेषु स्वेषु देशेषु तेषां राज्ञामेतादृशलक्षणान्वितां मुख्यां न्यायशालां कल्पयेदिति शास्त्रकारेणात्र प्रतिपादितम् । किञ्च तत्रापि सार्वभौमस्य न्यायशालायां तु शालान्तरभेदद्योतकस्सशिखरविमानादिकिञ्चिद्विच्छित्तिविशेषसहितः कल्पनादिः कार्य इति । न तु कल्पनशैल्यादिष्वित्याशय आविष्कृतो बोध्यः ॥

किञ्च पट्टधरयुवराजादिभूपालानां न्यायशालायान्तु विमानरचनादि न कार्यमिति च निषेधस्तत्क्रमद्योतक इति समयः । नात्रापि मतान्तरं व्याख्यायते । कुतः ? ग्रन्थविस्तरभयात, अर्थिनां हिताय च । तस्मात्सर्वत्र तादृशन्यायशालायास्समन्तत उपशालां भद्रशालाञ्च यथास्थलविभवं स्थापयित्वा मध्यभागे मध्यशालाख्ये भूपदण्डद्वादशकैश्शाल्ययुतं तदनुकूलायामादियुतञ्च निर्माणं मुखीकरणादिमञ्जुलं निर्मापयित्वा तत्पुरोभागे पूर्वशालाख्यं निर्माणञ्च तदर्धप्रमाणोपेतं, तदर्धप्रमाणोपेतं वा स्थापयेदिति क्रमः ॥ १४ ॥

शालाकारां सभाकारां मण्टपाकृतिमेव वा ।
चतुरश्रां वर्तुलां वा त्रितलादिविराजिताम् ॥ १५ ॥

महाधिष्ठानसंयुक्तां त्रिंशत्सोपानवेदिकाम् ।
देवासनसमोपेतस्तम्भकूटविराजिताम् ॥ १६ ॥

---

किञ्च वर्तुलवास्तुभूमौ, अथवाऽऽयामवास्तुभूमौ चतुरश्रवास्तुभूमौ वा कल्प्यमानाया एतादृशपौरन्यायशालायाः निर्मितिशैली तु उत्तरत्र प्रतिपादयिष्यमाणप्रकारेण शालाकारलक्षणान्वितस्तम्भादिसहिता वा सभालक्षणान्विता वा मण्टपाकृतिसहिता वा स्थाप्या । तत्र च सामन्तादिभूपालन्यायशालायां सोपानदशकसहितक्षुद्राधिष्ठानकल्पनं स्थाप्यम । सार्वभौमन्यायशालायान्तु त्रिंशत्सोपानसहितमहाधिष्ठानकल्पनं तत्रत्यस्तम्भानामाधारपीठापरपर्यायप्रस्तारोपपीठकल्पनं भौमानां त्रयाणां तदुपरि चूलीहर्म्यस्थाने ध्वजपटलसितविमानरचनाञ्च कल्पयेदित्युपदेशः ॥

किञ्च सर्वत्र भूपालनिवेशनार्हस्थले देवासनाख्यादिव्यवेदिकाकल्पनमतितुङ्गं कार्यमित्याशयः । किञ्च तस्यामेव वेदिकायां भूपसिंहासनं स्थाप्यमिति संप्रदायः । तादृशवेदिकायाः पुरोभागे क्रमशः पार्श्वयोरुभयोरपि बहुविधान्यासनानि स्थाप्यानि । किमर्थम् ? राज्यकार्यनिर्वहणहेतवे, समुचितेषु समयेषु आगन्तुकशीलानां सामन्तपरिव्राजकनैष्ठिकयोगिप्रमुखानामन्येषां महा-

विमानरचनोपेतां कुर्याच्छिल्पविशारदः ॥ १७ ॥
ईशानादिचतुष्कोणेष्वष्टपादसमन्वितम् ।
पक्षद्वये षोडशकं चत्वारिंशत्सहाष्टकम् ॥ १८ ॥

---

पुरुषाणां तटस्थानाममात्यसेनेशसभासदादीनाञ्च निवेशायेति मतिः । 'शुद्धं वा मिश्रितं वापि' इति पूर्वभवनलक्षणमत्रापि संयोजनीयमित्यान्तरालिको ध्वनिः ॥

तथा चेमां भूपालन्यायशालां पाश्चात्यादिशैलीषु एकया स्वदेशशैल्या युतां वा शैल्यन्तरेण संयुतां वा कल्पयेदित्याद्यः पक्षः । उत्तमः पक्षस्तु यस्मिन् यस्मिन्देशे यो यो महीपालो विराजते तद्देशीयामेव शैलीं अत्र न्यायसभायामवश्यं स्थापये-दितीदमेव हृदयं, सतां च सम्मतमिति । शिल्पकलादीपिकादि-ग्रन्थान्तरेषु भवनादिनिर्माणप्रकरणे लक्षणान्तरादिकं द्रष्टव्यमिति ॥

इत्थंप्रकारेण भूपालन्यायशालानिर्माणक्रमं सामान्य-लक्षणान्वितमभिधायाधुना मुख्येन प्रकारत्रयेण स्थाप्यमित्यादि व्यनक्ति — **ईशानादीति** । चतुरश्रवास्तुभूमावीशानभागे स्तम्भाष्टकमाग्नेयभागे स्तम्भाष्टकमित्यादिक्रमेण चतुर्दिक्कोणेषु क्रमशो द्वात्रिंशत्स्तम्भपङ्क्तिं स्थापयित्वा तेषां मध्ये समसूत्रप्रमाणं पक्षयोरुभयोरपि मिलित्वा स्तम्भषोडशके च स्थापिते न्यायशाला-कल्पनाविशेषे पूर्वमुखं प्रधानद्वारं कल्पनीयमित्युत्तमः पक्षः ।

चतुःपङ्क्तौ षोडशकं षट्पादं मध्यमाङ्गणम् ।
अङ्गणद्वययुक्तं वा पुरोव्यत्यासभागपि ॥ १९ ॥
द्वात्रिंशत्पादयुक्तं वा मण्डलाकारभाक्तथा ।
चतुर्विंशत्पदोपेतमेवं त्रिविधकल्पनम् ॥ २० ॥
आद्यन्तु चतुरश्राख्यं द्वितीयं दीर्घवास्तुकम् ।
तृतीयं मण्डलं प्रोक्तं त्रितलेन समन्वितम् ॥ २१ ॥
पूर्वभद्रसमायुक्तं मुखतोरणमण्डितम् ।
पूर्वास्यमुत्तरास्यञ्च वारुणास्यं क्रमादिदम् ।

---

इयन्त्वष्टचत्वारिंशत्स्तम्भयुता प्राथमिकी न्यायशालेति भावः ॥

द्वितीयकल्पनाक्रमो यथा — दीर्घवास्तुभूमौ पूर्वोक्तरीत्या चतुर्षु पङ्क्तिक्रमेषु प्रत्येकं स्तम्भचतुष्कं स्थापयित्वा मध्ये षट्स्तम्भयुतमङ्गणद्वयं च स्थापयित्वा, तृतीयचतुर्थपङ्क्त्योर्मध्ये स्तंभद्वये पूर्वभागे सोपानसमीपे स्तम्भद्वये च निर्मिते तस्याः न्यायशालायाः मुख्यद्वारमुत्तराननं कल्पयेदिति तत्क्रमो ज्ञेयः ॥

तृतीयकल्पनाक्रमो यथा — मण्डलाकारवास्तुभूमौ मध्यभागे वारुणदिङ्मुखं द्वारस्थलं स्थापयित्वा सव्यभागे स्तंभषोडशकं अपसव्यभागे स्तम्भषोडशकञ्च कल्पयित्वा मध्ये महाङ्गणे स्तम्भाष्टकयुतमावरणलसितं सवेदि रचयेदिति कल्पनाक्रमः ॥

कारयेच्छिल्पकर्मज्ञः.....................बुधः ॥ २२ ॥

---

एवमत्र न्यायशालायाः कथिता त्रिविधा कल्पना । तथापि सर्वत्र भौमत्रयसहितमुपरिभागं पूर्वभद्राख्यैर्द्वारसमीपे स्तम्भसमीपे च कल्प्यमानैरावर्तपद्मदलकम्पवाजनादिकल्पनैरुपेतं कृत्वा तथा भित्त्युपरिभागे समन्ततस्तोरणाख्यं सुधानिर्मितलतादिचित्रं च रचयेदिति संक्षेपतो लक्षणं प्रतिपादितम् । तस्मादस्माभिरत्र शिल्पिनां हिताय सुखस्फूर्तये लिखितेनानेनोद्धारमण्डलेनैतत्त्रिविधमपि न्यायशालाकल्पनं सर्वैरपि सुलभवेद्यमित्यलं विस्तरेण ॥

किञ्च भित्तिस्थापनाङ्गणकरणप्रस्तरकरणवातायनस्थापनादिरचनान्तराणि तु शिल्पिभिस्स्वयमेवोह्य स्थापनीयानीति ॥

## ॥ न्यायशालाकल्पनोद्धारमण्डलक्रमः ॥

### १. अष्टाचत्वारिंशत् (४८) स्तम्भयुता प्राचीमुखा न्यायशाला ॥

॥ चतुरस्रवास्तुभूमिः ॥



२. द्वात्रिंशत् (३२) स्तम्भयुता उदङ्मुखन्यायशाला

दीर्घाकारवास्तुभूमिः ॥



## ३. चतुर्विंशति (२४) स्तम्भयुता वरुणादिङ्मुखा न्यायशाला

॥ मण्डलाकारवास्तुभूमिः ॥



इत्युद्धारमण्डलक्रमः ॥

अथ सिह्मासनलक्षणम् ॥

सिह्मासनं चक्रवर्तेः क्षत्रियाणां च कीर्तितम् ।
भद्रासनन्तु सामन्तभूपालानां निगद्यते ॥ २३ ॥

कूर्मासनं नैष्ठिकानां यतीनामपि योगिनाम् ।
वीरासनं सैन्यपतेर्भूष्योपरि महीभुजः ॥ २४ ॥

मानासनममात्यानां गुरूणां सुधियामपि ।
विजयासनमीशस्य युवराजस्य कीर्तितम् ॥ २५ ॥

---

एतावता प्रबन्धेन सार्वभौमादिभूपालानां न्यायशालालक्षणमुपपाद्य प्रसक्त्याऽत्र सिह्मासनलक्षणमप्याह — **सिह्मासनमित्यादिना** । सिह्माकृतिना कल्पनेन धारितमासनं सिह्मासनमित्यर्थः । तच्च सिह्मासनं चक्रवर्तेः क्षत्रियाणां तत्कुलप्रसूतानां भूपालनधुरन्धराणामेवाक्रमणस्वाम्यं भवति; न त्वन्यैः क्षत्रियेतरकुलजातैर्भूमिपालननियुक्तैरित्यर्थः ॥

सामन्तभूपालानां भद्रासनमेव स्थाप्यम् । नैष्ठिकानां परिव्राजकाणां नियमवताञ्च कूर्मासनमुक्तम् । सेनापतेर्वीरासनं स्थाप्यम् । तथैव रिपुसेनाविजयसमनन्तरं संप्राप्तविजयलक्ष्मीकस्य भूभुजा मुहूर्तकालं वीरासनं स्थापयित्वा बिरुदावलिस्वस्तिपठनादि कारयेदिति भावः । साचिवानां कुलगुरूणां तत्तच्छास्त्रेषु कलासु वा संप्राप्तनैपुण्यानां विदुषाञ्च नानासनमुक्तम् । वर्धिष्णोः

पर्यङ्कादीन्यासनानि कथितानि सभासदाम् ।
एवं सप्तविधान्याहुरासनानि मनीषिणः ॥ २६ ॥

एकहस्तं द्विहस्तं वा त्रिहस्तमथवा क्वचित् ।

---

युवराजस्य विजयासनं श्रेयस्करमुक्तं भवति । किञ्च राज्ञस्समक्षं तत्तन्न्यायविचारणादिकार्यसाक्षिभूतानां सभासदां क्षुद्रपर्यङ्काख्यमासनं स्थाप्यमित्येवं सप्तविधान्यासनानि मनीषिभिरुक्तानीति भावः ॥

किमर्थमत्रैतेषामासनानां बहुविधानां लक्षणकथनमिति न शङ्कनीयम् । तत्प्रयोजनादिकञ्च स्फुटमेव। कथं वा ? भूपसमक्षं तादृशन्यायशालां प्रति समयेषु समुचितेषु धर्मस्थापनशास्त्रीयलक्षणनिर्माणादिनीतिस्थापनाविवरणप्रजारक्षणरीत्यादिकथनार्थं देशीयतत्वस्थापनाद्यर्थञ्च आगन्तुकानां सामन्तनैष्ठिकपरिव्राजकयतिप्रमुखानां समुचितमासनं दातव्यमिति न्यायात् इति भावः ॥

एवं सकलानामासनानामितरेषां लक्षणानि स्वयमेवोह्य कल्प्यानीति मत्वा तेषु प्रसिद्धस्य सिंहासनस्य लक्षणमात्रमत्र विशदयति — **एकहस्तमित्यादिना** । किञ्च मानसारादिग्रन्थान्तरेषु अर्वाचीनेषु अस्यैव सिंहासनस्य जातिभेदादिलक्षणान्तराणि प्रतिपादितानि तत्रैव दृश्यानि । नात्र ग्रन्थविस्तरभयात्प्रपञ्चितानीति मतिः ॥

चतुष्कूटं चतुर्नेत्रं करपीठसमन्वितम् ॥ २७ ॥

तस्योच्छ्रायप्रमाणन्तु ज्ञेयं शिल्पविचक्षणैः ।

तदर्धाधिकमानादि पञ्चहस्तावधिक्रियम् ॥ २८ ॥

प्रभायाः कल्पनं प्रोक्तं सशिखं मुकुटान्वितम् ।

चन्द्रप्रभं वा शिबिरं मण्डलं वा प्रभाकलम् ॥ २९ ॥

---

किञ्च क्षत्रियवंशोत्पन्नानां भूपालानामारोहणायास्य सिंहासनस्यौन्नत्यं तु एकहस्तप्रमाणमुत हस्तद्वयप्रमाणमथ वा त्रिहस्तमिति तत्तन्निर्मितियोग्यं विविधं मानमुक्तं भवति । किञ्च तस्य सिंहासनस्य पार्श्वयोरुभयोरपि करनिक्षेपस्थानाख्यं फलकाखण्डं कल्पयेत । किञ्च चतुष्कूटाख्यप्रान्तपट्टकल्पनं चतुर्नेत्राख्यं करफलकामुखे रत्नस्थापनञ्च शुभे काले क्रमाद्रचयेदिति भावः ॥

अपि चास्य सिंहासनस्य पश्चाद्भागे फलकाया औन्नत्यन्तु तदर्धाधिकमानेन वा पञ्चहस्तमानेन वा मानितं कल्पयेदित्यर्थः । अस्य विशदार्थस्तु — सिंहासने निवेशनार्हमध्यफलकाया वेदिकातलात औन्नत्यं तावत द्विहस्तप्रमाणयुक्तं कृतं यदि, तदा तादृशपश्चाद्भागफलकायाः त्रिहस्तप्रमाणं कार्यम् । तत्र च मौलिभागस्थानोपरि विविधविचित्रकल्पनानि शोभार्थं कल्पयेदित्यर्थः । एवमेव प्रमाणान्तराणि तत्तन्निर्मितियोग्यानि स्वयमेवोह्य कल्प्यानीति । किञ्च तादृशपश्चाद्भागफलकायाः ऊर्ध्वभागे

क्षुद्रान्धारिकसंयुक्तं बम्बरादिविराजितम् ।
कौशेयास्तीर्णफलकं रत्नप्रत्युप्तपट्टिकम् ॥ ३० ॥

छत्रासनयुतं वापि छत्राकारमथापि वा ।
हेमकिङ्किणिकाजालपरिमण्डितवाजनम् ॥ ३१ ॥

मानविच्छिल्पकार्यज्ञः कल्पयेत्सैह्ममासनम् ।

---

प्रभाकारा वा चन्द्रप्रभाकारा वा मण्डलप्रभाकारा वा मकुटान्विता तन्मध्यभागे शिखरान्विता च स्थाप्या । किञ्च तत्र सिंह्मासने आसनफलकाया अधोभागे उपन्नफलकाभूतान्धारिकां चतसृष्वपि दिक्षु सवंबरफलकाद्वययुतं वा फलकात्रययुतं वा स्थाप्यम् ॥

किञ्च तत्र तत्राधारफलकाया आधारभूतक्षुद्रस्तम्भ-चतुष्कोर्ध्वभागेऽपि तादृशप्रभाया उपरि च मञ्जुलाकारां सौवर्णमयीं राजतां वा तादृशबम्बरावलिं कल्पयेदित्यर्थः । किञ्चात्र सिंह्मासनाधारफलकायामासनस्थाने आसनार्हकौशेयदुकूलाद्यास्त-रणरचनाञ्च स्थापयित्वा चतुर्ष्वपि मुखपट्टेषु नवरत्नावलीश्च गुंफयेदित्यर्थः ॥

तथा रचनायामपि शास्त्रीयक्रमो यथा — सव्यभागे मुखपट्टिकामध्ये माणिक्यपञ्चकमभितो गोमेदकवैडूर्यवज्रपद्म-रागावलिं च क्रमशः स्थापयित्वा तोरणाकारेण मध्यपट्टवलिकेन नानारत्नप्रत्युप्तेन सरेणोपेतं हेमकिङ्किणिकासहितवाजनादिशोभितं

वेदी विधानतः कार्या वैशाल्यायामदण्डका ॥ ३२ ॥
सुवर्णसोपानषट्का हेमपट्टविराजिता ।
नवरत्नपरीताङ्गा राजता वा हिरण्मयी ॥ ३३ ॥
चतुष्कर्णसमायुक्ता चतुर्यमलदेवता ।

---

च रचयेदिति शिल्परचनाविदः । किञ्च पूर्वोक्तायां पश्चाद्भागफलकायां श्वेतच्छत्रदण्डस्थापनयोग्यामुपफलकां सायःकीलामथवा छत्राकारां सिंहासनरचनां वा स्थापयेदिति । तत्रापि वङ्गाङ्गकलिङ्गकोसलपाञ्चालमगधशूरसेनकुरुकेकयादिदेशीयरचनाक्रमो बोध्यः ॥

किञ्च तत्तत्प्रमाणादिशिल्परचनाकोविदशिल्पी लक्षणान्तराणि च स्वयमेवोह्य एतादृशलक्षणान्वितं सारदारुनिर्मितसिंहासनं प्रकल्प्य पूर्वोक्तन्यायशालायां निर्दिष्टस्थलकल्पितायां देववेद्यां स्थापयेदिति समयविदः ॥

किञ्च तादृशवेद्याः कानि लक्षणानीत्यत्राह — वेदीति । तादृशी सिंहासनधारिणी देववेदी चतुरश्रा साधारणैकदण्डप्रमाणा पूर्वभागे वा चतुर्षु वा भागेषु सुवर्णमयसोपानषट्कसहिता हेमपट्टद्वयेन वा हेमपट्टत्रयेण वा संवीतपार्श्वभागा तत्र तत्र चतुर्दिक्कोणेषु नवरत्नलिप्ताङ्कणाकारा रजतमय्या वा हिरण्मय्या मध्यपट्टिकया युता चतुष्कर्णाख्यचित्रविशेषयुता वासवजयन्तवैश्रवणनागभुजङ्गेशमुखादियमलदेवप्रतिकृतिसहिता च कार्येत्युपदेशः ॥

किरीटवेदिकां वामे दक्षिणे खड्गवेदिकाम् ॥
स्थापयेच्छिल्पकार्यज्ञो युक्त्या मानेन कल्पनम् ॥ ३४ ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे
न्यायशालालक्षणसिंहासनलक्षणकथनं नाम
षोडशोऽध्यायः ॥

---

किञ्चैतादृशवेदिकायां स्थापितस्य सिंहासनस्य वामभागे किरीटस्थापनार्हक्षुद्रवेदीं हिरण्मयीं तथैव दक्षिणे भागे राजतां वा खड्गस्थापनार्हक्षुद्रवेदीं च तत्तल्लक्षणसहितां च शिल्पी कल्पयेदिति सङ्क्षेपेण सिंहासनतदीयवेदीलक्षणादीनि प्रतिपादितानीति भावः ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
**न्यायशालालक्षणसिंहासनलक्षणकथनं नाम**
**षोडशोऽध्यायः ॥**



अथ पौरदेश्यसभादिकथनं नाम

## सप्तदशोऽध्यायः ॥

न्यायवित्परिषत्स्थानं सभा मुख्या प्रधानिका ।
दैवी राज्ञी मानुषीति तत्क्रमः कथितो बुधैः ॥ १ ॥

---

॥ सप्तदशोऽध्यायः ॥

इत्थंप्रकारेण षोडशाध्याये भूपालानां प्रासादेषु कल्प्यमानन्यायशालायाः लक्षणं प्रतिपाद्याधुना राजधान्यां पुरेषु देशेषु च स्थापनीयविविधन्यायशालानां लक्षणं विशदीकरोति — **न्यायवित्परिषत्स्थान**मित्यादिना । न्यायविदः प्राड्विवाकमहीपालादिभिः समं प्रश्नोत्तरदानपूर्वकं न्यायस्थापनपरायणाः तत्तद्देशीयविषयविज्ञानवन्तः सूक्ष्मधियो महाजनाः, तेषां स्थानं न्यायस्थापनादिकार्याय संमेलनस्थलं यत्तस्य सभेति साधारणव्यवहारो लौकिकः । सा च साधारणसभा मुख्यसभा प्रधानसभेति त्रिविधा विभक्ता भवति ॥

तत्र चाद्या दैवप्रधाना । मध्यमा भूमिपालप्रतिकृतिप्रधाना । अन्त्या तु साक्षाद्भूपालप्रधानेति आन्तरालिकोऽभिप्रायः । अस्य विशदार्थस्तु—तत्र तत्र ग्रामेषु स्थापनीयायामाद्यायां साधारणसभायामिष्टदेवताप्रतिकृतिं स्थापयित्वा तत्रत्येन नीतिज्ञेन पक्षपातराहित्यलसितदयादिगुणोत्तरेण महापुरुषेण प्रजानां

अष्टोत्तरशतग्रामकार्यशाला सभा मता ।
मुख्या सभा तु सा प्रोक्ता पुराष्टोत्तरकार्यभाक् ॥ २ ॥
सार्वभौमेन वा यूना भूपालैः क्षत्रवंशजैः ।
मान्या प्रधानिका प्रोक्ता सिंहासनसमन्विता ॥ ३ ॥

---

न्यायविचारः कलनीय इति । तथैवान्त्यायां राजधान्यादिषु उत्तमस्थलेषु स्थापनीयायां प्रधानसभायां सार्वभौमादिक्षत्रभूपाल-वर्गस्य साक्षात् सिंहासनं प्रकल्प्य तद्द्वारा प्रजारक्षणादिः कार्यं इति तदीयनियमार्थो बोध्यः ॥

अत एवैषा दैवी सभा, राज्ञी सभा, मानुषी सभेति लक्षणव्यवहारभागिति भावः । किञ्चैतासां सभानां तिसृणां तदीयकार्यादिलक्षणान्तरमप्याह— **अष्टोत्तरशतेति** । अष्टोत्तरशत-ग्रामवर्गनिवासिनां करग्रहणतद्वाञ्छापूरणतन्न्यायादिविचारण-कार्यार्थं कल्पनीया निर्मितिस्साधारणसभेति व्यवह्रियते । अस्या एव ग्रामसभेति नामान्तरम् । एवमष्टोत्तरशतनगरनिवासिनां करग्रहणतद्वाञ्छापूरणतन्न्यायादिचर्चाकार्यार्थं कल्पनीयं कल्पनं मुख्या सभेति नाम भजतीति लोकप्रसिद्धिः । अस्या एव पौर-सभेति नामान्तरञ्च बोध्यम् ॥

एवमेव राजधान्यां महानगर्यामथवा भूपालवासार्ह-प्रासादादिसहितनगरेषु वा कल्पनीया महाशाला राजकीय-प्रधानशालेति व्यवह्रियेत ॥

सामन्तैर्वा माण्डलिकैः प्रश्नोत्तरविधायिनी ।
सचिवासनसंयुक्ता तटस्थासनभाक्तथा ॥ ४ ॥

महाशालासमायुक्ता सर्वतोऽङ्गणशालिनी ।
दशदण्डादिकं मानं द्विद्विदण्डेन योजिताम् ॥ ५ ॥

विंशद्दण्डकमानेन संयुतां कुम्भभासुराम् ।
शुद्धां वा मिश्रितां वापि कारयेच्छिल्पकोविदः ॥ ६ ॥

---

किञ्चैतादृशप्रधानशालायां सिह्मासनं स्थापयित्वा तत्र साक्षादुत्तमक्षत्रियवंशोत्पन्नैः भूपालैरेव स्थितिः कल्पनीया नान्यैरिति सिह्मासनारोहणयोग्यजातिक्रमो मन्वादिस्मृतिप्रमाणसिद्धः । किञ्च पूर्वोक्तषोडशाध्यायप्रतिपादितरीत्या सार्वभौमस्य वा भूमिपालस्य वा प्रासादेषु न्यायादिविचारस्थले सिह्मासनं स्थाप्यम् । अत्र तु तादृशभूपप्रासादाद्बहिःस्थले नगरमध्ये वा स्थलान्तरे वा समुचिते प्रधानन्यायशालाख्यायां महाशालायां सिह्मासनस्थापन तत्तद्देशीयमाण्डलिक मुखपुरुषादिपारिषत्संमेलनस्थलस्थापनादिवैखर्या पूर्वस्माद्राजकार्यवशादेतस्य भेदः स्पष्ट एवेति मतिः ॥

किञ्चैतस्यां राजकीयप्रधानन्यायशालायां बहुदूरदेशवासिभिस्साकं तत्तत्कार्यविषयकप्रश्नोत्तरविधानलेखनकथनादिकार्यसमुचितं स्थलं सचिवादितटस्थपुरुषाणामासनजालं विरचय्य

मध्यशालाप्रमाणन्तु तदर्धं वा तदर्धकम् ।
लेखकाद्यासनोपेतामुपशालां समन्ततः ॥ ७ ॥
देश्यां पौरां तथा शालां माण्डलीकाञ्च तत्स्थले ।
तन्नायकासनोपेतां परिषद्गणवेदिकाम् ॥ ८ ॥
महाधिष्ठानसंयुक्तां पूर्वास्यां द्वितलाधिकाम् ।
चत्वारिंशत्पदोपेतां न्यायवेद्या समन्विताम् ॥ ९ ॥
पश्चाद्भागे च पुरतश्चरणाष्टकभूषिताम् ।

---

समन्ततो लेखकादिराजकीयकार्यकरवर्गाणामासनस्थानं मूलपत्रादिस्थापनस्थलानि च यथासौकर्यं प्रकल्प्य देशीयसभातःपूर्वोक्तपौरसभातो माण्डलिकसभात आगन्तुकानां प्राड्विवाकादीनामासनान्वितं समुचितं स्थानभेदञ्च आन्तरालिकभागे स्थापयेदित्युपदेशार्थक्रमः ॥

किञ्चेमां राजकीयप्रधानन्यायशालां पूर्वदिङ्मुखद्वारवर्ती द्वितलादिपञ्चभौमावधिकां चित्रतलनिर्मितिसमेतां भित्तिप्रान्तेषु क्षुद्रकलशाख्यसौधकलशरचनावलीभासुरां महाधिष्ठानोपरि प्रतिष्ठाभाजं पाञ्चाल्यादिमासु कल्पनशैलीष्वेकया शैल्या भासुरामथवा द्वारभागेषु विमानरचनायां स्तम्भस्थापनमुखीकरणादिकार्येषु द्विविशैलीलक्षणोपेतां सयुग्मकवाटद्वारोपद्वारयुतां पर्यङ्काद्यासनेषु कम्बलास्तरणयुतां तत्र तत्र सोपानपार्श्वयोः यालीसिंहगजतुरग-

चतुर्विंशत्पदोपेतामुत्तरास्यां सतोरणाम् ॥ १० ॥

विमानरचनोपेतामेकादितलभासुराम् ।
स्थापयेन्मानविच्छिल्पी युक्त्या मानेन सर्वतः ॥ ११ ॥

अथवा विंशतिपदैस्संयुतां मध्यशालकाम् ।
चतुःपदयुतां दिक्षु युग्मपादयुगान्विताम् ॥ १२ ॥

वर्तुलां चतुरश्रां वा तां प्राच्यादिगतां नयेत् ।
सयालिकाननां पार्श्वद्वारोपद्वारशोभिनीम् ॥ १३ ॥

इत्यादि बहुधा चिह्नैश्शोभितां कल्पयेद्बुधः ॥ १४ ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे
पौरदेश्यसभादिकथनं नाम
**सप्तदशोऽध्यायः ॥**

---

मुखादिचित्ररचनोपेतामन्तर्भागेषु तत्र तत्र भित्त्यन्तेषु समुचितस्थलेषु चित्ररचनादिभासुरां सुन्दराकृतिञ्च कल्पयेदित्यर्थः ॥

अपि चेमां प्रधानिकां शालां सिह्मासनवेदिकोपरि सौधभागे सशिरोविमानलसितां चत्वारिंशत्स्तम्भसहितां च स्थापयित्वा अस्याश्शालाया मध्यमाङ्गणे दशदण्डादिविंशद्दण्डावधिकेषु प्रमाणमानेषु भूपदण्डदशकवैशाल्ययुतं द्वादशदण्डवैशाल्ययुतं वा चतुर्दशदण्डवैशाल्यायामादिसहितं वेत्यादियुग्मक्रमकल्पनासहितं

मुखीकरणादिना संयुतं, सुन्दरवितानाद्यलङ्कारसहितं वातातपप्रकाशादिप्रवेशयोग्यमुपवेशनार्हं स्थलं शिल्पी युक्त्या कल्पयेदित्युपदेशः ॥

अपि चैवं निर्मितिकरणे पूर्वोक्तसाधारणसभायां विंशतिस्तम्भस्थापनं, मुख्यसभायां चतुर्विंशतिस्तम्भस्थापनमत्र तु प्रधानन्यायशालायां चत्वारिंशत्स्तम्भस्थापनं सर्वत्रोपशालादिकेषु कल्पनेषु तत्तत्कार्योचितमानादिकं कल्प्यतामिति वचनशैली प्रतिभाति ॥

अर्थान्तरञ्च स्फुरति । कथं वा इमामेव राजकीयप्रधानशालां उत्तमपक्षे पूर्वोक्तरीत्या चत्वारिंशत्स्तम्भसहितां, मध्यमपक्षे चतुर्विंशतिस्तम्भस्थापनयुतां, अधमपक्षे विंशतिस्तम्भोपेतामिति तत्तत्कार्यतत्तत्स्थलानुकूलं कल्पयेदिति ॥

केचिदेवं कल्पनमपि युज्यत इति वदन्ति । एतत्सर्वमपि शिल्पशैलीविदामनभिप्रेतमित्येव वयम् । तस्मात्प्रथमकक्ष्योक्तमेव प्रमाणं स्तम्भविषयकं सभादिस्थानत्रयकल्पनेषु संयोजनीयमिति शिल्पिवर्गस्योपदेशः ॥

तस्मादत्र चत्वारिंशत्स्तम्भस्थापनक्रमो यथा— दैर्घ्यप्रमाणयुतकल्पने सव्यभागपङ्क्तिद्वये सममानसूत्रं स्तम्भषोडशकं तथैवापसव्यभागे पङ्क्तिद्वयेऽपि स्तम्भषोडशकं च स्थापयित्वा सिंहासनवेदिकास्थाने आवरणद्वये स्तम्भाष्टकं पूर्वद्वारभागे सोपानसमीपे स्तम्भचतुष्कञ्च स्थापयेदिति क्रमः ॥

अथ चतुर्विंशतिस्तम्भस्थापनक्रमो यथा — पुरोभागे स्तम्भाष्टकं पश्चाद्भागे च स्तम्भाष्टकं स्थापयित्वा मध्यभागे मण्डलाकारे स्तम्भाष्टकञ्च प्रकल्प्य तत्रैव दैववेदीं सिंहासनस्थापनार्थं प्रकल्पयेदिति क्रमः ॥

अथ विंशतिस्तम्भस्थापनक्रमो यथा — प्राच्यादिषु चतसृष्वपि दिक्षु समसूत्रं स्तम्भचतुष्कं प्रत्येकं स्थापयित्वा मध्यभागे चतुरश्रकल्पनामथवा मण्डलाकारकल्पनं स्तम्भचतुष्कसहितञ्च प्रकल्पयेदिति क्रमो बोध्यः । एतत्सर्वमप्यत्रत्योद्धारमण्डलनिरीक्षणेन सुलभवेद्यमिति भावः । एवमत्र त्रिविधायां न्यायशालायां प्रतिपादितस्तम्भलक्षणस्य पूर्वभवनलक्षणादिष्वतिव्याप्त्यादिदोषप्रसक्तिर्नैव । कथम्? तदपेक्षयाऽत्र स्तम्भसंख्याधिक्यकथनादिति समञ्जसम् ॥

न्यायशालासु स्थापनीयस्तम्भक्रमद्योतकोद्धारो यथा —

१. चत्वारिंशत्स्तंभयुता राजधान्यां स्थाप्या राजकीयप्रधानशाला ॥

```
            o           o
            o           o
o   o                         o   o
o   o                         o   o
o   o                         o   o
o   o                         o   o
                 □
o   o                         o   o
o   o                         o   o
o   o                         o   o
o   o                         o   o

            o           o
            o           o
```

२. चतुर्विंशति(24)स्तम्भयुता पौरा मुख्याख्या न्यायशाला ॥



### ३. विंशति(20)स्तंभयुता देश्या साधारणसभाख्या न्यायशाला ॥



इति साधारणसभादिषु स्तम्भस्थापनक्रमः ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां विश्वकर्मवास्तुशास्त्रव्याख्यायां

**पौरदेश्यसभादिलक्षणकथनं नाम**

**सप्तदशोऽध्यायः ॥**



अथ भाण्डागारलक्षणनिरूपणं नाम

## अष्टादशोऽध्यायः ॥

अगस्त्यो भगवान्नन्दी नारदश्च महामुनिः ।
बृहस्पतिस्तिम्यलोकः काश्यपो लोकदर्शकः ॥ १ ॥

---

॥ अष्टादशोऽध्यायः ॥

अथेदानीं पूर्वपक्षप्रश्नानुदयाय प्रसङ्गादत्र किञ्चिद्विचार्यते । यथा वा — विश्वकर्मणा कृतं वास्तुशास्त्रं विश्वकर्मवास्तुशास्त्रमित्यस्य ग्रन्थस्य नाम व्यवह्रियते किल । कोऽर्थो वास्तुशब्दस्य ? उच्यते — वासार्हं स्थानं वास्त्विति शिल्पविदामाशयः। लक्षणया तादृशवास्तुप्रमाणादिलक्षणप्रतिपादकमिदं महच्छास्त्रमिति विवेकिनः। एतादृशलक्षणान्वितमिदं महच्छास्त्रं 'पुरा भूमिः' इत्यादिभूलक्षणकथनपूर्वकं न्यायसभालक्षणकथनावधिकं वास्तुशब्दार्थद्योतकं बहुधा आविष्कृतवान्ग्रन्थकारः दिव्यो **विश्वकर्मा** प्रसिद्धनामधेयः । कथमिदानीं भाण्डागारान्तःपुरगवाक्षभोजनशालावसन्तगृहतोरणादीनां लक्षणकथनोद्योग इत्याद्याकाङ्क्षानुदयाय अगस्त्यादिभिर्वरिष्ठैर्महर्षिभिरतीन्द्रियज्ञैः कोसलपाञ्चालमगधादिदेशभेदेन कल्पनाभेदेन निर्मित्यादिभेदेन च बहुप्रकारं भवनादिलक्षणं कथितम् । तस्मात् तदीयामेव रचनाशैलीं प्रायशोऽवलम्ब्य मया च विश्वकर्मणा तादृशभवन-

कात्यायनो महातेजा मरीचिश्चित्रतोयकः ।
पालकाप्यः पुण्डरीको दीर्घदर्शी पुनर्वसुः ॥ २ ॥

योगसारो महातेजा ये चान्ये मुनिपुङ्गवाः ।
तैरतीन्द्रियविज्ञाननिधिभिर्धर्मरक्षकैः ॥ ३ ॥

वास्तुशास्त्रं महत्प्रोक्तं लोकरक्षणहेतवे ।
तदुक्तमेव संक्षिप्य तत्तल्लक्षणमुच्यते ॥ ४ ॥

प्रमाणेषु स्थापनेषु चित्रादिस्थापनासु च ।
मतभेदं समाश्रित्य मयापि समलक्षणम् ॥ ५ ॥

नयनानन्दजनककल्पनानाञ्च सूरिणाम् ।

---

भाण्डागारादीनां सद्भिरङ्गीकार्याणां नयनानन्दकराणां निर्मिति-रचनाविशेषाणां लक्षणञ्च स्वयं निगद्यत इति प्रतिज्ञां प्रतिपाद-यितुमधुना तादृशमहिमवतां प्राचीनशास्त्रकाराणामगस्त्यादीनां नामानि कथयति — **अगस्त्य** इत्यादिना ॥

भगवानगस्त्यो, नन्दिदेवो, नारदमहर्षिर्बृहस्पतिस्त्रिम्य-लोकाख्यो महर्षिः । काश्यपमुनिवर्यो, लोकदर्शकमहर्षिः, महातेजाः कात्यायनो, मरीचिश्चित्रतोयकमुनिवरः पालकाप्यो महर्षिः पुण्डरीकाक्षमहर्षिर्दीर्घदर्शी मुनिश्रेष्ठः पुनर्वसुनामको मुनिवरो योगसारमहर्षिरेतादृशा ये चान्ये मुनिपुङ्गवाः, तैः प्रणीतेषु शिल्प-शास्त्रेषु बहुविधेषु पूर्वोक्तरीत्या न्याय्यं सदङ्गीकार्यमेव । मतभेद-

प्रोच्यते वास्तुयोग्यानां लक्षणं शिल्पभासुरम् ॥ ६ ॥

सूक्ष्मधीभिश्शिल्पवर्गैर्ज्ञेयं तच्छ्रेयसे परम् ।
सर्वेषां भूमिपालानां धनं दैवं निगद्यते ॥ ७ ॥

धनेन धर्मकार्याणि स्थापयेत्पृथिवीपतिः ।
विबुधैर्मानितस्स्वर्गे परमं सुखमश्नुते ॥ ८ ॥

धनेन कीर्तिर्विजयः सुखं सुकृतमेव च ।
प्राणिनां पोषणं शक्तिः वर्धते नात्र संशयः ॥ ९ ॥

तस्मात्सर्वप्रयत्नेन तद्रक्षेत्पृथिवीपतिः ।

---

मवलम्ब्य स्वयं युक्त्या च तदेव योग्यं लक्षणं शिल्पिवर्ग-सुखबोधाय जनहिताय च निगद्यत इति पूर्वेणान्वयः ॥

केचित्तु वास्तुशास्त्रपदं प्रथमाध्यायादिसप्तदशाध्यायावधिक-मेव । कथं प्रतीयते । प्रायशोऽत्रैव ग्रामपुरादिवास्तुलक्षणस्य प्रतिपादितत्वात् उपरितनभाण्डागारादिलक्षणन्तु विश्वकर्मकृतं शिल्पलक्षणं तदङ्गभूतमिति मन्यन्ते ॥

तच्चिन्त्यम् । कुतः ? तदुक्तस्थले लक्षणादिनिगमनवचन-प्रदर्शनात् । किञ्च तल्लक्षणप्रसङ्गात् बहुविधान्तस्सदनरचनादी-नामपि एतस्मिन्नेव ग्रन्थे प्रतिपादनस्यौचित्यादित्यादिना । तस्मादेतदध्यायप्रभृति कथितानां लक्षणानामपि चर्चाप्रसक्तिरिति प्रकृतमनुसरामः ॥

तद्बुद्धौ शास्त्रविन्मानं सुमतौ सचिवे धुरम् ॥ १० ॥

भाण्डागारे धनं स्थाप्यं सुखाय पृथिवीपतिः ।
न्यायमार्गेण युक्त्या च सचिवादिसहायतः ॥ ११ ॥

धनं सम्पादयेद्धीमान् लोकरक्षणकारणम् ।
धनसंरक्षिणी शाला भाण्डागारमितीरिता ॥ १२ ॥

तां शालां स्थपतिश्रेष्ठः स्थापयेल्लक्षणान्विताम् ।
देश्या पौरेति सा शाला द्विविधा कथिता बुधैः ॥

देश्या सदुर्गा सालिन्दा द्वारोपद्वारमेदुरा ।
प्राकारत्रयसंवीता भित्तिसप्तकसंवृता ॥ १४ ॥

---

किञ्च 'सर्वेषां भूमिपालानां धनं दैवं निगद्यते' इति 'धनं सम्पादयेत्' इत्यन्तं स्पष्टार्थकमेव । तत्र धनानां महिमाऽऽविष्कृता भवति । तादृशधनस्थापनशालायाः भाण्डागारमिति प्रसिद्धं नाम विदुराचार्याः ॥

सा च धनस्थापनशाला देश्या पौरा चेति द्विविधा भवति । तल्लक्षणं यथा — तत्र तत्र देशेषु मण्डलनगरेषु वा स्थाप्यां राजकीयधनशालां दुर्गावृतभवनस्य मध्यभागे पृथग्वा स्थापयेत् ॥

अथवा दुर्गावृतराजकीयन्यायशालाया मध्यनिर्माणे वा स्थाप्येति स्थलसौकर्यद्योतको विकल्पः । सर्वथा तादृशीं

भूम्यां भूगर्भसंयुक्ता सप्तसोपानसंयुता ।
चतुरश्रा पार्श्वभागे देवीनां स्थानकैर्युता ॥ १५ ॥

---

धनशालां तावत् प्राकारत्रयावृतस्य कस्यचिद्भवनस्य मध्ये दृढभित्तिसप्तकावृतां स्थापयेत् । अत्र तु केचित् प्राकाराणां त्रयमित्युक्त्या प्राकारभित्तित्रयं संपादयित्वाऽवशिष्टं भित्तिचतुष्कमेव तत्र भवनभागे कल्पनीयमिति । तच्च कचिद्युज्यत एव । परन्तु तथाकल्पनमप्यमात्यभूपालस्थपत्यादीनामिच्छाधीनमिति वयं ब्रूमः ॥

सर्वथा परिखया प्राकारभित्त्यादिना च तादृशराजकीयधनशालायाः रक्षाबाहुल्यमवश्यं संपादनीयमित्युपदेष्टारः । एवमेतस्या धनशालायाः परिखाकल्पनप्राकारस्थापनावश्यकतां प्रतिपाद्य तदन्तः करणीयरचनाविशेषमाह — **सालिन्देति** । पूर्वोक्तरीत्या प्रथमतः परिखाकल्पनं तदन्तः प्राकारभित्तीर्निर्माय साधारणदण्डविंशतिकादिपञ्चाशद्दण्डावधिकं भवनकल्पनं सवास्थलोपेतमथवा गणकाद्यासनस्थापनयोग्यस्थाने विशालाभिश्शालाभिर्युतं कल्पनं निर्माय मुख्यकल्पनस्यारम्भस्थले पृथुलमेकं मुखद्वारं स्थापयित्वा ततः किञ्चिद्दूरे द्वितीयं द्वारं ततस्तृतीयं द्वारञ्च परम्परया किञ्चिद्विच्छित्तिविशेषसहितं स्थापयित्वा तादृशद्वारमध्यभागेऽलिन्दद्वयं स्थापयेत् ॥

प्रकल्प्या स्थपतिश्रेष्ठैश्शुभकाले विशेषतः ।
पौरन्तु कोशसदनं प्रासादान्तर्गतन्तु वा ॥ १६ ॥

सप्राकारं सदुर्गं वा सप्तभित्तिसमावृतम् ।
मण्टपाकृतिकं वापि शालाकारमथापि वा ॥ १७ ॥

---

किञ्च तादृशालिन्दकरणानन्तरमेकमुखशाला स्तम्भाष्टक-सहिता स्तम्भद्वादशकसहिता वा भूपालदण्डचतुष्कवैशाल्य-दैर्घ्यप्रमाणोपेता वा स्थाप्या । किञ्च ततः पश्चाद्भागे भूगर्भाख्यं निम्नस्थलं कार्यम् । स च निम्नभाग एकादशदण्डप्रमाण-भागश्चतुरश्रो वाऽऽयतो वा कल्पनीय इति तन्नियमः । किञ्च तस्मिन्नेव भागे गोरूपिण्या भूमिदेव्याः प्रतिमादिस्थापनस्थलं कार्यमिति शिल्पज्ञाः ॥

अस्य विशदार्थस्तु तादृशनिम्नस्थले वेदिकां निर्माय तदुपरि सकलनिध्याधारभूताया भूमिदेव्याश्चित्रं वा प्रतिकृतिं वा नवनिधिदेवीनां प्रतिकृतिं वा स्थापयेदित्यर्थः ॥

इदञ्च लक्षणं पौरायां धनशालायामपि योज्यं इति संप्रदायविदः । अवशिष्टानि लक्षणान्तराणि स्वयमेवोह्य शिल्पी कल्पयेदिति भावः ॥

अथ पुरेषु स्थापनीयराजकीयधनशालाया लक्षणं विशद-यति — **पौरं तु कोशसदनमित्यादिना** । राजकीयामिमां

तदन्तर्भूगर्भदेशे चतुरश्रप्रमाणकम् ।
अलिन्दद्वयसंयुक्तं तद्द्वारं कीर्तितं क्रमात् ॥ १८ ॥
दण्डत्रयं चतुर्दण्डमथवा पञ्चदण्डकम् ।
मध्यभागप्रमाणञ्च स्थापयेत्सूत्रमानवित् ॥ १९ ॥

---

धनशालां राजधान्यां नगरेषु पुरेषु वा तन्मध्यभागे वा समुचिते स्थले प्रकल्पयेत् । आहोस्विद् भूपालप्रासादवास्तुसीमान्तर्गतां वा स्थापयेदिति सर्वथा पूर्वप्रतिपादितरीत्या अस्याश्शालायाः परिखावृतत्वं प्राकारावृतत्वं वा तदुभयसमवेतत्वं वा मुख्यरक्षालक्षणमित्युदीरितं भवति । किञ्च तादृशपरिखाप्राकारान्तर्गतायाः अस्याः पौरधनशालाया मध्यकल्पनिर्माणन्तु सप्तभित्त्यावृतं सप्तद्वारान्तर्गतं तत्र तत्र अलिन्दयुग्मसमन्वितं प्राथमिके उदीचीदिङ्मुखे द्वारे बहुविधचित्ररचनोपेतं स्थापयेदित्युपदेशः ॥

किञ्च तादृशमध्यनिर्माणस्य प्रमाणक्रमो यथा — तस्य मध्यनिर्माणस्य प्रमाणं भूपदण्डत्रयादिकं भूपदण्डपञ्चकावधीति । तथा च तच्च मध्यनिर्माणं चतुरश्रं वा दैर्घ्ययुतं वा शालाकृतिसहितं वा कल्पयेदिति तद्विकल्पो भूपालेच्छाधीन इति भावः । किञ्चात्र नियमः कोऽपि निर्धार्यः । यथा — यथैव शैलया चतुरश्रनिर्मित्युपेतया आहोस्विदायामोपेतया निर्मित्या सहिता धनशालेयं स्थाप्यते, तयैव प्रमाणशैल्या तन्मध्यकल्पनस्य अन्तर्गतां मुख्यां धनवेदिकाञ्च शिल्पी स्थापयेदिति मर्यादा ॥

गणकाद्यधिनेतॄणामासनैश्च समन्वितम् ।
सर्वाभरणकैर्दिव्यैर्निधिदेवैस्सुरक्षितम् ।। २० ।।

भूगर्भस्थानसंयुक्तं भूमिदेवीसमन्वितम् ।
धेनुचित्रलसद्भागधनवेद्या समन्वितम् ।। २१ ।।

स्थापयेदुत्तरास्यञ्च सौवर्णद्वारपङ्क्तिकम् ।
सुवर्णं स्थापयेत्पूर्वे राजतं दक्षिणे तथा ।। २२ ।।

उदीच्यां नवरत्नानि वारुणे लिपिकारिणः ।
स्थापयेत्क्रमशो भक्त्या प्रत्यहं चार्चयेन्नृपः ।। २३ ।।

प्रथमावरणे दीपदेवी स्थाप्या सहासना ।
द्वितीयावरणे देवी चामरग्राहिणी तथा ।। २४ ।।

---

किञ्च पूर्वोक्तरीत्या अस्यामेव धनवेद्यां गोरूपिण्या भूमिदेव्याश्चित्रादिरचनेति भावः । ताञ्च धनवेदिकामेकदण्डनिम्नस्थले स्थापयेत् ।।

किञ्च तत्पुरतः कोशागारकार्यकरलेखकाद्यधिपतीनामासनान्वितं स्तम्भषोडशकसहितमथवा स्तम्भविंशतिकोपेतं पूर्वशालाकल्पनं कार्यम । किञ्च तस्या एव शालायाः पुरतः पुनरपि क्षुद्रशालाकारमावरणत्रयसहितमन्तर्द्वारत्रयोपेतं कल्पनं स्थापयेत् ।।

तत्र प्रथमावरणद्वारभागे पद्मदलाद्यासनोपरि भासमानां

तृतीयावरणे देवी चाशीर्वचनकारिणी ।
एवं देवीत्रयं स्थाप्यं यशोधनजयप्रदम् ॥ २५ ॥

कम्बलास्तरणोपेतमध्यभागविराजितम् ।
सुवर्णपट्टसंयुक्तं राजतैस्तोरणादिभिः ॥ २६ ॥

---

दीपदेव्याः प्रतिकृतिं स्थापयेत् । एवं द्वितीयावरणद्वारभागे चामरधारिण्या दिव्ययोषितः प्रतिकृतिं, तृतीयावरणद्वारान्ते आशिषमनुवदन्त्या लोकमातुः प्रतिकृतिञ्च स्थापयेदिति शास्त्रीयनियमनक्रमः । किं वा प्रयोजनमेतासां स्थापने इति न वाच्यम् । तत्र धनवेद्यां स्थापितायाः नवनिध्यधिदेवताया भूदेव्याः काचित्परिचारिणी, अन्या तु सखीति बोध्यः । तस्मात्सर्वथा सपरिवारायास्तस्या भूमिदेव्या अंशभूतामिमां धनशालां वर्धयितुं भूपालस्य यशोजयादिविभवहेतवे च एवं स्थापनमेवाद्यो हेतुरिति श्रुतिस्मृतिप्रमाणसिद्धक्रमो ज्ञेयः । किञ्च पूर्वोक्तरीत्या तादृशधनशालायां कल्पिताया गोरूपभूदेवीचित्रयुतधनवेद्याः प्राचीभागे समुचिते स्थलकल्पने सुवर्णराशिं विन्यसेत् । वेद्या दक्षिणस्यां दिशि रजतराशिमुदीच्यां दिशि वज्रवैडूर्यगोमेदकपुष्परागनीलादिनवरत्नजालानि च स्थापयित्वा वारुणे भागे लिपिकारिणः तादृशसुवर्णादिधनव्ययादिक्रमनिर्णयकारिणः पुस्तकपालिञ्च विन्यसेदित्युपदेशः ॥

शिखरत्रयसंयुक्तविमानेन च भासुरम् ।
नानाचित्रसमोपेतं वितानैरपि मण्डितम् ॥ २७ ॥

पूर्वशालासमायुक्तं खड्गचिह्नसमन्वितम् ।
स्थापयेन्मतिमान् शिल्पी रक्षकैस्संवृताङ्गणम् ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे
भाण्डागारलक्षणकथनं नाम
**अष्टादशोऽध्यायः ॥**

---

किञ्चैतादृशराजकीयधनशालायाः कल्पने मध्यभागे तच्छालाकार्यकारिणामासनसमीपे पूर्वोक्तावरणत्रये चालिन्द-भागेषु चित्रकम्बलास्तरणं कार्यम् । किञ्च तत्र तत्र द्वारसमीपे सुवर्णपट्टैरथवा राजतपट्टैः कल्पितां सोपानपट्टावलिकां स्थापयित्वा तादृशधनवेद्या उपरिभागे शिखरत्रयलसितं विमानं कल्पयित्वा आन्तरालिकभित्तिकोणादिभागेषु नानाचित्रलसितं वितानजालञ्च रचयेत् । किञ्चास्याश्शालायाः पूर्वभागे पूर्वोक्तरीतियुतं पूर्व-भवनमथवा पूर्वशालां स्तम्भाष्टकयुतां निर्मापयित्वा प्रथमद्वार-सव्यापसव्ययो राज्ञां जयप्रदं खड्गचिह्नं तत्पुरत एव रक्षाकार्य-व्यापृतयामरक्षाकारिणां च गणं स्थापयेदित्युपदेशः ॥

तस्मादेतावता वाक्यजालेन राजकीयधनशालाया बाह्य-

मान्तरालिकं लक्षणं रचनाविशेषक्रमश्च प्रायशः प्रतिपादिताः । लक्षणान्तराणि तत्तत्स्थाने मानादीनि च स्वयमूह्य युक्त्या शिल्पिवर्यः प्रकल्पयेदिति भावः । एवं धनशालालक्षणवाक्यार्थो ज्ञेय इति ॥ २८ ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
**भाण्डागारलक्षणनिरूपणं नाम**
**अष्टादशोऽध्यायः ॥**



अथान्तःपुरलक्षणविविधगवाक्षलक्षणकथनं नाम

## एकोनविंशोऽध्यायः ॥

यशो धनं कलत्रञ्च रक्षणीयं महीभुजा ।
तत्कोशरत्नजनकमनर्घं कथितं बुधैः ॥ १ ॥
तस्मात्तद्बहुधा रक्ष्यं सयत्नेन महीभुजा ।
प्राकारावृतहर्म्यान्तस्तत्स्थलं कार्यमीरितम् ॥ २ ॥
आपदेवस्य भागे वा वारुणे वा विशेषतः ।

---

॥ एकोनविंशोऽध्यायः ॥

अथ शुद्धान्तलक्षणकथनात्मकमेकोनविंशाध्यायमारभते— **यशो धनमित्यादिना** । सत्क्षत्रियवंशजातानां सार्वभौमादीनां सर्वेषां भूमिपालानां दिग्विजयादिना यशस्संपादनं, न्यायमार्गेण धनसंपादनं, सत्कलत्रसंरक्षणमित्येतत्त्रयमेव बहुविधश्रेयस्करम । तत्रापि विशेषतः सत्पत्न्याख्यक्षत्रियाणीसंरक्षणेन स्ववंशरत्न-भूततनयाद्याविर्भावेन राज्यपरिपालनरूपप्रजारक्षणादिना स्वर्गादि-सत्पदप्राप्तिरपीति शास्त्रकारैस्तत्र तत्र प्रतिपादितत्वात् तदेव हृदयं मनसि निधायाधुनाऽत्र शास्त्रकारोऽपि तद्वाक्यानुवादपूर्वकं तादृशक्षत्रियमहिष्यावासभूतान्तःपुरलक्षणमाह — **प्राकारावृते-त्यादिना** ॥

पूर्वप्रतिपादितशैल्या नगरलक्षणप्रकरणोक्तप्रमाणसहित-

चतुरश्रं दैर्घ्ययुतमथवा तत्प्रकल्पयेत् ॥ ३ ॥
दण्डद्वादशवैशाल्यमण्डलाकारमध्यभाक् ।
त्रिभौमः पञ्चभौमो वा मध्ये वास्थलसंयुतः ॥ ४ ॥
मध्याधिष्ठानसंक्लृप्तश्चोपशालावृताङ्गणः ।

---

प्राकारावृतभूपहर्म्यस्यान्तर्भागे आपदेवस्थाने, आहोस्वित्तत्र तादृशवैशाल्यादिमानोपेतस्थलाभावे वारुण्यां वा दिशि पट्टमहिष्यावासस्थानाख्यमन्तःपुरं स्थापयेत् । एवं तत्र किल स्थापनेऽन्तःपुरलक्षणवाक्यसाफल्यमिति भावः ॥

तस्मात्तादृशान्तःपुरमुख्यकल्पनस्य प्रमाणन्तु भूपदण्डद्वादशकवैशाल्यमित्युक्तं भवति । अस्य विशदार्थस्तु — अत्र खलु शुद्धान्ते मुख्यकल्पनं चतुरश्राकारमथवा दैर्घ्याधिक्यसमेतं वा तत्तद्रूपप्रासादकल्पनस्वरूपवत् निर्मापणीयमिति भावः । सर्वथा तत्र कल्पने शुद्धान्ते भूपदण्डद्वादशकवैशाल्यहीनत्वं न कार्यमिति समयः । तस्मादेतादृशान्तःपुरमुख्यकल्पनं तावन्मध्याधिष्ठाने स्थापनीयमित्यर्थः । कोऽर्थो मध्याधिष्ठानशब्दस्य ? उच्यते — हस्तद्वयोत्तुङ्गमानमधमाधिष्ठानम् । हस्तचतुष्कोत्तुङ्गमानं मध्यमाधिष्ठानम् । हस्तषट्कोत्तुङ्गमानमुत्तमाधिष्ठानमिति तदीयक्रमो बोध्यः । तस्मात्तेष्वत्र शुद्धान्तनिर्माणे हस्तचतुष्कोन्नतं मध्यमाधिष्ठानं जगतीवाजनपद्मपट्टकुमुदगलादि-

**तद्भागे क्रीडनस्थानं कल्पयेद्बहिरेव वा ॥ ९ ॥**
**द्वारोपद्वारसंयुक्तः केसरक्रियया युतः ।**

---

रचनोपेतं निर्माय तदुपर्यन्तःपुरकल्पनं त्रिभौमलसितमथवा पञ्चभौमसमेतं प्रकल्पयेदित्यर्थः ॥

किञ्चैतादृशशुद्धान्तनिर्माणे मुख्यकल्पनस्य मध्यमभागे मण्डलाकारां मुखीकरणाद्युपेतां काञ्चन विशालां शालां कल्पयेत् । किमर्थम् ? तस्यामेव मण्डलाकारशालायां पट्टमहिष्याश्शयनादि-स्थानकल्पनमिति विवेकः ॥

तस्मात्तादृशमण्डलशालां परितश्चतुरश्रकल्पनावधिकामुप-शालां मध्ये मध्ये चन्द्रिकातपादिपतनयोग्यवास्थलसहितां स्थापयित्वा तादृशपट्टमहिषीशयनादिस्थानभागाञ्चतसृष्वपि दिक्षु चतुस्समसूत्रः तस्य चत्वरभागस्यागमनमार्गस्तथैव तादृशचत्वर-भागादुपशालाया आगमनमार्गश्च अलिन्दशालासमेतो वा क्षुद्रोपशालायुतो वा कल्पनीय इति निर्माणशैलीकथनम् । स च प्रस्तराख्यपटलान्वित इति भावः ॥

एवंप्रकारेण स्थापितानाञ्चतुर्दिग्भागास्थितानां तादृश-महाशालानां प्रयोजनं किमिति न वाच्यम् । तच्च स्पष्टमेव । कथम् ? तासूदीचीदिग्भागगतशालायां महिष्यादीनामाभरणस्थाप-नालङ्करणवेदिकाकल्पनादिकं कार्यम् ॥

मध्यागारविनिष्क्रान्तकल्पनेन समन्वितः ॥ ६ ॥
लक्ष्म्यादिलसितद्वारो बहुचित्रमनोहरः ।
शुद्धान्तो रक्षणोपेतः कार्यो भूपालसिद्धये ॥ ७ ॥

कौबेर्यां भूषणं प्रोक्तं वारुणे वस्त्रकादिकम् ।
दक्षिणस्यां गन्धमाल्यं पूर्वे भोजनमीरितम् ॥ ८ ॥

गन्धर्वदेवचित्राढ्यं कल्पयेच्छिल्पकोविदः ।
तटाकमथवा वापीं तत्पार्श्वे कल्पयेद्बुधः ॥ ९ ॥

चेटीनां वासभवनैरन्वितश्च समन्ततः ।

---

एवं वरुणदिग्गतशालायां महिष्यादीनां कौशेयदुकूलादिकं स्थाप्यम् । दक्षिणदिग्गतशालायां गन्धमाल्यमृगनाभीघुसृणादिकं च स्थापयित्वा, ऐन्द्रदिग्गतशालायां महिष्या भोजनवेदिका सलक्षणा स्थाप्येति ॥

किञ्चैतादृशशालायां पुरोभागे क्षत्रियाण्यादीनां कन्दुक-क्रीडादिस्थानं कल्प्यम् । आहोस्वित्तादृशशुद्धान्तनिर्माणाद्बहिः समुचितेऽतीव वैशाल्यवति स्थले उद्यानसमीपे वा खेलनस्थानं प्रकल्प्यतामितीच्छाधीनविकल्पः । किञ्चैतादृशोपशालानां नातिदूरे स्थलान्तरे महिषीपरिचारिकाणां चेटीनामावासस्थलानि निर्मापणीयानीत्यर्थः ॥

अपि चात्रान्तःपुरकल्पनं तावत् तत्र तत्र गजलक्ष्मी-

वातायनशतोपेतो वितानादिभिरन्वितः ।
कलशादिसमोपेतः कल्पनीयो मनोहरः ॥ १० ॥

अथ विविधगवाक्षलक्षणकथनम् ॥

भूपतेस्तु महिष्या वा तुष्ट्यर्थं कल्पनं वरम् ।
कल्पनीयं शिल्पधिया कल्पसूत्रविधानतः ॥ ११ ॥

---

गन्धर्वादिप्रतिकृतिसमेतद्वादशद्वारभागसहितं नानाचित्रविताना-द्यलङ्कृतं वातायनशतोपेतं सौधभित्तिप्रान्तोपरि मञ्जुलाकार-क्षुद्रकलशोपेतमतिमनोहरविविधनिर्माणरचनोपेतं यामरक्षकादि-रक्षावृताङ्गणबहिरङ्गणवाटिककल्पनं शिल्पी युक्त्या यथाशास्त्रमानं कल्पयेदित्युपदेशः । नात्र शिखरस्थापनादिकमित्यादिमतान्तरं नाविष्क्रियते । प्रायशो ग्रन्थान्तरकथितशुद्धान्तनिर्माणलक्षणेऽपीद-मेव लक्षणं लगतीति सर्वमनवद्यमिति भावः ॥ १० ॥

इत्यन्तःपुरलक्षणकथनम् ॥

शुद्धान्तनिर्माणकथनप्रसङ्गादत्र शुद्धान्तवासिनीनां महिषी-प्रमुखविलासिनीनां विहारस्थललक्षणप्रतिपादनपूर्वकं तन्निवास-भवनोपयोगिबहुविधगवाक्षलक्षणमाह — भूपतेरित्यादिना । भूपतेस्तन्महिष्याश्च मनस्समुल्लासवर्धनचणं कल्पनविशेषं कञ्चिद्यथासूत्रमानं कल्पयेदित्युपदेशः ॥

विहारमण्टपो वाऽपि महाशालाऽथवा मता ।
चतुरश्रं भानुदण्डमथवा तत्कलान्वितम् ॥ १२ ॥

मध्यकल्पनसंयुक्तं वितानादिमनोहरम् ।
पञ्चभौमं सप्तभौमं नवभौममथापि वा ॥ १३ ॥

---

तच्च कल्पनं लोके बहुविधं भवति, मण्टपरूपं, शालारूपं उपरि कूपकल्पनरूपं, वरजककल्पनरूपमित्यादिना । तत्राद्यद्वितीययोर्लक्षणमत्र विशदयति । यथा वा — मण्टपाकाररूपं वा महाशालारूपं वा शुद्धान्तनिर्माणसमीपे तत्कल्पनं पञ्चभौमान्वितं वा सप्तभौमान्वितं वा सति विभवे कौतुके च नवभौमोपेतं वा शिल्पिवर्गः प्रकल्पयेदित्यर्थः। तत्रापि कोऽपि नियमः स्वीकार्यः। यथा — तच्च विहारालोककल्पनं तु स्तम्भषोडशकसंयुतमण्टपाकृतिकं यदि निर्मितम्, तदा तत्र चतुरश्रप्रमाणं भूपभानुदण्डावधिकं ज्ञेयम् , अथवा षोडशदण्डावधिकं वेति तदीयप्रमाणक्रमः । सर्वथा न दण्डपञ्चकहीनमिति ॥

यदि महाशालाकाररूपं निर्माणं कृतम्, तदा तत्र शालायां भानुदण्डदैर्घ्यं वैशाल्ये दण्डत्रयमिति च विवेकः । एतत्सर्वविधमपि प्रमाणजालमुत्तरत्र बहुविधशालालक्षणप्रकरणे स्पष्टीभविष्यति ॥ १३ ॥

सोपानपङ्क्तिसंवीतकूपनिर्माणभासुरम् ।
चित्रतोरणयुग्द्वारचतुष्केनान्वितं तथा ॥ १४ ॥

आलोकपालिकायुक्तं तत्रस्थं तु गवाक्षकम् ।

---

किञ्च भूपालस्य महिष्याः मनस्समुल्लासहेतवे कल्पनीयालोकननिर्माणस्य किं वा लक्षणमित्यत आह— **सोपानेति** । पूर्वोक्तरीत्या चतुरश्रमायतं वा मण्टपशालाशैलयन्तरसमेतं वा प्रथमभौमकल्पनं निर्माय तदुपरि द्वितीयभौमकल्पनमारभ्य सोपानपङ्क्तिसंवीतकूपनिर्माणाकारयुतं कल्पनं स्थापयेदित्युपदेशः । अस्य विवृतिर्यथा—कल्पनमिदं भूपमहिष्यादीनामन्तिकस्थलभासुरभूमिवनशैलोद्यानादिनिरीक्षणाय स्थापनीयं खलु । तस्मादेतत्कल्पनं पूर्वोक्तरीत्या तादृशलक्षणान्वितं प्रथमतलं निर्माय तदुपरिकल्पनं साधारणदण्डत्रयवैशाल्यसहितं चतुरश्रमथवा मण्डलाकारकल्पनं तादृशनवभौमावधिकं पतनादिभयनिरासाय पार्श्वयोः करदण्डशृङ्खलाद्युपेतं च कार्यमिति ॥

तत्र च द्वितीयभौमतले चतसृष्वपि दिक्षु स्थापितेषु चत्वरभागेषु मनोहरगवाक्षकल्पनमालोकनार्थं स्थापयेत् । तथा च भौमनवकेष्वाहत्य संख्यया षट्त्रिंशद्गवाक्षस्थापनमिति समयः । एतादृशेषु गवाक्षयुतशालाचत्वरावृतस्य तस्य मध्यकल्पनस्योपर्युपर्यारोहणार्थं द्वितीयभौमतलात् तृतीयभौमतलप्राप्तये सोपानरचना

स्थापनीया । एवं तृतीयभौमतलाच्चतुर्थभौमतलप्राप्त्यर्थमित्यनया शैल्या प्रतिभौमं सोपानकल्पनं शिल्पी युक्त्या दृढं कल्पयेत् । तत्र च सोपानकल्पने भुजङ्गपरिवेष्टनवत्क्रमेणोपर्युपर्युत्तुङ्गे कृते सति तस्य कल्पनस्य मध्यभागे कूपाकारं मध्यचत्वरमण्डलं भवेत् । तच्च मण्डलं सर्वथा प्रतिभौमतलं नाच्छादयेदिति शिल्पविदः ॥

किञ्चैतादृशीं रचनां सप्तभौमावधिकं, नवभौमावधिकं वा विरचय्य अन्तिमसौधोपरि चूलीहर्म्यवत्कञ्चन स्थलमारोहकाणां विश्रान्त्यर्थं प्रकल्प्य तत्र च चतसृष्वपि दिक्षु क्षुद्रवातायनं परिकल्प्य तदुपरिकल्पनमध्यतलस्योपरि पृथुलैकशिखरयुतं विमान-कल्पनं च रचयेदिति संप्रदायविदः ॥

किञ्चैतादृशालोकनकल्पनस्य भूतलात् शिखरान्तमौन्नत्यं तु हस्तत्रिंशत्यवधिकं मानमिति वयं वदामः । काचित्तु एतन्न्यून-मानयुतं च भवेदिति सतामाशयं नैव वयमालोडयाम इति दिक् ॥ १४ ॥

किञ्चैतादृशालोकनसौधतलेषु स्थापनीयगवाक्षलक्षणं तन्नाम-कथनेनैव शास्त्रकारोऽत्र व्यनक्ति — **पद्मपत्रगवाक्षमित्यादिना ।** शिल्पकार्येषु तावद्गवाक्षलक्षणं नवविधं भवति । यथा —

छटागवाक्षमथवा धेनुपादगवाक्षकम् ।
मृगीनेत्रगवाक्षं वा पारावतगवाक्षकम् ॥ १६ ॥

शुकनासागवाक्षं वा बहुरन्ध्रगवाक्षकम् ।
तुरगास्यगवाक्षं वा कल्पयेत्तत्र शिल्पवित् ॥ १७ ॥

---

१. पद्मपत्रगवाक्षकल्पनम् ।
२. गजनेत्र ,,
३. छटा ,,
४. धेनुपाद ,,
५. मृगीनेत्र ,,
६. पारावत ,,
७. शुकनासा ,,
८. बहुरन्ध्र ,,
९. तुरगास्यगवाक्षकल्पनं चेति ॥

एतादृशगवाक्षनामकथनेनैव तदीयरचनाशैली प्रतिपादिता, तथाऽपि शिल्पिबोधायास्माभिरपि कश्चिदर्थः प्रकाश्यते । यथा—पद्मपत्राकाररन्ध्रयुतो गवाक्षः पद्मगवाक्ष इति व्यवह्रियते, एवं गजनेत्राकाररन्ध्रान्वितो गवाक्षो गजनेत्रगवाक्ष इति । सिंहस्य छटाभारपतनाकारवत् रन्ध्रसमन्वितो गवाक्षः छटागवाक्ष इति । धेनोः खुराकाररन्ध्रयुतो धेनुपादगवाक्षः । एवं हरिणीनेत्राकार-

मुखभद्रैर्नागभद्रैश्चतुर्भद्रैर्युतं तु वा ।
अयःकीलयुतं वाऽथ शिलापट्टयुतं तु वा ॥ १८ ॥

---

विशालरन्ध्रयुतो मृगीनेत्रवातायनमिति । पारावतगवाक्षकमित्यत्र केचिद्विवदन्ते । यथा — पारावतरन्ध्राकारमिति केचित् । अन्ये तु पारावतपादसदृशरन्ध्रवदिति । एतत्सर्वमपि चिन्त्यपदवीं गाहते । शिल्पविदामाशयस्तु एतादृशचिह्नमेव पारावताकृतिसमानरन्ध्रमिति । तस्मादेवं गवाक्षे तक्षणीयमिति तत्तद्देशीयशिल्पज्ञानवतां प्राचीनशैलीमेव तदुपज्ञमित्युपदिशामः । स्पष्टमन्यत् ॥

तुरगास्यगवाक्षकल्पनम् इत्यत्रापि तत्तच्छिल्पाचार्यपरम्परोपदेशेनैव वेद्यं तल्लक्षणमिति ॥

एतादृशं सर्वमपि गवाक्षवर्गं शिलामयं वाऽयःकीलघटितसारदारुमयं वा प्रकल्प्य तस्य गवाक्षस्य बहिरन्तर्भागे च शोभार्थं मुखभद्रेण वा नागभद्रेण वा चतुर्भद्रेण वा संयुतं कल्पनं कार्यम् ॥

किंवा मुखभद्रादिलक्षणमित्याकाङ्क्षायामुच्यते । यथा — तेषां गवाक्षाणां भित्त्यादिकोणप्रान्तेषु वा भागान्तरेषु वा मौलिभागे अधःप्रदेशे च चतुर्ष्वपि दिक्कोणेषु भित्तिमध्यस्थापिताधारशिलापट्टिकोपरि यक्षगन्धर्वशुकयालीतुरगवारणपन्नगलतादिचित्रसहितं शिलामयं, दारुमयं, दन्तमयं वा कल्पनं नागभद्रनामभाग्भवति ॥

दृढसन्धानसंयुक्तं दृढकल्पनमेदुरम् ।
युक्त्या शिल्पवशात्सर्वं शुद्धान्ते चाथ हर्म्यके ॥ १९ ॥

चूलीहर्म्येषु सदनेष्वपि मानवसद्मसु ।
प्रासादे विविधे रम्ये शालास्वपि च तन्नयेत् ॥ २० ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे अन्तःपुर-
लक्षणगवाक्षलक्षणकथनं नाम
एकोनविंशोऽध्यायः ॥

---

मुखभद्रलक्षणं तु केवलमनुष्यविहगादिमुखसहितरचना-विशेष इत्यर्थः । चतुर्भद्रं तु चित्रादिविहीनं दार्ढ्यापादनाय स्थापनीययुग्मयुग्मरूपसारदारुखण्डादिरिति ॥

किञ्चैतादृशमुखभद्रादीनां लक्षणान्तराणि तु शिल्पकला-दीपिकायां विस्तरेण लक्ष्याणीत्यलं विस्तरेण । भित्तिनिर्माणाकारा-ख्यककशकारादिः शिल्पिवर्गो भित्तिभागेषु तत्र तत्र एतादृश-भेदयुतां गवाक्षावलिं स्थापयित्वा तस्या भित्तेश्च सुधालेपनादिना दृढसन्धानं कार्यमित्यादिरचना शिल्पिभिरेवं स्वयमूह्य स्थलानु-कूलं कलनीयेति ॥

किञ्चैतादृशगवाक्षस्थापनभागेषु भित्तिरेवातिदृढा कार्या । एतादृशलक्षणान्विता गवाक्षपालिस्तु अत्रोक्तालोकनमण्टपे हर्म्येषु

चन्द्रशालासु राजप्रासादेषु मानवसदनेष्वपि विविधेषु मठमण्टप-शालादिकल्पनेषु च संयोजनीयेत्याशयः ॥ २० ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायाम्

**अन्तःपुरलक्षणगवाक्षलक्षणकथनं नाम**

**एकोनविंशोऽध्यायः ॥**



अथायुधशालालक्षणपुस्तकशालालक्षणनिरूपणं नाम

## विंशोऽध्यायः ॥

तत्र प्राथमिकमायुधशालालक्षणम् ॥

देवप्रसादनप्राप्तिः जयश्रीवर्धनं तथा ।
आरोग्यवर्धनं नित्यमायुधादिनिरीक्षणात् ॥ १ ॥

तस्माद्भूपतिना स्थाप्यमायुधागारकल्पनम् ।
प्रासादमध्यभागे वा न्यायशालासमीपतः ॥ २ ॥

---

॥ विंशोऽध्यायः ॥

अथायुधशालालक्षणकथनात्मकं विंशाध्यायमारभते—**देवप्रसादनप्राप्तिरित्यादिना**। तत्रायुधशालास्थापनेन फलप्राप्तिमादौ आविष्करोति—**देवेति** । प्रथमतो देवादीनामनुग्रहप्राप्तिस्तद्द्वारा तदनु समरभूम्यादिषु विजयः,पश्चात्संप्राप्तराज्याभिवृद्धिः, सुतादिश्रेयःपरम्परा च । किञ्च प्रत्यहं तादृशायुधादीनां दर्शनेनारोग्यवृद्धिरायुर्वृद्धिरित्यादिश्रेयांसि भवेयुरिति शास्त्रकाराणामनुग्रहोपदेशपरिपाटी । नात्र सन्देहः कार्य इति भावः । तस्मात् क्षत्रियकुलोद्भवो भूपालः स्वस्य स्वकुटुम्बस्य प्रजानां चाभिवृद्धये आयुधशालास्थापनमवश्यं कुर्यादित्युक्तं भवति ॥

कुत्र वा स्थाप्येत्यत्राह — **प्रासादेति** । भूपालस्य

अथवा मध्यशालायां नित्यवैशेषिकक्रमात् ।
परशिवो हरिर्ब्रह्मा सुरेशो वरुणो मरुत् ॥ ३ ॥
गन्धर्वपतिरर्कश्च चन्द्रमाश्चित्रकार्मुकः ।

---

प्रासादमध्यभागे वा आहोस्विन्न्यायशालायाः पुरतो दक्षिणे वामे वा भागे स्थापयेत् । अथवा तां तु आयुधशालां प्रासादमुख्यकल्पनस्य मध्यशालायां वा कल्पयेत् ॥

तत्र च शैली द्विविधा । प्रत्यहं दर्शनीया खड्गादिपञ्चायुधोपेता सामान्यशाला । अन्या तु समरादिसमयेषु जयदानचणकरवालकुन्तपरश्वाद्यायुधानां स्थापनार्थं कल्पिता महायुधशालेति । अयमर्थः नित्यवैशेषिकक्रमादित्यनेन मूलवाक्येन प्रतीयत इति भावः । सति समुचिते समये भक्त्यादौ तदा भूपालादिक्षत्रियकुमारास्तामेव महायुधशालां प्रतिदिनं महाश्रेयसे दर्शयेयुरिति च ध्वन्यते ॥

अत्रेयमाशङ्का— कथं वा कुन्ताद्यायुधदर्शनेन देवप्रसादजयारोग्यादिश्रेयःप्राप्तिरिति । तत्परिहारस्तु ग्रन्थकर्त्रा अनन्तरमेव वचनशैल्योक्त इति साधवः । तदेव विशदयामः । यथा— पूर्वोक्तप्रकारेण क्षत्रियैरेव धार्याणां खड्गकुन्तकरवालाद्यायुधानामधिपतयस्तु प्रतापनिलयो जगन्नाथः परमशिवः सर्वशक्तिमयो विष्णुः सर्वमन्त्रफलदायी विरिञ्चिः वरुणदेवः, पवनाधिपः,

वैनतेयो नागराजः केतुमाली महाद्युतिः ॥ ४ ॥

वैश्वानरो यमश्चैव हेतीनामधिपा मताः ।
अत्रिर्वसिष्ठः पुलहः काश्यपो भृगुनन्दनः ॥ ५ ॥

मरीचिश्च्यवनः कण्वो विश्वामित्रो महामुनिः ।
नारदो वालखिल्यश्च वृन्दको लोकदर्शकः ॥ ६ ॥

दीर्घदर्शी कुन्दरोमा गालवः पञ्चवारकः ।
भारद्वाजः क्षत्रपालः कौशिको मधुसूदनः ॥ ७ ॥

---

कुवेरः सूर्यश्चन्द्रश्चित्रकार्मुकाख्यो देवविशेषो गरुडो नागनायको-ऽनन्तः, केतुमाल्यनामभाक्कश्चिद्गन्धर्वपतिरित्यादयो देवदेवेशाः सर्वविधायुधाधिपतय इत्यथर्ववेदोक्तमेव वचनमत्र पठित्वा तद्दशायुधदर्शनेन तेषां देवविशेषाणां दर्शनप्राप्तिः । तद्द्वारा भूपालादिक्षत्रियकुमाराणां श्रेयःपरम्परेति भावः सूचितः ॥

अत एतादृशदेवतांशभूतानामेतेषां आयुधराशीनां शक्ति-कलावेदनप्रयोगप्रतिसंहरणादिकं कथं वा कदा वा एतस्मै क्षत्रियवर्गायात्रागतमिति चेदाह — **अत्रिर्वसिष्ठः पुलह** इत्यादि-ना । अत्रिवसिष्ठपुलहादयो दीर्घतपस्संप्राप्तपरमेश्वरानुग्रहा दीर्घवर्चसः पुरा कृतत्रेताद्वापरकालेषु दुष्टनिग्रहणप्रवृत्तभूपालादि-प्रार्थनया हरिहरविरिञ्चिवासवादिदेवेशप्रेरणया च तादृशायुधानां

मुनिस्सुदर्शनः पिङ्ग इत्येते मुनिसत्तमाः ।
स्वरशक्तिक्रियाकोटिध्वनितायुरदेशिनः ॥ ८ ॥

ह्रींकारदेवः कपिलो झंकारेशः सुदर्शनः ।
नकारनाथस्स्वर्भानू रेफेशो वह्निदैवतः ॥ ९ ॥

---

महाशक्त्युपेतानां विविधशस्त्रास्त्रजालानां स्वरूपशक्तिप्रयोगादिकं स्वतपःप्रभावेण ज्ञात्वा तदीयमातृकाक्षरोच्चारणस्वरूपक्रियापाटव-शक्तिसन्धानक्रमोच्चारणप्रयोगसंहारादीन् महामन्त्रजालानि च क्षत्रवर्गायोपदिदिशुरिति भावः । अयञ्च विषयो **महाभारते** युधिष्ठिरं प्रति मुनीनामुपदेशप्रकरणे स्पष्टीकृतः ॥ ८ ॥

एतावता प्रबन्धेन किमायातमित्यत आह — **ह्रींकारदेव** इति । भूपालादिभिः श्रेयसे प्रत्यहं प्रातर्द्रष्टव्यानामेतासामायुध-श्रेणीनामाधारवेद्यां प्राचीभागे कल्पितस्य ह्रींकाराख्यमातृकाक्षर-स्याधिपतिः कपिलो मुनीश्वरः । तस्यामेव वेद्यां दक्षिणभागे कल्पितस्य झंकाराख्यमातृकाक्षरस्याधिपतिः सुदर्शननामको मुनिवरः । आहोस्वित्सर्वजयप्रदानशीलो विष्णुकराम्बुजलसमान-श्चक्रराजो वा । एवं तद्वेद्याः प्रतीचीभागे लिखितस्य नकाराख्य-मातृकाक्षरस्य स्वर्भानू राहुरधिपतिः । तथोदीचीदिग्भागे लिखितस्य रेफाख्यमातृकाक्षरस्य वह्निदेवोऽधिपतिरिति फलितार्थः ॥

तथाचैवंरीत्या सर्वायुधमातृकाक्षराधिपतीनामेतेषां कपिला-

इत्यायुधाधीशमातृगणकाक्षरशक्तयः ।
विज्ञेयाः प्रत्यहं पूज्याः स्थिरचित्तेन भूभुजा ॥ १० ॥

गन्धमाल्याक्षतैश्शुद्धैस्सर्वकामसमृद्धये ।
अस्त्राणामपि शस्त्राणां यन्त्राणां बहुरूपिणाम् ॥ ११ ॥

स्थानकं मातृकान्यासं भक्त्या सम्मानयेन्नृपः ।
कुन्तः पाशस्तरी खड्गः करवालस्सखेटकः ॥ १२ ॥

भल्लः खरः खरोद्धारो भिण्डिपालस्समेरुकः ।
शङ्कुलश्च कुठारश्च टङ्कश्शूलस्सृणिस्तथा ॥ १३ ॥

मुसलो वह्लिकाग्रश्च खलुका मुष्टिभेदनम् ।
परशुस्तरवारी च छुरिका च विदारिका ॥ १४ ॥

---

दीनां स्वरूपध्यानं तादृशायुधप्रयोगाद्युपदेष्टृणामत्रिवसिष्ठादीनां मुनिवराणां स्वरूपध्यानं तादृशायुधवर्गस्य सर्वशक्तिप्रदातॄणां परमशिवहरिविरिञ्चिप्रमुखानां देवेशवर्गाणां स्वरूपध्यानमस्त्रशस्त्रयन्त्रमुखनानायुधवर्गाणां गन्धमाल्याद्यर्चनं तेषां दर्शनञ्च कार्यमित्युक्तं भवति । अयञ्च विषयो **महालक्ष्मीरत्नकोशे उत्तरभागे, महाभारते** च प्रपञ्चितो द्रष्टव्यः ॥ १५ ॥

अथ कुन्तपाशाद्यायुधस्थापनशालाया लक्षणं प्रस्तौति —

मण्डलाग्रादयश्चान्ये परमर्मप्रभेदिनः ।
तानशेषांस्तदीशानानर्चयेत्प्रत्यहं नृपः ॥ १५ ॥

दशादिविंशतीदण्डवैशाल्येन समन्विताम् ।
प्राचीमुखां स्थापयेत्तु पञ्चप्राकारसंवृताम् ॥ १६ ॥

उत्तमाधिष्ठानभावां पञ्चशालान्वितां तथा ।
कालीं रुद्रपतिं द्वारे स्थापयेत्तत्र भूपतिः ॥ १७ ॥

महावेदीमध्यभागे क्षुद्राधिष्ठानसंयुता ।
चतुःक्षुद्रपदोपेता चतुःकर्णसमन्विता ॥ १८ ॥

---

दशादीति । पूर्वोक्तस्थाने आयुधशालामिमां कचित् यथेष्ट-वैशाल्योपेतां वा दैर्घ्यान्वितां वा प्राकारपञ्चकावृतां पञ्चशालायुतां द्वादशाङ्गणसमेतामलिन्दभागषट्कयुताञ्च प्रकल्प्य मुख्यद्वारं प्राचीदिङ्मुखं स्थापयेत् । तादृशमुख्यद्वारभागोपरितले पार्श्वयोश्च सपरिवाराया महाकाल्याः भैरव्या वा पराक्रमैकनिकेतनस्य कालरुद्रस्य वा चित्रं, प्रतिकृतिं, बिम्बं वा रचयेत् । एतादृशायुध-शालां पूर्वोक्तरीत्या उत्तमाधिष्ठाने प्रकल्पयेत् ॥

किञ्चैतस्याः शालाया मध्यभागस्थमहाशालामध्यभागस्य मध्यमे स्थले सक्षुद्राधिष्ठानां दण्डद्वयाद्यायामसहितां काञ्चन वेदीं कृत्वा तत्रैव चतुर्दिङ्मध्यभागस्थले यन्त्रस्थलमध्ये कर्णिकास्थाने पूर्वोक्तह्रींकारादिमातृबीजाक्षराणि विलिख्य तन्मध्ये क्षत्रिय-

प्रागानना नागकर्णा ब्रह्मदेवा च कीर्तिता ।
तत्र स्वर्णमये पीठे खड्गः स्थाप्यश्शुभेऽहनि ॥ १९ ॥

शालानां मध्यभागेषु कुन्तादीन्कल्पयेत्क्रमात् ।
हेतिनाथप्रतिकृतिं कल्पयेत्तत्र भित्तिषु ॥ २० ॥

एकभौमा त्रिभौमा वा शाला सा परिकीर्तिता ।
शिखरत्रयसंयुक्ता छत्रयुक्ताऽथवा मता ॥ २१ ॥

---

करधार्यं मुख्यकरवालं खड्गं वा स्वर्णपीठे स्थापयेदिति पूर्वेणान्वयः ॥

कीदृशलक्षणान्विता सा वेदीत्यत्राह — चतुर्षु दिक्कोणेषु क्षुद्रपदचतुष्कं कार्यम् । किं नाम क्षुद्रपदम ? मनुमान्धातृयुधिष्ठिरनलाख्यानां क्षत्रियकुलमणीनां धर्मविक्रमैकनिलयानां तेषां बिम्बमित्यर्थः । तद्युताभिति यावत् । अपि चैतेषु ईशानादिदिक्कोणेषु चतुष्कर्णाख्यसौवर्णचित्रयुतां नादरूपेण ब्रह्मरूपेण च समन्वितां देवीं कारयेदित्यर्थः ॥

तस्मादेवमत्र मुख्यवेद्यां प्रधानायुधं विन्यस्य चतुर्दिक्स्थितासु शालासु चतसृषु कल्पिताङ्गणवेदिकासु कुन्तादीनायुधवर्गांस्तत्र तत्र यथाक्रमं विन्यसेदिति च भावः । पिण्डितार्थस्तु — एवमत्रायुधशालाकल्पने मध्यभागस्थितायां शालायां नृपस्य

पताकालङ्कृता कल्प्या शुभे काले नृपाज्ञया ।
प्रत्यब्दं ब्राह्मणान्भूपस्तोषयेद्भोजनादिभिः ॥ २२ ॥

अथ पुस्तकशालालक्षणकथनम् ॥

खड्गसन्धारणं राज्ञश्शास्त्रसेवनमित्यपि ।
द्वयं (चैव विशेषेण) शुभप्रदमितीरितम् ॥ २३ ॥

---

मुख्यायुधं विन्यस्य तस्याः परितः स्थितासु शालासु कुन्तादिप्रहरणवर्गांश्च विन्यस्य एकसौधतलान्वितं वा भौमत्रयसहितं वा कल्पनं विरचय्य तत्र तत्र भित्तिभागेषु पताकाद्यलङ्करणानि च कृत्वा शुभे काले अस्याश्शालाया उपरितले शिखरत्रययुक्तं विमानं वा छत्राकारचित्रसहितविमानं वा स्थापयित्वा भूपालस्य जन्मनक्षत्रे वा एतच्छालाशिखरस्थापनदिननक्षत्रे वा स्वश्रेयसे आयुधवर्गाधिनेतॄणां देवानां प्रीतये च वेदपारगान् श्रोत्रियान् ब्राह्मणान् सौवर्णादिबहुविधद्रव्यदानेन पूजयेदिति शास्त्रकारोपदेशो विश्वसनीय इति घण्टापथ एवेत्यायुधशालालक्षणं सङ्ग्रहेण प्रतिपादितं ज्ञेयमिति भावः ॥

इत्यायुधशालालक्षणकथनम् ॥

एतावता प्रबन्धेन राज्ञां श्रेयःप्रदाया आयुधशालाया लक्षणं प्रतिपाद्याधुना तद्वदेव विशेषतो ज्ञानादिश्रेयोदाननिरत-

विज्ञानधर्मसुकृतसुखतत्त्वादिवर्धकम् ।
शास्त्रं भूपतिना सेव्यं नियमेन (मनीषिणा) ॥ २४ ॥

ज्ञानेन प्राप्यते लक्ष्मीर्ज्ञानेन सुखमश्नुते ।
प्राणिसंरक्षणे ज्ञानमाद्यो मन्त्रीति कथ्यते ॥ २५ ॥

गुरुदेवार्चनपरः प्राणिरक्षादृढव्रतः ।
यशसे कल्पते भूपश्शास्त्रसेवनतत्परः ॥ २६ ॥

तेन तुष्यन्ति पितरो ब्राह्मणा वेदपारगाः ।
काले वर्षति पर्जन्यो मेदिनी सस्यशालिनी ॥ २७ ॥

सुखभाजः प्रजाः सर्वा न्यायस्थितिरचञ्चला ।
इत्यादिक्षेमजनकं शास्त्रसेवनमीशितुः ॥ २८ ॥

तस्माद्भूपतिना कार्यं प्रत्यहं शास्त्रसेवनम् ।
प्रासादे नीतिभवने पुराणामपि मध्यमे ॥ २९ ॥

विदुषां मेलनस्थाने शास्त्रशालां प्रकल्पयेत् ।
चतुरश्रा शास्त्रशाला प्राङ्मुखावरणत्रया ॥ ३० ॥

---

शास्त्रशालास्थापनलक्षणं प्रस्तौति — खड्गसन्धारणमित्यादिना । भूपरिपालनकार्यनिरतानां क्षत्रियाणां बहुविधश्रेयःप्रदं कार्यं द्वयमेव । किं तत्? प्रत्यहं खड्गाद्यायुधसन्धारणं शास्त्रसेवनं चेति । तत्राद्यस्य खड्गादेः स्थापनशालालक्षणमुक्तमेव । द्वितीयस्य शास्त्रस्थापनस्थलस्य लक्षणं यथा — चतुरश्रेत्यादिना । पुस्तक-

मध्ये कल्पविधानेन प्रकल्प्या वेदवेदिका ।
मुखभद्रचतुष्केण संयुताङ्गणशोभिनी ॥ ३१ ॥

---

शालानामधेयाया अस्याः शास्त्रशालायाः कल्पनभागश्चतुरश्र-प्रमाणोपेतो भूपदण्डद्वयवैशाल्योपेतः आवरणत्रयेणावृतः स्थापनीयः ॥

किञ्चात्र पुस्तकशालाकल्पने मुख्यद्वारं प्राच्यां दिशि स्थापनीयम् । किञ्च तादृशावरणत्रयाणां मध्यभागे वेदस्वरूपिणीं चतुरश्रां वेदिकां हस्तद्वयोच्छ्रायवतीं निर्मापयेत ॥

किञ्च तादृशवेदवेदी कथंभूता ? गवाक्षलक्षणप्रकरणोक्त-लक्षणान्वितमुखभद्राख्यचित्रविशेषैश्चोपेता चतुर्दिक्कोणेष्वपि ॥

किञ्च पञ्चषसोपानयुतक्षुद्राङ्गणाख्यतलपङ्क्तिशोभिता च, सति विभवे तत्र तत्र सुवर्णपट्टसहितमध्यभागा च कल्पनीया । तस्मादेतादृशलक्षणान्वितायां वेदवेदिकायामेव हंसारूढां शारदा-देवीं, सर्वशास्त्रबीजाक्षराधारभूतं भगवन्तं तुरगवदनं, गजवदनं वा, अम्बिकया सहितं परमशिवमथवा सपरिवारामम्बिकां, सकलजगन्निवासस्थानमच्युतमिन्दिरासहितमथवा सपरिवारा-मिन्दिरां लोकमातरं बिम्बाकृतिं चित्रगतां वा स्थापयेदित्युपदेशः ॥

किञ्च देवतास्वेतासु एकां सर्वामपि वा स्थापयेदिति विकल्पश्च । तादृशवेद्याःसमीपस्थितिभाजि प्रथमावरणे एतासां

बहिरान्धारिका युक्ता वातायनशतोज्ज्वला ।
एकभौमा त्रिभौमा वा शिखरेणापि भासुरा ॥ ३२ ॥

प्रथमावरणे वेदो द्वितीयावरणे स्मृतिः ।
तृतीयावरणे चार्षं वेदनाथः परः पुमान् ॥ ३३ ॥

---

विम्बादिस्थापनमिति भावः । किञ्चात्र पुस्तकशालाकल्पने चतुरलिन्दभागवेदिकोपरितले सपीठे ऋग्यजुस्सामाथर्वणाख्य-श्रुतिजालपुस्तकपुञ्जानि स्थापयेत ॥

एवं द्वितीयावरणकल्पितचतुरलिन्दभागवेदिकोपरितले मन्वादिस्मृतिकोशान्स्थापयित्वा, तृतीयावरणतले महर्षिप्रमुखैः प्रणीतानि बहुविधानि शास्त्रपुस्तकादीनि च स्थापयेदिति शिल्पशास्त्रीयोपदेशस्सर्वैरप्यादरणीयः ॥

किञ्चात्र पुस्तकशालाकल्पनस्योपरिभागे भौमद्वयं कार्यम् । तथा च भौमत्रयसहितमेकभौमयुतं वेति विकल्पः । अपि चात्र पुस्तकशालाकल्पने तत्र तत्र द्वारभागेषु सिद्धविद्याधरगीष्पति-प्रमुखानां प्रतिकृतिं, चित्रं वा विलिख्य तत्र तत्र भित्तिभागेषु वातातपादिप्रवेशार्हगवाक्षपालिं च स्थापयित्वा मनोहराल-ङ्करणानि च रचयित्वा तादृशावरणकल्पनस्य यथेष्टप्रमाणस्य बहिःप्रदेशे विदुषां पठितॄणां च पुस्तकवाचनलेखनादिस्थानं

वाणीं हयमुखं शम्भुमुमां सपरिचारिकाम् ।
स्थापयेत्तत्र कार्यज्ञः कलशादिसमन्विताः ।
गुरुपीठसमायुक्तः प्रजानां शेमुषीप्रदः ॥ ३४ ॥

इति विश्वकर्मवास्तुशास्त्रे आयुधशाला
पुस्तकशालालक्षणकथनं नाम
विंशोऽध्यायः ॥

---

शालाकारं मण्टपाकारं वा प्रकल्पयित्वा तत्पुरतो राजकीय कुलगुरुपीठं च स्थापयेदिति भावः ॥

किञ्चैवमेव पुरेषु नगरेष्वपि तत्र तत्र समुचिते स्थले पुस्तकशालां मण्टपाकारां वा शालाकारां वा स्थापयेदिति चोपदेशः । अपि चैतादृशलक्षणान्वितसशिखरपुस्तकागारस्थापनेन किंवा प्रयोजनमित्यत आह — ज्ञानेन प्राप्यते लक्ष्मीरित्यादिना । 'ज्ञानेन' इत्यादिकः 'इत्यादिक्षेमजनकम' इत्यवधिकः पाठः स्पष्टार्थः ॥

किञ्च प्रत्यहं समुचितसमये वेदस्मृतीतिहासपुराण-सत्काव्यशास्त्रपठनादिना तत्त्वज्ञानप्राप्तिद्वारा प्रजारक्षणं क्षेम-प्राप्त्यादिकमव्याहतं भवेदित्याशयः । स्पष्टमन्यत् ॥

अत्र तेषां सुखस्फूर्तये तादृशपुस्तकागारस्थापनक्रमद्योतको-द्धारमण्डलं लिख्यते । यथा —

॥ चतुर्मुखद्वारयुतपुस्तकशालाकल्पनप्रकारः ॥







इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां विश्वकर्मवास्तुशास्त्रव्याख्यायाम्

**आयुधशालापुस्तकशालालक्षणनिरूपणं नाम विंशोऽध्यायः ॥**

अथ अन्तर्भवनलक्षणनिरूपणं नाम

## ॥ एकविंशोऽध्यायः ॥

प्रासादेष्वपि हर्म्येषु धनिनां भवनेषु च ।
विविधेष्वपि निर्माणेष्वपि मानवसद्मसु ॥ १ ॥

शालास्वपि क्वचित्कल्प्यमन्तर्गेहं विशेषतः ।
हस्तादिभिर्यथा देही गेहैस्तत्फलमाप्यते ॥ २ ॥

---

॥ एकविंशोऽध्यायः ॥

अथास्मिन्नेकविंशाध्याये राजकीयप्रासादभवनमानवसदनादिनिर्माणेषु बहुविधेषु कल्पनीयस्यान्तर्गेहस्य लक्षणं प्रतिपादयितुमादौ तत्स्थापनयोग्यस्थलं निर्दिशति — **प्रासादेष्वित्यादिना** । अत्र मानववासार्हस्थलेष्वेवान्तर्गेहलक्षणमुक्तं, न देवालयनिर्माणेष्विति प्रथमतो बोधनाक्रमः । राजकीयप्रासादेषु हर्म्येषु धनिकानां विविधेषु वासभवनेषु अन्येष्वपि विविधेषु मानवगृहेषु चत्वरेष्वेकादिशालासु, वैवाहिकशालासु विशालशालादिमासु बह्वीषु शालासु च सलक्षणमिदमन्तर्गेहं शिल्पी स्थापयेत् ॥

इत्थं स्थलप्रदर्शनानन्तरं तादृशान्तर्गेहकल्पनफलमाह — **हस्तादिभिरिति** । देही मनुष्यः करचरणाद्यङ्गैर्बहुविधं कार्यं सुखेन संपादयति, तद्वदेवैतादृशान्तर्भवनादिना पाकादिकार्योचिततत्तद्द्रव्यवर्गस्थापनद्वारा महत्फलं भवतीति विदितमेवेदम् ।

तस्माच्छिल्पविदा कार्यं कार्यनिर्माणहेतवे ।
द्वयञ्चतुष्कमथवा गेहानामष्टकं तु वा ॥ ३ ॥

कल्पयेच्छिल्पशास्त्रज्ञो द्वादशं वाऽथ षोडश ।
पूर्वद्वारतलप्रान्ते देहल्याः पार्श्वयोरपि ॥ ४ ॥

प्रथमावरणोल्लासिचत्वरेषु च मध्यमे ।
द्वितीयावरणेष्वेवं शालासु विविधासु च ॥ ५ ॥

---

साधारणमानवसदनेषु, भवनेषु, हर्म्येषु वा एकस्मिन्गृहोत्तमे तादृशान्तर्भवनद्वयमवश्यं कार्यम् । न तन्न्यूनतेति भावः । ततो यथाविभक्तमन्तर्भवनानां चतुष्कं वाऽष्टकं द्वादशकं षोडशकं वा स्थापयेदिति विकल्पः । ग्रन्थान्तरेष्वेतादृशान्तर्भवनानां षट्कदशक-चतुर्दशकषोडशकाधिकानामपि अन्तर्भवनकल्पनानां निर्माणस्या-प्युक्तत्वादौचित्याय तन्नेह प्रपञ्च्यतेऽस्माभिः ॥

तस्मादेतादृशान्तर्भवनानि पूर्वनिर्दिष्टगृहोत्तमेषु कस्मिन्वा स्थाने स्थाप्यानीत्याकाङ्क्षायां तदाह — **पूर्वद्वारतलप्रान्त** इत्यादिना । सर्वेषां मानवभवनानां गृहादीनाञ्च मुख्यद्वारं नगर-लक्षणोक्तशैल्या यत्र कुत्र वा स्थले स्थापितमपि तस्य प्रथमद्वारस्य पूर्ववेदिकायाः पार्श्वद्वये क्वचिदेकस्मिन् भागे, तथा देहल्यां पार्श्वद्वये; ततः प्रथमावरणाख्यकल्पनविशेषभागचतुष्के चत्वर-समीपाङ्गणतलेषु शालाकोणेषु द्वितीयावरणकल्पनभागेषु सर्वत्र

युग्मस्तम्भसमोपेतं युग्मतूलादिसंयुतम् ।
कारयेच्छिल्पशास्त्रज्ञो धनुर्मुष्टिद्वयादिकम् ॥ ६ ॥

---

विवाहशालादिमेषु मध्यभागशालाकोणान्तभागेषु, ततः पश्चाद्भागे तृतीयावरणस्थलेष्वपि स्थलान्तरे समुचितेषु स्वेच्छया निर्दिष्टेषु वा यथाभूलाभं यथाकल्पनं यथाविभवमेतादृशान्तर्भवनकल्पनं स्थाप्यमित्यर्थः । तथा कल्पनेऽपि एतादृशलक्षणसहितान्येव कल्पयेदिति । तत्रापि कोऽपि नियमः आयुरारोग्यवृद्ध्यादिश्रेयसे शिल्पिभिः स्वीकार्य इत्युपदेशः ॥ ५ ॥

तस्मात्तादृशान्तर्भवनादिनिर्माणेषु कानि तानि लक्षणानीत्याकाङ्क्षायां तल्लक्षणं सम्यग्विशदयति — **युग्मस्तम्भेत्यादिना** । प्रथमत इदमत्र बोध्यम् । किं तदन्तर्भवनं नाम ? क्षुद्रगृहमित्यर्थः (भाषायां அறை) । एतादृशक्षुद्रगृहं तावत्प्रायशो भागत्रये भित्तिसंवृतमेकस्मिन्भागे मध्यप्रदेशे द्वारेणैकेन युतं कार्यम् ॥

कचित्स्थलविशेषे भागद्वये भित्तिं अवशिष्टभागद्वये द्वारद्वयञ्च स्थापयेत् । अपरत्र स्थले भागत्रये द्वाराणि त्रीणि एकस्मिन्नेव भागे भित्तिम्, कचित्पूर्वादिचतुर्दिग्भित्तिमध्ये चतुर्द्वाराणि च क्रमात्कल्पयेदिति । किञ्चैतादृशभेदकल्पने तादृशद्वारकल्पने च पुरतः स्थले स्तम्भद्वयसहितामथवा सति स्थलवैशाल्ये युग्मसंख्याकस्थलोपेतां क्षुद्रशालामथवा स्तम्भ-

चतुरश्रं वर्तुलं वा कोणषट्कमथापि वा ।
कोणाष्टकसमायुक्तं युग्मपङ्क्तिसमन्वितम् ॥ ७ ॥

---

चतुष्कोपेतां शालामित्यादिकल्पनशैलीमप्यूह्य करणीयमिति क्रमः। इत्यादिकमान्तरालिकक्रमं शिल्पी स्वयमेव ज्ञात्वा तत्र तत्र मानवसदनादिषु स्थलानुकूलं यथाविभवमन्तर्भवनकल्पनमिदं कारयेदिति सङ्ग्रहेणोपदेशः ॥

इत्थंप्रकारेण सामान्यलक्षणं प्रतिपाद्याधुना विशेषलक्षणानि विशदयति—**युग्मतूलादिसंवृतमित्यादिना** । यथा युग्मसंख्याकस्तम्भकल्पनं निर्माणेषु सर्वेषु विहितं, तथैवान्तर्भवनकल्पनेष्वन्तर्भागेषु स्थापनीयतुलादारुखण्डानामपि युग्मसंख्याकल्पनं शिल्पशास्त्रनियम इति बोध्यम् ॥ ६ ॥

किञ्चेदमन्तर्भवनं चतुरश्ररूपं वा दीर्घरूपं वा वर्तुलं कोणषट्कयुतं वा कोणाष्टकयुतं वा स्थापयेदिति स्थलेच्छानुकूलविकल्पः । **न तु त्रिकोणाकारवदिति** भावः । तथा स्थापने तस्यान्तर्भवनस्य दैर्घ्यवैशाल्यप्रमाणादिकं सर्वमपि युगसंख्याकमेव । न तु एकत्रिपञ्चादिविषमसंख्येति भावः । सर्वथा धनुर्मुष्टिद्वयवैशाल्यायामान् न हीनता शस्तेति । तादृशधनुर्मुष्टिद्वयप्रमाणयुतं अन्तर्गेहं तु कृषिकार्योचितसीरशङ्कुलादिस्थापनार्हमेव । न तु जनवासायेति विश्वकर्मशिल्पसमयः ॥

द्वारयुक्तं द्वारहीनं क्वचित्तच्च प्रकल्पयेत् ।

---

तस्मात्सर्वथा ग्रामेषु नगरेष्वपि तादृशधनुर्मुष्टिचतुष्कादारभ्य पृथुलदृढमुखीकरणादिकार्योचितं प्रमाणं यथास्थलविभवं कल्पयेदिति तत्क्रमः ॥

किञ्चात्रान्तर्भवने सति विभवे युग्मपट्टरचनां स्थापयेत । युग्मपट्टं नाम द्वाराणां बहिरन्तश्च भित्तिप्रान्ते दृढार्थं फलकास्थापनमिति केचित् । वयं तु अर्गलादिनिवेशार्हस्थलं द्वारस्य कवाटस्य संयोजनाय अयःकीलबन्धश्चेति । प्रायशो द्वाराणां कवाटयुगलस्योक्तत्वात् तादृशयुग्मपट्टकल्पनमुचितं इति शिल्पविदामाशयः साधुरेवेति । न त्वत्रान्तर्भवने पूर्वप्रतिमादिशैल्या एकादिचतुर्द्वारसमेतकल्पनं न्याय्यमेव ॥

परन्तु मूले द्वारहीनमित्युक्तत्वात् द्वारविहीनकल्पनं सर्वत्रानर्हमेव । वैफल्यशोभाराहित्यादिकं च तादृशान्तर्भवनं गुहेति वक्तुमपि शक्यमिति चेन्न । द्वारहीनमित्यत्रायमाशयः । यथा तत्र तत्र सारदारुखण्डकृतद्वारकल्पनं माऽस्तु । परन्तु तादृशद्वारस्थापनस्थाने चतुःशालासम्मेलनादिस्थलेषु मुखीकरणादिसौकर्यशैल्यैव द्वाराकारं गमनागमनयोग्यमिष्टिकासुधादिभिरेव कल्पनं कार्यमिति मतिः ॥

किञ्च शिल्पकार्येषु प्रायशो द्वितलादिसौधनिर्माण-

कार्येषु एतादृशेष्टिकाद्वारकल्पनमेव सौकर्यावहमिति वचनप्रतीतेश्च । अतः कार्यविच्छिल्पी स्वीययुक्त्या गृहपत्यादेरिच्छावशेन च तत्र तत्र कल्पनस्थलानुगुणं क्वचिद्दारुखण्डमयद्वारं, क्वचिदिष्टिकाद्वारञ्च सशिलापट्टकं स्थापयेत् ॥

अत्र शिलापट्टकमित्युक्तेर्न साकल्येन शिलाखण्डकृतद्वारवत्त्वम् । किन्तु दार्ढ्यापादनाय चिरकालस्थितये च तादृशद्वाराणामधःप्रदेशे, दारुखण्डकृतद्वाराणामधःप्रदेशे, सचित्रमसृणिमशालिनी शिल्पफलकैका स्थापनीयेत्यर्थः । एवंरीत्या द्वारकल्पने क्वचिदिष्टिकामयद्वारस्थापनस्थाने सुधासहितशिलाखण्डगणैर्द्वारञ्च युज्यत इति केचित् । तच्च न मानवसदनेषु शस्तम् । परन्तु यथा मण्टपतटाककूपवाप्यादावेव तत्स्थापनमुचितमित्यन्ये ॥

एवं द्वाराणां स्थापनशैली स्थलभेदेन कल्पनभेदेन च बहुविधोक्ता भवति । तस्मात्तन्मानलक्षणादिज्ञस्तक्षककशकारादिः पूर्वोक्तरीत्या स्थलानुगुणद्वाराणि स्थापयित्वा तेषां कवाटयुग्मं वा युग्मयुग्मकवाटद्वयं, क्वचिद्ग्रामगृहेषु एकमेव कवाटं वा स्थापयेदिति क्रमः ॥

किञ्च तादृशद्वाराणां समुचिते भागे समुचितशालादि-

द्वारोपद्वारयुक्तं वा युग्मयुग्मकवाटकम् ।
अन्तर्बहिश्च भित्तीनां प्रान्तेषु क्षुद्रपट्टिका ॥ ९ ॥

समभानं पुरोमानं कल्पयेद्युक्तिपूर्वकम् ।
विषमस्थलभाङ्नैव कार्यं कुत्रापि शिल्पिभिः ॥ १० ॥

भित्तिसम्मुखभागवाऽपि न स्थाप्यं स्तम्भसंमुखम् ।
युग्मयुग्मविभेदेन समसंख्यां प्रकल्पयेत् ॥ ११ ॥

---

कल्पनेषु सव्यापसव्ययोर्भागयोर्गवाक्षद्वयं सममानं निम्नोन्नतरहितं स्थापयेत् । किञ्च तादृशद्वाराणां तरणानन्तरं तत्समीप एव तन्मानयुतमेवोपद्वारं च क्वचिदलिन्दभागयुतकल्पनाविशेषेषु बहुविधेषु हर्म्यभवनादिकल्पनेषु स्थापनीयमित्यर्थश्च प्रतीयते ॥

किञ्चैवमत्रान्तर्भवने विषमसंख्या न कार्या । तथा न स्तम्भकुड्यभित्तिकोणादिसम्मुखं स्थापनीयम् । किञ्चैकस्यां शालायां प्राचीभागेऽन्तर्भवनद्वयं कल्पितं यदि तदा प्रतीचीभागे च तन्मानमेवान्तर्भवनद्वयं तदीयद्वारगवाक्षवितानादिलक्षणोपेतं समतले स्थापनीयमित्येतत्क्रमश्च बोध्यः । इदञ्च लक्षणं साधारणग्रामगृहेषु, मानवसदनेषु, धनिकभवनेषु, राजकीयहर्म्य-प्रासादेषु, बहुसौधमञ्जुलकलनेषु अवश्यं कल्पनीयमिति शिल्पिनां संप्रदायो बोध्यः श्रेयस्करः शोभाजनकः सौकर्यावहश्चेति साधवः ॥

द्वयोस्तु मध्यमे भागे वेदिर्वैवाहिकी मता ।
नानासनसमोपेतं दीपभागविराजितम् ॥

किञ्च शैल्या तयाऽन्तर्गेहकल्पनेऽपि तादृशद्वाराणि चतुश्शालासम्मेलनस्थलेषु वा तत्र तत्र चत्वरमध्यसूत्रपातीनि स्थाप्यानि; न पार्श्वयोः गमनागमनसूत्रवन्तीति । किञ्च तेषां द्वाराणामौन्नत्यवैशाल्यादिमानेषु प्रायशः परस्परं न वैषम्यभाक्त्वं कल्पनीयमिति नियमेन क्वचित्प्रथमद्वारवैशाल्यापेक्षया द्वितीयद्वारस्य किञ्चिन्न्यूनप्रमाणत्वं; तृतीयद्वारे तदपेक्षया किञ्चिन्न्यूनत्वं ; तदपेक्षया किञ्चिन्न्यूनत्वं चतुर्थद्वार इत्यादिकः क्रमस्तु साधारणमानवभवनेष्वेव कल्पनीयः । धनिनां भवनेषु भूपालानां हर्म्यप्रासादेषु सर्वत्र भौमतलकल्पनेष्वपि द्वाराणां परस्परमौन्नत्यवैशाल्यादिप्रमाणं सममेव स्थापनीयम् । तदानीमेव तेषां भौमतलकल्पनानां शोभादार्ढ्यादिकं कल्पनसौकर्यादिकं सौन्दर्यादिकञ्चेति शिल्पसमयः ॥ ११ ॥

किञ्चैवंरीत्या भवनेषु स्थापितानां अन्तर्गेहयोरन्तर्गेहानां मध्ये वा क्वचित् स्थले वैवाहिकवेदिरिव क्षुद्रवेदी हंसादिचित्रयुता भूतले सुधादिरचनोपेता निर्मापणीया ॥

किञ्च तादृशभवनस्य मध्यभागे वा प्रान्तभागेषु वा उन्नतफलकासनक्षुद्रखट्वमहाखट्वशयनासनादीनि दीपस्थापनतलानि च युक्त्या तत्र तत्र स्थलेऽन्तर्भवनप्रमाणानुगुणं स्थापयेत् ॥

अन्तर्गृहं बहुविधं कारयेच्छिल्पतन्त्रवित् ॥ १२ ॥

इति विश्वकर्मप्रणीते **विश्वकर्मवास्तुशास्त्रे**

अन्तर्भवनलक्षणनिरूपणं नाम

॥ एकविंशोऽध्यायः ॥

---

अपि चैतादृशान्तर्गेहानां भित्तिमानेषु औन्नत्यं पटलावरण-गोपानसीभागेषु समप्रमाणं, समसंख्यात्वं, निम्नोन्नतराहित्यं, दृढार्गलसहितकवाटद्वयचतुष्काद्युपेतञ्च शिल्पिवर्गो युक्त्या तत्तत्स्थलानुकूलं अन्यत्कल्पनञ्च रचयेदिति संग्रहेणान्तर्भवन-लक्षणमुक्तं बोध्यम् ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां

विश्वकर्मवास्तुशास्त्रव्याख्यायां

**अन्तर्भवनलक्षणनिरूपणं नाम**

**॥ एकविंशोऽध्यायः ॥**



अथ भोजनशालालक्षणनिरूपणं नाम

## द्वाविंशोऽध्यायः ॥

पृथिव्यादिमहाभूतैर्निर्मिता मानुषी तनुः ।
तस्मात्तदुत्थसद्द्रव्यैस्तस्याः पोषणमीरितम् ॥ १ ॥

यथाकालं पक्वमन्नं भक्ष्यं खाद्यञ्च लेह्यकम् ।
भुञ्जीयान्मतिमान्देही स्थाने सल्लक्षणान्विते ॥ २ ॥

तस्मात्सुखादिश्रेयोऽर्थी भोजनागारमुत्तमम् ।
स्थापयेत्स्वगृहे नित्यं नैमित्तिकमिदं बुधः ॥ ३ ॥

---

॥ द्वाविंशोऽध्यायः ॥

अथ भोजनशालालक्षणकथनात्मकं द्वाविंशाध्यायमारभते— **पृथिव्यादिमहाभूतैरिति ।** पृथिव्यप्तेजोवाय्वाकाशाख्यमहाभूतपञ्चकांशैरेव ब्रह्मणा मानुषी तनुः सृष्टा । तस्मात्कारणात्तादृशपृथिव्यादिपञ्चभूतेभ्यः प्रवृद्धैस्तण्डुलाढकचणकशाकादिवर्गैरेव सा मानुषी तनुः पोषणीयेति शास्त्रकारवचनम् ॥

तथा तादृशभोज्यखाद्यचोष्यलेह्यादीनां पक्वपदार्थानां क्षुन्निवारणाय स्वीकरणेऽपि यथाकालं सम्यक् पक्वमुत्तमस्थलेष्वेव भोक्तव्यमित्यादिको विषयो **भोजनकुतूहलाख्यपाकशास्त्रग्रन्थेषु** प्रसिद्ध एव । तस्मादुत्तमस्थलजायमानसुखजीर्णारोग्यपुष्ट्यायुर्वर्धनादिसुखापेक्षी पुमान् यथाशक्ति स्वीयसदने भोजनस्थलं

युग्मदण्डसमोपेतं दैर्घ्यं विंशतिदण्डकम् ।
नैमित्तिके कल्पने तु मध्यभित्तिसमन्वितम् ॥ ४ ॥

---

यथाशास्त्रप्रमाणं कल्पयेदित्युक्तं भवति । तच्च भोजनागारं द्विविधम्— नित्यभोजनागारम् , नैमित्तिककालभोजनागारञ्चेति ॥

किञ्च तत्रैवं व्यवहारः । यथा — ग्रामेषु क्वचित्पुरेषु स्थलान्तरेषु च क्षुद्रेषु साधारणमानवगृहेषु भोजनागारमिति लोकव्यवहार उच्यते । प्रथमतो निर्दिष्टग्रामगृहभोजनस्थलप्रमाणापेक्षया अतिवैशाल्यायामयुतत्वेन भवनादौ तस्य शालारूपेण कल्पितत्वा-दित्ययमर्थः अगारशालापदेनैव सूच्यते । तस्मादाद्यस्य ग्रामगृह-भोजनागारस्य प्रमाणं तु साधारणदण्डद्वयमारभ्य विंशतिदण्डा-वधिकदैर्घ्ययुतमिति भावः । वैशाल्यञ्च तथा साधारणदण्डद्वय-मेवेति वाक्यार्थः स्फुरत्येव । द्वितीयस्य धनिकभूपालादिभवनेषु कल्पितस्य भोजनशालाख्यकल्पनस्य प्रमाणं तु तद्द्विगुणितमिति भावः ॥

अस्य विवृतिर्यथा — धनिकादिभवनकल्पितभोजनशालाया वैशाल्यं भूपदण्डद्वयप्रमाणम् । दैर्घ्यन्तु भूपदण्डविंशत्यवधिकमिति । किञ्चास्यां शालायां मध्ये मध्ये समुचिते स्थले षड्वाऽष्टौ वा दश वा महाङ्गणानि प्रकल्प्य तेषामङ्गणानां मध्यभागे भक्ष्यलेह्यखाद्य-व्यञ्जनादिभोजनद्रव्यस्थापनवेदिकां द्वित्र्यङ्गुलौन्नत्यां चतुरश्रां स्थापयेत् ॥

अथवा स्तम्भपञ्चाशद्द्वारस्तम्भद्वयान्वितम् ।
पार्श्वयोरुभयोः स्थाप्यं चत्वारिंशत्पदं पृथु ॥ ५ ॥

भक्ष्यादिस्थापनार्थाय वेदिमध्येऽर्कपादका ।

---

किञ्च तादृशभोजनस्थापनवेद्याः पुरतः पश्चाच्च पङ्क्तिद्वयरीत्या भोक्तृणामासनादिकं स्थाप्यमिति समयः । तथा चेमां धनिकभूपालादिभोजनशालां द्विपञ्चाशत्स्तम्भोपेतां तादृशभूपदण्डविंशतिकदैर्घ्यान्विताञ्च कारयेदिति फलति । अयमेव शालाकारकल्पनप्रकार इति भावः ॥

कथं वा प्रकल्पनशैलीत्याकाङ्क्षायां शिल्पिस्थपत्यादिसुखबोधनाय तन्निर्माणक्रमोऽस्माभिर्लिख्यते । उद्धारमण्डललेखनेन च प्रकाश्यते । यथा— अस्यास्तु धनिकभोजनशालायाः प्रत्येकं स्तम्भदशकोपेता चतुश्श्रेणिका सव्यापसव्यभागयोःस्थाप्या । तथा च तथा स्थापने अङ्गणत्रयं भवति । तत्र च मध्यमाङ्गणस्य मध्यभाग एव कश्चिन्मण्डपः स्तम्भद्वादशयुतः कल्पनीयः । तस्मिन्नेव मण्टपे पूर्वोक्तमानयुतायां अधःकल्पितक्षुद्रवेद्यां भक्ष्यभोज्यव्यञ्जनादिस्थापनमिति भावः । एवं करणे तत्रोपविष्टानां भोक्तृजनानां परिवेषणसौकर्यादिकमिति चान्तरालिको भावः । अपि चैतस्यां भोजनशालायां उभयोः पार्श्वयोः पीठाद्यासनानि स्थाप्यानि । तत्र देशभेदेन इष्टिकासुधादिभिः स्थिरत्वेन कल्पनं,

वातातपप्रवेशार्हा विभक्ताङ्गणशेखरा ॥ ६ ॥
एकाङ्गणेन युक्ता वा चाङ्गणद्वयभासुरा ।
शाला भैक्षुकभोज्यार्हा वेदिकोपरि कीर्तिता ॥ ७ ॥

स्निग्धं भूमितलं कार्यं दीपासनसमन्वितम् ।
पीठादिरचनोपेतं कल्पयेच्च मनोहरम् ॥ ८ ॥

भैक्षुकाणां यतीनाञ्च स्थानमन्यत्प्रकीर्तितम् ।

---

दारुखण्डेन फलकादिना तात्कालिकपीठस्थापनकल्पनञ्चेति द्विविधं वा यथाचारमनुष्ठेयम् ॥

किञ्चास्याश्शालायाः पार्श्वभागे यदि भित्तिनिर्माणमातितुङ्गं विरचितं तदा तत्र वातातपादिप्रवेशयोग्यगवाक्षकल्पनं तत्र तत्र समुचिते स्थले दीपस्थापनतलञ्च प्रकल्प्य भूतलमतिस्निग्धं सुधालिप्तमथवेष्टिकादिलिप्तं सचित्ररचनमधःपट्टिकाख्यरङ्गवल्ल्यादिरचनोपेतं निर्मापणीयमिति सङ्क्षेपेणास्याः धनिकभूपालभोजनशालाया लक्षणकल्पनम् । एकभौममेव मध्यमाङ्गणमध्यतलकल्पितान्नवेद्या उपरिभागे क्षुद्रशिखररचना वा कूटो वा जंबिका वा क्षुद्रकलशान्वितचतुरश्रवर्तुलादिकल्पनं वा कार्यमित्यादिलक्षणान्तराणि तु स्वयमेवोह्य शिल्पिभिः कार्याणीति भावः ॥

प्रसङ्गादत्र स्थलान्तरलक्षणमप्युच्यते। यथा—**भैक्षुकाणामि**त्यादिना। समयेष्वागन्तुकानां भैक्ष्ययाचिनां यतीनां परिव्राजकादीनां

पृथगेव तथा कल्प्यं स्थानं माणवकादिनाम् ॥ ९ ॥
पितॄणां स्थानमन्यच्च कीर्तितं तन्त्रपारगैः ।
योषितां भोजनस्थानं पृथगेव प्रकल्पयेत् ॥ १० ॥

---

भोजनस्थलं तु पृथगेव स्थापनीयम् । न मानवभोजनागार एव तान् भोजयेदिति भावः । तच्च यतीनां भोजनस्थानं तावत पृथक् चतुरश्रवेदिकारूपं अथवाऽष्टकोणरूपं मण्डलाकारं वा वेदिकास्थानं प्रकल्प्य तदुपरि एणाजिनं च स्थाप्यमिति मतिः । एवं वेद-शास्त्राभ्यसनशीलानां विद्यार्थिनां वटूनां भोजनस्थानं क्षुद्रशालारूपम् अथवा महाशालारूपमङ्गणचतुष्कादियुतं यथा-वटुसंख्यं वैशाल्यादियुतञ्च कारयेत ॥

एवं व्रतश्राद्धादिदिनेषु आवाहनीयापितॄणां वस्वादिरूपाणां श्रोत्रियब्राह्मणानां भोजनस्थानं शुद्धस्थले समुचिते पृथगेव कार्यम् । तच्च चतुरश्रमासनं वा यथास्थलविभवमासनं कल्प्य-मिति समयः । न मण्डलाकारकोणाकारकल्पनमेषां शुद्धये चेति । इदञ्च श्राद्धनिमन्त्रितब्राह्मणभोजनस्थलं एकाङ्गणयुतम्, अथवाऽङ्गणद्वयातिभासुरं स्तम्भचतुष्कसहितमथवा शालारूपं कल्पयित्वा तस्य दक्षिणाननमेव स्थापयेदिति पितृतृप्तिकार्यज्ञाः शिल्पतन्त्रपारङ्गताश्च ॥

एवं योषितां भोजनशालाऽपि पृथगेव स्थाप्या । तत्कल्पनं

मध्ये चत्वरसंयुक्तशालाभिस्तिसृभिस्तु वा ।
द्वाभ्यामुपेतमथवा चतुरङ्गणभासुरा ॥ ११ ॥

वर्तुलादिकमेतत्तु कारयेन्न कदाचन ।

---

मण्डलरूपमथवा शालारूपं मङ्गलवेदिकोपेतं चतुरश्रमायतं वा प्रकल्पयेत् । भवनवास्तुमानवदेव स्थापयेदित्यन्ये । अत्रापि वङ्गकोसलपाञ्चालकुरुकेकयमगधचोळपाण्ड्यादि देशीय शिष्टाचारकल्पनमेव युक्तं पश्यामः ॥

पिण्डितार्थस्तु सर्वत्र ग्रामपुरादिषु गृहादौ यतिपतिपरिव्राजकादीनां भोजनस्थलं समुचितशुद्धभूमौ वेदीरूपकल्पनं पृथगेव कार्यम् । अन्येषान्तु माणवकपितृसीमान्तिनीगृहपतिप्रमुखभोजनागारं तु मध्यचत्वरसमेतं प्राच्यादिचतुर्दिग्भागेषु चतुश्शालासंयुतकल्पनमथवा शालात्रयावृतमथवा स्थलवैपुल्याद्यभावे शालाद्वयसमेतं वा कल्प्यम् । ग्रामगृहेष्वेकशालायुतकल्पनमपि न दोषायेति संप्रदायः । इदञ्च भोजनागारं ग्रामगृहेषु नगरभवनसदनादिषु भूपालहर्म्यप्रासादादिषु पश्चाद्भाग एव स्थापनीयमिति शास्त्रीयनियमो नोल्लङ्घनीयः । कुतः? तदादरवतां विश्वस्तानां तद्रीत्या कल्पनं बहुविधश्रेयःप्रदमिति वास्तुलक्षणविदः ॥

कुत्र वा पश्चाद्भागस्थलनिर्देशः? उच्यते — सर्वत्र ग्रामनगरगृहादिषु दैर्घ्यान्विते चतुरश्रे वा कल्पने दण्डेन रज्जु

सूत्रादिना वा त्रेधा सममानं विभक्ते प्रथमभागे उत्तरत्र प्रतिपादयिष्यमाणलक्षणान्वितं लक्ष्मीद्वारं प्राथमिकं स्थाप्यम् । तद्द्वारप्रदेशमारभ्य देहलीशालासीमावधिकः प्रथमावरणनामकः पूर्वभागः ॥

ततश्चत्वरवास्थलाख्यचत्वरवैवाहिकशालादिबहुशालायुतस्य उपरिभागे एकादिभौमतलयुक्तस्य कल्पनस्य द्वितीयावरण-नामकस्य मध्यभाग इति नामान्तरम् ॥

ततः पाकादिकार्योचितबहुविधद्रव्यस्थापनार्हान्तर्गेह-कूपचत्वरशालाभोजनशालादिकल्पनसमेतस्य निर्माणस्य तृतीया-वरणनामकस्य पश्चाद्भाग इति नाम । तादृशपश्चाद्भागे तद्वास्तु-भागे गृहमहानसमाग्नेय्यां, क्वचित् देशेषु विन्ध्योत्तरेषु वायव्यां प्राच्यां वा दिशि स्थापयेत । तत्रैव पुरोभागे पुरश्शालान्तर्भवना-द्युपेते तादृशपचनागारद्रव्यराशींश्च स्थापयेत् । किञ्च तदनुगुणं तस्य कल्पनमन्तर्गेहलक्षणान्वितं कारयेदित्यन्ये ॥

सर्वथा प्रायशो देशेषु वास्तुस्थलानुगुणं महानसवास्तुसीमनि आग्नेयभागे चुल्लीं निधाय व्यञ्जनादिपाकक्रियारचनोपयोगिनां दधिघृततैलभाण्डादीनां स्थापनस्थलञ्च तत्रैव कल्पयेत । किञ्च तस्य पाकभवनस्य पूर्वभाग एवैतादृशलक्षणान्वितां भोजनशाला-मेतयोः कल्पनयोर्मध्ये इष्टदेवतानित्यपूजार्हस्थानञ्च क्षुद्रगृहरूपं क्षुद्रशालारूपं वा यथास्थलादिविभवं प्रकल्पयेदिति ।पिण्डितार्थः ॥

वटूनां प्राङ्मुखः पीठः पितृणामुत्तराननः ॥ १२ ॥
ऐन्द्रं वारुणकं शिल्पी पुंसां श्रेयःप्रदो मतः ।
योषितां प्राङ्मुखश्शस्तः सौभाग्यतनयप्रदः ॥ १३ ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे
भोजनशालालक्षणनिरूपणं नाम
॥ द्वाविंशोऽध्यायः ॥

---

तथा च तत्र भोजनशालायां विद्यार्थिनां माणवकादीनां भोजनासनं प्राङ्मुखं कार्यम् । श्राद्धव्रतदिनादिषु आवाहनीयपित्रादीनां भोजनासनमुदङ्मुखं कार्यम् । पुंसां कन्यकानां माङ्गल्यवतीनां योषितां च भोजनासनानि प्राचीमुखान्याहोस्वित् प्रतीचीमुखानि तदुभयमुखानि च तासां सौभाग्यसुतादिदायीनीति महर्षयस्तत्त्वविदः । अत एव विवाहादिसमयेष्वपि कन्यकायोषिदादीनां प्राङ्मुखोपवेशनं स्मृत्यादिषु प्रसिद्धम् । तस्मादेतादृशशुभमुखभासुरं नानाविधं भोजनार्थं पीठं प्रकल्प्य तत्र भोजनशालायां यथाकालमीश्वरध्यानपूर्वकं सन्ध्यासेवनानन्तरं श्रेयसे भुञ्जीयादित्यर्थः ॥

एतादृशभोजनागारवास्तुस्थलस्यारोग्यदायी सूर्योऽन्नाभिवृद्धिदायिनी धेनुदेवता चाधिपतिरिति शास्त्रज्ञाः । पूर्वोक्तरीत्या मध्यचत्वरं पार्श्वयोरेकादिचतुश्शालासमेतं क्वचिच्छालाष्टकसमेतं कल्पनीयं कल्पनं तल्लक्षणान्तराणि च स्वयमेवोह्य शिल्पी सूक्ष्मबुद्धिः सुखावहं मनोहरं कल्पयेत् ॥

किञ्चेदं भोजनस्थानकल्पनं शिल्पज्ञः स्थपत्यादिः विप्रक्षत्रियवैश्यादिजातिभेदात्पूर्ववत्तत्कल्पनलक्षणान्तराणि च

ज्ञात्वा यथाविधि प्रकल्पयेदित्यर्थः निगद्यते । तथाऽप्यत्र प्रसिद्ध-लक्षणत्वेन निर्दिष्टस्य द्विपञ्चाशत्पादसमेतस्य धनिकभूपाल-भोजनागारस्य कल्पनशैलीस्फूर्तये उद्धारो लिख्यते । यथा —

**धनिकभूपालभवनादिषु (52) स्तम्भसमेतस्य भोजनशालाकल्पनस्य प्रकारोद्धारः ॥**



अस्या भोजनशालाया मध्यभागे स्थापितस्य द्वादशस्तम्भयुतस्य मण्टपाकारकल्पनविशेषस्य मध्यवेदिकायां चिह्नितायामेव पूर्वप्रतिपादितरीत्या परिवेषणात् पूर्वं भक्ष्यखाद्यभोज्यादि स्थाप्यमिति संक्षेपेण भोजनशालालक्षणं बोध्यम् ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधेन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
**भोजनशालालक्षणकथनं नाम**
**द्वाविंशोऽध्यायः**



अथ शय्यागृहलक्षणकथनं नाम

## त्रयोविंशोऽध्यायः ॥

मनोहरस्थले शय्या बलमेधादिवर्धिनी ।
तस्मात्सर्वैः प्रकर्तव्यं शय्यागेहं मनोहरम् ॥ १ ॥

प्रासादशालापुरतः शालान्तःस्थलभागिके ।
अलिन्दशालयोः कल्प्यमथवा कूटसद्मसु ॥ २ ॥

---

॥ त्रयोविंशोऽध्यायः ॥

अथास्मिंस्त्रयोविंशे शय्यागृहलक्षणम् । आदौ तत्कल्पनमाह—**मनोहरस्थल इत्यादिना** । भगवद्ध्यानपूर्वकं भुक्त्वाऽनन्तरं निशादिषु समुचितसमयेषु मनोहरस्थलकल्पितशय्यायां निद्राप्राप्तिरेव मानवानामारोग्यबलबुद्ध्यादिवर्धनकरीति शास्त्रसंप्रतिपन्नमेव। तस्मात्सर्वैरपि सुखेप्सुभिः शय्यागेहं मनोहरं सलक्षणं कारयेदित्युपदेशः ॥

तस्य शय्यागेहस्य किं वा विशेषलक्षणम्? कुत्र वा स्थाप्यमिति चेदाह—धनिकानां भूपालादीनां भवनहर्म्यप्रासादादिकल्पनस्य प्राथमिकद्वारसमीपे, पूर्वभागवेदिकासमीपे वा, अथवा तत्पश्चाद्भागेऽलिन्दस्थाने वा शय्यागेहं स्थापनीयम् ॥

एवं प्रथमावरणे स्थापनसौकर्याद्यभावे द्वितीयावरणतलस्थापितकल्याणशालायाः शालानां वा पूर्वभागे वास्थलाख्य-

भौमादिषून्नततलेष्वपि गन्धानिलान्विते ।
स्थलेषु नातिशीतोष्णेष्वपि शय्यास्थलं मतम् ॥ ३ ॥

क्षुद्राधिष्ठानसंयुक्तं सोपानसहितं तु वा ।

---

मध्यचत्वरसमसूत्रं कल्पितायां मध्यभागशालायां वा शय्यास्थानं कल्प्यम् । एतावता वाक्येन **गृहेषु भवनेषु च पूर्वभागद्वितीयभागयोरेव शय्यागेहं सुखावहं, नान्यत्र पश्चाद्भागादिष्विति** शय्यास्थलनिर्देशः ॥ २ ॥

एवं ग्रामगृहपुरगृहेषु साधारणमानवभवनेष्वपि कल्प्यस्य शय्यागेहस्य स्थलनिर्देशनं प्रतिपादितम् । अधुना नगरराजधान्यादिषु भूपालादीनां भवनेषु कल्पनीयशय्यागेहस्थलं निर्दिशति — **भौमादिष्विति** । एकादिबहुभौमकल्पने यदि निर्मिते तदा द्वितीयभौमे वा तृतीयभौमे वा **सुगन्धानिलसेवनार्हे** तले तादृशशय्यागेहं स्थापयेत् । किञ्च सर्वत्र नातिशीतोष्णस्थल एव शय्यागेहं पृथग्वा भवननिर्माणसहितं वा सुखवातसेवनार्हं कारयेदिति स्थलकथनम् ॥

शय्यागेहं कथंभूतम् ? क्षुद्राधिष्ठानसंयुक्तमिति । कथं वा अत्राधिष्ठानं उक्तं ? तच्च शिलारूपमिष्टिकारूपं दारुमयं वेति चेत्तदाह — अत्रोक्तेनाधिष्ठानशब्देन न मण्टपाद्यर्थं शिलाधिष्ठानकल्प्यमानपद्मकुमुदगळवाजनादिरचनोच्यते । परन्तु वितस्ति-

एकद्वित्रिचतुर्द्वारं प्रान्तशालावृतं तु वा ॥ ४ ॥

दण्डद्वयादिकं मानं शालाकारं प्रकल्पयेत् ।
अन्तर्गेहसमं वाऽपि मण्डलाकारभाक्तथा ॥ ५ ॥

---

द्वयोत्तुङ्गं भूमितलं विधायाधोभित्तिभागेषु दार्ढ्यशोभाद्यर्थं सुधाखण्डलेपनादिना भूतलचित्रयुतमित्यादिविहिताधिष्ठानकल्पनसहितं निर्माणमुच्यत इति । नेपालकेरलादिदेशेषु बहुविधसारदारुप्रधानेषु क्वचिदेतच्छय्यागेहं सारदारुफलकामयमेव कुर्वन्ति । तदा एतादृशरचनादिकं सर्वमपि दारुमयमेवेति भावः । इदं तु लक्षणमिष्टिकासुधामिश्रितकृतभवननिर्माणविषयमिति शास्त्रवचनमादरणीयम् ॥

किञ्चैतादृशाधिष्ठानाकलने पूर्वोक्तरीत्या औन्नत्याय चतुर्भिः पञ्चभिर्वा सोपानैरुपेतमिदं शय्यागारं विरचय्य एकद्वारयुतं, द्वारयुग्मसहितमथवा द्वारत्रयसहितमाहोस्विद्भूपालादीनामिच्छया चतुर्ष्वपि भित्तिभागेषु चतुर्द्वारसमेतं भित्तिकल्पनं करणीयमिति समयः ॥ ४ ॥

किञ्चास्य शय्यागेहस्य वैशाल्यं तु पूर्वोक्तरीत्या ग्रामगृहेषु साधारणदण्डद्वयम् , आयामे दण्डानां चतुष्कं पञ्चकं षट्कं वेति । एवं नगरराजधान्यादिषु कल्पितस्य भूपालधनिकादिशय्यागारस्य वैशाल्यमायामादिकमपि भूपदण्डमानवशादेतत्संख्याकमेव भवती,

चतुरश्रं कल्पनं वा कोणपट्टादिसंयुतम् ।
युग्मवातायनयुतमेकवातायनं तु वा ॥ ६ ॥

युग्मस्तम्भकशालं वा पट्टसोपानसंयुतम् ।
सवितानं सोपशालं पञ्जरादिसमन्वितम् ॥ ७ ॥

मध्यवेदिकया युक्तं तत्र दीपं प्रकल्पयेत् ।
प्राच्यामुदीच्यां तु मुखं कल्पनीयं सतोरणम् ॥ ८ ॥

---

त्यर्थः । तथा च ग्रामगेहकल्पितशय्यागेहस्य द्विगुणितं मानमित्युक्तं भवति ॥

किञ्च शय्यागेहं कथंभूतमिति चेदाह— शय्यागेहमिदं परितः स्थितिमतां कल्पनानामविरोधेन परितो युग्मस्तम्भजालान्वितं कल्पनं वा कार्यम् । अथवेदं शयनगेहं चतुरश्रमायतं मण्डलाकारं कोणाष्टकयुतं वा समीपस्थापितेन शालादिकल्पनेन सहितं वा अतिदूरस्थले पृथग्वा प्रकल्पयेत् । तदा तादृशशालाया एतस्य शय्यागेहस्य च मध्ये चन्द्रिकापतनादियोग्यं तत्तद्देशीयशीतोष्णानुगुणं क्षुद्रचत्वरनिर्माणं कार्यमित्याशयः ॥

किञ्चात्र शय्यासदने एकं वातायनमथवा गवाक्षद्वयादिकञ्च स्थापयित्वा अन्तरुपरिभागे वितानाद्यलङ्करणाय पञ्जरादिसहितं कूटादिनिर्माणं स्थापयित्वा तद्गेहमध्यभागे चतुरस्रसमसूत्रपातमानं मध्ये क्षुद्रवेद्यादिकञ्च कृत्वा तत्र दीप-

ससोपानं सखट्वादि कारयेच्छिल्पवित्तमः ।
दक्षिणस्यां शिरोभागः प्रतीच्यां वा विशेषतः ॥ ९ ॥

पार्श्वयोर्मङ्गलद्रव्यस्थापनं शुभवर्धकम् ।
मुकुरादिसमोपेतं जलपात्रेण मञ्जुलम् ॥ १० ॥

कल्पनीयो द्वारभागे गन्धर्वश्शरहस्तकः ।
चन्द्रस्यार्कस्य वा बिम्बं कल्पयेत्तत्र मानवित् ॥११॥

इति विश्वकर्मप्रणीते **विश्वकर्मवास्तुशास्त्रे**

शय्यागृहलक्षणकथनं नाम

॥ त्रयोविंशोऽध्यायः ॥

---

स्तम्भादीनि प्रकल्पयेत् । किञ्चास्य शय्यासदनस्य मुख्यं द्वारं सतोरणं प्राच्यामुदीच्यां वा कारयेत् ॥ ८ ॥

अपि चात्र कल्पनेऽन्तर्भागे सोपानयुतमहाखट्वं वा पर्यङ्कादिशयनसामग्रीं वा यथाविभवं कृत्वा शयालोः पुरुषस्य शिरोभागकल्पनं दक्षिणदिग्भागगतमाहोस्वित्प्रतीचीभागगतं वा करणीयम् ॥

किञ्चोभयपार्श्वयोर्माल्यगन्धादिस्थापनस्थलं कृत्वा सर्वतो भित्त्यादिस्थलेषु मुकुरादिमनोहरद्रव्याणि चित्ताकर्षकचित्रादि-रचनादीनि च प्रकल्पयेत् ॥

किञ्चास्य शयनसदनस्य द्वारभागे बहिःप्रदेशे पार्श्वयो-रुभयोरपि चन्द्रसूर्यबिम्बं भित्तिभागे विलिख्य गन्धर्वं शरहस्तकं चान्तर्बहिर्वा कल्पयेत ॥

एवं कल्पनं तु अन्तश्शयनभाजां रक्षकं; तेषां सुखादि-प्रदमिति च शास्त्रविदां समयः। इति संक्षेपेण शयनागार-लक्षणमुक्तं बोध्यम्। लक्षणान्तराणि तु देशभेदेन शिल्पिभिः परम्परोपदेशनिर्माणकार्यकौशलादिना विज्ञेयानीति भावः ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां

विश्वकर्मवास्तुशास्त्रव्याख्यायाम्

**शय्यागृहलक्षणकथनं नाम**

**त्रयोविंशोऽध्यायः ॥**



अथ वसन्तगृहलक्षणकथनं नाम

## ॥ चतुर्विंशोऽध्यायः ॥

सार्वभौमादिभिर्भूपैर्मोदाय मधुसेवनम् ।
काले कार्यमिति प्रोक्तं तन्त्रविद्भिर्मुनीश्वरैः ॥ १ ॥

तस्मात्तत्कल्पयेत्पुर्यामुद्याने भवनान्तरे ।
परितस्तु चतुश्शालं जलकुम्भादिशीतलम् ॥ २ ॥

प्राङ्मुखं कल्पनं शस्तं तदेव प्रीतिदायकम् ।

---

॥ चतुर्विंशोऽध्यायः ॥

अथ वसन्तगृहलक्षणकथनात्मकं चतुर्विंशाध्यायमुपक्रमते—सार्वभौमादिभिरिति । सार्वभौमादिभिर्भूपालैर्धनिकैश्च आरोग्यप्रहर्षाद्यभिवृद्धये वसन्तसमयेषु वसन्ताविर्भावमहोत्सवोऽनुभोक्तव्य इति तन्त्रविद्भिर्मुनीश्वरैरुक्तत्वात्तदुत्सवसेवनार्हवसन्तगृहनिर्माणलक्षणमाह—परितस्तु चतुश्शालमित्यादिना । तच्च वसन्तसदनं सर्वतोभद्रादिनगरेषु समुचिते स्थले उद्यानभागे वा प्रकल्पयेत् । अथवा स्थलवैशाल्ये भूपालधनिकादिभिः स्वकीयहर्म्यप्रासादभवनसीमान्तर्गत एव स्थले समुचिते तत्रोद्यानभागे वा प्रकल्पयेदिति स्थलानुकूलविकल्पः ॥

किञ्च तादृशवसन्तसदनं प्राङ्मुखकल्पनोपेतमेव शुभप्रदमित्यर्थः 'तदेव प्रीतिदायकम्' इति मूलवचनेन प्रतीयते । किञ्च

चतुर्दण्डप्रमाणेन हीनं नोत्तममीरितम् ॥ ३ ॥

चतुश्शालावृते मध्यभागे मण्डलकल्पनम् ।
विश्रान्तिवेदी तत्रैव गन्धशैत्यादिभासुरा ॥ ४ ॥

चत्वरादिसमोपेता सालङ्कारा सतोरणा ।
सुखीकरणयुक्तं वा मण्टपाकृति वा भवेत् ॥ ५ ॥

---

तत्र वसन्तगृहकल्पनं चतुर्दण्डप्रमाणाधिकवैशाल्याद्युपेतमेव कार्यम् । न तत्प्रमाणन्यूनतेति भावः । किञ्च तस्य वसन्तगृह-मुख्यकल्पनस्य पुरोभागे दण्डद्वयान्तरालस्थलवति प्राच्यादिषु चतुर्ष्वपि दिग्भागेषु मन्दमारुतवीजनार्हा अनेकस्तम्भोपेताः विविधाङ्गणयुक्ताः क्षुद्रशालाः प्रकल्प्य, तासु शालासु जलकुम्भादि-शैत्योपचाररचनाश्च स्थापयेयुरिति ॥

किञ्च एतादृशरीत्या शैतल्यारोग्यप्रदाभिः शालाभिः समन्ततः समावृतस्यास्य मध्यकल्पनस्थलस्य मध्यभागे विकसितपद्माकारं कल्पनं विश्रान्तिवेदिकया सहितं ससुषिरं शालारूपमेकभौमयुतं भूपालादये प्रकल्पयेत् । चक्रवर्तिनस्तु इदं त्रिभौमयुतमेवेति एतच्छालारूपं वसन्तसदनकल्पनमिति भावः । तत्र मण्टप-रूपवसन्तगृहनिर्माणलक्षणं यथा — शालारूपनिर्माणे तावत्सुषिर-कल्पनादिः । अत्र तु मण्टपरूपनिर्माणे तादृशसुषिरादिकं विना दारुस्तम्भकल्पनं वा सुधेष्टिकामयस्तम्भस्थापनं वा कृत्वा

चतुर्द्वारसमोपेतं नानाङ्गणसमान्वितम् ।
एकभौमयुतं भौमं त्रिभौमं सार्वभौमिकम् ॥ ६ ॥

---

तादृशस्तम्भोपरि आच्छादनपटलादिकं विस्तीर्य दृढकल्पनं रचयेदित्येवमेव शालामण्टपरूपकल्पनभेदो ज्ञेयः । किञ्चात्र सर्वथा न मानवगृहभवनहर्म्यादौ शिलामयस्तम्भस्थापनं विहितम् ॥

शिलामयस्तम्भस्थापनन्तु देवालयमठमण्टपादावेव रचनीयमित्युक्तत्वादिति तद्भेदोऽपि सूचितः । अपि चात्र शालारूपवसन्तगृहनिर्माणस्य मण्टपरूपवसन्तगृहनिर्माणस्य भूभागप्रमाणादिकं भौमकरणादिकं शैलीचित्रतोरणादिरचना च तुल्यैवेति शिल्पसमयः । तस्माद्धनिकभूपालादीच्छानुगुणं कल्पनीयस्यास्य वसन्तगृहस्य मुख्यकल्पनस्य चतुर्ष्वपि दिग्भागेषु मन्दमारुतादिवीजनार्हमतिविशालं द्वारचतुष्कं स्थापयित्वा तत्कल्पनस्य मध्यभागे च पूर्वोक्तविश्रान्तिवेदिकासनसमीपे सति स्थलविभवे पञ्चषाङ्गणकल्पनं विविधदारुस्तम्भसहितं स्थापयित्वा तद्भित्तिभागेषु द्वारभागेषु स्थलान्तरेष्वपि गन्धजलशीतलोशीरपटलकल्पनवीजनादिविविधरचनादिकञ्च युक्त्या तत्र तत्र यथाशोभारोग्यं प्रकल्पयेदिति समयः ॥

किञ्च पूर्वोक्तासु उद्यानादिस्थलभूमिषु यदि विशेषभूलाभस्तदाऽस्य वसन्तगृहकल्पनस्य मध्यभागे चन्द्रिकापतनयोग्यं

योषितां तु पृथक् शाला कल्पनीया विशेषतः ।
नानासनसमोपेता सुहृदादिविभेदतः ॥ ७ ॥

शीतलैरुपचारैश्च मेदुरा दिशि सर्वतः ।
चतुर्दिङ्मण्टपं पूर्वमन्दिरं वा प्रकल्पयेत् ॥ ८ ॥

क्षुद्राधिष्ठानसंयुक्तं सोपानावलिमञ्जुलम् ।
आलोकमण्टपोपेतमथवा गीतिशालकम् ॥ ९ ॥

---

वास्थलांख्यङ्कत्वरं भागं सममानं चतुरश्रं दीर्घस्थलोपेतं वा प्रकल्प्य तत्समीप एव पूर्वोक्ताङ्गणरचनादिकं कार्यमित्युत्तमवसन्तगेहः । स्थपतिभूपालेच्छानुगुणं पाञ्चाल्यादिशैली ज्ञेया ॥

किञ्चात्र वसन्तगृहे स्थपतिभूपालेच्छानुगुणं पाञ्चाल्यादिशैलीकल्पनोपेतमतिरमणीयचित्ररचनादिकं च करणीयमिति भावः । किञ्चान्तःपुरवासिनां महिष्यादीनां तु पृथगेव वसन्तसदनकल्पनं कार्यमिति शास्त्रकारः । किञ्चैवंविधलक्षणोपेतस्यास्य वसन्तसदनस्य पुरोभागे नातिदूरे पूर्वोक्तपुरश्शालातरणानन्तरस्थले आलोकनमण्टपं वा सङ्गीतशालां वा पूर्वमण्टपं वा पूर्वमन्दिरं वा क्षुद्राधिष्ठानस्थितं कल्पयेत । एवमत्रोक्तरीत्या शैल्या पूर्वमण्टपपूर्वभवनादेर्यदि क्षुद्राधिष्ठानकल्पनं कृतं तदा तस्य वसन्तगृहमुख्यकल्पनस्यापि तादृशक्षुद्राधिष्ठानकल्पनं वा

सतटाकं विहरणस्थानञ्च परिकल्पयेत् ॥ १० ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे
वसन्तगृहलक्षणकथनं नाम
॥ चतुर्विंशोऽध्यायः ॥

---

तदपेक्षया किञ्चिदौन्नत्यभाजो मध्यमाधिष्ठानस्य कल्पनं वा स्थापनीयमिति तत्क्रमः ॥

सर्वथा सर्वत्र निर्माणेषु न विषमकल्पनक्रिया स्थाप्येति शिल्पिनां नियमः। एतादृशलक्षणोपेतस्य वसन्तसदनस्य सशिखर-कल्पनस्य समीपस्थले वापीं, तटाकं वा विहारस्थानं यथा-शोभमानन्दवर्धकं प्रकल्पयेदिति सङ्ग्रहेण वसन्तगृहलक्षण-वाक्यार्थः ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
वसन्तगृहलक्षणकथनं नाम
॥ चतुर्विंशोऽध्यायः ॥



अथ सकलविधद्वारलक्षणकथनं नाम

## ॥ पञ्चविंशोऽध्यायः ॥

शुभे मुहूर्ते सुदिने स्थपतिर्धृतकङ्कणः ।
शुचिः शुद्धमना भक्त्या पूजयित्वेष्टदेवताः ॥ १ ॥

सर्वमङ्गलघोषैश्च स्वस्तिशब्दैश्च शिल्पिभिः ।
वास्तुं प्रदक्षिणीकृत्य मुखद्वारं प्रकल्पयेत् ॥ २ ॥

प्रासादे भवने हर्म्ये मठमण्डपसद्मसु ।
शालासु क्षुद्रगेहेषु भौमस्थानेष्वपि क्वचित् ॥ ३ ॥

---

॥ पञ्चविंशोऽध्यायः ॥

अथास्मिन्पञ्चविंशेऽध्याये गृहभवनप्रासादादिषु स्थापनीयद्वाराणां लक्षणमुपपादयति — शुभे मुहूर्त इत्यादिना । ज्योतिश्शास्त्रप्रतिपादितरीत्या गृहपतिप्रमुखानां शुभफलप्रदतिथिवारयोगकरणलग्नादिभासुरे शुभमुहूर्ते गृहभवनादिकार्यनिर्माणार्थं स्थपतिरादौ धृतकङ्कणः सन् धौतवस्त्रोत्तरीयको मनसि वास्तुनाथं हरिहरविरिञ्चिप्रमुखान् दिशापतीन्नवग्रहमण्डलं च ध्यात्वा गणपतिप्रमुखस्वेष्टदेवतां गन्धकुसुमादिभिरभ्यर्च्य तक्षकलोहकारककशकारमुखैर्भृत्यवर्गैरुदकुम्भहस्तेन गृहपतिना च सह निर्दिष्टगृहभवनादिवास्तुभूमिं प्रदक्षिणीकृत्य मङ्गलघोषपूर्वकं तादृशगृहभवनादेः प्राथमिकं द्वारं समुचिते स्थले स्थापयेदिति लक्षणवाक्यार्थः ॥

स्थलान्तरेषु स्थपतिर्युक्त्या तद्योजयेद्दृढम् ।
अधोमुखं चोर्ध्वमुखं स्थापयेन्न कदाचन ॥ ४ ॥

स्थाप्यं तिरोधानहीनं समसूत्रं सपङ्क्तिकम् ।
स्थानभेदं च तन्मानं निश्चित्यैव प्रकल्पयेत् ॥ ५ ॥

मूलस्थं भित्तिबन्धश्च तदधः कल्पयेद्दृढम् ।
अधश्शिला प्रकर्तव्या नोपरिष्टात्कदाचन ॥ ६ ॥

---

एतादृशमङ्गलाचरणपूर्वकं तच्च द्वारस्थापनं तावत्प्रासाद-कल्पने भवननिर्माणे हर्म्यनिर्माणे मठमण्टपदेवालयग्रामगृहादि-निर्माणेषु कल्याणशालाद्यनेकविधशालासु क्षुद्रगृहेषु भौम-भागस्थलेष्वन्येष्वपि न्यायशालाविद्याशालाचित्रशालावैद्यशाला-प्रमुखेषु कल्पनस्थलेषु, वाजिशालाहस्तिशालापशुगोष्ठादिस्थलेषु च प्रकल्पयेदिति स्थाननिर्देशः । एतादृशगृहभवनादिस्थलेषु तावत् द्वारस्थापनं तु तत्र तत्र कल्पनीयवेदिकालिन्दशालाचत्वरस्थापनानु-गुणं सूत्रादिना मात्वा तत्तत्कल्पनस्थलानि च विभज्य तदनुकूलं प्रकल्पयेदिति तत्स्थापनक्रमः ॥

किञ्च तादृशप्राथमिकं द्वारं द्वारान्तरञ्च स्थपतितक्षक-ककशकारादिभिरधोभागे भूम्यामर्धदण्डनिम्नं भूमिलम्बं नवरत्नादि-सुवर्णखण्डन्याससहितं विरचय्य तदुपरिभूमितले द्वाराधः-पीठिकात्मिकामतिदृढामेकां शिलां चोपरिदृश्यां संस्थाप्य तदुपरि

लक्ष्मीद्वारं तु पूर्वस्थं सर्वमङ्गलदायकम् ।

---

तादृशद्वारमधोमुखदृष्टिहीनमूर्ध्वमुखदृष्टिहीनं च समदृष्टिसूत्रादिना मात्वा स्थापयेदिति भावः ॥

किञ्च तादृशद्वारं द्वादशविधं भवति । यथा—

| | |
|---|---|
| १. लक्ष्मीद्वारकल्पनम् । | ७. शाङ्करद्वारकल्पनम् । |
| २. गान्धर्वद्वारकल्पनम् । | ८. वैष्णवद्वारकल्पनम् । |
| ३. विश्वकर्मद्वारकल्पनम् । | ९. ब्राह्मद्वारकल्पनम् । |
| ४. वैश्रवणद्वारकल्पनम् । | १०. सौरद्वारकल्पनम् । |
| ५. वारुणद्वारकल्पनम् । | ११. चान्द्रद्वारकल्पनम् । |
| ६. वासवद्वारकल्पनम् । | १२. आर्षद्वारकल्पनम् । |

चेति ॥

किञ्च तादृशद्वाराणामृजुसूत्रस्थलञ्च तत्र तत्र प्रकल्प्य तत्तत्स्थानकल्पनानुगुणं निर्माणस्थापनेऽपि द्वाराणामावरणभूतं भित्तिस्तम्भाद्यावरणं तिर्यक्करणञ्च सर्वथा न कारयेदिति च शिल्पिवर्गैर्ज्ञेयः । एवंरीत्या भौमतलेषु ऊर्ध्वसौधभागेषु शालादि-बहुविधकल्पनस्थानेषु तिरोधानरहितं तिर्यक्करणरहितं च स्थापनीयानि द्वाराणि तु मुख्यतया द्वादशसंख्यानि भवन्ति । तादृशद्वारस्थापनस्थललक्षणादिकं क्रमशो विशिनष्टि— **लक्ष्मीद्वारं तु पूर्वस्थमित्यादिना** । गृहभवनादिसर्वविधनिर्माणेष्वपि मुख्य-

कल्पनस्य क्वचिदावरणादियुतकल्पनस्य पुरोभागे तत्तत्कल्पनोचित-स्थले स्थापनीयस्य मुखद्वारस्य लक्ष्मीद्वारमिति नाम ॥

अस्य विशदार्थो यथा — लक्ष्मीद्वारगन्धर्वद्वारविश्वकर्म-द्वारकुबेरद्वारवरुणद्वारप्रमुखानां द्वादशविधानां द्वाराणामप्युपरिभागे ललाटपट्टिकास्थाने मध्यसूत्रे पङ्कजमध्यनिषण्णायाः दिग्गजाभि-षिक्ताया गजलक्ष्म्या (तथा गन्धर्वादीनां च) रूपं स्थापयेत्। एवंरीत्या लक्ष्मीरूपयुतस्य द्वारस्य लक्ष्मीद्वारमिति व्यवहारः ॥

एवं गन्धर्वरूपसहितस्य द्वारस्य गन्धर्वद्वारमिति, विश्वकर्मरूपसहितस्य द्वारस्य विश्वकर्मद्वारमित्यादिक्रमेण तत्त-दधिदेवतारूपकल्पनं तेषां द्वाराणां तन्नामव्यवहरणं च क्रमशो ज्ञेयमिति भावः ॥

तत्रापि कोऽपि नियमः। यथा — द्वारस्य दारुमयस्य ललाटभागे दारुमयीमेव गजलक्ष्म्यादितत्तन्नाथमूर्तिं स्थापयेत्। सुधेष्टिकाकल्पितस्य द्वारस्य ललाटभागे तन्मय्येव तत्तन्नाथ-स्वरूपादिरचना न्याय्या। एवं देवालयादिमुखभागस्थले कल्पितस्य शिलामयस्य द्वारस्योपरि ललाटस्थाने शिलामयीमेव लक्ष्म्यादि-मूर्तिं स्थापयेत्; न संकीर्णद्रव्यादिनेति शिल्पसमयः। सति विभवे वाञ्छायां तादृशलक्ष्म्यादिदेवतास्वरूपं द्वारपार्श्वस्थितासु भित्तिषु वा उपरिभागे वा कुड्यादिषु पीतकृष्णवर्णादिना सुधादिना

द्वितीयमारोग्यदं तद्गान्धर्वं देहलीस्थले ॥ ७ ॥

कल्पनीयमिदं प्रोक्तं शयनास्थानकेऽपि च ।
विश्वकर्म तृतीयं तु दीर्घायुःप्रदमीरितम् ॥ ८ ॥

वैवाहिकासु शालासु शालास्वन्यासु कल्पयेत् ।
चतुर्थं वैश्रवणकं धनवृद्धिकरं मतम् ॥ ९ ॥

कोशागारेषु तत्स्थाप्यं सुमुहूर्ते शुभेऽहनि ।
पञ्चमं वारुणं प्रोक्तमारोग्यशुभदायकम् ॥ १० ॥

---

दन्तलोहादिना वा स्वेष्टदेवतामूर्तिप्रकल्पनं पृथगेव स्थाप्यमिति तन्नियमः । तस्मादेतादृशलक्षणान्वितं लक्ष्मीद्वारं तु सर्वत्र मुख्यकल्पनपुरःस्थलादिषु स्थापितं तद्वास्तुवासिनामविच्छिन्नशुभप्रदमिति शास्त्रीयोपदेशः ॥

गान्धर्वाख्यं द्वितीयद्वारं तु देहलीभागे कचिच्छयनादिस्थलेष्वपि नियमेन स्थापनीयम् । तदा तत्रत्यानां निद्रासुखारोग्यादिशुभवर्धकमिति भावः । विश्वकर्माख्यं तृतीयं द्वारं तु विवाहशालासमीपे चत्वरशालासमीपे स्थलान्तरेष्वपि शुभकार्यार्थं कल्पितस्थलेषु च स्थापनीयम् । इदं तु द्वारं सर्वेषां दीर्घायुःप्रदमिति लोकप्रसिद्धिः । एवं धनशालायां शुभमुहूर्ते कुबेरद्वाराख्यं चतुर्थं द्वारं यदि स्थापितं, तदा तत्रातीव धनसम्पद्वृद्धिरिति भावः ॥

स्थाप्यं तद्भोजनागारे द्रव्यशालासु सद्मसु ।
षष्ठं तु वासवं मेधावर्धकं समुदीरितम् ॥ ११ ॥

विद्याशालासु तत्स्थाप्यममात्यभवनेष्वपि ।
शाङ्करं वैष्णवं ब्राह्मं पूजागारे शुभप्रदम् ॥ १२ ॥

प्राङ्मुखं वोत्तरमुखमन्यच्च शुभदं मतम् ।
सौरं सत्पुत्रजनकं शालायां तत्प्रकल्पयेत् ॥ १३ ॥

चान्द्रं पुष्टिप्रदं स्थाप्यं विश्रान्तिस्थलमुख्यके ।

---

वरुणरूपसहितं पञ्चमं द्वारं तु भोजनागारद्रव्यस्थापनस्थलेषु विश्रान्तिस्थलेषु च प्रकल्पयेत् । तच्च जनानामारोग्यादिशुभप्रदमिति भावः । वासवरूपसहितं षष्ठं द्वारं तु सचिवसदनादिषु विविधविद्याशालासु तत्रत्यस्थलान्तरेष्वप्यन्तर्भागे निर्मितञ्चेत्तदिदं तत्रत्यानामनुपदं सत्वगुणमेधादिवृद्धिकरमिति भावः ॥

एवं मानवगृहभवनहर्म्यादिषु कल्पिते शिलामये शाङ्करं द्वारं, वासुदेवालये विष्णुद्वारं, ब्रह्मादिदेवालये ब्रह्मद्वारञ्च स्थापयेदिति तत्क्रमः । इदं द्वारस्थापनं भक्तिभाजामर्चनशीलानां सकलमनोरथसिद्धय इति भावः । सूर्यरूपसहितं दशमं सौरद्वारं तु सुरतकेलिसदनेषु सूतिकागृहेषु शयनगृहेषु चान्यत्र समुचिते स्थले अन्तःपुरे कन्याशालायां च स्थापितं चेत्तदिदं तासां सत्पुत्रादिविविधश्रेयस्करमिति भावः ॥ १३ ॥

आर्षं तु मेधाजनकं भौमशालासु कल्पयेत् ॥ १४ ॥

एवं द्वादशधा प्रोक्तं तत्तच्चिह्नैर्विनिर्णयेत् ।
अन्यानि पञ्चमुख्यानि तत्र तत्र प्रकल्पयेत् ॥ १५ ॥

धान्यागारे वस्त्रगेहेऽलङ्कारस्थानके तथा ।
स्नानागारे नृत्तशालास्वपि सङ्गीतकादिषु ॥ १६ ॥

तद्व्यासन्तु त्रिहस्तं तन्मानोन्नतियुतं दृढम् ।
तक्षकैः कल्पयेद्युक्त्या सारदारुमुखैश्शुभम् ॥ २७ ॥

---

एवं चन्द्ररूपसहितमेकादशं चान्द्रद्वारं तु पुष्ट्यारोग्यानन्दादिश्रेयोजनकत्वात्तदिदं मठमण्टपादिषु विश्रान्तिस्थलेषु, अन्तश्शालासु वापीकूपादिस्नानघट्टस्थलेषु मिथस्संल्लपनशालादिषु च कल्पयेदिति समयज्ञाः । नारदवसिष्ठात्रिपराशरव्यासवाल्मीकादिमुनीन्द्ररूपसहितमार्षाख्यं द्वादशद्वारं तु पूर्वोक्तविद्याशालासु उपरिभौमेषु आमन्त्रणादिशालासु, आस्थानशालासु राज्यकार्यामन्त्रणसभादिषु च प्रकल्पितं चेत् तदिदमार्षद्वारं तत्रत्यानां नितरां मेधाप्रसादनादिश्रेयोजनकमिति भावः ॥

एवं मुख्यानां द्वादशविधद्वाराणां स्थानतदधिनेत्रादिलक्षणं प्रतिपादितं ज्ञेयम् । पञ्चकप्रमुखानि द्वारान्तराणि तु धान्यागारे, वस्त्रागारे, अलङ्कृतिस्थाने, स्नानागारे, नृत्तशालासङ्गीतशालादिषु स्थापयेदिति तत्क्रमः ॥ १६ ॥

सौवर्णं राजतं वाऽपि दारुजं पार्श्वपट्टकम् ।

---

अथैतेषु द्वारेषु कल्पनीयविभागतक्षणचित्ररचनादिलक्षणक्रममाह — तद्व्यासं तु त्रिहस्तमित्यादिना । एतेषु द्वादशविधानामुत्तमजातिद्वाराणामायामस्तु त्रिहस्तप्रमाणकः । औन्नत्यं तु तद्द्विगुणमिति क्रमः । तथा चायामप्रमाणापेक्षया द्विगुणितप्रमाणं नैयत्येनौन्नत्ये कार्यमित्युक्तं भवति । एवमत्रोक्तप्रमाणात्सर्वथा न न्यूनता कार्येति शिल्पसमयः ॥

पद्मकादिषु द्वारान्तरेषु तु धान्यागारकृषिक्रियोचितद्रव्यागारादिषु क्वचित्स्थलेषु कल्पनीयेषु सार्धद्वयहस्तायामं, पञ्चहस्तप्रमाणौन्नत्यं च योजनीयमिति भावः । अयं मध्यमपक्षप्रमाणयोजनप्रकार इति बोध्यः । एतत्प्रमाणहीनं च द्वारं क्वचित्स्थाप्यं भवति । कुत्र? क्षुद्रग्रामगृहादिषु क्वचिदन्तर्गृहेषु अन्येष्वाढकादिद्रव्यस्थापनस्थलेषु इति । एतादृशद्वारस्यायाममानं तु किञ्चिन्न्यूनद्विहस्तकमेव । तदुच्छ्रायस्तु तद्द्विगुणित इति क्रमश्च बोध्यः । एतत्प्रमाणन्यूनता तु अधमद्वारद्योतकेति पुञ्जितार्थः ॥

एतादृशेषु सकलविधेषु द्वारेष्वपि विशेषतः पूर्वभागयोरुपरि च शोभार्थं कल्पनीयविविधचित्रादितक्षणक्रियोचितः श्रीपर्णिककदम्बकेसरचन्दनादिसारदारूद्भवैरेव दारुखण्डैः निम्नत्वरन्ध्रत्वदग्धत्वखण्डितत्वविशीर्णत्वादिदोषहीनैः द्वारपार्श्वदारुयुगं

शुकपट्टं हंसपट्टं लताकुसुमपट्टकम् ॥ १८ ॥
अधःस्थले वा सर्वत्र कुमुदादींश्च कल्पयेत् ।
गान्धर्वं भैरवं रूपं क्वचिद्द्वारेषु योजयेत् ॥ १९ ॥
षड्भागे प्रथमे कम्पदलपद्मांशपाट्टिकाः ।
रचयेच्चित्रविन्यासं नेत्रानन्दकरं शुभम् ॥ २० ॥
पट्टं पद्मश्च कुमुदं किङ्किणीं क्षुद्रपालिकाम् ।
रेखावलिं तत्तु रूपमन्यच्चानन्ददायकम् ॥ २१ ॥

---

अधश्चोपरि तिर्यग्दारुयुगं समसूत्रायामादिदृढं योजयित्वाऽधः पूर्वोक्तदृश्यशिलायामुपरि स्थापयेदिति क्रमः ॥

किञ्चैतादृशद्वारपार्श्वदारुयुगळदैर्घ्यं षोढा विभज्य प्रथमभागेऽधस्तलात शुकपट्टं वा हंसपट्टं वा लताकुसुमादिबहुविधपट्टं वा चित्ररूपं वा तक्षयेत । किञ्चैतेषां द्वाराणामधश्चोपरि स्थितयोस्तिर्यग्दारुखण्डयोर्मध्यभागे कुमुदाकारचित्रं वा पद्माकृतिं वाऽतिरमणीयं यथाप्रमाणं कल्पयेत । अथवा पूर्वोक्तप्रथमभागे एतादृशचित्रविशेषतक्षणाभावे कम्पदलपद्मवाजनगलादिचित्रं वा यथाक्रमं स्थापयेत । सर्वथा चित्रादिरहितं द्वारं न शोभादये नापि श्रेयस इति च मतिः ॥ २० ॥

किञ्चैतेषु द्वारेषु सर्वत्र पार्श्वयोरुपरि च चित्राणां मध्ये मध्ये पट्टरूपं, पद्मरूपं, कुमुदरूपं, किङ्किणीरूपं, क्षुद्रपालिका-

समरूपं सप्रमाणं युक्त्या तत्र प्रकल्पयेत् ।

---

रूपं, रेखारूपं, क्वचिच्चानन्दकरचित्ररूपं लक्षणं तक्षकः प्रकल्पयेदिति क्रमः। एवमुक्तं सकलविधचित्रतक्षणं तु तासु तासु शुकादिव्यक्तिषु यद्यत्स्वरूपं करादिरेखाप्रमाणादि वर्तते, तैस्सर्वैरपि सहितं तक्षणीयमिति भावः । अङ्गवैकल्ययुतचित्रस्थापने महादोषप्रसक्तेरिति भावः। एवमत्र द्वारेषु द्वितीयादिभागेषु विविधचित्रकरणमपि शस्तमेव । अपि चैवं चित्रकरणे दारुमयद्वारेषु दारुमयमेव चित्रतक्षणं, सुधेष्टिकामयद्वारेषु तन्मयमेवेति तत्क्रमश्च ज्ञेयः ॥

सति बहुविभवे तादृशद्वारचित्ररूपशुकहंसकुमुदाकरादिस्थानेषु सुवर्णपट्टं वा राजतपट्टं वा नवरत्नमयं रचनाजालं योजयेत् । देवालयद्वाराणामधःस्थिततिर्यक्छिलासु सौवर्णराजतपट्टकल्पनमवश्यं कार्यम् । राजभवनेष्वप्येवमेवेति नियमः । मानुषगेहेषु सति विभव इति क्रमः ॥

किञ्चैतादृशनयनानन्दतक्षणं तु प्राथमिकद्वारकल्याणशालादिमुख्यद्वारस्थान एव कार्यम् । न हि सर्वत्र करणीयमिति नियमः। तथापि यथाशक्ति पूर्वोक्तकुमुदादिकं वा स्थापयेदिति क्रमः ॥ २१ ॥

किञ्चैतादृशसकलद्वाराणामपि सममृजुसूत्रं द्विद्विकवाट-

दृढार्गळसमोपेतकवाटद्वयभासुरम् ।
दृढसन्धिक्रियं कार्यं द्वारं सर्वशुभप्रदम् ॥ २२ ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे
सकलविधद्वारलक्षणकथनं नाम
पञ्चविंशोऽध्यायः ॥

---

मेलनमर्गलस्थापनादिकञ्च स्वयमूह्य शिल्पी कारयेदिति । एवं शुभकालस्थापितमेतादृशद्वारकल्पनं प्रातः प्रायशः सुमङ्गल्यो गोमयादिनाऽधःपट्टिकां प्रक्षाल्य रङ्गवल्लीकुसुमगन्धादिभिरलङ्कुर्युः । तदेव सर्वेषां क्षेमजनकमिति क्रमः ॥ २२ ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
सकलविधद्वारलक्षणकथनं नाम
पञ्चविंशोऽध्यायः ॥



अथ तोरणलक्षणकथनं नाम

षड्विंशोऽध्यायः ॥

तोरणं त्रिविधं कार्यं शिलादारुसुधादिभिः ।
दैवं भौपं मानुषञ्च तक्षणादिप्रमाणतः ॥ १ ॥

तत्तत्कार्येषु तद्योज्यं प्रमाणज्ञैः क्रियाकरैः ।

---

॥ षड्विंशोऽध्यायः ॥

अथास्मिन् षड्विंशाध्याये तोरणलक्षणं विशिनष्टि—तोरणमित्यादिना । पूर्वाध्याये प्राथमिकादिद्वारेषु कल्पनीयचित्ररचनादिक्रियाशैली तावत्काचिच्छिलासु डोलासु तत्र तत्र चत्वरान्तिके स्तम्भानामुपरि स्थितस्य भित्तिधारणशीलस्य महाफलकादण्डस्य पार्श्वयोरप्यन्यत्र विविधेषु स्थलेषु योजनीयेति प्रतिपादितम् ॥

क्वचिद्भित्त्यन्तादिभागेषु शोभार्थं किं वा करणीयमिति चेत्, तत्र तोरणाख्याचित्रकर्मरचनैव प्रकल्प्येत्यस्मिन्नध्याये विशदयतीत्यर्थः । स च तोरणाख्याचित्रविशेषो दैवतोरणं, राजतोरणं, मानुषतोरणमिति त्रिधा विभक्तम् । तत्र च क्वचित्सोपानादिषु टङ्कादिना तक्षणेन क्वचिद्भित्त्यन्तभागेषु अतिमसृणसुधादिना कल्पनकरणेन च द्वैविध्यं बोध्यम् ॥

किञ्चैतादृशतोरणक्रिया कुत्र वा स्थापनीयेत्याकाङ्क्षायां

शालान्ते चत्वरान्ते च क्वचिद्द्वारान्तरे तथा ॥ २ ॥

कूटाधिष्ठानभागे च भित्त्यन्ते च कवाटके ।
अलिन्दके वेदिकायामपि डोलादिषु क्वचित् ॥ ३ ॥

तले वातायने स्तम्भे पटलादिषु वा तथा ।
पर्यङ्के चापि सोपाने तद्योज्यं शिल्पिभिः क्रमात् ॥

---

तत्स्थानादिकमाह—शालान्त इत्यादिना । विवाहशालासु विश्रान्तिशालास्वामन्त्रणशालास्वलङ्कारशालासु शयनगृहेषु स्थलान्तरेष्वपि भित्तेरूर्ध्वभागाख्ये पटलाच्छादनाद्यधःस्थलेषु सर्वत्र तादृशतोरणाख्यं कल्पनं रचयेदिति लक्षणवाक्यार्थः ॥

एवं चत्वरस्थल्यन्ते, द्वारान्ते, कूटान्तेऽधिष्ठानस्याधोभागे मध्ये चोपरिप्रदेशे कवाटपतनभागेऽलिन्दप्रदेशे वेदिकासु पूजागेहादिषु समुचितस्थलेषु तोरणकल्पनं स्थापयेत् । अपि च दारुक्रियासु, क्वचिद्वातायनस्थलेषु, स्तम्भेषु, वलभीप्रान्तेषु, पर्यङ्केषु, फलकादिषु, सोपानभागेषु, दारुक्रियाकल्पनेषु, तादृशतोरणरचना संयोजनीयेति मतिः । एतादृशस्थलेषु तत्र तत्र समुचितप्रदेशेषु युक्त्या पार्श्वस्थलकल्पनाऽविरोधं शिल्पिवर्गैरेतादृशतोरणरचना कल्पिता द्रष्टृणां लोचनानन्दकारिणी निर्माणस्य शोभादिजननी परम्परया शुभप्रदा चेति भावः । अतस्तदिदं

अथ तोरणलक्षणकथनं नाम

## षड्विंशोऽध्यायः ॥

तोरणं त्रिविधं कार्यं शिलादारुसुधादिभिः ।

दैवं भौपं मानुषञ्च तक्षणादिप्रमाणतः ॥ १ ॥

तत्तत्कार्येषु तद्योज्यं प्रमाणज्ञैः क्रियाकरैः ।

---

॥ षड्विंशोऽध्यायः ॥

अथास्मिन् षड्विंशाध्याये तोरणलक्षणं विशिनष्टि—तोरणमित्यादिना । पूर्वाध्याये प्राथमिकादिद्वारेषु कल्पनीय-चित्ररचनादिक्रियाशैली तावत्क्वचिच्छिलासु डोलासु तत्र तत्र चत्वरान्तिके स्तम्भानामुपरि स्थितस्य भित्तिधारणशीलस्य महाफलकादण्डस्य पार्श्वयोरप्यन्यत्र विविधेषु स्थलेषु योजनीयेति प्रतिपादितम् ॥

क्वचिद्भित्त्यन्तादिभागेषु शोभार्थं किं वा करणीयमिति चेत्, तत्र तोरणाख्यचित्रकर्मरचनैव प्रकल्प्येत्यस्मिन्नध्याये विशदयतीत्यर्थः । स च तोरणाख्यचित्रविशेषो दैवतोरणं, राजतोरणं, मानुषतोरणमिति त्रिधा विभक्तम् । तत्र च क्वचित्सोपानादिषु टङ्कादिना तक्षणेन क्वचिद्भित्त्यन्तभागेषु अतिमसृणसुधादिना कल्पनकरणेन च द्वैविध्यं बोध्यम् ॥

किञ्चैतादृशतोरणक्रिया कुत्र वा स्थापनीयेत्याकाङ्क्षायां

शालान्ते चत्वरान्ते च क्वचिद्द्वारान्तरे तथा ॥ २ ॥

कूटाधिष्ठानभागे च भित्त्यन्ते च कवाटके ।
अलिन्दके वेदिकायामपि डोलादिषु क्वचित् ॥ ३ ॥

तले वातायने स्तम्भे पटलादिषु वा तथा ।
पर्यङ्के चापि सोपाने तद्योज्यं शिल्पिभिः क्रमात् ॥

---

तत्स्थानादिकमाह—**शालान्त** इत्यादिना । विवाहशालासु विश्रान्तिशालास्वामन्त्रणशालास्वलङ्कारशालासु शयनगृहेषु स्थलान्तरेष्वपि भित्तेरूर्ध्वभागाख्ये पटलाच्छादनाद्यधःस्थलेषु सर्वत्र तादृशतोरणाख्यं कल्पनं रचयेदिति लक्षणवाक्यार्थः ॥

एवं चत्वरस्थल्यन्ते, द्वारान्ते, कूटान्तेऽधिष्ठानस्याधोभागे मध्ये चोपरिप्रदेशे कवाटपतनभागेऽलिन्दप्रदेशे वेदिकासु पूजागेहादिषु समुचितस्थलेषु तोरणकल्पनं स्थापयेत् । अपि च दारुक्रियासु, क्वचिद्वातायनस्थलेषु, स्तम्भेषु, वलभीप्रान्तेषु, पर्यङ्केषु, फलकादिषु, सोपानभागेषु, दारुक्रियाकल्पनेषु, तादृशतोरणरचना संयोजनीयेति मतिः । एतादृशस्थलेषु तत्र तत्र समुचितप्रदेशेषु युक्त्या पार्श्वस्थलकल्पनाऽविरोधं शिल्पिवर्गैरेतादृशतोरणरचना कल्पिता द्रष्टॄणां लोचनानन्दकारिणी निर्माणस्य शोभादिजननी परम्परया शुभप्रदा चेति भावः । अतस्तदिदं

वारटङ्कं भेदटङ्कं रन्ध्रटङ्कं शिखान्वितम् ।

प्रायशो भूपालधनिकादिभवनेषु विविधं कृतमपि तदितरे च जनाः स्वविभवानुगुणं स्वस्वभवनेषु तादृशतोरणक्रियां तावत् क्षुद्राकारां वाऽवश्यं निर्मापयेयुरिति शास्त्रोपदेशः । एवमत्रोक्तलक्षणान्विततोरणकल्पनेषु अस्मिन्नेव ग्रन्थे षष्ठाध्याये गर्भविन्यासप्रकरणे प्रतिपादितानां ब्राह्मणक्षत्रियादितत्तद्वर्णमुख्यचिह्नानां रचनैव नितरां श्रेयस्करीति भावः ॥ ४ ॥

अथ एतादृशतोरणक्रियां कर्तुमुचितान्यायुधानि निर्दिशति—**वारटङ्कमित्यादिना** । अमरसिंहेन तावत् 'टङ्कः पाषाणदारणः' इत्युक्तः । टङ्कस्तु कचित्तदर्थक एव । क्वचिच्छिल्पशास्त्रोक्तशैल्या इष्टिकाखण्डनभित्तिकल्पनादिक्रियोचितायुधमित्यप्यर्थः प्रतीयते (भाषायां — கொல்லர் கொல்லத்துக்காரரின் ஆயுதம்) । एवमेव क्वचिद्दारुतक्षणक्रियानुकूलायुधमित्यपि प्रतीयते (भाषायां — தச்சரின் உளி) । एतेन टङ्कशब्दार्थस्तु इष्टिकाकारपाषाणतक्षणकारदारुतक्षणकाराणामायुधव्यजन इत्युक्तो बोध्यः ॥

तेषु मुख्यायुधानां नामानि यथा-(१) वारटङ्कः तत्र तत्र रेखाकरणसाधकायुधविशेषः । (२) भेदटङ्कः तावदुभयोः पट्टिकयोरन्यत्र मध्ये निम्नादिस्थलभेदेन साधकायुधविशेषः । (३) दारुखण्डेषु रन्ध्रकारी टङ्को रन्ध्रटङ्कः । (४) शुकहंसादि-

पट्टटङ्कं लताटङ्कं स्वीकुर्यादप्रमत्ततः ॥ ५ ॥

तक्षकैः कल्पकैर्वापि तोरणादिक्रियापरैः ।
मानं रेखाङ्कनं शिक्षां तक्षणं रचयेत्क्रमात् ॥ ६ ॥

चूतपत्रादिरूपं वा पक्षिरूपमथापि वा ।
लतारूपादिकं वाऽपि रेखारूपं क्वचित्स्थले ॥ ७ ॥

---

विविधचित्रतक्षणोपयोगी पट्टटङ्कः । (५) लतादिलेखाकरणसाधको लताटङ्कः । इत्याद्यायुधजालानामनुपदं शिखीकृतानां तक्षणादिकार्योपयोगिधारावत्कल्पितानां सर्वेषां साह्येनैव दारुतक्षकशिलातक्षकेष्टिकाकारादिभिस्तत्र तत्र समुचिते स्थले तोरणाचित्रतक्षणादिक्रिया यथाप्रमाणं कार्येत्युक्तं भवति ॥

किञ्च तादृशतक्षकादिभिर्निर्दिष्टदार्वादिकं पट्टटङ्कादिना (இழைப்பு உளி) श्लक्ष्णीकरणयन्त्रविशेषेण श्लक्ष्णीकृतं सूत्रदण्डादिना स्वक्रियोचितं तत्तत्प्रमाणभागं मात्वा तत्र तत्र ज्ञापनाप्रसादाय रेखावलिञ्च प्रथमतो विरचय्य तदनु यथाप्रमाणं तत्तत्तोरणचित्रादिकं तक्षयेत निर्मापयेत् प्रकल्पयेदिति क्रमः ॥ ६ ॥

अथ तोरणस्वरूपं व्यनक्ति — **चूतपत्रादीत्यादिना ।** रसालदलरूपं क्वचित्क्वचिन्मयूरशुकहंसादिरूपमन्यत्र लतागुच्छकुसुमादिस्वरूपं, परत्र नयनानन्दकररेखारूपं स्थलान्तरे द्वार-

लक्ष्म्यादिरूपमथवा गोपुरादिस्थलाकृति ।
कल्पनं विविधं रम्यं नानातोरणमीरितम् ॥ ८ ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे
तोरणलक्षणनिरूपणं नाम
षड्विंशोऽध्यायः ॥

---

भागादिषु यक्षकिन्नरगन्धर्वविद्याधरमिथुनरूपं क्वचित्पुण्याश्रमनदीप्रस्रवणगिरिवनादिस्वरूपं च यथाभिरुचि तत्र तत्र प्रकल्पयेदिति लक्षणवाक्यार्थः । रक्तपीतशुक्लादिवर्णजालैः करणीयचित्रकार्येष्वपि इदमेव तोरणकल्पनं तत्तच्चित्राञ्चलभागेषु स्थापयेदिति शिल्पसमयः । एवं शिलामयदारुमयसुधेष्टकालोहमयादिषु तोरणस्वरूपलक्षणं संक्षेपेणोक्तं ज्ञेयम् ॥ ८ ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
**तोरणलक्षणनिरूपणं नाम**
**षड्विंशोऽध्यायः ॥**



अथाधिष्ठानलक्षणनिरूपणं नाम

## सप्तविंशोऽध्यायः ॥

प्रासादानां मण्टपानां शालानां च क्वचित्स्थले ।
गोपुराणां क्वचिद्भौमे गोपुरद्वारकस्य च ॥ १ ॥

---

॥ सप्तविंशोऽध्यायः ॥

पूर्वोक्तद्वादशाध्याये प्रासादभूमानकथनप्रकरणे प्रतिपादितानां सप्तविधानां पाञ्चाल्यादिशैलीनां निदानभूतमधिष्ठानलक्षणमस्मिन् सप्तविंशाध्याये विशिनष्टि—**प्रासादानामित्यादिना**। अत्र तु कोऽपि क्रमो बोध्यः। यथा— तत्र तत्र मुख्यकल्पनस्याधोभागेषु कल्पनीयस्याधिष्ठाननिर्माणस्य स्तम्भानामधःप्रदेशे कल्पनीयस्योपपीठनिर्माणस्य च कियानेव रचनाविशेषभेदः। तस्मात्तयोर्द्वयोर्लक्षणं शिल्पशास्त्रकाराः प्रायश एकस्मिन्नेवाध्याये प्रतिपादयामासुः। अत्र तु **विश्वकर्मवास्तुशास्त्रे** सप्तविंशाध्यायेऽधिष्ठानलक्षणकथनं, सप्तसप्ततितमाध्याये उपपीठलक्षणकथनं तु शास्त्रकारस्यैच्छिकं क्वचित्प्रकरणानुकूलमिति च पश्यामः ॥

तस्मात्कस्मिन्वा निर्माणेऽधिष्ठानाख्यं कल्पनमित्याकाङ्क्षायां तदर्हस्थलानां नाम क्रमशो निर्दिशति—**प्रासादानामित्यादिना**। भूपालवासार्हप्रासादानां बहुविधानां, विविधमण्टपानां, विविधशालानां, क्वचिद्गोपुरद्वारभागस्याधःप्रदेशे अधिष्ठानं

गर्भगेहस्य च तथा देवानामालयस्य च ।
विविधानां कल्पनानामधोऽधिष्ठानकल्पनम् ॥ २ ॥
औन्नत्यार्थं च रक्षार्थं शोभार्थं च बलार्थकम् ।
एकहस्तं द्विहस्तं वा त्रिहस्तं वा विशेषतः ॥ ३ ॥

---

स्थापयेदित्युपदेशः । किञ्च देवालयगर्भगेहस्य देव्यादीनामालयस्याधिष्ठानं स्थापयेत् ॥

तथा च देवालयकल्पनीयानां पूर्वमण्टपाभिषेकमण्टपविहारमण्टपवाहनमण्टपकृत्तिकामण्टपवसन्तमण्टपगर्भगृहबलिपीठध्वजस्तम्भगोपुरद्वाराणां, भूपालादिसकलमानवभवनादिषु, राजभवनेषु, धनिकभवनेषु कल्पनीयानां क्वचिन्नृत्तशालानाटकशालावैद्यशालापाठशालान्यायशालादीनां, मठमण्टपान्नशालादीनामन्येषां बहुविधानां कल्पनानामपि अधोभागे तत्तत्कल्पनानुगुणं तत्तत्स्थलानुगुणमिदमधिष्ठानं प्रकल्पयेदिति पिण्डितार्थः ॥

तच्चाधिष्ठानं त्रिविधं भवति-उत्तमाधिष्ठानं, मध्यमाधिष्ठानमधमाधिष्ठानमिति भेदादिति भावोऽत्र मूलकारवचनशैल्या प्रतीयते । काश्यपमानसारादिग्रन्थान्तरेष्वधिष्ठानकथनप्रकरणे चतुश्चत्वारिंशद्भागप्रमाणकथनेन क्वचिद्द्वात्रिंशद्भागप्रमाणस्य, क्वचिच्चतुर्विंशतिभागप्रमाणस्य च प्रतिपादनादधिष्ठानकल्पनस्योत्तममध्यमाधमानां स्पष्टीकरणात् अत्रापि तत्सूचने सुलभक्रमो बोध्यः ॥

एकदण्डप्रमाणं वा कारयेत्स्थलयोग्यकम् ।
विमानगोपुरादीनां प्रमाणं परिगृह्य च ॥ ४ ॥

तद्भूमिलम्बनं कार्यं दृढीकुर्याद्यथाविधि ।
चिक्कणैश्च शिलाखण्डैर्वालुकाद्यैश्च पूरयेत् ॥ ५ ॥

---

किमर्थमेतादृशाधिष्ठानकल्पनमिति चेदुच्यते—पूर्वोक्तानां मण्टपादिविविधकल्पनानामुन्नत्यर्थं स्तम्भादीनामधोभागे दृढरक्षणार्थं कल्पनदार्ढ्योत्पादनार्थं द्रष्टृणामानन्दजननार्थं च स्थापयेदिदमधिष्ठानकल्पनमिति भावः । अत एवंप्रकारेण बहुविधफलदायिनामेतादृशाधिष्ठानकल्पनानां शैली तावद्यथाप्रमाणं कलनीयेति क्रमः ॥

किं वाऽस्याधिष्ठानस्य प्रमाणमिति चेत्, कचित्कल्पनेषु एकहस्तौन्नत्ययुतं, कचिद्द्विहस्तप्रमाणं, कचित्तदधिकप्रमाणयुतं चाधिष्ठानं कल्पनीयमिति तदीयक्रमो ज्ञेयः । एवं तत्तत्कल्पनस्थलानुकूलं कल्पनीयस्याधिष्ठानस्य चाधोभागे भूमिलम्बनमवश्यं करणीयम् । तादृशभूमिलम्बनस्य (கடைகால்) अगाधता तु कियत्प्रमाणेत्याकाङ्क्षायां तादृशाधिष्ठानोपरि स्थापनीयमण्टपगोपुरविमानप्रासादबहुभौमादीनामौन्नत्यादिकं प्रथमत एव निश्चित्य तादृशकल्पनभारवहनानुगुणं, तत्कल्पनविस्तारायामानुगुणं च नितरामगाधमवटं खात्वा चिक्कणेष्टिकादिभिः कचिन्न्यायशालादि-

गजपादैर्मुद्गरैश्च काष्ठखण्डैर्घनीकृतम् ।
परितो भागमानेन विभजेत्कल्पनोचितम् ॥ ६ ॥

---

कल्पनेषु शिलाखण्डैर्वालुकाद्यैस्तमवटं ससलिलं पूरयित्वा दृढीकृत्य, तत्सलिलं बहिर्व्यपोह्य, कालक्रमेण दृढीकृत्य, भूमिलम्बनस्योपरिभागेऽधिष्ठानमिदं स्थापयेदिति क्रमः ॥ ५ ॥

तथा कल्पितस्यास्याधिष्ठानकल्पनस्य खरमृत्तिकादिभिः सूक्ष्ममृत्तिकादिभिर्वा पूरयित्वा गजपादैर्गजपादाकारैर्दृढीकरणयन्त्रविशेषैः क्वचिच्छिलामयमुद्गरैः क्वचिदूर्ध्वभौमादिस्थलेषु दृढकाष्ठखण्डादिभिस्सन्ताड्य, दृढीकृत्य, घनीकृत्य, कल्पितस्यैतस्याधिष्ठानस्य पार्श्वभागेषु चतुर्ष्वपि तत्तत्कल्पनानुगुणं सोपानादिविभजनं च प्रकल्पयेत् ॥

किञ्च **सर्वेष्वपि देवालयकल्पनेषु शिलामयमेवाधिष्ठानं** कल्पनीयम् । न्यायशालानाटकशालाचित्रशालादिमेषु, क्वचिद्राजभवने मुख्यप्रासादधनशालायुधशालादिषु शालान्तरेष्वपि शिलामयमधिष्ठानं स्थापयित्वा तदुपरि सुधेष्टिकादारुखण्डादिभिरेव निर्माणं कार्यम् । सर्वथा **नेतरत्र मानवसदनेषु शिलामयाधिष्ठानकल्पनमुचितमिति** भावः ॥

अत्र केषाञ्चिच्छास्त्रकाराणामाशयो यथा—देवालयनिर्माणेष्वेव शिलामयकल्पनमुचितम् । सार्वभौमराजभवनेष्वितर-

मञ्चभद्रं बोधिभद्रं वाजिभद्रं च कौमुदम् ।
बन्धस्वरूपमन्यच्च स्थापयेत्स्थपतिः क्रमात् ॥ ७ ॥

शिलाभिरिष्टिकाभिर्वा देवमानुषकल्पनम् ।
स्थापयेद्भारवहनान्न भिन्नं न च वक्रितम् ॥ ८ ॥

भूमिरादौ रसा प्रोक्ता त्रिपट्टा केवला मता ।
उत्तमे कल्पने हस्तप्रमाणं योजयेद्बुधः ॥ ९ ॥

---

भवनादिष्वपि न शिलामयकल्पनं कार्यम् । परन्तु क्वचित् उपान्ते स्तम्भानामधोभागे चत्वरप्रदेशान्ते जलप्रणाल्याः पीठादिषु च पृथगेव शिलापटली स्थाप्या । न तत्रापि शिलामयकल्पनं जनानां शुभावहमिति । तस्मादयमेव प्रकारः सतां च सम्मत इति वदामः ॥

एतादृशाधिष्ठानं तावदष्टविधं भवति । यथा—

१. मञ्चभद्रक्रमः । ५. मञ्चबन्धक्रमः ।

२. बोधिभद्रक्रमः । ६. बोधिबन्धक्रमः ।

३. वाजिभद्रक्रमः । ७. वाजिबन्धक्रमः ।

४. कुमुदभद्रक्रमः । ८. कुमुदबन्धक्रमः ।

इति । अत्रैव विविधान्तरं बहुविधं भवतीत्याशयश्च बोध्यः ॥

एतादृशाधिष्ठानाष्टकस्य पार्श्वभागेषु क्षेपणीयलक्षणक्रममाह—

**भूमिरादाविति** । पूर्वोक्तभूमिलम्बनकरणानन्तरं समभूभागकल्पनं

अष्टादशाङ्गुलं वाऽपि द्वादशाङ्गुलमेव वा ।
क्वचित् षडङ्गुलं वाऽपि कल्पयेत्पादुकाख्यकम् ॥ १० ॥

तदूर्ध्वस्थमधिष्ठानं त्रिविधं परिकीर्तितम् ।
शुद्धां शैलीं च संकीर्णामथवाऽत्र प्रयोजयेत् ॥ ११ ॥

सार्धार्धकद्विद्विदण्डदण्डार्धं पादमानकम् ।
सोपानं पद्मकं वाऽपि शोभार्थं परिकल्पयेत् ॥ १२ ॥

द्विगुणं त्रिगुणं वाऽपि पञ्चांशं वा चतुर्गुणम् ।
विभज्योपानकस्योर्ध्वे क्षेपणं कम्पपद्मकम् ॥ १३ ॥

---

कृतं खलु । तदुपरि इदमधिष्ठानकल्पनं कार्यम् । तत्रोत्तमकल्पनस्याधःस्थापनीयस्यैतस्याधिष्ठानस्यारम्भस्थले अष्टादशाङ्गुलौन्नत्यभागादिपट्टिका स्थापनीया । मध्यमकल्पनाधिष्ठानस्यारम्भस्थले द्वादशाङ्गुलौन्नत्यभाक्पट्टिका कार्या । अधमकल्पनाधिष्ठानस्यारम्भस्थले षडङ्गुलौन्नत्यवती पट्टिकेत्येवं क्रमेण तत्तत्कल्पनस्थलानुगुणं आदिपट्टिकारचनाप्रमाणमुक्तं बोध्यम् ॥

अस्या एव पट्टिकाया भूमिर्मेदिनी क्षमा धरेत्यादीनि नामान्तराणि ज्ञेयानि । एतादृशादिपट्टिकायाः पार्श्वभागे सोपानाख्यं चित्रविशेषमथवा नानाङ्गणं विरचय्य तन्मध्ये पङ्कजकुमुदादिरूपं चित्रं वा प्रकल्पयेदित्यर्थः ॥

द्विपादं पद्मकं कम्पमेकांशं वा विशेषतः ।
षड्भागं कर्णविस्तारमम्बुजं चाष्टभागकम् ॥ १४ ॥

क्षेपणं चार्धभागेन युक्त्या तत्र प्रयोजयेत् ।
अलिन्दान्तरितं द्व्यंशं तदर्धं वा तदर्धकम् ॥ १५ ॥

वाजनं कर्णविस्तारं समं वाऽधिकमानकम् ।
त्रिभागेन युतं कम्पं कपोतं प्रतिवाजनम् ॥ १६ ॥

भागद्वयेन पद्मं तु वाजनं चार्धभागिकम् ।
बाह्यवाजनमेकेन कम्पं पद्मं गलं तु वा ॥ १७ ॥

---

किञ्चैताद्दशादिपाट्टिकाया उपरि तद्गलान्तकं कल्पितं स्थलं अष्टत्रिंशद्भागेन विरचय्य तस्या मेदिनीपाट्टिकाया उपरि द्विभागेन पद्मरचनामेकभागेन कम्परचनां तक्षयेदित्यर्थः । एवं तस्य कम्पस्योपरि षड्भागेन तलकर्णमष्टभागेनाम्बुजं, तदुपर्यर्धभागेन क्षेपणं, सार्धद्वयेन भागेनालिन्दमन्तरितं, त्रिभागेन वाजनं, त्रिभागेन वा किञ्चिदधिकप्रमाणेन वा कर्णविस्तारं प्रकल्प्य, तदुपरि भागत्रयेण कम्पं, तदुपरि भागत्रयेण कपोतं, तदुपरि भागत्रयेण प्रतिवाजनं, तदुपरि भागद्वयेन पद्ममर्धभागेन वाजनं, तदुपर्येकेन भागेन बाह्यवाजनं, तदुपर्येकेन भागेन कम्पं वा पद्मं वा गळञ्च क्षेपयेदित्यर्थः ॥

एवमत्र प्रतिपादितानि पद्मकम्पकर्णाम्बुजान्तरितकर्ण-

चतुःपञ्चषभागेन मत्स्यहंसशुकादिकम् ।
लतादिकं वा संयोज्यं प्रत्यङ्गं मानसंयुतम् ॥ १८ ॥

वृद्धिहीनं क्वचित्कार्यं तद्विहीनं तथा क्वचित् ।
कुमुदं पद्मकं पट्टमूर्ध्वपट्टं च नेत्रकम् ॥ १९ ॥

वेदभागं भूतभागं रविभागं क्वचित्स्थले ।
समसूत्रप्रमाणेन संयुतं परिकल्पयेत् ॥ २० ॥

---

विस्तारकपोतवाजनप्रतिवाजनादीनि तु तत्तत्कल्पनानुगुणं टङ्कादिना कल्पनतक्षणकरणादिनैव तत्तत्स्थलसङ्केतनामान्येवंविधानि भजन्तीति भावः । शिल्पकार्यज्ञैरेवैतादृशकम्पवाजनगलान्तरितादीनां प्रमाणं तन्निर्माणनीतिश्चाचार्यपरम्परोपदेशेन पूर्वकालकल्पननिरीक्षणेन च ज्ञेयेति भावः ॥

एतावता प्रकारेणाष्टत्रिंशद्भागस्थलेषु क्रमेणोपर्युपरि पद्मकम्पादिकलनानन्तरमधिष्ठानललाटभागे भागचतुष्केन वा, पञ्चभागेन, षड्भागेन वा हंसशुकशारिकामत्स्यादिविविधचित्ररचनाभासुरामुपरिपट्टिकां स्थापयेदित्यर्थः ॥

एवमत्र पङ्कजकम्पवाजनादितक्षणे क्वचिन्निम्नं, क्वचिद्वृद्धिहीनं, क्वचिद्बहिरागतं, क्वचिद्वर्तुलाकारं, क्वचित्त्रिपट्टिकां, चतुःपट्टिकां, पञ्चपट्टिकामन्यच्च तत्तत्कल्पनानुकूलं क्षेपयेदित्यर्थः ॥

किञ्चैतादृशपद्मवाजनकम्पालिन्दान्तरितादिक्षेपणकरणबहु-

एवं क्षेपणभेदेन भागकल्पनभेदतः ।
सा शैली कथिता प्रायः सप्त वाऽऽनन्दकारिणी ॥
शिलायामुपपीठेषु कवाटद्वारकल्पने ।
गवाक्षस्थलडोलासु तिर्यग्दारुकलापिषु ॥ २२ ॥
सोपानेष्वपि खट्वेषु पीठस्तम्भादिकर्मसु ।
वाजकुम्भादिकार्येषु प्रोक्तेयं क्षेपणक्रिया ।

---

विधभागविभजनविविधाचित्रकरणादिनैव पूर्वोक्तानामष्टविधकल्पन-शैलीनां निर्णयो भेदश्च ज्ञेय इत्यर्थः । अपि चैतादृशाधिष्ठान-कल्पनं तु पाञ्चालशैलीप्रमाणसहितं वा मागधशैलीप्रमाणसहितं वा शूरसेनवङ्गकोसलकलिङ्गद्राविडाख्यशैल्यन्तरप्रमाणमिलितं वा शुद्धं सङ्कीर्णं प्रकल्पयेदिति तत्क्रमो विज्ञेयः । किञ्च तत्तत्क्षेपण-भेदेनैवोह्यानामष्टविधानां शैलीनां भेदादिकं तु शिल्पिभिस्स्वयमेव यथाशोभं यथाबलं निर्णीय कार्यं ज्ञेयमिति च भावः ॥

किञ्चैतादृशलक्षणजात्यादिविशिष्टमधिष्ठानतोरणादिकरणं तावत् सोपानशिलायामुपपीठेषु, कवाटभागेषु, द्वारभागेषु, गवाक्षद्वारादिषु, स्थूलाख्यातिर्यग्दारुषु, डोलासु कलापिषु, दारुमयसोपानेषु, क्वचित्सुधेष्टिकामयस्तम्भेषु, शिलामयस्तम्भेषु च वाजिकुम्भादितक्षणकार्यजालेष्वपि तत्र तत्र स्थलकल्पनानुगुणं युक्त्या यथाशोभं यथाबलं तत्तल्लक्षणमनोहरं दोषहीनं प्रकल्पये-

युक्त्या तत्कारयेच्छिल्पी यथाशोभं यथाबलम् ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे

अधिष्ठानलक्षणकथनं नाम

सप्तविंशोऽध्यायः ॥

---

दिति अधिष्ठानलक्षणं प्रतिपादितं ज्ञेयम् । **मयमतमानसार-काश्यपनारदशिल्पादिषु** ग्रन्थान्तरेष्वधिष्ठानलक्षणजातिभेदादिकं कार्यपरैश्शिल्पिभिस्तत्र तत्र बोध्यम् । विस्तरभयात्तन्नेह लिख्यत इति ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां

विश्वकर्मवास्तुशास्त्रव्याख्यायां

**अधिष्ठानलक्षणकथनं नाम**

**सप्तविंशोऽध्यायः ॥**



अथ एकादिनवभौमगोपुरविधिकथनं नाम

## अष्टाविंशाध्यायादिद्वात्रिंशाध्यायान्ताः कुलकरूपाः ॥

देवालयानां भूनेतुर्भवनानां पुरामपि ।
ग्रामाणामपि दुर्गाणां शालानामपि सद्मनाम् ॥ १ ॥

मुखद्वारेषु कर्तव्यं गोपुरं शिल्पिभिः क्रमात् ।

---

अथाष्टाविंशाध्यायप्रभृतिकं द्वात्रिंशाध्यायान्तं कुलकरूपं व्याख्यानसौकर्याय संयोजितम् । अत्र समग्रगोपुरलक्षणं प्रतिपादयामः । यथा—एकादिबहुतलोपेतसाधिष्ठानोपरिस्थितं गोपुरकल्पनं कुत्र वा स्थले स्थापनीयमिति चेत्, तद्दिशदयति मूलकारः—देवालयानामित्यादिना । हरिहरादिसकलदेवालयानां पुरोभागे, चक्रवर्तेर्भवनकल्पनानां क्षत्रियाणाञ्चावासस्थानाख्यस्य प्रासादस्य पुरोभागे, पद्मकसर्वतोभद्रादिनगराणां पुरोभागे निर्दिष्टस्थले, क्वचिद्ग्रामाणां च निर्दिष्टप्रदेशे, दुर्गाणां च प्रदेशे तटे निर्दिष्टे साधिष्ठानं गोपुरमनेकतलयुतं प्रकल्पयेत् ॥

किञ्च नगरादिकल्पनेषु क्वचित् न्यायशालारङ्गशालानाटकशालावैद्यशालापाठशालावाजिशालाहस्तिशालालोकशालादीनाम् , मुख्यकल्पनानां पुरोभागे, धनिकानां सद्मभवनानां पुरःस्थले, क्वचित्कल्याणशालादीनां पुरःस्थले चान्यत्र च मुख्यकल्पनपुरोभागे तदिदं गोपुरकल्पनं प्रकल्पयेदिति भावः ॥

शैलीमानं तु संयोज्यमिह स्थपतिभिर्मतम् ॥ २ ॥
अनुलोमादिमानं वा मार्गविस्तारमानकम् ।

एवमेतादृशस्थले गोपुरस्थापने पूर्वोक्ताष्टविधशैलीषु पाञ्चालीशैल्याः प्रमाणरचना वा मागधीशैल्याः प्रमाणरचनादिकमथवाऽभिमतशैलीकल्पनप्रमाणकं वा तत्तद्देशीयशैली वाऽऽहोस्वित्सङ्कीर्णशैलीनिर्माणं वा भूपतिस्थपतिप्रमुखानामिच्छानुगुणं स्थापयेदिति क्रमः ॥

किञ्चैतादृशगोपुरनिर्माणारम्भसमयेऽयं च विषयः शिल्पिभिरवश्यं निर्णेतव्यः । कोऽसौ विषयः ? उच्यते—साधिष्ठानस्यानेकतलसहितस्यास्य गोपुरनिर्माणस्याधःप्रदेशे कियद्वा प्रमाणं भूमिलम्बनं (கடைகால்) कार्यमिति चेत्तत्रैवं चतुर्विधक्रमः ॥

आद्यः प्रकारो यथा — चतुर्दण्डाधिकमानमगाधं भूमिलम्बनं विरचय्य, तदुपर्यनुगुणप्रमाणमधिष्ठानं कल्पयित्वा तादृशभूमिलम्बाधिष्ठानकल्पनयोस्तदधिष्ठानौन्नत्यानुगुणं त्रितलगोपुरं वा, स्थिरकल्पनोपेतं पञ्चतलगोपुरं वा, सप्ततलगोपुरं वा नवतलगोपुरं वा स्थिरकल्पनोपेतं स्थापनीयमित्यर्थः । अयमाद्योऽनुलोमप्रकार इति भावः ॥

द्वितीयः प्रतिलोमप्रकारो यथा — गोपुरारम्भसमय

कल्पनावर्गमानं वा गोपुरारम्भकर्मणि ॥ ३ ॥
निश्चित्य मतिमाञ्छिल्पी भूमिलम्बनमाचरेत् ।
त्रिभागमादिमध्यान्तं विभज्यायामसम्मानितम् ॥ ४ ॥

---

एवास्मिन्स्थलेऽस्माभिः पञ्चतलगोपुरं निर्मापणीयं, सप्ततलगोपुरं निर्मापणीयमिति पूर्वमेव तद्गोपुरस्थलौन्नत्यवैशाल्यप्रमाणादिकं यथाविभवं सम्यग्ज्ञानादिना निश्चित्य तदनुगुणं भूमिलम्बन-मनुष्ठानकल्पनं च स्थापनीयमित्यर्थः ॥

एवमनुलोमप्रतिलोमाख्येन प्रकारद्वयेन गोपुरनिर्माण-स्थापनक्रमः कथितः । तृतीयः प्रकारो यथा — ग्रामनगरादिषु तत्र तत्र दण्डादिना विभज्य स्थापितायाः महावीथीराजवीथी-प्रमुखायाः वैशाल्यानुगुणं स्थपतितक्षकादयो गोपुरकल्पनं सम्यङ्निश्चित्य तदनुगुणौन्नत्योपेतं, यथाशोभं, यथाबलं चानेक-तलसहितं गोपुरकल्पनं प्रकल्पयेदिति क्रमः ॥

चतुर्थप्रकारो यथा — तत्र तत्र ग्रामे नगरे वा शिवस्य विष्णोर्वाऽऽयतनं यावद्दैर्घ्यवैशाल्योपेतं विविधशालामण्टप-तटाकादिसहितं कल्पितम्, तत्कल्पनानुगुणमौन्नत्यभाग्गोपुरं प्रकल्पयेदिति ॥

एवं स्थपतितक्षकभूपालादयो गोपुरकल्पनं चतुर्विध-प्रकारेण निश्चित्य भूमिलम्बाधिष्ठानकल्पनादि दृढं प्रकल्प्य

भूतलं भूमिलम्बश्च भूनिर्माणं समाचरेत् ।

---

गोपुरकल्पनाय प्रथमत एव भागत्रयं विभज्य तत्र प्रथमभागे अधिष्ठानोपपीठादिकल्पनं, तदुपरि द्वितीयभागे द्वारपार्श्वशिला-स्थापनाख्यप्रस्तरकल्पनं, तदुपरि गोपुरद्वारोपरिभागाच्छादनरूपं दृढशिलामयावरणपटलं नीरन्ध्रं यथाशोभचित्रं स्थापयित्वा, तदुपरि तृतीयभागे गोपुरतलाधिष्ठानाख्यकल्पननिर्माणं च सुधेष्टिकादिभिः प्रकल्पयेदिति क्रमः ॥

एवं सकलविधदेवालयगोपुरस्थापने कचिद्राजभवनगोपुर-स्थापने दुर्गमुखद्वारोपरिस्थापनीयगोपुरकल्पने च भूमिलम्बनानन्तरं मेदिनीतलशिलाप्रभृतिगोपुरद्वारोपरिभागाच्छादनावधिकं कल्पनं नियमेन दृढमसृणशिलावलिभिरेव कार्यम् । कुतः ? चिरकालस्थितये । तदुपरि तादृशगोपुरोपर्यावरणतलात्प्रभृति शिखरस्थूपिपर्यन्तं सुधेष्टिकामयादिभिस्तलनिर्माणं करणीयमिति क्रमश्च शिल्पिभिरवश्यं ज्ञेयः ॥

एवमत्रोक्तभागत्रये शिलामयाधिष्ठानोपपीठद्वारपार्श्वाच्छादन-स्थानेषु नानाङ्कणं सचित्रं सर्वालङ्कारशोभितं नयनानन्दकरं समसूत्रं विषमशिलानिम्नोन्नतत्ववृद्धिहीनत्वादिदोषरहितं यथा-प्रमाणं निष्पन्दशिलासन्धिकं स्थापयेदिति लक्षणवाक्यार्थः ॥

तदेव क्रमशो विशदयति — **भूतलमित्यादिना** ।

मुखे मध्ये पृष्ठतले तक्षणं वाऽधितक्षणम् ॥ ५ ॥
रेखादिभिः समायुक्तमथवा बहुचित्रकम् ।
मध्यालिन्दसमोपेतमथवाऽङ्गुलहीनकम् ॥ ६ ॥
एकभौमयुतं कार्यं कचिद्ग्रामादिषु स्थिरम् ।

इत्येकभौमगोपुरलक्षणम् ॥

---

भूमिलम्बकरणानन्तरं राजवीथ्यादिमार्गप्रमाणात् किञ्चिदुत्तुङ्गस्थलं निर्देष्टुं गोपुरनिर्माणाय निश्चित्य दृढीकृत्य तत्स्थले दृढशिलापटलैरधिष्ठानं पार्श्वयोः प्रकल्प्य मध्यभागे शिलामयमेवोत्तुङ्गायामं मुखद्वारं स्थापयित्वा तदनन्तरस्थलेऽलिन्दप्रकल्पनं विनैव ग्रामेषु क्षुद्रग्रामेषु ग्रामदेवालये चैकभौमयुतं गोपुरं स्थापयेदित्युपदेशः ॥

त्रितलपञ्चतलादिगोपुरकल्पने तु तादृशमुखद्वारकरणानन्तरमलिन्दकल्पनं सवेदिकं स्थापनीयम् । महागोपुरकल्पनेषु द्वारद्वयमलिन्दद्वयं च प्रकल्पनीयमिति क्रमः । अयञ्च विषयोऽत्रैवाध्यायव्याख्याने नवभौमगोपुरविधाने स्पष्टीभविष्यति । किञ्च, एकतलसहितग्रामगोपुरद्वारे दृढार्गलकवाटमुभयोः पार्श्वयोः कल्पनीयरचनादिकञ्च स्वयमेवोह्य शिल्पी कतिपयचित्रोपेतं स्थापयेदिति क्रमः । एवं क्षुद्राधिष्ठानक्षुद्रद्वारप्रमाणमेकभौमगोपुरस्य प्रतिपादितम् ॥

अथ त्रिभौमगोपुरलक्षणम् ॥

साधिष्ठानस्तम्भयुतं तदेवोन्नतकायकम् ॥ ७ ॥
वेदिकोपरिजालाढ्यं शिखरत्रयभासुरम् ।
त्रितलेन समायुक्तं कर्णनासादिमण्डितम् ॥ ८ ॥
त्रितलं गोपुरं प्रोक्तं शिल्पविद्भिः पुरातनैः ।
ग्रामे देवालये स्थाप्यं ग्रामद्वारे विशेषतः ॥ ९ ॥
मठमण्टपमुख्यस्य कल्पनस्य पुरःस्थले ।

इति त्रिभौमगोपुरलक्षणम् ॥

---

किञ्च सकलविधगोपुरद्वारवैशाल्यौन्नत्यादिप्रमाणं तु पूर्वव्याख्याने-एतच्छास्त्रैकादशाध्याये द्रष्टव्यम् । एवं त्रिभौमसहितस्य गोपुरस्य तु मध्यमाधिष्ठानसहितं मध्यभागेऽलिन्दकल्पनं समहावेदिकं विरचय्य तदलिन्दवेदिकोपरिद्वारोपर्याच्छादनपटलधारणाधारभूतं स्तम्भद्वयं वा प्रतिपार्श्वं प्रकल्प्य तदुपरि पूर्वोक्तरीत्या एकतलगोपुरौन्नत्यापेक्षया किञ्चिदधिकौन्नत्यभागेव प्रतितलकल्पनं कृत्वा शिखरत्रयं च स्थापयेत् ॥

किञ्चैतादृशचित्रतलगोपुरस्य तले तले चतुर्ष्वपि दिक्कोणेषु दिङ्मध्यस्थानेषु वा चतुरङ्गणं कृत्वा तन्मध्ये कर्णनासाख्यं चित्रं तु सुधेष्टिकादिभिः प्रकल्पयेत् । इदं तु गोपुरकल्पनं मठादेः पुरोभागे मण्टपस्य च पुरःस्थले मुख्यकल्पनस्य पुरतःस्थले च कल्पनीयमिति भावः ॥

अथ पञ्चभौमगोपुरलक्षणम् ॥

ससोपानं चतुर्थादिभौमकल्पनशोभितम् ॥ १० ॥

बृहत्तलमुखोपेतं पञ्चभिश्शिखरैर्युतम् ।
मध्याधिष्ठानसंयुक्तमग्रपट्टादिभूषितम् ॥ ११ ॥

अलिन्दद्वयभागयान्तं सपादं वा विपादकम् ।
देवीनां भवनद्वारे देवानां च पुरामपि ॥ १२ ॥

भूपालभवनद्वारे दुर्गाणां च मुखस्थले ।
ग्रामाणां च मुखद्वारे कल्पनीयं विशेषतः ॥ १३ ॥

---

एवं पञ्चभौमसहितस्य गोपुरस्य कल्पनं तु क्रमेण त्रिभौमगोपुराधिष्ठानादिप्रमाणापेक्षया किञ्चिदौन्नत्यसहितं कल्पनं सर्वत्र कारयेत् । प्रतिभौमतलारोहणार्थं सोपानपरम्परा च युक्त्या तलमध्ये कार्या । किञ्चात्र पञ्चतलगोपुरे द्वारद्वयमत्युन्नतं, तन्मध्ये समहावेदिकं सस्तम्भमलिन्दद्वयं दीर्घाङ्गणं प्रकल्प्य गोपुरतलभागेषु प्रतितलं मध्ये मध्ये नानाङ्गणं सचित्रं सशालं विरचय्य तन्मध्ये तत्र तत्र क्षुद्रशिखरपञ्चककल्पनं च संयोजनीयम् । एतादृशमुपरिशिखरतले पञ्चशिखरैरुद्भासितं पञ्चतलगोपुरं तु कचिद्देवालयस्य पुरतः, गौरीलक्ष्म्यादीनां लोकजननीनामालयस्य पुरोभागे, सर्वतोभद्रादिनगरोत्तमानां नगरमुखद्वारे, दुर्गाणां

बहुतोरणसंयुक्तं तलदेवादिभूषितम् ।
तलस्तम्भयुतं वापि कल्पयेत्पञ्चभूमिकम् ॥ १४ ॥
गोपुरं शिल्पवित्प्राज्ञो यथाशोभं यथाबलम् ।

इति पञ्चभौमगोपुरलक्षणम् ॥

**अथ सप्तभौमनवभौमगोपुरलक्षणम् ॥**

तदेवात्युन्नततलं वैशाल्यादिसमन्वितम् ॥ १५ ॥
अलिन्दस्तम्भसंयुक्तं तलस्तम्भैश्च धारितम् ।
द्वारद्वयं द्वारपट्टद्वयेन परिशोभितम् ॥ १६ ॥

---

मुखभागे, राजभवनमुखद्वारे, ग्रामोत्तमानां मुखद्वारे स्थापनीयमिति भावः ॥

किञ्चैतादृशं पञ्चभौमगोपुराधिष्ठानादिप्रमाणापेक्षयाऽधिकमानसहितं कल्पनं विरचय्य सप्ततलकल्पनञ्च यदि स्थापितं तस्य सप्ततलगोपुरमिति नाम व्यवह्रियत इति भावः । किञ्चास्य तु सप्ततलगोपुरस्य प्रतितलं पूर्वाङ्गणे स्तम्भद्वयकल्पनं क्वचित् दृढार्थं कल्पनीयमिति च भावः । इयञ्च द्राविडी शैलीति चोदितम् । मागधशैल्यामपि कोसलशूरसेनपाञ्चालादिशैलीषु नैतद्योजनीयम् ॥

परन्तु तत्र तत्र तलाङ्गणप्रकारश्च प्रकारान्तरेण मात्वा तन्मध्ये कम्पवाजनकर्णगलनेत्रादिकं तत्तच्छैल्यञ्चिततक्षणक्षेपणचित्रकरणञ्च रचयेदित्यादिभेदश्चोह्य एव । किञ्चात्र सप्ततलगोपुरे

मध्याङ्गणद्वययुतं देहलीवेदिकायुतम् ।
तत्र सोपानपङ्क्तिर्वा चित्रं वा बहुरूपकम् ॥ १७ ॥
अधोभागे द्वारयुग्मं किन्नरीयुग्मभासुरम् ।

---

पूर्वापरयोर्भागयोः स्थापिते द्वारयुगलेऽपि मुखभद्ररेखां वा शतकिङ्किणीकं वाऽनेकचित्ररचनं प्रकल्प्य तन्मध्ये महतीं देहलीं सवेदिकां साधारणस्तम्भाञ्च प्रकल्प्य तदारभ्यैवोपरिस्थितभौमतलारोहणार्हसोपानकल्पनं निर्मापयेत् । किञ्चैतादृशालिन्दस्योपरिभागे तिर्यग्रूपावरणशिलापट्टिकामध्ये कमलतक्षणं विधाय, तन्मध्ये दीपश्शृङ्खलायोजनं च दृढं बन्धयेत् । इदमेव लक्षणं नवतलकल्पनेऽपि योजनीयमिति भावः ॥

अनयैव रीत्या गोपुरेषु प्रतितलं चतसृष्वपि दिक्षु दीपस्थापनस्थलं च स्थापयेत् । अत्र तु ग्रन्थकर्त्रा विश्वकर्मणा पाञ्चालीं, शूरसेनीं, कोसलीं, वाङ्गीमेव शैलीं मनसि निधाय नवभूमिकमेव गोपुरं निर्मापणीयमित्युक्तम् ! **द्राविड्यादिशैल्यन्तरेषु मानसारादिषु** प्रतिपादितरीत्या द्वादशतलनिर्माणस्यापि स्फुरणात् स्थपतिप्रमुखास्तदनुगुणं दृढाधिष्ठानानि कल्पयित्वा प्रायश इदमेव लक्षणजालं तत्रापि स्थापयेयुरिति भावः ॥

तस्मान्नवभौमगोपुरस्य सप्तभौमगोपुरस्य च द्वारद्वयेऽधः प्रथमभागे एकदण्डोन्नतिकं किन्नरीमिथुनं सलक्षणं समरेखं

मध्यभागे लतारूपं सगुच्छं सममेदुरम् ॥ १८ ॥

मौलिभागे कुम्भगुच्छसरोजमुकुलान्वितम् ।

तिर्यक्पट्टिकयुग्मेषु मध्ये वा पार्श्वयोस्तथा ॥ १९ ॥

शतपत्रं पङ्कजं वा हंसाकृतिरथापि वा ।

युक्त्या मनोहरं स्थाप्यं सौवर्णं राजतं तु वा ॥ २० ॥

द्वारपट्टिकभागेषु किङ्किणीरेखिका मताः ।

---

प्रकल्पयेत् । तस्य द्वारद्वयस्य मध्यभागे विविधलतारूपं सगुच्छ-कुसुमफलादिचित्रतक्षणक्षेपणादि च कारयेत् ॥

किञ्च तस्य द्वारयुगलस्य मौलिसमीपे कुम्भरूपं वा गुच्छरूपं सरोजादिमुकुलरूपं वा चित्रं लम्बयेत् । एतादृश-चित्ररचनादिकं तु द्वारद्वयस्योभयोरपि पार्श्वयोर्मुखशिलापट्टिकायां करणीयमिति भावः । किञ्च तत्पट्टद्वययोः क्षुद्रकिङ्किणीकादिरूपं वा शुकशारिकापत्रादिरूपं वा बहुरेखारूपं वा प्रकल्पयेत् ॥

किञ्चैतादृशद्वारद्वयस्याधः उपरि च स्थितयोस्तिर्यक्-पट्टिकयोर्मध्यभागे पङ्कजादिरूपं वा तक्षणीयम् । अथवोभयोरपि पक्षयोर्भागत्रयेऽपि वेति च विकल्पो बोध्यः । एवं द्वाराधः-पट्टिकायां तिर्यक्कृतायां पद्माकृति वा हंसाकृति वा युक्त्या मनोहररूपं तक्षयित्वा तत्स्थलं सौवर्णराजतादिपट्टेन कवचीकुर्यात् । अन्यत्कल्पनं पूर्वोक्तमेव ॥

द्विद्विभागविभक्तेषु तलेषु बहुचित्रकम् ॥ २१ ॥
देवरूपं स्थापनीयं नानाङ्गणमहाप्रपे ।

---

एवं नवतलगोपुरद्वारभागे करणीयक्रममुपपाद्याधुना गोपुरस्योर्ध्वभागे एकादितलप्रान्तेषु कल्पनीयक्रमं व्यनक्ति — **द्विद्विभागविभक्तेष्वित्यादिना** । सर्वत्र गोपुरतलकल्पने गोपुरद्वाराच्छादनशिलाफलकोपरि क्षुद्राधिष्ठानं विरचय्य, तदुपरि तलनिर्माणस्थलं सव्यापसव्यभागयोर्विभज्य इष्टिकासुधादिभिश्चतुर्ष्वपि भागेषु तलभित्तिनिर्माणं कृत्वा मध्यतलस्थलं विसृज्य, तदुपर्याच्छादनं कृत्वा, पुनरपि तदुपरि तलभित्तिं निर्मापयेदिति क्रमः ॥

एवमत्र गोपुरकल्पने प्रतितलं मध्ये मध्ये एकदण्डायतिकं तदनुकूलोन्नतिकं तलं द्वारं पूर्वतः पृष्ठे च स्थापयित्वा तन्मध्ये सोपानञ्च विरचय्य निर्माणं प्रकल्पयेत । एवं करणे प्रतिगोपुरतलं चतुर्ष्वपि दिग्भागेषु स्थापिते भित्त्यादितले नानाङ्गणं विरचय्य, बहुदेवतादिरूपं सुधादिभिर्निर्मापयेत । तत्र च शिवालयगोपुरतलेषु प्रमथगणाचिह्नं, वासुदेवादिविष्णुमन्दिरगोपुरतलेषु वैष्णवदेवाख्यगरुडहनुमत्प्रमुखचिह्नं सुदर्शनशंखादिलक्ष्म च कृत्वा विरचय्य मध्ये मध्ये दिक्पालदेवदानवयक्षविद्याधरकिन्नरकिंपुरुषगन्धर्वोरगराक्षसादिविविधरूपं सुधाबिम्बं

कूटे वा क्षुद्रवलभीभागे वा पुण्यदर्शकम् ॥ २२ ॥

तत्रोपरि विमानादिशिखराणि च कल्पयेत् ।
कल्पनं चित्रकं वापि स्थानकं शालकं तु वा ॥ २३ ॥

समञ्च विषमैर्हीनं युक्त्या मानेन तद्बुधः ।
योजयेदिष्टिकाभिश्च सुधाभिरपि सिद्धये ॥ २४ ॥

पीतादिवर्णकलनं योजयेद्वा विचक्षणः ।
द्वादशाङ्गुलकं वापि चतुर्विंशतिकं तु वा ॥ २५ ॥

---

निर्मापयेत । इदञ्च लक्षणं द्राविडकलिङ्गशैल्योरेव । पाञ्चाल्यादिशैल्यन्तरेषु तत्र तत्राङ्गणतले क्वचिद्दिक्पालादिरूपं विरचय्य क्वचिद्गौरीप्रमुखबिम्बावलिं स्थापयेत । इदं द्राविडशैल्यामपि क्वचिदभ्युपगतमेव । सर्वत्र शैलीनिर्माणं तु मिथः किञ्चिद्विलक्षणमेवेति मतिः ॥

किञ्च सप्तनवतलगोपुरे तत्र तत्राङ्गणकूटे तलद्वारसमीपे क्षुद्रवलभीं सशिखरां प्रकल्प्य पुण्यदर्शनदेवबिम्बादिकं निर्माय तत्र चित्रविशेषादिकल्पनं पीतहरितादिवर्णजालैरलङ्कुर्यादिति क्रमः । एवमत्र गोपुरे नानालङ्कृतिचित्रादिकल्पने सर्वतस्सममानं समरज्जु विषमसंख्याविहीनं विषमप्रमाणहीनञ्च सुधादिभिर्दृढं कृत्वा शोषयेत ॥

किञ्चात्र गोपुरे तलसोपानस्य प्रमाणं तु द्वादशाङ्गुल-

पक्षयोरुभयोः पङ्क्तिं कल्पयेत्सुधयापि वा ।
मध्यद्वारतलं युक्त्या कारयेत्तलमानकम् ॥ २६ ॥

प्रतिभौममिदं कार्यं कल्पनद्वयपङ्क्तिकम् ।
अश्वपादसमायुक्तं गजपादयुतं तु वा ॥ २७ ॥

सकवाटं जलस्रावयोग्यं सर्वतलं मतम् ।
प्रकल्पयेद्दृढं शिल्पी यथाशोभं यथाबलम् ॥ २८ ॥

---

विपुलमथवा चतुर्विंशाङ्गुलविशालं तद्द्विगुणात्रिगुणदैर्घ्यञ्च योजयित्वा युक्त्या तत्र दृढीकुर्यात् ॥

किञ्चैतादृशसोपानं शिलामयं दारुमयमथवेष्टिकासुधामयं कल्पयेदिति तद्विकल्पः साधुरेवेति शिल्पसमयः । तादृश-सोपानसहितस्य तलस्य मध्यभागं प्रतितलं शून्यं त्यक्त्वा तत्र तारमानं दैर्घ्याधिक्यं चतुरश्रं वा क्वचिद्योजनीयम् । तत्र तत्र च मध्येमध्ये गजपादनामकतलयुतं अश्वपादतलयुतं वा कृत्वा वर्षादिजलधारादेरन्तःप्रवेशनानर्हं कल्पनं कृत्वा गोपुरपार्श्वभागं यथाशोभं देवबिम्बचित्रादिकल्पनयुतञ्च यथाबलं प्रकल्पयेत । तत्र प्रतिभौमतलद्वारभागस्य कवाटयोजनञ्च कार्यमेव कल्पन-रक्षणार्थमिति भावः ॥

किञ्चैतादृशगोपुरनिर्माणे तक्षककर्शकारादिभिर्युक्त्या तत्र तत्र पार्श्वकल्पनाविरुद्धं प्रमाणं परिगृह्य मनोहरं चिरस्थायि

सप्तभौमं गोपुरं वा नवभौमयुतं तु वा ।
देवालये पुरद्वारे क्वचिदन्यत्र वा बुधः ।
विशालमार्गमिलितं स्थापयेत्क्षेमसिद्धये ॥ २९ ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे
एकादिनवभौमगोपुरविधिकथनं नाम
अष्टाविंशाध्यायादिद्वात्रिंशाध्यायान्ताः ॥

---

दार्ढ्यान्वितं कल्पनं कारयित्वा तादृशगोपुरद्वारपुरःस्थलं महावीथीराजवीथ्यादिमिलितं कारयेत् ॥

एवमत्रोक्तप्रकारेण आभूमितलाद्गोपुरद्वाराच्छादनाख्य-प्रस्तरावधिकं शिलामयं तदुपरीष्टिकासुधादिमयं कल्पनं विरचय्य, देवालयादिषु द्वितीयद्वारतृतीयद्वारादिस्थलेषु एतदपेक्षया किञ्चित्तलहीनं प्रमाणहीनञ्च गोपुरान्तरं स्थापनीयम् । सर्वत्र गोपुरद्वारभागस्तु दृढार्गलकिङ्किणिकादियुतदारुमयकवाट-युगलोपेतः । तत्र च कवाटे क्वचित्समये गमनागमनार्थं द्विहस्तोन्नतं क्षुद्रद्वारं सकवाटमिर्णिका कुञ्चिकादि च प्रकल्पयेत् ॥

इयन्तु क्रियापरिपाटी तावत् राजभवनद्वारकवाटेषु दुर्गद्वारकवाटेषु, पुरनगरादिद्वारकवाटेष्वपि अवश्यं योजनीयेति मतिः । तस्मादेतादृशदृढबृहदाकारकवाटस्थापननिम्नस्थलमाधिष्ठान-

कल्पने एव अधश्च उपर्याच्छादनकल्पनसमये चातिदृढं दृढशिलासहितं स्थापयेत् ॥

किञ्चैतादृशमहागोपुरस्य प्रथमद्वारे कवाटद्वयघटनमनन्तर-द्वारे च कवाटद्वयघटनं बहुरक्षाकरमिति बोध्यम् । किञ्चैतादृश-गोपुरोपरितलेषु सव्यापसव्ययोर्भागयोरसमसूत्रकलनपूर्वकमिष्टिका-वलीरुपर्युपरि सुधामिलितास्तलभित्तिरूपाः स्थापयित्वा दिने दिने क्रमेण तत्कल्पनं शोषयित्वा सर्वत्र दिग्भागाङ्गणघट्टकल्पन-चित्रतक्षणशिखरस्थूपिवलभीप्रमुखनिर्माणं युक्त्या मिथोऽविरुद्धं कल्पयेदिति सङ्क्षेपेण एकादिनवतलगोपुरलक्षणं प्रतिपादितमिति भावः ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां

विश्वकर्मवास्तुशास्त्रव्याख्यायां

**समग्रगोपुरलक्षणकथनं नाम**

**कुलकरूप अष्टाविंशाध्यायादिद्वात्रिंशाध्यायान्ताः ॥**



अथ वापीलक्षणकथनं नाम

## त्रयस्त्रिंशोऽध्यायः ॥

यत्र स्वादुजलस्रावः सन्ततं क्षितिभाग्भवेत् ।
परीक्ष्य तत्र कर्तव्यं वापीकूपादिकं मतम् ॥ १ ॥
चतुरश्रां वर्तुलां वा दीर्घां वा तां प्रकल्पयेत् ।

---

॥ त्रयस्त्रिंशोऽध्यायः ॥

अथास्मिंस्त्रयस्त्रिंशाध्याये ग्रामनगरराजभवनादिषु तत्र तत्र कल्पनीयवापीदीर्घिकयोः कल्पनप्रकारमाह—**यत्र स्वादुजलेत्यादिना** । ग्रामे नगरे वा नृपप्रासादे वा यत्र भूमौ मधुरजलस्रावः संततं दृश्यते, ग्रीष्मादिसमयेष्वप्यविच्छिन्नजलधारां तामिमां बहुशः परीक्ष्य, सुधाखण्डपाषाणास्थिशकलादिदोषरहितं स्थलं बहुधोपायैः परीक्ष्य, तस्यां निर्णीतायामुत्तमभूम्यां कूपं वापीं वाऽन्यज्जलमेलनस्थलकल्पनं प्रकल्पयेदिति लक्षणवाक्यार्थः ॥ १ ॥

ग्रामगेहादिषु खननीयं क्षुद्रप्रमाणकं कल्पनं क्वचिद्वर्तुलं, क्वचिच्चतुरश्रं कूपनामभाग्भवतीति विदितमेव । भूपालादिधनिकभवनादिषु कल्पनीयदीर्घिकाख्याया वाप्या लक्षणमत्र विशिनष्टि—**चतुरश्रामित्यादिना** । वापी तावत्प्रायश्चतुरश्राकारकल्पनयुतैव निर्मापणीया । क्वचिद्वर्तुलाकारा, क्वचिद्दीर्घाधिक्या वा

त्रिदण्डं वा चतुर्दण्डं पञ्चदण्डमथापि वा ॥ २ ॥

षडादिदशदण्डान्तं प्रमाणमिह योजयेत् ।
चतुर्मुखां वा द्विमुखां क्वचिदेकमुखां तु वा ॥ ३ ॥

दशहस्तप्रमाणं वाऽधिकं वा तलमध्यभाक् ।
भित्तिकल्पनमत्रोक्तमैष्टिकं शैलकं तु वा ॥ ४ ॥

जालान्तिकेऽङ्गणं कल्प्यमाद्यमेतदुदीरितम् ।

---

यथास्थलविभवं यथेप्सितक्रमं प्रकल्पयितुमपि शक्या । तस्मात्तत्कल्पनक्रमं पूर्वमेव निश्चित्य तदनुगुणं खननं कुर्यादिति भावः ॥

तस्माच्चतुरश्राकारायाः वाप्याः वैशाल्यादिकं तु दण्डत्रयप्रमाणं वा, दण्डचतुष्कप्रमाणं वा, दण्डपञ्चकादिदशदण्डान्तप्रमाणयोजनं वा कल्पनीयमिति भावः। दीर्घाकारकल्पनेऽपि प्रमाणमिदमेवाभिप्रेतमिति मतिः ॥ ३ ॥

किञ्चास्याः वापीकल्पनभित्तेः भूमिकल्पनं तु जलस्रावतलादधःप्रदेशे दशहस्तनिम्नमानं वा क्वचिन्महावाप्यादौ तदधिकनिम्नमानं वा संयोजनीयमिति भावः । एवं जलस्रावतलाधःप्रदेशकल्पितभूमिलम्बनं दृढभित्तिरूपं कार्यम । तत्तु दृढशिलाखण्डैर्वा सम्यक्तप्तेष्टिकाभिर्वा सुधासहितमचञ्चलबन्धनं तत्र तत्र भागं मृत्खण्डचिक्कणादिना पार्श्वे दृढीकृतं च स्थापयेत । एवं वाप्या

द्वितीयाङ्गणकं वापि तृतीयाङ्गणकं तु वा ॥ ५ ॥
सपादं वा द्विपादं वा युक्त्या स्थापनमीरितम् ।

---

अधोभागे भूमिलम्बनकरणानन्तरं जलसमीपे विहरणार्थं चतुर्ष्वपि दिग्भागेष्वथवा भागद्वये एकस्मिन्वा भागे अङ्गणं कल्पयेत् ॥

एतादृशजलसमीपकृतमङ्गणचतुष्कं तु एकदण्डायतिकं, तन्मानं किञ्चिदूनप्रमाणं वा दैर्ध्ये च संयोज्य समस्तम्भसंख्याकमुपर्युपरि आवरणपटलान्वितं दृढसन्धि प्रकल्पयेत । तदुपर्यवरोहणमार्गे भूपालयोषिदादीनां विश्रान्त्यर्थं तत्प्रमाणयुतं वा, तदर्धप्रमाणयुतं वा, तदधिकप्रमाणयुतं वा यथेच्छं यथास्थलविभवं द्वितीयाङ्गणतृतीयाङ्गणकल्पनमपि क्वचिद्विहितं ज्ञेयम् ॥

नन्वत्र वाप्यां जलसमीपकल्पितस्य प्रथमाङ्गणस्यैव जलक्रीडाविश्रान्तिकेल्यादियोग्यत्वं प्रसिद्धम् । किमर्थमेतद्द्वितीयतृतीयाङ्गणयोः कल्पनमिति चेत, उच्यते, वर्षाकालादिषु तादृशप्रथमाङ्गणे जलपूरिते मग्ने च सति तदा द्वितीयाङ्गणादिषु स्थितिरिति । प्रयोजनान्तरं च पश्यामो यथा — भूपालहर्म्यादिषु एतादृशाङ्गणत्रयोपेताया वाप्याः कल्पनेऽन्तःपुरकामिन्यादीनां जलकेल्युपकरणादिस्थापनार्थमिति । तस्मादङ्गणद्वयाङ्गणत्रयादियुतं वापीकल्पनमपि हितायैवेति । किञ्चैतादृशरीत्या प्रथमाङ्गणस्योपरि द्वितीयाङ्गणतलस्य, तदुपरि तृतीयाङ्गणतलस्य च निर्माणे परस्परं

कल्पनं दार्ढ्यसंयुक्तं पादसोपानमञ्जुलम् ॥ ६ ॥
मुखमण्टपयुक्तं वा कवाटादिसमन्वितम् ।
वाप्यां वर्तुलरूपायां भुजङ्गावेष्टनाकृति ॥ ७ ॥
पङ्क्ति दृढां वा रचयेदथवा सूत्रपङ्क्तिकम् ।

---

दृढसन्धिबन्धसहितस्तम्भस्थापनमुपर्युपरि भारवहनक्षमं पटलादिकल्पनमन्यन्निर्माणान्तरं च युक्त्या शिल्पिभिर्दृढं कार्यमिति भावः ॥

किञ्चैतादृशलक्षणसहिताया वाप्या एकस्मिन्वा दिग्भागे, दिग्भागद्वये वा, दिग्भागचतुष्के वा साधारणैकदण्डप्रमाणादिकवैशाल्यसहितं सोपानमार्गं प्रकल्प्य तत्पूर्वभागे मिर्णिकाकञ्चुकादियुतकवाटभासुरं द्वारञ्च प्रकल्पयेत । किमर्थम्? वाप्यां वत्सादिपतनभयनिवारणार्थमिति भावः ॥

किञ्चास्य वापीद्वारस्य पुरोभागे चतुर्भिरष्टभिर्वा स्तम्भैरुज्ज्वलं क्षुद्राधिष्ठानयुतं मण्टपं वा प्रकल्पयेत् । तादृशमण्टपकल्पनाभावोऽपि न दोषायेति मतिः ॥

एवं वाप्या लक्षणं प्रतिपाद्य वाप्यां करणियसोपानक्रममुदाहरति—**वाप्यां वर्तुलरूपायामित्यादिना** । वर्तुलरूपकल्पितायां वाप्यां वा कूपे वा कथं सोपानस्थापनमिति चेत, चन्दनादितरुषु यया रीत्या भुजङ्गपरिवेष्टनं लोकप्रसिद्धं, तयैव रीत्या वक्रिमयुतयोपर्युपरि सोपानरचनां वापीकूपादिभित्तौ

चतुर्विंशत्यङ्गुलेन विहीनं नेष्यते बुधैः ॥ ८ ॥

घटीयन्त्रस्थलं तीरे रचयेत्साङ्गणं बुधः ।

अवगाहतलोपेतद्वाराकिन्नररूपकम् ।

---

वक्ररीत्या दृढीकृत्य, सुधादिनाऽनुलेप्य, निर्माणं परिपूरयेदिति क्रमः ॥

एवं वर्तुलरूपवापीकूपादौ वक्ररीत्या सोपानस्थापनक्रमः कथितः । सूत्ररीत्या सोपानपङ्क्तिस्थापनं यथा — सूत्ररीतिर्नाम एकहस्तद्विहस्तायामवतीं क्रमशोऽधोऽधः स्थापितां सोपानपङ्क्तिं रचयेदित्यर्थः । एवं सूत्ररीत्या सोपानकरणे यथेच्छं चतुर्षु वा दिग्भागेषु, भागद्वये वा, एकस्मिन्वा भागे तत्सोपाननिर्माणं प्रकल्पयेदिति च भावः ॥

अपि चैतावता ग्रन्थेन महाप्रमाणवती दीर्घिका, तन्न्यूनप्रमाणोपेता वापी, तन्न्यूनप्रमाणयुतः कूपः इति समलक्षणबन्धनक्रमः कथित इति शिल्पिभिरवधार्यः । तस्मात्सर्वत्रैतादृशकूपस्य वा वाप्याः दीर्घिकायाश्च तीरभूमौ अगाधमवटं खात्वा तस्मिन्घटीयन्त्रं स्थापयेत् । घटीयन्त्रणस्थापनप्रयोजनं तु स्पष्टमेव । सति विभवे एवं स्थापितस्य घटीयन्त्रणस्य समीपे समभूभागे तादृशवाप्यादीन्परितः सस्तम्भरचनमङ्गणकल्पनञ्च कार्यम् ॥

किञ्चात्र वाप्यादिषु स्थापिताङ्गणस्तम्भादिषु किन्नर-

कल्पनं देवमूर्तीनामथवा संप्रयोजयेत् ॥ ९ ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे
वापीलक्षणकथनं नाम
त्रयस्त्रिंशोऽध्यायः ॥

---

मिथुनादिमनोहरचित्ररचना प्रकल्प्या । क्वचिद्वरुणदेवादिपुण्यदर्शनदेवानां बिम्बस्थापनं चाभिप्रेतम् । कल्पनान्तरलक्षणान्तराणि तु शिल्पिभिः स्वयमेवोह्य स्थलविभवानुकूलमतिदृढं कश्मलजलमेलनादिरहितं चिरकालस्थितये मनोहराचित्ररचनाप्रमाणयुतं च वापीकूपादिकल्पनं निर्मापणीयमित्युपदेशः ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
वापीकूपलक्षणकथनं नाम
॥ त्रयस्त्रिंशोऽध्यायः ॥



अथ तटाकलक्षणकथनं नाम

## चतुस्त्रिंशोऽध्यायः ॥

तटाककल्पनाच्छ्रेयः प्राणिनां च सुखं मतम् ।
तस्मात्तत्कल्पयेद्धीमान्ग्राममध्ये शुभस्थले ॥ १ ॥

मार्गस्य मध्यभागे च वास्तुभूमौ विशेषतः ।
सततं स्वादुसलिलस्रावो यत्र च दृश्यते ॥ २ ॥

---

॥ चतुस्त्रिंशोऽध्यायः ॥

अथास्मिंश्चतुस्त्रिंशाध्याये तटाकनिर्माणप्रकारं प्रतिपादयितुमादौ तन्निर्माणफलं व्यनक्ति— **तटाककल्पनाच्छ्रेय** इत्यादिना। तत्र तत्र ग्राममध्यस्थलादौ तटाकादिनिर्माणेन पुंसां ऐहिकशुभफलप्राप्तिः आमुष्मिकसद्गतिश्चेत्यादिपुराणकारपठितफलश्रुत्या जगति तत्र तत्र हरिणगोमहिषमानवादीनां प्राणिनां बहुधोपकारसम्पादयित्रीं तटाकनिर्मितिं ग्राममध्यस्थले समुचितप्रदेशेऽन्यत्र वा महामार्गसमीपे नगरादिषु च बहुशस्समुचितप्रदेशे महावीथ्यग्रभागे देवालयस्यान्तर्वा बहिःप्रदेशे तत्तद्वास्तुवास्तव्यजनहितकारिणि स्थले समुचिते मठमण्टपारामनिष्कुटादिस्थलेषु च स्थापयेदिति शास्त्रकारोपदेशः ॥

तत्र च कोऽपि नियमः यथा— यस्मिन्स्थले वास्तुभूगर्भमहिम्ना सर्वर्तुसमयेष्वपि अविच्छिन्नमधुरजलप्रसारस्तस्मिन्स्थले

## अन्तःकूपसमायुक्तं दक्षिणोत्तरदैर्घ्यकम् ।

तटाकमिमं स्थापयेदित्युत्तमः पक्षः । क्वचित्तादृशसन्ततजलप्रसाराभावे तत्र कल्पिते तटाकेऽन्तिकस्थनदीजलाशयगिरिप्रस्रवणादिप्रदेशान् प्रणाल्यादिना तन्मधुरसलिलमत्र पूरयेदिति मध्यमः पक्षः । अयमर्थः 'निष्पङ्कागाधसलिलं पूरयेद्वा क्वचित्स्थले' इत्युक्तेरिति भावः ॥ २ ॥

अथ तटाकस्य प्रमाणादिकमाह—**अन्तःकूपसमायुक्तमित्यादिना** । एवं सर्वत्र परीक्ष्य निर्दिष्टे मधुरजलस्राविणि स्थले तटाकनिर्माणेऽपि तादृशतटाकस्य मध्यभागेऽन्तःकूपाख्यं महावटं खात्वा तत्रत्यसैकतजलदृष्ट्यादेरुत्तेजनं कार्यमिति नियमः । तदात्व एव ग्रीष्मादावप्यशोष्यजलसमृद्धिर्भवेदिति भावः ॥

क्वचिच्छिलामयभूमौ तटाकनिर्माणे कृतेऽपि तादृशतटाकादिमध्यभागे चैवंरीत्याऽन्तःकूपाख्यमगाधावटं खातयेत् । तत्तदा शिलान्तःस्थलं सलिलं प्रस्रावयेदिति क्रमः । सर्वथा न कृष्णमृत्तिकोषरमृत्तिकादिनिर्भरस्थले तटाकनिर्माणं स्थापनीयमिति भावः । तस्मादेवमुक्तरीत्या परीक्ष्य निर्दिष्टायां मधुरजलस्राविण्यां भूमौ तटाकनिर्माणाय खनने कृते तन्मध्ये क्वचित्पाषाणखण्डादिदर्शनेऽपि तत्सकलं बहिर्व्यपोह्य, दक्षिणोत्तरदिग्भागयोः दैर्घ्ययुतं

वरुणेन्द्रदिशाभागस्थायि वा स्थलयोग्यकम् ॥ ३ ॥
तटाकनाम्ना भणितं महत्खातं हितप्रदम् ।
निष्पङ्कागाधसलिलं पूरयेद्वा क्वचित्स्थलम् ॥ ४ ॥
जलनिर्गमनोपेतमागमायनसंयुतम् ।
भान्यङ्गुलोन्नता पङ्क्तिर्द्विगुणायतिका मता ॥ ५ ॥

---

तटाकं स्थापयेत् । अथवा क्वचित्स्थलानुगुणं प्राक्प्रत्यग्दिग्भागयो-र्दैर्घ्ययुतं वा तटाकं निर्मापयेदिति विकल्पः । क्वचित्क्षुद्रतटाकं चतुरश्रप्रमाणमेव स्थापयेत् । क्वचिदष्टमुखसहितमपि अभिप्रेतमिति साधुना मतमप्युक्तं बोध्यम् ॥ ४ ॥

एवं स्थलानुगुणं तटाकखननसमये तस्य तटाकस्य शुद्धजलागमनप्रणाल्यादिकल्पनं जलनिर्गमनद्वारञ्च रन्ध्रोपपट्टकं समुचितस्थले दृढशिलापटलाद्याच्छादितं प्रकल्पयेदिति भावः । एवमत्र तटाकायामादिप्रमाणानुकूलं खननं कृत्वाऽधःस्थलं समीकृत्य प्रतिदिग्भागं क्षुद्रशङ्कुनिखननपूर्वकं सूत्रन्यासं प्रसार्य तत्सूत्रपातमृजुमानानुगुणं, शिलामयसोपानकल्पन-मचञ्चलमतिदृढसन्धिकं परस्परं मेलयित्वोपर्युपरि भागकल्पनं क्रमशः कारयेदित्यर्थः । किञ्चैतादृशसोपानस्य द्वादशाङ्गुलमौन्नत्यं कार्यं, न तन्न्यूनतेति भावः ॥

क्वचिन्महातटाकादिषु अष्टादशाङ्गुलमथवा चतुर्विंशा-

मध्ये महापङ्क्तियुक्तमृजुस्थलं च निश्चलम् ।
तीरमण्टपसंयुक्तं तीरवृक्षैश्च शोभितम् ॥ ६ ॥

जलमण्टपसंयुक्ता क्वचित्कार्योत्तमे ... .... ।
दैवे तटाके तत्कल्प्यं विमानशिखरोज्ज्वलम् ॥ ७ ॥

---

ङ्गुलौन्नतिकं टङ्कादिना समस्थलं प्रकल्प्य दशसोपानकल्पनानन्तरं अतिविशालमेकं महासोपानाख्यं विश्रान्तिसोपानकल्पनं च स्थापयेत् । एवं तत्र तत्र स्थलानुगुणं मध्ये मध्ये विश्रान्तिसोपानं महासोपानमितरत्र पूर्वोक्तद्वादशाङ्गुलाद्युपेतसोपानरचनाञ्च दृढं स्थापयेदिति क्रमः ॥

किञ्चैतस्य सोपानमार्गस्य मध्यतले तत्र तत्र समुचितस्थले क्षुद्रमण्टपकल्पनं जपवेदिकायुतं शिलामयमिष्टिकासुधामयं वा प्रकल्पयेत् । एतादृशक्षुद्रमण्टपानाञ्चतुष्कं, षट्कं, अष्टकं, दशकं, षोडशकं, चतुर्विंशतिकं, द्वात्रिंशत्कं वा तटाकवैशाल्याद्यनुगुणं स्थापयेदिति क्रमः । किञ्चैवंप्रकारेण कल्पितानां मण्टपानां तीरमण्टपकल्पनमिति व्यवहारः । अस्य च तटाकस्य मध्यतले ऽन्तःकूपसमीपे साधिष्ठानं चतुःस्तम्भयुतमष्टस्तम्भसहितं, षोडशस्तम्भकञ्चतुर्विंशतिस्तम्भकं वा जलमध्यमण्टपञ्च सघलभीकं शिलामयमेव स्थापयेत् ॥

विशेषतो देवालयतटाकनिर्माणे इदं जलमध्यमण्टपकल्पन-

खण्डपङ्क्तिः क्वचित्कार्या तटाकेषु सरस्सु च ।
मेदिनीपट्टिकोपेता जलं सर्वत्र कल्पयेत् ॥ ८ ॥

---

मवश्यं करणीयमिति भावः । एवङ्कल्पितानां बृहदाकृतिकानां क्षुद्राणां वा सर्वेषां मण्टपानामुपरिभागे सविमानाशिखरप्रकल्पनमेव श्रेयोहेतुरिति शिल्पविदां समयः । एवं तीरमण्टपजलमध्यमण्टपकल्पनप्रकारः कथित इति बोध्यम् । सर्वत्र तटाकतीरभागे नातिदूरे समुचितस्थले आम्रातकपुन्नागपाटलसरलकर्णिकारपनसबिल्वाशोकक्रमुकारग्वधाश्वत्थनारिकेलादिमहीरुहान्वर्धयेदित्युपदेशः ॥ ७ ॥

क्वचित् ह्रदकुल्याजलाशयसरःप्रमुखेषु स्थलेषु क्वचित्तटाकेषु च खण्डसोपानमपि न दोषायेति मतिः । खण्डसोपानं नाम तस्य सरस्तटाकमहाह्रदादेश्चतुर्ष्वपि वा दिग्भागेषु द्वयोरेकस्मिन्वा भागे जलसमीपावधिकमेकदण्डादिपञ्चदण्डवैशाल्योपेतं सोपानमार्गकल्पनमिति तद्युतं रचयेदिति स्थलविभवानुकूलविकल्पः । अपि चैतेषु तटाकादिषु एवंरीत्या सोपानकल्पनानन्तरं भूमितलात् रथ्यासलिलादिप्रवेशनिवारणार्थं तटाकोपरि तीरतले एकहस्तौन्नत्ययुतं शिलापट्टिकाकल्पनमवश्यं निर्मापयेत् । तत्र तटाकतीरतले तीरवृक्षसमीपे क्षुद्राङ्गणकल्पनमपि क्वचिद्देशेष्वभिमतं ज्ञेयम् ॥ ८ ॥

एवंरीत्या कल्पितेषु सर्वत्र सोपानमार्गेषु शोभार्थं

रेखारूपं मीनरूपं लतारूपञ्च तक्षयेत् ।
भूर्जपत्रक्षेपणं वा नानाङ्गणसमन्वितम् ॥ ९ ॥

वानरक्रीडनं वापि तक्षयेत्सुमनोहरम् ।
क्वचिदष्टमुखोपेतं तटाकं बहुपङ्क्तिकम् ।
स्थापयेन्नृपतिर्देशे प्राणिनां सुखदायकम् ॥ १० ॥

इति विश्वकर्मप्रणीते **विश्वकर्मवास्तुशास्त्रे**
तटाकलक्षणकथनं नाम
**चतुस्त्रिंशोऽध्यायः ॥**

---

चित्ररचनाप्रकारमाह—**रेखारूपमित्यादिना ।** तत्र तत्र सोपाने मुखभागेषु पार्श्वेषु दृश्यस्थलेषु चूतपत्रादिरेखारूपं वा सकुटुम्ब-मीनरूपं वा भूर्जपत्रादिरूपं वा शिखरटङ्कादिना क्षेपणं प्रकल्प्य मध्ये मध्येऽङ्गणाविभागञ्च रचयित्वा क्वचिद्वानरकुटुम्बखेलनरूपं च क्षेपणं सुमनोहरमन्यच्चित्रं गन्धर्वकिन्नरयुगलादि स्थलकेलीव्यग्रं प्रकल्पयेदिति भावः । इति सङ्क्षेपेण तटाकनिर्माणप्रकार उपपादितः ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
**तटाकलक्षणकथनं नाम**
**चतुस्त्रिंशोऽध्यायः ॥**



अथ नृपदेवालयविधानपूर्वमण्टपविधानकथनं नाम
पञ्चत्रिंशषट्त्रिंशोऽध्यायश्च ॥

भूपहर्म्यस्य वायव्यामैशान्यां वा विशेषतः ।
कुलदेवालयः स्थाप्यो जयसन्तानसिद्धये ॥ १ ॥

विंशद्दण्डकमारभ्य द्विद्विदण्डविवर्धनात् ।
पञ्चाशद्दण्डकान्तं तत्प्रमाणं मुनिभाषितम् ॥ २ ॥

---

॥ पञ्चत्रिंशषट्त्रिंशाध्यायौ ॥

अथ चक्रवर्त्यादिक्षत्रियभवनेषु कल्पनीयकुलदेवालय-लक्षणं, तस्य तु पुरोभागे कल्पनीयपूर्वमण्टपविधानक्रमञ्चोप-पादयति पञ्चत्रिंशत्षट्त्रिंशदात्मकेनाध्यायद्वयेन । तत्र भूपालादीनां क्षत्रियाणां हर्म्यस्य सदनस्य भवनस्य वायव्यां दिश्यथवैशान्यां तेषां कुलदेवतालयं प्रकल्पयेदित्युपदेशः । तथा तन्निर्माणफलन्तु तेषां भूपालकुटुम्बानां विजयारोग्यसत्सुत-सम्पत्प्रवृद्धिरिति भावः । तच्च लोके स्पष्टमेवेत्यर्थः ॥ १ ॥

अथ एतादृशशुभफलदातुः तद्देवालयस्य कियद्वा प्रमाणम्? कथं वा कल्पनादिकम्? इति चेत्तद्विवृणोति—**विंशद्दण्डक-**मित्यादिना । विंशद्दण्डकादिपञ्चाशद्दण्डकान्तं द्विद्विसंख्यावर्धनयुक्तं यथेष्टं यथास्थललाभमायामदैर्घ्यप्रमाणयुतं स्वीकृत्य तदनुगुणं नृपदेवालयं शिल्पी निर्मापयेदित्युपदेशः । तत्प्रमाणस्थलाद्बहिरेव

प्राकारसंयुतः प्रायः पूर्वपश्चिमवक्त्रकः ।
पार्श्वशालासमायुक्तो गोपुरेण च भासुरः ॥ ३ ॥
दशहस्तोच्छ्राययुतगर्भगेहेन भासुरः ।
विमानशिखरोपेतश्छत्रखड्गादिचिह्नितः ॥ ४ ॥
खड्गवेदी पुरः स्थाप्या यदि कालीनिवेशनम् ।
तत्पुरः सा प्रकर्तव्या शान्तिकुम्भसमन्विता ॥ ५ ॥
सौवर्णद्वारयुगलं तन्मध्ये देहलीतलम् ।

---

दशहस्तोच्छ्रितमेकं प्राकारं वा प्राकारत्रयं वा निर्मापयेत् । अस्य तु नृपदेवालयस्य मुखद्वारं पूर्वदिङ्मुखं, पश्चिमदिङ्मुखं वा कल्पयेत् । नेतरत्र शुभप्रदमिति भावः । एवं निर्दिष्टदिङ्मुख-भागे कृतमुखद्वारस्य पञ्चतलगोपुरसहितस्य नृपदेवालयस्य मध्यभागे समसूत्रे सगोपुरं द्वितीयं मुखद्वारं स्थापयित्वा तद्द्वारभित्तिसमीप एव चतुर्ष्वपि दिग्भागेषु क्षुद्रशालाकल्पनं सचित्रस्तम्भं स्थापयित्वा तदन्तः दशहस्तोच्छ्राययुतभित्तिसमावृतं गर्भगेहं प्रकल्प्य तन्मध्ये राजकुलदेवतां महाकालीं वा त्रिपुरसुन्दरीं महाकालं वा सौवर्णमये राजते वा पीठे स्थापयेदित्यर्थः । किञ्च तस्याः कुलदेवतायाः पुरोभागे नृपाणां मुख्यचिह्नभूतखड्गन्यसनवेदिका करणीया । तस्या वेदिकायाः पुरोभागे होमार्थं कुण्डपञ्चकस्थानं प्रकल्पयेत् ॥

साक्षिवेदीकल्पनं तु तत्रत्यं क्षत्रमङ्गलम् ॥ ६ ॥
सर्वालङ्कारसंयुक्तं नवरत्नविभूषितम् ।
प्रदक्षिणायनयुतं काल्या वा भैरवस्य वा ॥ ७ ॥
मूलस्थानं च रचयेत्सुमुहूर्ते शुभेऽहनि ।

---

एतादृशहोमकुण्डखड्गवेदिकास्थानभागस्य कुलदेवतामूलस्थानस्य च मध्यभागे मण्टपाकारं मध्यदेहलीतलसंयुक्तं सौवर्णपट्टप्रत्युप्तद्वारयुगळोपेतं साक्षिवेदीकल्पनं कार्यम् । किमर्थमिति चेदुच्यते—तस्यामेव सौवर्णपट्टकवचितवेदिकायां राज्ञः पट्टमहिषीविवाहसमये तत्पूर्वदिने वा तद्भूपालद्वन्द्वं तत्स्थलं प्राप्य तद्देवतायाः पुरतः प्रणम्य स्तुत्वा तत्साक्षिकं तत्र खड्गं निधाय स्वकीयं मिथुनसंयोजनरूपचित्रयुतं सुवर्णपट्टं निधाय प्रतिदिनं देवतापूजानन्तरं गन्धादिभिस्तत्सुवर्णपट्टमभ्यर्चयेदिति क्षत्रियजातिविवाहसमयकरणीयक्रमः । आचरणमिदमेव क्षत्रियदम्पत्योर्मङ्गलप्रदमिति मूलकारोऽपि तत्रत्यं क्षत्रमङ्गलप्रदमिति उपपादितवानिति भावः ॥

एवं नवरत्नादिविभूषितं सर्वालङ्कारसंयुतं वेदिकातलं प्रकल्प्य तस्या वेदिकायाः कुलदेवतायाश्च प्रदक्षिणमार्गशालकं च तत्रैव स्थापयेत् । एवं क्षत्रियभवनेषु सर्वेष्वपि शुभे मुहूर्ते राजखड्गवेदिकां कुलदेवताबिम्बस्थापनञ्च समकालं विरचय्य

ब्राह्मणांस्तोषयेद्गोभूहिरण्याद्यैर्यथाक्रमम् ॥ ८ ॥
अष्टोत्तराहुतीर्हुत्वा शान्तिश्च जुहुयात्ततः ।
तारोत्सवादिभिर्देवीं नैवेद्यैर्विविधैरपि ॥ ९ ॥
प्रीणयेन्नृपतिः पश्चात्पूर्वमण्टपकल्पनम् ।
चतुष्पादयुतं प्रायश्चाष्टपादसमन्वितम् ॥ १० ॥
तदुपस्तम्भसहितं साधिष्ठानं सपीठकम् ।

---

तस्मिन् शुभसमये गोभूहिरण्यवस्त्राद्यनेकदानैः श्रोत्रियान् वेदपारगान् कुटुम्बिनो ब्राह्मणोत्तमांश्च तोषयित्वाऽभ्यर्च्य ततस्तस्याः खड्गवेदिकायाः पूर्वभागे स्थापिते अग्निकुण्डपञ्चकेऽष्टोत्तरशतं शान्त्याहुतीर्हुत्वा गुरुदेवविप्रपूजानन्तरं प्रतिमासं स्वस्य जन्मनक्षत्रे वा कुलदेवतायाः मासगतनक्षत्रे वा विशेषाभ्यर्चननैवेद्यादिना प्रीणयित्वा सावरोधजनो मङ्गलं वाचयित्वा तादृशखड्गवेदिकायास्तस्य च देवालयस्य पुरोभागे देवालयपूर्वमण्टपकल्पनं रचयेदिति लक्षणवाक्यार्थः ॥

तदेव पूर्वमण्टपकल्पनविधानं विशिनष्टि—**चतुःपादमित्यादिना**। तच्च पूर्वमण्टपकल्पनं भूमिलम्बनपूर्वकं दृढं मध्यमाधिष्ठानं विरचय्य तद्देवोत्सवोचितकल्पनभासुरं चतुःस्तम्भयुतमष्टस्तम्भयुतं वा स्थापयेत्। किञ्चात्र मण्टपे तादृशस्तम्भानामुपस्तम्भाख्यकल्पनमतिमनोहरचित्रं कारयेत् ॥

बाह्याभ्यन्तरशालाढ्यं कैशिकं विजयं तु वा ॥ ११ ॥
शुकनासासमायुक्तं वलभीपटलान्वितम् ।
सुन्दरं कल्पनं मध्ये तत्पुरो वाऽथ कल्पयेत् ॥ १२ ॥
प्रतीच्यामन्नशालाश्च क्षत्रासनसमन्वितम् ।

---

किञ्चामुं मण्टपं कैशिकजातिमण्टपकल्पनप्रमाणसहितं वा विजयजातिमण्टपप्रमाणयुतं वा सपार्श्वनासं वलभीपटलाद्याच्छादनक्षुद्रविमानशिखरसहितञ्च प्रकल्पयेत् । अपि चात्र मण्टपस्य मध्यप्रदेशे पुरोभागे वा क्षुद्रविमानाख्यं देवोत्सवोचितं सुन्दरनिर्माणं सौवर्णराजतडोलाभासुरं नवरत्नखचितपर्यङ्कं सशृङ्खलञ्च प्रकल्पयेत् ॥

किञ्चैतादृशपूर्वमण्टपस्य नातिसमीप एव स्थले बाह्यशालामनेकस्तम्भां विरचय्य तदन्तश्चत्वरतलं प्रकल्प्य तत्परितोऽन्तरशालाचतुष्कञ्च प्रकल्पयेत् । एतत्सर्वमपि निर्माणं पूर्वोक्तगोपुरद्वारप्राकारान्तःस्थल एव तत्र तत्र स्थलानुगुणं यथाविभवं सौवर्णराजतसोपानशिखरपद्मपट्टिकादिभासुरं प्रकल्पयेत् इत्यर्थश्च ध्वन्यते । एतादृशनृपभवनदेवालयस्य प्राकारतरणानन्तरं वा तत्प्राकारान्तर्गतायामेव भूम्यां वा क्वचित् क्षत्रियासनसमन्वितां राजभिर्व्रतादिविशेषदिवसेषु सेव्यमन्नशालाकल्पनञ्च स्थापयेत् । कुत्र ? तादृशलक्षणान्वितस्य नृपदेवालयस्य प्रतीच्यामेव दिशीत्यर्थः ॥

चतुस्तोरणभूषाढ्यं कोणहीनं प्रकल्पयेत् ॥ १३ ॥

क्षत्रियाणां गृहे कार्यं पृथक्कालीनिवेशनम् ।
सपूर्ववेदिकं क्षत्रपट्टेनापि परिष्कृतम् ।
जयारोग्यसुतैश्वर्यकारणं परिकल्पयेत् ॥ १४ ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे
नृपदेवालयविधान पूर्वमण्टपविधानकथनं नाम
पञ्चत्रिंशोऽध्यायष्षट्त्रिंशोऽध्यायश्च ॥

---

किञ्च तस्याश्चान्नशालायाः कल्पनन्तु चतुस्तोरणाख्यरचनाविशेषभासुरं कोणादिकल्पनदोषहीनं पूर्ववेदिकोपेतं पूर्वद्वारसहितं चानेकचित्रभासुरं प्रकल्पयेदित्युपदेशः । एवं चक्रवर्तिभूपालादीनां प्रासादेषु स्थापनीयदेवालयक्रमः कथितः ॥

किञ्च प्रासादादिकल्पनविशेषरहितानां नातिधनानां क्षत्रियाणां गृहे तु कुत्र वा स्थले तादृशक्षत्रियदेवतानिलयः कार्य इति चेत्, तत्र तत्र यथास्थलविभवं प्राप्तवास्तुभूमौ कल्पितस्य गृहादेरैशान्यां वा वायव्यां दिशि तादृशकाल्यादिकुलदेवतालयं पृथक् संस्थाप्य पूर्वोक्तरीत्या खड्गवेदीमात्रं तत्पुरतोऽवश्यं प्रकल्पयेत् । इदमेवानुष्ठानं राज्ञां विशेषतः जयसुतसम्पद्वर्धकमिति शास्त्रकारस्याशयः ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
नृपदेवालयविधानपूर्वमण्टपविधानकथनं नाम
पञ्चत्रिंशषट्त्रिंशाध्यायौ ॥

अथ मृगशालालक्षणनिरूपणं नाम

## सप्तत्रिंशाध्यायः ॥

बालानां बालिकानाञ्च युवतीनां विशेषतः ।
शुद्धान्तसुन्दरीणाञ्च चित्तहर्षाभिवृद्धये ॥ १ ॥

कल्पनं विविधं कार्यं स्थलजात्यादिभेदतः ।
शुकानामपि कीराणां मयूराणामपि क्वचित् ॥ २ ॥

हरिणानाञ्च वत्सानां लाल्यलीलादिनामपि ।
शाला तु विविधा स्थाप्या लोहदारुसुधेष्टिकैः ॥ ३ ॥

---

॥ सप्तत्रिंशोऽध्यायः ॥

अथ भूपालधनिकादिभवनेषु स्थापनीयाया मृगशालायाः निर्माणप्रकारं वक्तुमादौ तन्निर्माणप्रयोजनं व्यनक्ति — **बालानामित्यादिना** । भूपप्रासादहर्म्यभवनाद्युत्तमावासस्थलेषु वासभाजां राजकुमाराणां, धनिककुमाराणाम्, एवं बालिकानां कन्यकानामुद्यद्यौवनानां युवतीनामन्यासामन्तःपुरसुन्दरीणां च मनस्समुल्लासाय मृगादिशालामन्तःपुरसमीपस्थले अथवा समुचिते शुभवास्तुभागे प्रकल्पयेदित्यर्थः ॥

तच्च मृगादिशालाकल्पनं तत्तत्स्थलभेदेन तद्वास्तव्यप्राणिजातिभेदेन च विविधमिति पुरातनैर्मुनिभिरुदीरितम् । तथाऽपि शालाकल्पनं त्रिविधमेव प्रसिद्धम् । कल्पनान्तरन्तु तत्त-

शुकानां पञ्जरः कुन्दा हरिणानां निगद्यते ।
वत्सादीनां शालका च त्रैविध्यं मुख्यमीरितम् ॥ ४ ॥
लोहदण्डं दारुदण्डं शृङ्खलान्वितमेव वा ।
बहुरन्ध्रं सकटकं पञ्जरं कल्पयेद्बुधः ॥ ५ ॥

---

देशभेदेन वास्तुभेदेन वाञ्छानुगुणमनेकरूपमेव । तदपि प्रायश एतत्कल्पनात्रयान्तर्गतजातिकमेव भवेदिति शिल्पशास्त्रकारस्याशयो बोध्यः ॥

तादृशत्रिविधकल्पनक्रमप्रमाणादिकं यथा — तत्र शुकशारिकाकीरसारसकेकीप्रमुखानां मनोहरालापनर्तनादिभासुराणां पक्षिणामावासकल्पनं कुलायपञ्जरनामभाग्भवतीत्यर्थः । हरिणशावकादीनामावासस्थानकल्पनं तु कुन्देति नामभाग्भवति । गोवत्सादीनामावासस्थानं तु शालानाम भजतीति क्रमः । एवमुक्तस्य त्रिविधकल्पनस्य निर्माणस्वरूपादिकमाह — **लोहदण्डमित्यादिना** । तत्र शुकपञ्जरस्य निर्माणप्रकारो यथा — चतुरश्रां दैर्घ्योपेतां वाऽभिन्नामदोषां सारदारुफलकामेकाङ्गुलघनयुतां स्वीकृत्य तन्मानकमेव वा किञ्चिन्न्यूनप्रमाणकमेव वा, उपरि स्थापनीयफलकान्तरं च संगृह्य हस्तद्वयोन्नतिकं वा सार्धहस्तौन्नतिकमथवा, हस्तौन्नतिकं मध्यदण्डपालिकान्तरमूर्ध्वाधःस्थितिभाजं संयोजयेत् ॥

अस्य विशदार्थस्तु — अधःफलकायामूर्ध्वफलकायां च

लोहदण्डमयी प्रायः कुन्ददारुमयी क्वचित् ।

---

चतुस्सीमान्तेषु क्षुद्ररन्ध्रं निधाय एकहस्तोन्नतिकं तिर्यग्दण्डजालं तेषु रन्ध्रेषु नियोज्य, दृढीकृत्य पञ्जरनिर्माणं सकवाटं प्रकल्पयेदित्यर्थः । तादृशतिर्यग्दण्डस्त्वयोमयो वा पित्तलमयो वा कांस्यमयस्ताम्रमयो वा सति विभवे राजतमयो वा कल्पनीय इति भावः । अथवा दारुमयो वा स्वीकार्यः । अथवाऽयस्तन्तु-श्रृङ्खलितकल्पनं वा पञ्जरकल्पनाय स्वीकुर्यादिति । एवमूर्ध्वाधः-प्रसृतानेकतिर्यग्दण्डोपेतस्य पञ्जरस्य मध्यभागे शुकादिनिवेशनार्थं, शयनार्थञ्च, तत्तज्जातियोग्यमासनफलकाखण्डं च तत्समीपे सलिलान्नादिवटकपालं च तक्षको घटकः संयोजयेदिति क्रमः ॥

एवं शुककीरकेकीहंसादिखगजातीनामावासस्थानं तत्तज्जात्यनुगुणलक्षणोपेतं स्वयमूह्य शिल्पी पञ्जरान्तरादीनि च प्रकल्पयेदित्यर्थः । अथ द्वितीयस्य कुन्दाख्यहरिणशालाकल्पनस्य निर्मितिप्रकारं विशदयति—**लोहदण्डमयीत्यादिना** । अत्यन्तं क्षुद्रकायस्य शुकादेरावासस्थानाख्यस्य पञ्जरस्य निर्माणं त्वेकहस्तायतिकं प्रथमतस्तदपेक्षया बृहत्तनूनां हरिणादीनां मृगोत्तमानामत्रावासस्थापनं तु भूमितलेऽतिक्षुद्रशालारूपं स्थाप्यम् । तच्च भूतलं मसृणितशिलापट्टिकाकवचितं भवितव्यम् । अयमुत्तमः पक्षः । सुधेष्टिकादिभिर्घनीकृतमसृणितभूमिरपि च तद्वर्धनाय । अयं मध्यमः पक्षः ॥

क्वचिच्छिलात्रुटमयी सगवाक्षसतोरणा ॥ ६ ॥

---

केचिदेतत्कुन्दकल्पनं हरिणशावकशरीरानुगुणमहाप्रमाणोपेतं दारुमयं पटलाञ्चले पूर्ववत् लोहकृततिर्यक्पट्टिकाघटितं बृहत्पञ्जराख्यं कल्पनीयमिति । तच्च दारुमयकल्पनं मासद्वयहरिणशावकादेरेवालम्, न षण्मासहरिणादेरावासयोग्यमिति साधवः । किञ्च तादृशदारुमयकल्पनमेव सर्वथा न हरिणवासार्हं भवतीति प्रसिद्धमेव । कुतः? आ शैशवात्तेषां मुहुर्मुहुरुत्प्लुत्योत्प्लुत्य केलीरसिकानां हरिणशावकानां तत्र क्षुद्रपञ्जरे नियोजनन्तु मन्दमतिकार्यमेवेति न विशयः । तस्मात्समुचिते प्रदेशे समभूम्यामेव हरिणशालाख्यकुन्दकल्पनं स्तम्भचतुष्कोपेतं समन्ततः पूर्वोक्तरीत्या पित्तलताम्रादिलोहकृतान्वाऽयःकृतान् सारदारुकृतान् वा, तिर्यक्कृतखण्डान्वा यथाक्रमं संयोज्य, दृढीकृत्यान्तर्वासिनां हरिणशावकादीनां क्षुत्पिपासादिशान्तये सलिलतृणादिकमन्तिक एव स्थापयेदिति क्रमः । किञ्चैतादृशहरिणशालां यथास्थलविभवमनेकहरिणावासयोग्यं वा एकैकहरिणस्यैकैकां वाऽङ्गणशालां प्रकल्पयेदिति बोध्यम् ॥

अयं प्रकारश्शुकपञ्जरेऽपि कल्पनीय इति मतिः । किञ्चैतादृशरीत्या हरिणकुन्दाकल्पने मध्ये मध्ये शिलामयी त्रुटिकाख्या क्षुद्राशिलाखण्डावलिस्तत्र तत्र मञ्जुलगवाक्षस्थापनं

क्षुद्रशाला क्वचित्कार्या वत्सादीनां शुभे स्थले ।
नानाङ्गणसमोपेतशावला वाऽथ भौमिका ॥ ७ ॥
सतोयपाला साधारा मध्यशृङ्खलिकान्विता ।
वातायनस्थलकृता भीकरैश्च विवर्जिता ॥ ८ ॥

---

तोरणाद्यलङ्कृतिश्च समुचिते स्थले प्रकल्प्येति ॥

अथ गोवत्सादीनां शालानिर्माणक्रममाह — क्षुद्रशालेति । नात्र सम्पूर्णगोष्ठलक्षणमुक्तम् । तत्तूपरिभागे प्रतिपादयिष्यते । अत्र त्वन्तःपुरवासिनीनितम्बिनीबालकबालिकादीनामानन्दवर्धनहेतवे क्वचित्समुचिते समये आनीतानां कतिपयानां शुभलक्षणोपेतानां मनोहराकृतीनां गोवत्सादीनां स्थापनस्थानमेव क्षुद्रशालेति व्यवह्रियत इति भावः । तस्मात्तादृशक्षुद्रशाला तु निम्नोन्नतरहितशुभवास्तुभूभागकल्पिता नानाङ्गणविभक्ता दीर्घाकारा चतुरश्राकारा वा सार्गला स्थापनीयेति तत्क्रमः ॥

किञ्च तादृशशालाया उपरिभागे सौधतलकल्पनमथवा शावलकाख्यैर्वैक्रेष्टिकादिभिः सुपक्वैर्मेदुरितकल्पनं विरचय्य पार्श्वभागे गवाक्षादिकमन्तःस्थले तृणजलादिस्थापनतलञ्च प्रकल्पयेदित्यर्थः ॥

एवं पञ्जररूपकुन्दस्य शालारूपाख्यत्रिविधकल्पनमपि

बहिः खेलनभूम्या वा शालया वा समेयुषी ।
चतुर्दण्डाधिकौन्नत्या पटलया च विभूषिता ।
कल्पनान्तरमूर्वैवं स्थाप्यं शिल्पविशारदैः ॥ ९ ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे
मृगशालालक्षणकथनं नाम
सप्तत्रिंशोऽध्यायः ॥

---

सुशीतवातवीजनस्थले चन्द्रिकातपादिपतनयोग्यस्थले चावश्यं करणीयम् । किञ्चैतादृशत्रिविधजीवावासकल्पनस्थलसमीपे भीकर-जन्तुस्थानं सर्वथा न कारयेत् । गजादिस्तम्भोऽपि नात्र कार्य इति भावः । किञ्चैतादृशहरिणशावकशुकादिसमीपे गम्भीरभेरीपटहादि-ताडनसुघोर्गर्जनादिकञ्च न कार्यमेव ॥

अपि चैतादृशहरिणशालावत्सशालादीनां समीप एव स्थले क्वचित्तेषामुत्प्लवनखेलनयोग्यां निरावरणां चतुर्दण्डोन्नत-पार्श्वतिरोधानपटलसंवृतचतुर्दिग्भागतलां मृगखेलनभूमिं च सिकतादिभासुरां प्रकल्पयेत् । किञ्चैतादृशमनोहरस्थले वासभाजां मनोहरमूर्तीनां तेषां शुकशारिकहरिणवत्सादीनां निरीक्षण-स्पर्शनादिनाऽन्तःपुरवासिनां बालिकाबालकानामन्येषाञ्च धनि-कानां सुखैकपात्राणां शैशवे महानुल्लासस्तत्र व्रत तद्द्वारा वयःक्रमे देहदार्ढ्यमेधावृद्ध्यादिकं च संवर्धत इत्याशयेन तादृशहरिणादि-

क्षुद्रशाला क्वचित्कार्या वत्सादीनां शुभे स्थले ।
नानाङ्गणसमोपेतशावला वाऽथ भौमिका ॥ ७ ॥

सतोयपाला साधारा मध्यशृङ्खलिकान्विता ।
वातायनस्थलकृता भीकरैश्च विवर्जिता ॥ ८ ॥

---

तोरणाद्यलङ्कृतिश्च समुचिते स्थले प्रकल्प्येति ॥

अथ गोवत्सादीनां शालानिर्माणक्रममाह — क्षुद्रशालेति । नात्र सम्पूर्णगोष्ठलक्षणमुक्तम् । तत्तूपरिभागे प्रतिपादयिष्यते । अत्र त्वन्तःपुरवासिनीनितम्बिनीबालकबालिकादीनामानन्दवर्धनहेतवे क्वचित्समुचिते समये आनीतानां कतिपयानां शुभलक्षणोपेतानां मनोहराकृतीनां गोवत्सादीनां स्थापनस्थानमेव क्षुद्रशालेति व्यवह्रियत इति भावः । तस्मात्तादृशक्षुद्रशाला तु निम्नोन्नतरहितशुभवास्तुभूभागकल्पिता नानाङ्गणविभक्ता दीर्घाकारा चतुरश्राकारा वा सार्गला स्थापनीयेति तत्क्रमः ॥

किञ्च तादृशशालाया उपरिभागे सौधतलकल्पनमथवा शावलकाख्यैर्वैक्रेष्टिकादिभिः सुपक्वैर्मेदुरितकल्पनं विरचय्य पार्श्वभागे गवाक्षादिकमन्तःस्थले तृणजलादिस्थापनतलञ्च प्रकल्पयेदित्यर्थः ॥

एवं पञ्जररूपकुन्दस्य शालारूपाख्यत्रिविधकल्पनमपि

बहिः खेलनभूम्या वा शालया वा समेयुषी।
चतुर्दण्डाधिकौन्नत्या पटलया च विभूषिता।
कल्पनान्तरमूलैर्वं स्थाप्यं शिल्पविशारदैः ॥ ९ ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे
मृगशालालक्षणकथनं नाम
सप्तविंशोऽध्यायः ॥

---

सुशीतवातवीजनस्थले चन्द्रिकातपादिपतनयोग्यस्थले चावश्यं करणीयम्। किञ्चैतादृशत्रिविधजीवावासकल्पनस्थलसमीपे भीकर-जन्तुस्थानं सर्वथा न कारयेत्। गजादिस्तम्भोऽपि नात्र कार्य इति भावः। किञ्चैतादृशहरिणशावकशुकादिसमीपे गम्भीरभेरीपटहादि-ताडनसुदीर्घगर्जनादिकञ्च न कार्यमेव ॥

अपि चैतादृशहरिणशालावत्सशालादीनां समीप एव स्थले क्वचित्तेषामुत्प्लवनखेलनयोग्यां निरावरणां चतुर्दण्डोन्नत-पार्श्वतिरोधानपटलसंवृतचतुर्दिग्भागतलां मृगखेलनभूमिं च सिकतादिभासुरां प्रकल्पयेत्। किञ्चैतादृशमनोहरस्थले वासभाजां मनोहरमूर्तीनां तेषां शुकशारिकहरिणवत्सादीनां निरीक्षण-स्पर्शनादिनाऽन्तःपुरवासिनां बालिकाबालकानामन्येषाञ्च धनि-कानां सुखैकपात्राणां शैशवे महानुल्लासस्तत्र व्रत तद्द्वारा वयःक्रमे देहदार्ढ्यमेधावृद्ध्यादिकं च संवर्धत इत्याशयेन तादृशहरिणादि-

अथ वाजिशालाहस्तिशालालक्षणनिरूपणं नाम

## अष्टत्रिंशदेकोनचत्वारिंशाध्यायौ ॥

तुरगैर्वारणैस्सैन्यैर्जयश्रीस्सुखमुत्तमम् ।
वर्धते भूभुजां नित्यं प्रातरालोकनादिभिः ॥ १ ॥

तस्माद्भूपतयस्सर्वे मानयेयुर्मनोहरान् ।

---

शालालक्षणमत्र वास्तुशास्त्रे दिव्येन विश्वकर्मणा प्रतिपादितं ज्ञेयम ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
**मृगशालालक्षणकथनं नाम**
**सप्तत्रिंशोऽध्यायः ॥**



॥ अष्टत्रिंश- एकोनचत्वारिंशाध्यायौ ॥

अथ वाजिनां हस्तिनाञ्च निवासयोग्यशालालक्षण-कथनात्मकौ अष्टत्रिंशाध्यायैकोनचत्वारिंशाध्यायौ प्रतिपादयति— **तुरगैरित्यादिना** । सद्वंशप्रसूतैस्सल्लक्षणान्वितैरश्वोत्तमैर्वारणेन्द्रैश्च समरादिसमयेषु भूपालानां विजयसंपदभिवृद्धिः सत्कीर्त्यारोग्यादि-श्रेयःपरम्परा चैतत्सर्वमप्येधते ॥

किञ्च तेषामश्ववारणानां प्रातस्सायमालोकनेन च

तच्छालां पुरतः कृत्वा सायंप्रातरथार्चयेत् ॥ २ ॥

तोषयेल्लालयेदेतान्देवांशान्मङ्गलप्रदान् ।
राज्याभिषेके जन्मर्क्षे विवाहे मृगयासु च ॥ ३ ॥

शुभकालेषु तान्सर्वान्हेमभूषादुकूलकैः ।
गन्धादिभिरलङ्कृत्य मानयेच्छुभदायिनः ॥ ४ ॥

---

सत्सन्तानप्राप्त्यादिविविधश्रेयोनिदानान् उत्तमाश्वान् गजपतींश्च भूभुजः क्षत्रियाः प्रत्यहं मानयेयुः । गन्धकुसुमपुष्पादिभिरर्चयेयुः । शुभवीक्षणकरस्पर्शादिना लालयेयुः । सदाहारादिप्रदानेन वर्धयेयुः । एवमहरारम्भे तदुपचर्याचरणमेव क्षत्रियाणां संपत्करमिति भावः ॥

किञ्च तानश्वान्गजोत्तमांश्चाभिषेकसमये स्वस्य जन्मनक्षत्रदिने विवाहकाले मृगयादिसमयेऽन्येष्वपि समुचितकालेषु क्षत्रियोत्तमाः दुकूलमयमुखपटादिनाऽलङ्कृत्य हेमाभरणानि च मुखभागे प्रसारयित्वा भक्तिविश्वासपूर्वकं गन्धादिभिरभ्यर्च्य प्रदक्षिणीकृत्य तदनु तदुपर्यारोहणादिकं कार्यमिति लक्षणवाक्यार्थः ॥

नन्वेतेषां हयादीनामेतादृशजयश्रीसुखादिश्रेयोजनकत्वं कथमुपपद्यत इति चेदुच्यते — एतेषां हयानां हस्तिनां मुखाद्यवयवस्थानेषु वैश्वानरब्रह्मविष्णुमहेशानरविचन्द्रवासवादीनां स्थितिमत्त्वं पालकाप्यमहर्षिविरचितगजशास्त्रे तेषां तद्देवांशत्वञ्च प्रति-

नित्या नैमित्तिका चेति तच्छाला द्विविधा मता ।
पुरोद्यानान्तिके प्रायो बहिरन्तःस्थलेऽथवा ॥ ५ ॥

शुभवास्तुतले नित्यां कल्पयेदश्मभिर्दृढाम् ।
शतदण्डं मध्यतलमथवाधिकमानकम् ॥ ६ ॥

---

पादितं प्रसिद्धमेव । तस्मात्तेषां हयानां वारणोत्तमानामपि अभ्यर्चनादिना भूपालादीनां महाफलप्राप्तिः सर्वैरपि अभ्युपगतैवेत्याशयः । अत एव भूपालादीनां क्षत्रियाणां राजाङ्गेषु गजतुरगा एव प्रधानालङ्कृतिः, अन्यत्तदुपकरणमिति शास्त्रज्ञाः । तस्माद्बहुधोपकारिणां हयादीनां नित्यनिवासशालां सलक्षणं भूपतयः स्थापयेयुरिति फलितम् ॥

सा च शाला द्विविधा — नित्या, नैमित्तिका चेति । तेषां बहूनां सततावासस्थानं नित्या शाला । नृपालयभवनादिसमीपे कदाचित्समुचितेषु समयेषु आनीय स्थापनस्थानं नैमित्तिकशालेति तदर्थक्रमः । क्रमेणैतयोः कल्पनप्रमाणादिकमाह — पुरोद्यानान्तिक इत्यादिना । पद्मादिनगरसमीपवर्तिनि बाह्योद्याने तत्समीपे वा नगरसीमान्तिकस्थले वा सति स्थलविभवे नगरमध्यस्थले वा समुचितप्रदेशे निम्नत्वोन्नतत्वादिदोषरहितशुभवास्तुभूमौ तामेतां वाजिशालां वारणशालाञ्च दृढाश्मभित्तिदृढकल्पनां स्थापयेत् ॥

चतुरश्रं दीर्घरूपं चत्वरं तन्निगद्यते ।
तन्मानकल्पनं कुर्यात्सर्वतोऽङ्गणसंयुतम् ॥ ७ ॥

दण्डद्वयव्याससमानं कल्पनं वाजिनां मतम् ।
द्विगुणं त्रिगुणं वाऽपि वारणानां निगद्यते ॥ ८ ॥

---

किञ्चैतस्याश्शालायाः प्रमाणं तु मध्यचत्वरस्थलं साधारणदण्डशतकप्रमाणं वा क्वचित् तदधिकप्रमाणं वा कल्पनीयमिति भावः । अस्य विशदार्थो यथा — शतदण्डप्रमाणयुतां तदधिकप्रमाणयुतां वा चत्वरभूमिं प्रथमतो मत्वा तादृशमहाचत्वरस्य चतुर्ष्वपि दिग्भागेषु नानाङ्गणकल्पनमश्मभिर्दृढं स्थापयेदिति ॥

किञ्च, तादृशमहाचत्वरस्थलं तु चतुरश्रप्रमाणयुतं वा दैर्घ्याधिक्यवद्वा स्थलवाञ्छानुगुणं विभज्य तत्स्थलं परितोऽङ्गणकल्पनमिति भावः । किञ्च तादृशचत्वरस्थलादेकहस्तोन्नतभूमौ तत्राङ्गणं कल्पनीयम् । तत्र च प्रतिदिशं साधारणदण्डद्वयायामयुतं वा तद्द्विगुणितत्रिगुणितदैर्घ्ययुतं वा कल्पितानां क्षुद्रगृहाख्यानां तुरगवासस्थानकल्पनानां शतं वा द्विशतं वा स्वस्वतुरगवारणादिसंख्यानुगुणं कल्पनीयम् । एवमत्रानेकतुरगावासस्थानापेतस्यैव कल्पनस्याङ्गणमिति निर्देशः ॥

एतेन दण्डद्वयवैशाल्यदण्डत्रयदैर्घ्यवति स्थले एकस्याश्वस्य बन्धनस्थानम् । वारणस्य तु तुरगबन्धनस्थानवैपुल्यदैर्घ्यापेक्षया

द्विगुणितत्रिगुणितप्रमाणसहिते स्थले बन्धनस्थानमिति तदनुगुण-स्थलप्रमाणकथनम् ॥

एवमुष्ट्रादीनामपि यथोचितप्रमाणं शिल्पिभिरेवोह्य कल्पनीयमिति क्रमः । तथा च पूर्वोक्तरीत्या शालाया मध्य-स्थितचत्वरस्थलस्य प्राच्याङ्गणे शततुरगबन्धनस्थानं, दक्षिणा-ङ्गणे शततुरगादिबन्धनस्थानं, प्रतीच्याङ्गणे शततुरगवारणादि-स्थापनमुदीच्याङ्गणे च तत्संख्याकस्थानमित्यादिक्रमेण निर्माणं करणीयमिति च क्रमः । एवं चतुरङ्गणमध्यचत्वरसहित-कल्पनस्यैकं वा द्वयमथवा त्रयं चतुष्कमित्यादिस्वविभवानुगुणं पञ्चाशत्सहस्राधिकतुरगवारणोष्ट्रादिबन्धनस्थलनिर्माणं स्थापनीय-मिति पिण्डितार्थः ॥

एवं नानाङ्गणसहितबहुकल्पनेऽपि न परस्परं विषम-प्रमाणादिस्थलसहितं योजनमुपपद्यते । किन्तु पट्टाभिषेकादि-शुभसमयेषु बाह्यशालासमीपस्थले सममानं पङ्क्तिशः पङ्क्तिशः तुरगादिस्थापनवत् तच्छालास्वपि समवैशाल्यादिप्रमाणयोजनमेव तेषां भूपालादीनां च क्षेमकरमित्याशयः । किञ्चैवंरीत्या तुरगवारणादिवासशालाकरणे त्रिंशतितुरगबन्धनस्थानानन्तरं प्राक्-प्रत्यग्भागयोर्दक्षिणोत्तरभागयोश्च गजादिगमनागमनयोग्यं मध्य-शालाख्यकल्पनमुरुदृढकवाटोपेतं कार्यम् ॥

प्राच्यामुदीच्यां शुभदद्वारभागेन भासुरम् ॥ ९ ॥

दृढार्गलसमोपेतकटकं गोपुरान्वितम् ।
बहिश्शालां क्वचित्कुर्यादाधोरणगृहान्विताम् ॥ १० ॥

भिषग्गृहञ्च तत्रैव स्थापयेन्नगरेऽथवा ।

---

किञ्च, एवं उष्ट्रतुरगवारणादिगमनागमनार्हवैशाल्यौन्नत्योपेतद्वारान्विताङ्गणसमीपस्थलेषु मध्यचत्वरभागेषु वाजिवारणादिसमीपस्थलेषु च तत्पिपासाशान्त्यर्थं सलिलकुण्डकल्पनं शिलामयं स्थापयित्वा तदाहारपुञ्जांश्च तच्छालासमीपस्थलेष्वेव पुञ्जीकुर्यात ॥

किञ्च तृणपलालयवकाष्ठादिपूलजालानि तु तच्छालाभित्तेर्बहिर्भागेऽधश्शृङ्खलादिभिर्वा शिलास्तम्भादिभिर्वा परिरक्षिते स्थले सर्वतः क्वचित्तद्विनियोगसुलभाय समुचिते स्थले स्थापयेत । किञ्च तादृशतृणपुञ्जस्थानात किञ्चिद्दूरत एव स्थले तच्छालां परितः परिखामगाधां कारयित्वा तादृशवाजिशालादिमुखद्वारसमीपे तादृशपरिखातरणहेतुं दृढं सेतुप्रकल्पनञ्च स्थापयेत । एतावता प्रबन्धेन यदि स्थलवैशाल्यं तदा नगरवदस्या अपि वाजिवारणादिशालायाः परिखाकल्पनं कृत्वा तदन्तःस्थले तृणादिस्थापनमन्यत्र तदन्तःस्थले सर्वदिगङ्गणं तदन्तर्महाचत्वरस्थानञ्च प्रकल्पयेदित्युक्तं भवति ॥

मध्यशालासमोपेतं मध्यद्वारसमन्वितम् ॥ ११ ॥

कल्पनद्वारकोपेतं कल्पनाद्दतवारकम् ।
यथाविभवतः स्थाप्यं वाजिशालादिकल्पनम् ॥ १२ ॥

जलकुण्डयुतं विष्वक्तृणादिस्थानकैर्युतम् ।
शृङ्खलाविकलं वापि शिलापट्टान्वितं तु वा ॥ १३ ॥

---

किञ्चैतादृशवाजिवारणादिशालायास्तत्परिखातलस्य च मुखद्वारं प्राचीदिङ्मुखमथवोदीचीदिङ्मुखं साधिष्ठानं वितलगोपुरोज्ज्वलं दृढार्गलकवाटसमोपेतं च कृत्वा तन्मुखभाग एव हस्त्यायुर्वेदाश्वायुर्वेदपारगाणां भिषजामाधोरणाश्ववरादीनामावासशालां गृहाणि वा स्थापयेत् । किञ्च तत्र तु वाजिवारणशालामुखभागे स्थलवैशाल्याद्यभावे नगरमध्ये वा तस्य भिषजो वासस्थानं प्रकल्पयेदिति विकल्पः ॥

किञ्च वाजिवारणशालायाः मुखद्वारस्य पुरतःस्थले परिखाया अन्तःस्थले वा वहिर्वा गजानामश्वानां च नानागत्याद्यभ्यासयोग्यां भूमिं समन्ततो रक्षाशृङ्खलादियुतां निरावरणमेव स्थापयेत् । अपि च तादृशगतिशालास्थले भूभागे शिलाखण्डादिर्यदि दृश्येत, तदा तत्सर्वं भृत्यैरायुधादिभिर्बहिर्व्यपोह्य तत्स्थाने मृदुसैकतपुञ्जं वा वालुकाशीकरान्वा प्रसारयेत् । तथात्व एवाश्वादीनां नानागत्यभ्यासक्रियाया भूतलसौकर्यमिति भावः ॥

दृढबन्धनसंयुक्तं परिखान्वितमेव वा ।
गजशालां व्यापृतिकां स्थापयेद्वालुकान्विताम् ॥ १४ ॥
परिखावलये वापि तदन्तव्यासंसंयुताम् ।
महामार्गसमोपेतं तत्स्थानं कल्प्यमीरितम् ॥ १५ ॥
नैमित्तिका मुखे स्थाप्या शाला मण्टपरूपिणी ।

---

एवं गत्यभ्यासस्थलसहितायाः वाजिवारणशालायाः मुखद्वारद्वयेन मुखद्वारस्थलेन सह देशान्तरागतमहामार्गराजमार्गादिसम्मेलनञ्च करणीयम् । इत्थंप्रकारेण नित्यशालाया लक्षणं सङ्क्षेपेण प्रतिपादितम् ॥

अथ नैमित्तिकाया वाजिवारणशालाया लक्षणं प्रतिपादयति शास्त्रकारः । यथा–एषा नैमित्तिकशाला तु राजभवनमुख्यकल्पनस्य नातिदूरे वा, प्राथमिकद्वारभागस्य सव्येऽपसव्ये स्थले वा, आस्थानशालाया नातिदूरे पुरोभागे वा क्वचित्परिखाद्वारस्य मुखभागस्थले वाऽन्यत्र समुचितस्थले शालारूपा वा मण्टपरूपा वा स्थाप्या । तत्र च दशसंख्याकानामश्वानां वारणानामेवात्र नैमित्तिकशालायां स्थितिस्समुचितसमये युक्ता । कुत इयं शैली ? तन्निरीक्षणादिना तद्विभवादिवर्धनायेति । तस्मात्पूर्वोक्तरीत्याऽत्रापि नैमित्तिकवाजिवारणस्थापनस्थाने क्षुद्रमङ्गणं कल्पयित्वा तन्मध्ये तांस्तु वाजिवारणोत्तमान् हेमभूषापट्टवस्त्रादीभिरलङ्कृत्य स्थापयेदिति क्रमः ॥

मुखकोणयुता वापि पुष्पकर्णादिमण्डिता ॥ १६ ॥

सर्वालङ्कारसंयुक्ता यथाशोभं यथाबलम् ।
प्रकल्पयेन्नरपतिस्सम्पदामभिवृद्धये ॥ १७ ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे
वाजिशालाहस्तिशालालक्षणनिरूपणं नाम
अष्टत्रिंशदेकोनचत्वारिंशाध्यायौ ॥

---

किञ्चैतादृशनैमित्तिकशालायां साधिष्ठानमण्टपरूपायां चतुर्ष्वपि दिक्कोणेषु वलभीमध्यभागेषु च पुष्पकर्णादिनानालङ्करणचित्रतक्षणादिकं विरचय्य मङ्गलमुखभद्रसहितकल्पनञ्च संयोजयेदिति ॥

किञ्चेमां नैमित्तिकां वाजिस्थापनशालां वारणस्थापनशालां च यथाशोभं यथाबलं सचित्रमुखफलकादिभिरलङ्कृत्य तत्र तत्र चित्तरञ्जकचित्रादिजालं च रचयेदिति सङ्क्षेपेण वाजिवारणशालाभेदलक्षणमुक्तं बोध्यम् ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
वाजिशालाहस्तिशालानिरूपणं नाम
अष्टत्रिंशैकोनचत्वारिंशाध्यायौ
कुलकरूपौ ॥



अथ विद्याशालालक्षणकथनं नाम

## चत्वारिंशोऽध्यायः ॥

प्रासादे भवने पुर्यां ग्रामे वा शुभवास्तुके ।
विद्याशालामेकशैलीमेकसूत्रप्रमाणकाम् ॥ १ ॥

---

॥ चत्वारिंशोऽध्यायः ॥

अथास्मिंश्चत्वारिंशाध्याये विद्याशालाख्यपाठाभ्यसनशालानिर्माणादिक्रममुपदिशति — प्रासाद इत्यादिना । तां तु विद्याशालां कुत्र वा स्थले स्थापयेदित्याकाङ्क्षायां सर्वतोभद्रादिनगरोत्तमनिर्मितभूपालप्रासादवास्तुस्थल एवैकस्मिन् प्रदेशे तां विद्याशालां स्थापयेत् ॥

अथवा तत्र नृपप्रासादभवनादिवास्तुस्थलेषु तादृशविद्याशालास्थापनार्हस्थलवैशाल्याद्यभावे तामिमां शालां सर्वतोभद्रादिनगरस्य मध्यवास्तुभागे वा समुचितप्रदेशे देवालयमुखवीथ्याख्यमहावीथ्यां वा राजवीथ्यां वा न्यायशालादिकल्पनस्थलस्य समीपे वा समुचिते स्थले नानामार्गसम्मेलनस्थले शुभवास्तुभूमौ विद्याशालाख्यां पाठशालां स्थापयेदिति लक्षणवाक्यार्थः ॥

किञ्चात्र पाठशालाकल्पनविषये शुभवास्तुलक्षणं किमित्याकाङ्क्षायामेतादृशविद्याशालाकल्पनभूभागस्य समन्ततः पनसवञ्जुलपूगनारिकेलरसालमालतीप्रमुखानामभिवर्धनकरी वास्तु-

समानकल्पनयुतां नानाभौमामपि क्वचित् ।

---

भूमिर्भवितव्या । किञ्च मुहुरितस्ततः सञ्चरणशीलानां बालकानां पादादिषु औष्ण्यानुत्पादयित्री नातिशीतोष्णवातवीजन-कारिणीत्यादिसल्लक्षणान्विता भूमिरित्याशयः ॥

किञ्चैवं सल्लक्षणान्वितशुभभूमौ पाठशालास्थापने कोपि मुख्यो नियमः । यथा ग्रामे वा नगरे वा स्वाभीप्सितलब्धशुभ-भूमिषु पाठशालास्थापनेऽपि तैस्तैर्भूपालैस्स्ववाञ्छानुगुणमेकया निर्माणशैल्या समेतामेव निर्मितिं रचयेदित्युपदेशः । अस्य विशदार्थो यथा—नगरे पाञ्चालशैल्या भासुरं विद्याशालाकल्पनं यदि निर्मितं तदा सर्वत्र तस्य भूपालस्य देशेषु ग्रामेषु स्थलान्तरेष्वपि तथैव पाञ्चालशैल्या सहितमेव विद्याशालाकल्पनं वरं; न तु एकत्र पाञ्चालशैलीभासुरविद्याशालानिर्माणमन्यत्र ग्रामादिषु मागध-शैलीभासुरविद्याशालाकल्पनमित्यादिरित्यर्थः ॥

किञ्चैकस्मिन्नेव विद्याशालाकल्पने प्रथमसौधं पाञ्चाल-शैलीचित्रादिमिलितं कारयित्वा तदुपरि द्वितीयभौमतले मागध्यादि-शैल्यन्तरचित्ररचनादिकं सर्वथा न कार्यमेवेत्यर्थः । एवं तैस्तैर्भू-पालैस्स्वस्वनगरग्रामदेशस्थलेषु स्वस्ववाञ्छानुगुणं सर्वत्र शैल्यन्तर-सङ्कीर्णरहितमेकशैलीयुतमेव एकसूत्रगतप्रसारोपेतं चित्रादि-कल्पनास्वपि सर्वत्र तुल्यप्रमाणवच्च विद्याशालाकल्पनं निर्मापयेदिति पिण्डितार्थः ॥

वासवार्षद्वारयुक्तां कल्पयेत्क्षेमसिद्धये ॥ २ ॥
मध्यमानाधिका चान्तःशाला चत्वरशोभिनी ।

---

तथापि ग्रामादिषु क्षुद्रप्रमाणविद्याशालाकल्पनं नगरराजधान्यादिस्थलेषु विद्यार्थिनां संख्यानुगुणं तदपेक्षयाऽधिकायामवैशाल्यादिप्रमाणं नानाभौमलसितञ्च विद्याशालाकल्पनं करणीयमित्युक्तं भवति । कचिद्बहुजनसदनवत्सु ग्रामादिस्थलेषु त्रिभौमलसितं विद्याशालाकल्पनमप्यभिप्रेतमिति शिल्पज्ञाः । सर्वथा तस्मिन्देशे विद्याशालासु तुल्यशैली योजनीयेति ॥

किञ्चैवंरीत्या कल्पनीयाया विद्याशालायाः प्राथमिकं मुखद्वारं ऐन्द्रदिङ्मुखमत्यन्तं श्रेयःप्रदं दक्षिणोत्तरपश्चिमदिग्भागेषु विद्याशालामुखद्वारकल्पनमपि न दोषाय । किन्तु श्रेयस एवेत्युक्तम् । तस्मात्तत्र तत्र नगरग्रामादिषु संप्राप्तवास्तुस्थलानुगुणं तादृशमहावीथ्यादिसम्मेलनस्थलानुकूलं च द्वारस्थापनमुशन्ति शास्त्रकारादयश्शिल्पिवर्गाश्च । तत्र च कोऽपि विशेषः । यथैवमत्रोक्तरीत्या महावीथीस्थलानुगुणं विद्याशालामुखद्वारस्थापनेऽपि तादृशमुखद्वारं सारदारुमयं शिलामयं वा कल्पितमपि द्वारलक्षणाध्यायोक्तरीत्या **क्वचिद्वासवद्वारकल्पनोपेतमन्यत्रार्षद्वारकल्पनोपेतमेव** निर्मापणीयम । इयमेव **विद्यार्थिनां मेधारोग्यादिवर्धकमिति** शास्त्रकारोपदेशः ॥

अथैतादृशविद्याशालाकल्पनप्रमाणमाह – **मध्यमानाधिक-**मित्यादिना । सर्वविधनिर्माणेष्वपि पूर्वभागो मध्यभागः पश्चाद्भाग इति भागत्रयविभजनं किल वर्तते । तत्र विद्याशाला-निर्माणे पूर्वभागपश्चाद्भागयोः दण्डप्रमाणहीनत्वं मध्यभागे दैर्घ्यवैशाल्यप्रमाणाधिक्यमिति मुख्यं लक्षणं बोध्यम् ॥

अस्य विशदार्थो यथा — ग्रामे वा नगरे राजधान्यां वा विद्याशालानिर्माणे स्थपतियजमानभूपालप्रमुखैस्तात्कालिक-विद्यार्थिनां भाविनि काले प्रवेशयोग्यानां विद्यार्थिनां चार्हं स्थलं प्रथमत एव निश्चित्य प्रकल्पनीयम् । तादृशविद्याशालायाः पूर्वभागे प्राथमिकद्वारसमीपे साधारणदण्डदशकायामयुतं पुरतो-ऽङ्गणकल्पनमन्तश्शालामिलितं यदि निर्माणं कृतं तर्हि मध्यमभागे साधारणदण्डविंशतिकायामयुतं वा तदधिकमानयुतं वा कल्पनस्थलं स्वीकृत्य प्राथमिकद्वारवत्तत्र च द्वारान्तरं प्रकल्पयित्वा, तत्समीपेऽपि अङ्गणकल्पनमन्तःस्थले तत्रत्यशालासहितकल्पनञ्च निर्मापयित्वा पश्चाद्भागे पूर्वभागे साधारणदण्डदशकायामवत्पुरतोऽङ्गणकल्पन-मन्तश्शालासहितं निर्माणं च कल्पनीयमिति भावः ॥

चतुर्दिग्द्वारसंयुक्ता चतुःकल्पनशोभिनी ।
नानावरणसंयुक्ता तलपञ्चकभासुरा ॥ ४ ॥
सुषिराढ्या स्तम्भयुता समकल्पनभासुरा ।

---

एवमत्रोद्धारमण्डलप्रदर्शितपरिपाट्या मध्ये मध्ये प्रमाणाधिक्यकल्पनं तदुभयतस्तदर्धप्रमाणकल्पनञ्च भाविकाले निर्माणस्याप्यर्हस्थले वैपुल्याद्युपेतकल्पनमपि प्रकल्पनीयमित्युपदेशः ॥

तथा चैतादृशकल्पनापरिपाटीभासुरस्य विद्याशालाकल्पनस्य मुख्यद्वाराणि प्राच्यादिषु चतुर्ष्वपि दिग्भागेषु यथास्थलविभवं स्थापनीयानि । तथापि तत्र तत्र स्थापितं पुरद्वारन्तु द्वारलक्षणाध्यायोक्तवासवद्वारार्षद्वारप्रमाणादियुतमेव कार्यमिति मुख्यः पक्षः । एतत्प्रयोजनन्तूक्तपूर्वमेव । किञ्चास्या विद्याशालाया मध्यभागे द्वित्रिचतुःस्थानेषु चतुरश्रं चत्वरनिर्माणङ्कल्पयित्वा तत्र कावण्याख्य (பந்தல்) पटलीं विरचय्य मालतीकुन्दादिलताप्रसारणञ्च तत्र पटलस्योपरि कलयेदिति क्रमः ॥

किञ्चैतादृशचत्वरपञ्चकसहितकल्पनस्थानं प्रथमावरणस्थलमित्यर्थः । तस्मात्तत्र तत्र ग्रामनगरराजधानीषु विद्यार्थिसंख्यानुगुणं एतादृशविद्याशालायाः प्रथमावरणमात्रमथवावरणद्वयमावरणत्रयावाधिकं कार्यमित्याशयः । किञ्च प्रत्यावरणकल्पनमपि त्रिभौमयुतं वा पञ्चभौमयुतं वा समसानं समचित्र-

शालामण्टपभेदेन द्विधाऽधिष्ठानभाक् तथा ॥ ५ ॥
दृढाभित्तिसमायुक्ता वातायनशतान्विता ।
महाशाला बहिः स्थाप्या द्वारभागे विशेषतः ॥ ६ ॥
मिथो द्वारसमोपेता मध्यशाला प्रकीर्तिता ।
वास्तुभेदेन तद्भागं प्रविभज्य विशेषतः ॥ ७ ॥
गुरुवेदिसमायुक्तां कल्पयेन्नगरोत्तमे ।

---

पङ्क्तिकं दृढभित्तिभागेषु कारितवातायनशतशोभितमन्तर्भागे तत्र तत्र कल्पितेषु क्षुद्रसदनेषु रम्यचित्रमनोहरं भौमान्तभित्त्यन्तस्स्थले क्षुद्रकलशस्थापनशोभितं तादृशभौमान्तमध्यभागोपरितले चतुर्ष्वपि मुख्यदिग्भागेषु समसूत्रेषु चतुरश्रमविचित्रविमानशिखरकल्पनभासुरं च कल्पयेदिति लक्षणवाक्यार्थः ॥

किञ्चास्या विद्याशालायाः क्षुद्रप्रमाणे भागे दीर्घप्रमाणे भागे चोभयोरपि पक्षयोश्शिलामयस्तम्भोपेतशालाकल्पनं कार्यम् । अस्याश्शालायास्सदनबाह्यशालेति व्यवहारश्च बोध्यः ॥

अत्र तु विद्याशालाकल्पने सदनं नाम गुरुवेदिकासन-सहितं तत्तद्विद्याभ्यसनस्थलमित्यर्थः । तथा चात्रोद्धारमण्डले प्रदर्शितरीत्या सव्यापसव्यभागयोः क्षुद्रप्रमाणत्रयकल्पने सदन-षट्कं दीर्घप्रमाणकल्पनद्वये आहत्य संख्यायां सदनदशकोपेत-मेवैकावरणस्थलमिति फलितम् । किञ्च पूर्वप्रतिपादितरीत्या

शास्त्रशालान्वितां मध्ये वादस्थानसमन्विताम् ॥ ८ ॥

---

नानाभौमकल्पनेऽपि एतादृशावरणद्वयस्य वा आवरणत्रयस्य वा कल्पनेऽपि प्रथमभौमाख्यभूमिभौमतले यत्र यत्र स्तम्भकल्पन-भित्तिस्थापनसदननिर्माणादिकं क्रियते, तदेव प्रमाणं, सैव सदन-कल्पनादिरचना, द्वितीयभौमतृतीयभौमादिषु स्थापनीयेति नियमः। किं चात्र विद्याशालाकल्पने तदात्व एव कल्पनसन्धिबन्धादि-दार्ढ्यहेतुरिति भावः। किञ्चात्र विद्याशालाकल्पने प्रथमावरणे सव्यापसव्यभागयोरतिदीर्घप्रमाणकल्पनद्वयं कल्पितं किल। तत्राति-दीर्घभागे सारदारुकृतकवाटद्वयभासुरसदनान्तरसदनमपि क्वचित् तस्य चान्तरसदनमपि प्रकल्पयेदित्याशयः॥

अयञ्च क्रम उपरिभौमतलेऽपि नेय इति शिल्पसमयः। एवं प्रत्यावरणं प्रतिभौममनेकवातायनसहितसदनान्तरसदन-तदन्तरसदनकल्पनादिकं च कृत्वा तेषां सदनान्तरसदनादीनां चतुर्ष्वपि दिग्भागेषु तदन्तिकस्थशालाप्रवेशनार्थं द्वारद्वयस्थापनं कार्यम्। एवं तत्र तत्रान्तिकस्थसदनकल्पनेष्वपि प्रवेशार्हद्वार-स्थापनमवश्यङ्करणीयमित्याशयः॥

किञ्च तत्र तत्र सव्यापसव्यभागयोश्चत्वरसमीपे स्थले कल्पितमहाद्वारपुरोभागे वेदिकाङ्गणसहितक्षुद्रशाला च निर्माप-णीया। अपि च तेषु सदनेष्वेकस्मिन्सदने काव्यपाठाभ्यासः

परीक्षास्थानसंयुक्तां कल्पाभ्यासगृहां तथा ।

---

सदनान्तरे पुराणपाठप्रवचनं, सदनान्तरे वेदपठनमन्यत्र सदनान्तरे तर्कपाठाभ्यासः सदनान्तरे व्याकरणपाठाभ्यास इत्यादिक्रमेण तेषां बहूनामपि सदनानां साफल्यं बोध्य-मित्याशयः । किञ्चात्र विद्याशालायां शिल्पशास्त्रकारकृतनियमः कोऽपि विद्यते । यथा—पूर्वोक्तरीत्या विद्याशालाकल्पने पञ्चभौम-निर्माणे भूमिभागकल्पितप्रथमभौमसदनेषु सङ्कीर्णवर्णजानामेव नानाविधविद्याभ्यासः कार्यः । द्वितीयभौमसदनेषु शूद्राणां पाठाभ्यासस्तदुपरि तृतीयभौमतले वैश्यानां, तदुपरि चतुर्थ-भौमतले क्षत्रियाणां तदुपरि पञ्चभौमतले विप्राणामिति क्रमेण जाति-पूर्वकाभ्यासक्रमः कथित इति मतान्तरमत्र स्फुरति नयविदा-मिति ॥

किञ्चात्र विद्याशालायां प्रत्यावरणतलं प्रतिभौमतलञ्च तत्तद्विद्यार्थिनां पठितपाठचिन्तनचर्चाशालां च क्वचित्स्थापयेत् । तथाऽऽवरणस्य मध्यस्थले क्वचित् क्षुद्रशालां वा मण्टपं वा विरचय्य तत्र नानाशास्त्राभ्यासादिसंप्राप्तकौशलानां विदुषां वादस्थानमासनान्वितं रचयेत् ॥

किञ्चात्र कल्पने स्थलान्तरे उपरिभौमभागे वा तत्तत्कालो-चितपरीक्षाशालाञ्च स्थापयेत् ॥

नानाभेदयुतां भूपो राजधान्यां प्रकल्पयेत् ॥ ९ ॥

विमानाशिखरोपेतां नानाचित्रमनोहराम् ।
सर्वालंकारसंयुक्तां पूर्वमण्टपशोभिताम् ॥ १० ॥

सह मङ्गलघोषेण लोकक्षेमाय भूपतिः ।
स्थापयेच्छिल्पिभिर्विद्याशालां शुभमुहूर्तके ॥ ११ ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे
विद्याशालालक्षणकथनं नाम
चत्वारिंशोऽध्यायः ॥

---

किञ्चैतादृशलक्षणान्वितां पञ्चभौमकल्पनोपेतां नानाशास्त्राभ्यासयोग्यां विद्याशालां भूपालादिक्षत्रियाः तत्र तत्र नगरोत्तमेषु राजधान्याञ्च स्थापयेयुः । किञ्चैतादृशविद्याशालायाः प्रथमद्वारस्थापनन्तु मङ्गलवाद्यवादनादिपूर्वकं शुभे मुहूर्ते करणीयम् । किञ्च तादृशप्राथमिकद्वारस्य नातिदूर एव प्रदेशे चतुर्भिरष्टभिर्वा युग्मपादकैर्भासुरमतित्रिशालं पूर्वमण्टपञ्च नानालङ्कारोपेतं सविमानाशिखरं स्थापयेदित्युपदेशः ॥

किञ्चैतादृशपूर्वमण्टपान्वितामिमां पाठशालां मध्यमाधिष्ठानोपरि मण्टपरूपां वा शालारूपां वा नानासुषिरकल्पनभासुरां स्थलानुगुणदैर्घ्याद्युपेतां प्रकल्प्य एतस्याश्शालायास्सर्वतो दिग्भागेषु रसालपनसपूगकदलीमालतीकुन्दादिप्रवृद्धिञ्च कारयित्वा

अथ सङ्कीर्णभवनलक्षणकथनं नाम
एकचत्वारिंशोऽध्यायः ॥

सङ्कीर्णभवनं स्थाप्यं ग्रामेषु नगरेष्वपि ।

---

श्रीमद्वाल्मीकिमहर्षिणा प्रतिपादितरीत्या शालामुखभागस्थलं जलसेकादिमनोहरञ्च प्रकल्पयेदिति सङ्ग्रहेण विद्याशाललक्षण-मुक्तं ज्ञेयम् ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
विद्याशाललक्षणकथनं नाम
चत्वारिंशोऽध्यायः ॥



॥ एकचत्वारिंशोऽध्यायः ॥

एतावता प्रबन्धेन प्रायशो ग्रामाणां, नगराणां, दुर्गाणां, क्वचिन्नृपभवनकल्पनीयकल्पनानाञ्च लक्षणानि प्रतिपाद्योपरि विशेषतो वक्ष्यमाणमानवभवनशालाद्यान्तरालिककल्पनाविशेष-लक्षणप्रकारं प्रतिपादयितुं आदौ क्वचिद्ग्रामादिषु स्थापनीय-सङ्कीर्णभवनलक्षणमनेनैकचत्वारिंशाध्यायेन व्यनक्ति— सङ्कीर्ण-भवनमित्यादिना । नातिधनिकैर्नाल्पधनैर्मानवैः क्वचिच्चतुर्मुख-पूर्वमुखविश्वकर्मकैलासाख्यग्रामादिषु वा प्रस्तरपुरादिनगरेषु सङ्कीर्णभवनं स्थाप्यमिति लक्षणवाक्यार्थः । सङ्कीर्णभवनं नाम

क्वचिदिच्छावशात्तुङ्गसुधाद्वारं सशालकम् ॥ १ ॥

---

किमिति चेदुच्यते । यथा — क्वचित्कल्पने भूपालादिभवनशैली क्वचिदतिधनिकभवनशैली, स्थलान्तरे साधारणमानुषगृहशैली इत्येवं त्रिविधरूपशैलीकल्पनसहितमेव सदनं सङ्कीर्णभवन-नामभाग्भवतीत्यर्थः ॥

एतत्त्रिविधशैलीभेदमपि क्रमेणात्रोदाहरति — क्वचि-दित्यादिना । इदञ्च सङ्कीर्णभवनं हर्म्यप्रासादकल्पनवद्विशाल-वास्तुभूमौ वा निष्कुटारामसंवृतभूमौ वा कल्पनीयमिति न नियमः । परन्तु पूर्वोक्तग्रामोत्तमनगरप्रतोल्यां महावीथ्यां राजवीथ्यां वा पार्श्वस्थगृहाणां मध्ये साधारणदण्डदशकमारभ्य द्विद्विदण्डप्रमाणवर्धनरीत्या विंशतिदण्डान्तप्रमाणोपेतं कल्पनं यथाविभवं स्थापयेदित्युपदेशः । किञ्च दैर्घ्यं तु ग्रामनगरगृहार्थं विभक्तस्थलेष्वर्धभागावधिकं वा क्वचित् त्रिपादकमानं वेति विकल्पः । अयं क्रमः सर्वेष्वपि साधारणमानवगृहादिषु योज्य इति शिल्पसमयः ॥

किञ्चैतादृशदैर्घ्यवैशाल्योपेतस्य सङ्कीर्णभवनस्य प्राथमिकं मुखद्वारं तु सारदारुमयमथवा सुधेष्टिकामयं अत्युन्नतप्रमाणं वा स्थाप्यम् । एतेषु सुधेष्टिकामयद्वारेषु कवाटादिसंयोजनतदाधार-भूतायःकीलादिस्थापनविषयक्रमस्तु उत्तरत्र त्रिचत्वारिंशाध्याये स्पष्टीकरिष्यत इति भावः ॥

अलिन्दभागे महती शाला तत्र प्रकीर्तिता ।
नवरङ्गसमोपेता मध्ये वैवाहिकी मता ॥ २ ॥

---

किञ्चैतादृशप्राथमिकद्वारस्य पुरोभागे पूर्ववेदिकासहितं वा तद्रहितं वा शालाकल्पनमवश्यं कार्यम् । अस्याश्शालायाः पूर्वमुखशालेति व्यवहारः । अपि चैतस्याः पूर्वमुखशालाया वैशाल्यं साधारणदण्डपञ्चकमारभ्य दशदण्डावधिकं तदनुगुणं दैर्घ्यप्रमाणोपेतं स्थलं स्वीकृत्य तत्र विंशतिस्तम्भस्थापनं वा चतुर्विंशतिस्तम्भस्थापनं वा षोडशस्तम्भस्थापनमष्टस्तम्भस्थापनं वा साधिष्ठानं दृढं विरचय्य तादृशस्तम्भानामुपरि सुषिरकल्पनं (கமான்) निधाय तदुपर्यावरणस्थलं दृढं प्रकल्पयेत् ॥

यदि तस्य सङ्कीर्णभवनस्य भौमत्रयनिर्माणं तदा तत्पुरतःस्थले एवंप्रकारेण भौमत्रयेऽपि भौमद्वारमुखशालाकल्पनं करणीयमिति शिल्पसमयः । एवं पूर्वशालाकल्पनानन्तरं द्वारस्य पश्चाद्भागे देहलीं साधारणदण्डद्वयवैशाल्योपेतां कृत्वा तद्देहलीतरणानन्तरं महती शाला त्रिभौमेषु वा भौमद्वये वा एकभौमाख्यप्रथमभौमतल एव वा निर्मापणीयम् । अस्याः शालाया विवाहशाला देहलीशालेति च नामान्तरमुशन्तीति साधवः ॥

किञ्चास्या विवाहशालायाः कल्पनं तु चतुरश्रं व्यासहीनं वा कार्यम् । चतुरश्रशालायाः साधारणदण्डचतुष्कादिद्वादशदण्डान्तं

चतुष्कूटसमायुक्तं कल्पनं तत्र कारयेत् ।
ततश्चत्वरभागाढ्यं भोजनागारमीरितम् ॥ ३ ॥

---

दैर्घ्यं तदर्धमपि आयाममानं वरमिति तद्विवेकः । एवमुक्तरीत्या अस्याश्शालाया यथेच्छकल्पनेऽपि अवश्यं शालामध्ये नानालंकृतिभासुरां शुभवेदिकां, ताञ्च परित ईशानादिकोणचतुष्कभागेषु स्तम्भाष्टकं, चतुःस्तम्भं वा नवरङ्गकल्पनं स्थापयेत् । नवरङ्गकल्पनं नाम कोसलवङ्गशूरसेनमगधादिदेशेषु प्रायशः कल्प्यमानतन्नामकशैल्या चतुरश्ररूपकल्पनं प्रतिभौमोपरितलं सवातायनचतुष्कं चतुष्कूटसहितञ्च कचित्सडोलासनमिति विवेकः ॥

किञ्चैतादृशनवरङ्गकल्पनभासुरायाः पूर्वोक्तविवाहशालायाश्चतुर्ष्वपि दिक्कोणेषु क्षुद्रगृहचतुष्कं वा तदपेक्षयाधिकप्रमाणक्षुद्रसदनचतुष्कं वाऽवश्यं स्थापनीयम् । यदि तावद्वास्तुभूभागवैशाल्यं तदैतस्याः विवाहशालायाः सव्यापसव्यभागयोः क्षुद्राङ्गणद्वयमथवा द्वादशस्तम्भोपेतं क्षुद्राङ्गणशालाकल्पनं वा प्रकल्पयेदिति । अयञ्च क्रमो विन्ध्यस्योत्तरदेशेषु अनुष्ठीयत इति केचित । किञ्चैतादृशविवाहशालातरणानन्तरं गृहवास्तुभागस्य पश्चिमभागारम्भे चत्वरकल्पनं विधाय तत्रापि चतुर्दिक्कोणेषु क्षुद्रगृहाणि कल्पयित्वा तेषु गृहेषु महानसमेकास्मिन् गृहे, इतरगृहे भोजनस्थानं, गृहान्तरे पाकक्रियोचिततण्डुलसूपलवण-

चतुर्विंशद्द्वारयुतं द्वात्रिंशद्द्वारकन्तु वा ।
भौमत्रययुतं प्रायो नानावातायनान्वितम् ॥ ४ ॥

शावलापटलीयुक्तं क्वचिदन्तस्सपङ्ककम् ।
नानाचित्रसमोपेतं क्वचित्सुषिरकल्पनम् ॥ ५ ॥

चतुर्दण्डविशालाढ्या मध्यशाला शुभावहा ।

---

मरीचिकादिद्रव्यराशिस्थापनमन्यास्मिन्गृहे काष्ठशूर्पोलूखलादि-द्रव्याणि च स्थापयेदिति तेषां चतुर्दिक्कोणकृतानां चतुर्णां गृहाणामपि प्रयोजनं द्रष्टव्यमिति भावः ॥

किञ्चैतादृशलक्षणान्वितस्यास्य सङ्कीर्णभवनस्य पश्चाद्भागे भोजनालयसमीपे चतुरङ्गणोपेतमेकं चत्वरं वा चत्वरद्वयं वा विरचय्य तदनन्तरभागे वापीं कूपं वा निष्कुटञ्च कारयेत् । एवं भोजनालयसमीपे तदनन्तरभागे च स्थापितस्य कल्पनस्य चत्वरद्वयाङ्गणभागेषु उपरिभागे शावलकाख्यवक्रेष्टिकाजालैरावरणं सारदारुफलकापट्टिकोपरि स्थापनीयमिति क्रमः ॥

किञ्चात्र सङ्कीर्णभवने एवमुक्तरीत्या क्वचिच्छावलकाख्या-स्तरण(ஓடு)कल्पनं क्वचित्सुधेष्टिकामया(மெத்தை)स्तरणकल्पनं चान्यत्र गृहपूर्वभागे भौमत्रययुतमेव कल्पनं च तत्त-त्स्थलानुगुणं स्तम्भरचनाभित्तिस्थापनसोपानकल्पनचित्रतोरणादि-स्थापनपूर्वकं क्रममानं विषमसंख्याहीनं च स्थापयेत् ॥

तदर्धमानका पार्श्वशाला भौमेष्वपि स्मृता ॥ ६ ॥
सुधादारुकृतस्तम्भचतुष्कं नवरङ्गकम् ।
भौमान्तं द्वित्रिदण्डेन व्यासेन परिशोभितम् ॥ ७ ॥
नानालङ्कारसंयुक्ता तत्रस्था शुभवेदिका ।
वापीकूपसमायुक्तं चत्वरद्वयभासुरम् ।
सङ्कीर्णभवनं नाम्ना कथितं पूर्वसूरिभिः ॥ ८ ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे
सङ्कीर्णभवनलक्षणकथनं नाम
एकचत्वारिंशोऽध्यायः ॥

---

अपि चात्र सङ्कीर्णभवने प्राथमिकद्वारप्रभृतिनिष्कुटप्रवेशद्वारावधिकस्थलपर्यन्तं कल्पितकल्पने भौमत्रये चाहत्य संख्यया द्वात्रिंशद्वारस्थापनमथवा चतुर्विंशतिद्वारस्थापनं कार्यम् । न चतुर्विंशतिसंख्याया हीनतेति भावः ॥

किञ्चैतेषु द्वारेषु प्राथमिकद्वारतदनन्तरद्वारमहाशालादिक्कोणगृहोपरि भौमद्वाराणि कानिचिदतिरम्यचित्रादिरचनोपेतान्यन्यानि साधारणरेखाचिह्नितानि च कृत्वा सर्वत्र दृढसन्धिबन्धकवाटद्वययुतानि प्रकल्प्यानीति शिल्पसमयः ॥

किञ्चेदं सङ्कीर्णभवनं यद्युद्यानादिभूमिभागे स्थापितं, यदि च वास्तुस्थलवैशाल्यादिकं तदैतद्भवनपुरोभागे क्षुद्रप्रमाणकं पूर्व-

मण्टपपूर्वशालयोरन्यतरकल्पनमपि श्रेयस इति साधवः । इत्थंप्रकारेण तत्र तत्र ग्रामेषु ग्रामोत्तमेषु नगरेष्वपि नातिधनिकावासयोग्यस्य वाणिज्यकृष्यादिकार्योचितनानासदनान्वितस्य सङ्कीर्णभवनस्य सङ्ग्रहेण लक्षणमुक्तं बोध्यम् ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
**सङ्कीर्णभवनलक्षणकथनं नाम**
**एकचत्वारिंशोऽध्यायः ॥**



अथ पताकालक्षणपारिभद्रलक्षणकथनात्मकौ

## द्विचत्वारिंशत्रिचत्वारिंशाध्यायौ ॥

द्वारतिर्यक्पट्टिकासु स्तम्भप्रस्तरमौलिषु ।

---

॥ द्विचत्वारिंशत्रिचत्वारिंशाध्यायौ ॥

अथैनयोः कुलकरूपयोर्द्विचत्वारिंशत्रिचत्वारिंशाध्याययोः सकलविधकल्पनार्हपताकालक्षणपारिभद्रलक्षणानि क्रमेण व्यनक्ति— **द्वारतिर्यक्पट्टिकास्वित्यादिना** । 'पताका वैजयन्तिका' इत्यादि-निघण्टुकारवचनव्युत्पत्तिक्रमस्तु काव्यादौ सामरस्यं भजते । अत्र तु शिल्पशास्त्रे पताकाशब्देन चित्रविशेषरचनादिशैली उपपाद्यत इति समयः ॥

तस्मात्पताकाशब्दाविष्कृतचित्ररचना कस्मिन्वा स्थाने प्रकल्प्येत्याकाङ्क्षायामादौ तत्स्थलमाविष्करोति— ग्रामेषु नगरेषु वा भूपालधनिकादिसकलविधमानवभवनेष्वपि च गृहेषु देवालयेषु च सकलविधद्वाराणां या तिर्यग्भूता, अधश्चोर्ध्वभागे च स्थितिमती पट्टिका, पट्टिकाश्च दारुमय्यः शिलामय्यश्च कल्पिताः, तासु पट्टिकासु पताकाख्यचित्ररचनां स्थापयेदिति लक्षण-वाक्यार्थः ॥

एवं दारुमयसुधेष्टिकामयशिलामयलोहमयादिस्तंभेषु गोपुर-द्वारभवनद्वारादेरुपर्यावरणस्थलेषु कचिद्विमानेषु शिखरेषु गृहादि-

तिर्यग्दारुषु सोपानपट्टिकासु विशेषतः ॥ १ ॥

दीपस्थानेषु पर्यङ्केष्वपि शालासु भूमिषु ।
गवाक्षेषु कवाटेषु वेदिकास्वासनेषु च ॥ २ ॥

पूतिकासूपपीठेषु नानावक्त्रेषु मेशिषु ।
पताका विविधा योज्या कल्पनैस्तक्षणैरपि ॥ ३ ॥

ऊर्ध्वमानैरधोमानैर्भूमिमानैश्च वर्तुलैः ।
तिर्यङ्मानैश्च विविधैः कल्पनार्हैर्यथाक्रमम् ॥ ४ ॥

---

शालाभागकल्पितदार्ढ्यापादनार्थतिर्यक्प्रसारितेषु तिर्यग्दारुखण्डादिषु भौमद्वयतलतृतीयभौमतलाद्यारोहणार्थं कल्पितेषु सोपानेषु तादृशसोपानवलभीप्रान्तपट्टिकासु तिर्यग्दारुमुखभागेषु दीपार्थं कल्पितस्थानविशेषेषु पर्यङ्कडोलामञ्चादिशयनकल्पनेषु विवाहशालादिनानाविधशालोर्ध्वभागेषु दृश्यस्थलेष्वलिन्ददेहल्यलिन्दचत्वरशालादिकल्पनेषु अधोभूभागेषु अनेकविधगवाक्षकल्पनेषु विविधकवाटेषु नानाविधवेदिकासु विमानेषु नानाविधासनेषु पूतिकाख्येषु वम्बरेषु नानाविधोपपीठेषु नानामुखेषु मेशिनामकायःकीलघटनयोग्यफलकादिष्वपि पताकारचनां कारयेदित्युपदेशः ॥

किञ्चैतेषु स्थानेषु तादृशपताकायोजनेषु पूर्वोक्ते नवमाध्याये सूत्रादिमानकथनप्रकरणप्रतिपादितं ऊर्ध्वमानाधोमानभूमानवर्तुल-

मात्वा प्रमाणविच्छिल्पी पताकां मेलयेत्क्रमात् ।
शोभार्थमपि रक्षार्थं नानारूपा च सा मता ॥ ५ ॥

मुखं प्रतिमुखं तोला किङ्किणी रेखिका च्छटा ।
पद्मका कुमुदा दीपा बिन्दुका झषरूपिणी ॥ ६ ॥

नासिका रूपिका कम्पा विरिकास्याऽञ्जना परा ।

---

मानतिर्यङ्मानाख्यं मानपञ्चकमपि तत्र तत्र स्थलक्रियानुगुणं संयोज्य क्वचिट्टङ्कादितक्षणैः, क्वचित् सुधेष्टिकाशकलादिकल्पनैरङ्गणकल्पनरन्ध्रभेदनसमीकरणादिभिर्विविधाकारां तादृशपताकाख्यनिर्माणरचनां प्रकल्पयेदिति पिण्डितार्थः । किमर्थमिदं पताकायोजनमिति चेत्, उच्यते । यथा — पूर्वोक्तद्वाराधःपट्टिकादिस्थानेषु शोभार्थं क्वचिद्रक्षणदार्ढ्योत्पादनार्थं पताकायोजनमिति भावः ॥

सा च पताकारचना द्वारगवाक्षपर्यङ्कादिस्थानभेदेन विविधतक्षणसुधेष्टिकादिकल्पनवर्णसंयोजनादिना च विविधरूपा भवति । तेषां सर्वेषां स्वरूपप्रमाणादिकं तक्षककशकारदारुकारादिभिरवश्यं ज्ञेयमित्युपदेशः ॥

किञ्च तेषु प्रसिद्धनामानि शास्त्रकारोऽत्र प्रतिपादयति— **मुखं प्रतिमुखमित्यादिना** । पूर्वोक्तपताकास्वरूपं तावत् मुखं, प्रतिमुखं, तोला, किङ्किणी, रेखिका, छटा, पद्मका, कुमुदा,

गला च प्रस्तरा वेशा प्रपा पर्यङ्किका तथा ॥ ७ ॥
मृदङ्गा पटहा काल्या शौकी छत्रा वरासका ।
मध्यरेखा मध्यतारा प्रान्ततारा सरन्ध्रका ॥ ८ ॥
दण्डिका वलिका क्षुभ्या मारा चान्धारिका तथा ।
पुष्पा फला च कुम्भा च दैवी मानुषिकी तथा ॥
ऐरावता च कैलासा शिखरा च विमानिका ।
रथिका तुरगा योधा गजा चन्द्रार्कभाकरा ॥ १० ॥
पताका विविधा प्रोक्ता मुनीन्द्रैः शास्त्रपारगैः ।

---

दीपा, बिन्दुका, झषस्वरूपा, नासिका, रूपिका, कम्पा, विरिकाख्या, अञ्जना, परा गला, प्रस्तरा, वेशा, प्रपा, पर्यङ्किका, मृदङ्गिका, पटहा, काल्या, शौकी, छत्रा, वरासका, मध्यरेखा, मध्यतारा, प्रान्ततारा, सरन्ध्रा, दण्डिका, वलिका, क्षुभ्या, मारा, आन्धारिका, पुष्पा, फला, कुम्भा, दैवी, मानुषी, ऐरावता, कैलासा, शिखरा, रथिका, तुरगा, योधा, गजा, चन्द्रार्का, भाकरेत्यादिभेदेन शास्त्रज्ञैर्मुनिभिर्विविधस्वरूपप्रमाणा निर्दिष्टा ॥

किञ्चैतासां पताकाख्यानां स्वरूपं प्रमाणादिकं स्थानभेदश्च शिल्पकार्यैरन्यैर्गुरूपदेशेन परम्परया शिल्पनिरीक्षणेन ज्ञेय इति क्रमः ॥

किञ्चैवमत्र प्रतिपादितमुखप्रतिमुखतोलाकिङ्किणिकादीनां सङ्केतनामभाजामङ्गवङ्गादिदेशभेदेन तत्तत्स्थानक्रियाद्योतकानां पताकाख्यचित्रक्रियाणां प्रमाणकल्पनशैलीनिर्माणसहकार्यायुध-भेदादिकं सर्वमपि शिल्पाचार्यपरम्परोपदेशादिभिरेव ज्ञातुं शक्यम् ॥

किञ्च शिल्पिभिर्विनाऽन्यैः शास्त्रज्ञैरपि सर्वथा नैतेषां पताकादीनां पारिभद्राख्यलोहकृतिभेदानां च लक्षणादिकं निर्णेतुं शक्यम् । तथापि अस्माभिर्यथामति व्याख्यान-धोरणीमप्याश्रित्य क्वचित् व्याख्यायते । यथा — मुखनामक-पताकाख्यशिल्परचना तु पूर्वोक्तद्वारपट्टिकादिस्थलेषु अभिमुख-सूत्रपातक्रमं कल्पिता वाजिवारणहंसशुकशारिकाहरिणकेकिगन्धर्व-यक्षकिन्नरदेवादीनां मुखसदृक्टङ्कादिशिल्परचनेत्यर्थः ॥

एवं प्रतिमुखनामकपताका तु एतादृशवाजिवारणहंसादि-मुखरचनाकल्पनं विनैव तत्प्रतिमुखरूपिका । भूतवेतालपिशाचिका-वानरभल्लूकादिमुखाख्यप्रतिमुखरचना तु देवालयस्तम्भसोपान-वलभीप्रान्तस्तम्भप्रस्तरादिभागेष्वेव स्थाप्या । सर्वथा न मानव-गृहेषु कल्प्येति नियमः ॥

तोलाख्यपताका तु तत्र तत्र स्तम्भादिप्रस्तरभागेषु चतुरश्र-रूपं मध्यस्थकुसुमरचनमन्त्यभागेषु द्वित्रिरेखायुतं कल्पन-मित्यर्थः ॥

किङ्किणीरूपं चित्रलक्षणं (रूं) सर्वत्र शिल्पलक्षण-कार्येषु प्रसिद्धमेव । रेखिकापताका तु रेखारूपा निरन्तरकल्पना, क्वचिद्विरळकल्पना, क्वचित्तिर्यग्रेखासहितकल्पनेत्यादिबहुरूपा प्रसिद्धा । छटा; पद्मका पद्माकारा । कुमुदा कुमुदाकारा । दीपा दीपाकारा । सिन्धुका; झषस्वरूपा एकमत्स्यरूपा, क्वचिन्मत्स्य-द्वयरूपा लक्षणकरणादिभेदवती चित्रकल्पना । नासिका साहारा शुकादिनासामात्रकल्पना । रूपिका; कम्पा तत्र तत्र कम्पाख्य-क्षुद्रप्रमाणलक्षणाकृतिः । चिरिकास्या; अञ्जना; परा ऽतिदीर्घप्रमाण-गोपुरमहीधरादिषु गन्धर्वादिचित्ररचना । गला वाजनप्रतिवाजन-मध्यपट्टादिस्थानमध्यरचनीयकल्पनास्वरूपिणी । प्रस्तरा प्रस्तर-रूपवती । वेशा क्षुद्रसोपानरूपिणी प्रवेशस्थलद्योतकचित्रकल्पना । प्रपा; पर्यङ्किका पर्यङ्काकारा । मृदङ्गा मृदङ्गाकारकल्पना । पटहा वर्तुलाकारपटहरूपवती कल्पना । काल्या; शौकी शुक-रूपवती । छत्रा छत्राकारकल्पनवती । परासका; मध्यरेखा अतिसूक्ष्मदृश्या शोभार्थकल्पिता मध्यरेखा । मध्यतारा; प्रान्त-ताराकल्पनं तु तूलपट्टिकागवाक्षद्वारफलकादिषु मध्यभागे चतुरङ्गविभजनवती सकुसुमा सालंकारा कल्पनलक्षणाकारा । सरन्ध्रा तत्र तत्र चित्रविशेषेषु समुचितप्रमाणस्थलेषु करणीय-मनोहररन्ध्रान्वितकल्पना । दण्डिकादीनां लक्षणं शिल्पिभि-रेवोह्यम् ॥

तां योजयेयुः शिल्पज्ञा यथाशोभं यथाबलम् ॥ ११ ॥

इति पताकालक्षणकथनम् ॥ ४२ ॥

---

ऐरावतद्वारभागकल्याणशालापाट्टिकादिषु कल्पनीया ऐरावतरूपवती प्रायशस्तक्षणरूपा । कैलासा कैलासादिसशिखरमहीधरकल्पनवती । शिखरा केवलशिखररूपिणी । विमाना केवलविमानरूपिणी । रथिका रथरूपवती । तुरगा तुरगरूपिणी । योधा सायुधयोधादिरूपभासुरा । गजा दन्तद्वयसहितगजहरिणसिंह्यादिरूपवती । चन्द्रार्का चन्द्रार्कयोर्मण्डलवती कल्पनेत्येवं सामान्यार्थगुम्भः । एवमुक्तरीत्या नानाविधपताकादिप्रमाणादिकं तु शिल्पिभिरेव कार्यज्ञैरुपदेष्टव्यमिति भावः ॥

किञ्चैतादृशी पताकाख्यकल्पनाविशेषपरम्परा तु तत्र तत्र समुचिते स्थले यथा विशेषशोभादार्ढ्यादिकं दृश्यं भवेत्तथा करणीयेति भावः । किञ्चैतादृशपताकाख्यविशेषशोभाजनकरचनाः विना द्वाराणां गवाक्षाणां पर्यङ्कादीनां तिर्यग्दारूणां शालाफलकादीनामपि न सर्वथा मनोहरत्वं स्यादित्यनुभवशास्त्रोपदेशक्रमो बोध्यः ॥

तस्माद्दिव्यदृष्टिभिर्मुनीन्द्रैरुदीरितानेतादृशपताकाकल्पनाभेदान् तत्र तत्र चित्रकार्येषु समुचितस्थलेषु तक्षकलोहकारककशकारादयो यथाप्रमाणशोभादार्ढ्यं स्थापयेयुरिति सङ्क्षेपेण पताकालक्षणमुक्तम् ॥

अथ पारिभद्रलक्षणकथनम् ॥ ४३ ॥

पारिभद्रं लोहकर्म कथितं मुनिपुङ्गवैः ।
तत्तत्स्थानेषु तद्योज्यं दृढसन्धानसिद्धये ॥ १२ ॥

वारटङ्कादिभिस्तच्च दार्ढ्यार्थं योजयेद्दृढम् ।
तत्प्रोक्तं विविधं लोके तत्तत्कार्यप्रमाणतः ॥ १३ ॥

दारुकारैर्लोहकारैः कल्पयेत्स्थानयोग्यकम् ।
तत्प्रमाणञ्च विविधं तज्ज्ञात्वा योजयेद्बुधः ॥ १४ ॥

मिर्णिका कुञ्चिका शङ्कुः कीला कीलया च कीलका ।
शृङ्खला तर्जिनी हस्ता शङ्कुला रन्ध्रिका तथा ॥ १५ ॥

---

अथ पारिभद्रलक्षणमाह — पारिभद्रं लोहकर्मेत्यादिना । एवमुक्तपताकाकल्पनयोजने क्वचिद्दारुपट्टिकासंयोजने स्तम्भोपरि बोधिकास्थापनादौ चायःकीलादिसंयोजनं विना न दार्ढ्यं भवेत । अयञ्च लोकप्रसिद्धो विषयः । तस्मात्तादृशायःकीलादिस्वरूपमेवात्र पारिभद्रपदेनोच्यत इति तत्पदशब्दार्थः । अतो दारुकारलोहकारादिभिरयःकल्पनस्थानेषु अयस्ताम्रपित्तलादिलोहैर्नानाविधकल्पनार्हः कृतो लोहखण्डशृङ्खलादिस्तत्तत्स्थानेषु योजनीय इत्यर्थः ॥

तदेव विशिनष्टि — मिर्णिकेत्यादिना । मिर्णिका (புட்டு) कुञ्चिका (தாவி) शङ्कुरिति दीर्घायःपट्टमयः । कीला

पट्टिका पट्टका पट्टी बोधिका बोधका बुधा ।
धारिणी धरणी धारा गलिका कण्ठिका गला ॥ १६ ॥
चित्रिका चार्गला कुण्ठा वेशिनी च प्रवेशिनी ।
इत्थेवं विविधा प्रोक्ता पारिभद्रक्रियार्हका ॥ १७ ॥
कवाटद्वारपर्यङ्कडोलास्तम्भासनादिषु ।

---

तदपेक्षया बृहदाकृतिः । कील्या तदपेक्षया बृहदाकारा। कीलकाऽतिसूक्ष्मस्वरूपा अयश्शङ्कुरित्यर्थः । शृङ्खला प्रसिद्धा । तर्जिनी, एवंरूपा गवाक्षक्षुद्रद्वारावली कवाटयोर्जिनी तद्दार्ढ्य-योजिनी तर्जिनीनामभाक् । हस्ता हस्ताकारा अयोमयपाट्टिका, अयोदर्वीति केचित ॥

शङ्कुला क्षुद्रक्रकचा प्रसिद्धा । रन्धिका रन्ध्रकारिणी । अथ वा स्थूलकायः रन्ध्रस्थान एव प्रवेशयोग्यायःपिण्डखण्डः सशिखरश्चेति केचित् ॥

पाट्टिका, पट्टका, पट्टीत्येतत्त्रिविधमपि अयःपट्टकल्पनं स्तंभादिगलस्थानेषु विशीर्णाद्यनुत्पत्तये स्थापनीयं परस्परं किंचि-द्वैशाल्यादिभेदयुतम् । बोधिकाबोधकाबुधाख्यमेतत्त्रिविधमप्ययः-खण्डकल्पनं तत्र तत्र गवाक्षस्तम्भादिमौलिभागेषु कल्पनीयम् । एवं कचित्स्तम्भादीनामधोभागेषु स्थापनीयायःखण्डमयी धारिणी धरणी धरेति बोध्यम । एवं गलिका कण्ठिका गला चायोमयी किञ्चिद्भेदप्रमाणवती गुलिकाकारा ॥

एवञ्चित्रका अर्गला कुण्ठा वेशिनी प्रवेशिनीत्यादयो नाना-

तिर्यग्दारुषु सोपानेष्वपि दार्ढ्याय योजयेत् ॥ १८ ॥
तत्स्थलं मसृणीकुर्याच्चित्रादींश्च प्रकल्पयेत् ।
युक्त्याऽन्यदपि तद्योज्यं शकटादिषु शिल्पिभिः ॥
नानालोहकृतं भद्रं यथामानं यथाबलम् ।
तत्तत्स्थानार्हकं योज्यं देवमानवकल्पने ॥ २० ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे
पताकालक्षणपारिभद्रलक्षणकथनात्मकौ
द्विचत्वारिंशत्रिचत्वारिंशाध्यायौ कुलकरूपौ ॥

---

विधा अयःप्रमुखलोहकृताः अयःकीलशृङ्खलार्गलादयः कवाटबन्धनद्वारफलकाबन्धनपर्यङ्कघटनडोलाफलकासंयोजनस्तम्भसन्धारण-कीलस्थापनयोजनादिदृढीकरणकार्येषु यथाप्रमाणं यथाबलं यथाशोभं स्थापनीयाः ॥

इत्थंप्रकारेण तक्षकलोहकारककशकारादिभिर्भवनगृहादिनिर्माणेषु रथशिबिकाशकटयानादिकल्पनेष्वपि स्वस्वकार्यांनुगुणं युक्त्या तत्तत्स्थलानुगुणं पताकाकल्पनानुगुणपारिभद्रकल्पनादिकं स्थापनीयमिति सङ्क्षेपेण पारिभद्रलक्षणमुक्तं ज्ञेयम् ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
**पताकालक्षणपारिभद्रलक्षणकथनात्मकौ**
**द्विचत्वारिंशत्रिचत्वारिंशाध्यायौ ॥**



अथ महाशालालक्षणविशेषशालालक्षणकथनात्मकौ

## चतुश्चत्वारिंशपञ्चचत्वारिंशाध्यायौ कुलकरूपौ ॥

तत्रादौ महाशालालक्षणकथनम् —

भूभृतां ब्राह्मणानाञ्च देवानाञ्च विशेषतः ।
वैश्यानां शूद्रजातानां महाशाला शुभप्रदा ॥ १ ॥

निषेव्या शुभकालेषु तूर्यघोषपुरस्सरम् ।
शिल्पिभिः कथिताः शाला विविधाः स्थलभेदतः ॥

---

॥ चतुश्चत्वारिंशपञ्चचत्वारिंशाध्यायौ ॥

एनयोरध्याययोश्चतुश्चत्वारिंशत्तमपञ्चचत्वारिंशत्तमयोर्देवानां ब्राह्मणादीनां सर्वेषामपि वर्णानां गृहभवनादिषु प्रकल्पनीयमहाशालाया विशेषशालायाश्च लक्षणं प्रतिपादयितुं आदौ तन्निर्मितिफलमाह — **महाशाला शुभप्रदेति ।** सर्वेषामपि वर्णानां एवंप्रकारेण बहुविधशुभकारिणी काचिन्महाशाला गृहभवनादिष्ववश्यं प्रकल्प्या ॥

सा च शाला सम्पूर्णनिर्माणनिष्पन्नानन्तरं शुभयोगमुहूर्ते मङ्गलवाद्यताडनपूर्वकं यजमानगृहपतिमुखैः निषेव्येति तत्प्रवेशनक्रमः सङ्ग्रहेणोक्त इति विवेकः । शालेत्येवालम् , कथं महाशालादिकमिति चेदुच्यते । सर्वत्र ग्रामनगरनिर्मितगृहभवनादिषु

एकद्वित्रिचतुःपञ्चषट्सप्ताष्टनव स्मृताः ।
दैवे च मानवे वास्तुभूभागे शुभदा मताः ॥ ३ ॥

पूर्वभागे पार्श्वयोश्च पश्चादेकैव सा मता ।
तासां मानञ्च त्रिविधं ज्ञेयं शिल्पविशारदैः ॥ ४ ॥

---

क्वचिद्देशविशेषेषु स्थलविशेषेषु वा देहलीभागतरणानन्तरमेकां शालां ततः प्रथमद्वितीयचत्वरभागतरणानन्तरमेकां शालामेवं भोजनकूटस्थाने शालामपराञ्च प्रकल्पयेदिति ग्रन्थान्तरवचनप्रतीतिबलात् । गृहभवनादौ साधारणशालानामनेकसंख्याकानां निर्माणे कृतेऽपि विशेषतो ब्रह्मभागे वा शुभस्थले तदपेक्षया अधिकप्रमाणवती काचिच्छालाऽवश्यं निर्मापणीया । सैव शुभदा सर्वेषाम् । एवं यथाविभवं निर्मिताया अस्याश्शालाया एव महाशालेति व्यवहार इति शिल्पकलाविचक्षणाः ॥

तस्मात्पूर्वोक्तरीत्या स्वस्वविभवानुगुणं स्वीकृतवास्तुभूमिके प्राथमिकद्वारस्य पूर्वभागे वाऽऽहोस्वित्सव्यापसव्यभागयोरुभयोर्वा ब्रह्मभागतरणानन्तरं पाश्चात्यभागारम्भस्थले वा इमां महाशालां अतिमनोहरशिल्परचनोपेतां निर्मायास्यां महाशालायां स्वेच्छाधीनं विवाहाचरणं क्वचित्समये ग्रन्थविशेषपठनादिकमन्यस्मिन्समये स्निग्धैरालापनादिकं कुर्वन्कौतूहलभरितस्तच्छालादेवताप्रसादनमपि स्वीकुर्वन् राजत इति शिल्पसमयः । तस्मादेवंप्रकारेण

विस्तारार्धतदर्धार्धतदर्धाधिकयोजनैः ।
प्रमाणैस्तच्च विज्ञेयं नगरादिषु तन्मतम् ॥ ५ ॥

---

सौख्यानन्दकारिण्या एतस्या महाशालायाः कल्पनद्वयं प्राथमिकद्वारस्य सव्यापसव्यभागयोर्यथामानं विषमकल्पनरहितं प्रकल्पयेत् । तन्मध्ये यथास्थलविभवं द्वित्रिसूत्रप्रमाणवन्मध्यस्थलं प्रायशः सावरणमेकभौमयुतमथवा तत्समानकल्पनोदयं वा स्थापयेत् ॥

एवं प्रकारत्रयभासुरस्यास्य कल्पनस्य किञ्चिद्दूरत एव प्रदेशे पूर्वोक्तपूर्वभवनं वाहनादेरारोहणादिफलकं स्थापयेदिति तत्क्रमः । किञ्च तादृशपूर्वभवनं विनैव तत्स्थाने एतन्महाशालास्थापने एकैव कल्पना सुखदेति भावः । एवं ब्रह्मभागकल्पनाविषयेऽपि ज्ञेया । एवं महासदनभवनहर्म्यप्रासादादिषु भूपालप्रमुखैर्महाश्रेयस्सिद्ध्ये महाशालाया निर्माणमेकमथवा तद्द्वयं कल्पनीयमित्युपदेशो ज्ञेय इति भावः ॥

किञ्च पूर्वतनमहर्षिभिः शिल्पकोविदैश्च निर्दिष्टप्रकारेण पूर्वोक्तभवनसदनादौ एतन्महाशालापेक्षया वैशाल्याधिक्यादिप्रमाणपरिकल्पनानां चित्राद्यलङ्करणविषये किञ्चिद्धीनरचनानामन्यासां क्षुद्रशालानामपि प्रकल्पनमवश्यं कार्यमेव । कुतः? तेषु तेषु समयेषु नानाविधद्रव्यस्थापनशयननित्यनैमित्तिककार्याचरणादिना तत्साफल्यमिति भावः । तस्मात्तादृशक्षुद्रशालानामेकं,

प्रतिलोमानुलोमाभ्यां द्विविधा सा प्रकीर्तिता ।
वास्तुलाभवशात्कार्या प्रासादेष्वनुलोमतः ॥ ६ ॥

---

द्वयं, त्रयमथवा चतुष्कं पञ्चकं षट्कमथवा सप्तकं कचिदष्टकं नवकं वा संप्राप्तवास्तुस्थलवैशाल्याद्यनुगुणं नानाभौमभवनादिषु विषमकल्पनादिहीनं स्थापनीयमिति निष्कृष्टार्थः । एतादृशक्षुद्रशालानामाकृतिश्च विविधैव । कथं? कचिद्दैर्घ्याधिका, कचिद्दैर्घ्यहीना, कचिच्चतुरश्रमानोपेतेति । एवं पूर्वोक्तरीत्या 'चतुःपञ्च चतुष्षड्वा' इत्यादिप्रमाणवचनार्थक्रमोऽत्रापि योज्य इति भावः । सर्वोऽप्ययमर्थो 'विस्तारार्धतदर्धार्धे' इति वचनेन प्रतीयत इति भावः ॥

एवं ग्राम्यकल्पनेष्वथवा नागरिकल्पनेषु सर्वेषु संप्राप्तस्थलविभवानुकूलं क्षुद्रशालानां प्रकल्पनविषये स्तंभस्थापनभित्तिस्थापनोर्ध्वभागनिर्माणादिषु मानाधिक्यं, मानहीनमित्यादिबहुविधं मानादिकं शिल्पकार्यज्ञैः प्रयोज्यमिति भावः । एवं तत्र तत्र निर्माणेषु कल्पनीयक्षुद्रशालानां मानादिकं सङ्ग्रहेणोक्त्वा पूर्वोक्ताया महाशालाया निर्माणप्रमाणादिकमं स्पष्टमुपदिशति — **प्रतिलोमानुलोमाभ्यामित्यादिना** । एतादृशमहाशालाकल्पनं तावत्प्रतिलोमानुलोमकभेदेन द्विविधं भवति । अत्र तत्कल्पने प्रतिलोमस्तावदेतच्छालाकल्पनाय यावत्प्रमाणका वास्तुभूमिः

तत्प्रमाणवतीं भूमिं स्वीकुर्यात्प्रतिलोमतः ।
आद्या देवेषु शुभदा द्वितीया मानवे तथा ॥ ७ ॥
साधिष्ठाना क्वचित्स्थाप्या नवहस्तांघ्रिकान्विता ।

---

स्वीकार्येति शिल्पशास्त्रेषूक्ता, तन्मानयुक्ताया एव भूमेः स्वीकरणमित्यर्थः । अयं तूत्तमः प्रकारो देवमन्दिरेष्ववश्यङ्कल्पनीय इति भावः ॥

एवं तत्तत्स्थलानुकूलकल्पनक्रमस्त्वनुलोम इति भावः । अयञ्च प्रकारश्चातुर्वर्ण्यसदनभवनादिषु कल्पनीय इत्युपदेशः । किञ्चैतादृशमहाशालायां कल्पनं तावत्संप्राप्ताधिष्ठानकल्पनमेवोत्तममिति समयः । तस्मादस्या मध्यमाधिष्ठानमधमाधिष्ठानञ्चालमिति भावः। अयञ्च क्रमो ब्राह्मणवैश्यादिजातीनां भवनादिषु योज्य इति भावः ॥

क्षत्रियाणां भवनप्रासादादिषूत्तमाधिष्ठानस्योर्ध्वभाग एवामूं शालां प्रकल्पयेदिति क्रमः "साधिष्ठाना क्वचिस्थाप्या नवहस्ता" इत्यनेन मूलवाक्येन प्रतिपादितो ज्ञेयः । एवं तत्तज्जात्यनुकूलमहाशालादिकल्पनाधिष्ठाननिर्माणं तावन्निम्नत्वोन्नतत्वादिदोषरहितवास्तुभूमौ पार्श्वस्थितकल्पनाविरुद्धं कलनीयं इत्युपदेशः ॥

किञ्च प्रायो देशेषु एतादृशशालाया अधिष्ठानकल्पनमेव परमिति कार्यज्ञानामभिसन्धिः । क्वचित्तु देशेष्वधिष्ठानकल्पनं

चत्वारिंशत्पदोपेता चतुर्विंशतिपादका ॥ ८ ॥

पादषोडशका वाऽपि मध्याङ्गणसमुज्ज्वला ।
चतुरश्रायता शाला चत्वरान्तिकभाक्तथा ॥ ९ ॥

---

विनैव महाशालाविशेषशालानिर्माणमपि न दोषप्रसक्तये । परन्तु सुखौन्नत्यशोभादिराहित्यायेति वदन्ति शिल्पिनः । तस्मात्सर्वत्र देशेषु संप्राप्तवास्तुभूम्यनुगुणं, स्वविभवानुगुणं चाधिष्ठानकल्पन-तदभावकल्पननियम इति च क्रमः । तस्मादिमां महाशालां पूर्वोक्तरीत्या पार्श्वस्थ कल्पनानुगुण्येन दृढाधिष्ठानस्थितां विरचय्य चत्वारिंशत्स्तम्भयुतां वा चतुर्विंशतिस्तम्भयुतामथवा षोडशस्तम्भ-युतां प्रकल्पयेदिति शिल्पसमयः ॥

किञ्चैतादृशलक्षणान्विता महाशाला राज्ञां प्रासादेष्वेव कल्पनीया । तदितरमानवभवनादिषु सति विभवे तद्रीत्या स्थापनं वरम् । वित्तादिशक्त्यभावे स्तम्भचतुष्टयस्तम्भाष्टक-स्तम्भद्वादशकभाजां शालानां कल्पनमपि भूयसे श्रेयस इति भावः । किञ्च सर्वत्र वास्तुभूमिषु ब्रह्मभागाख्यमध्यभागस्थित-चत्वरसमीपे यद्यस्याः शालायाः प्रकल्पनं निर्णीतं, तदाऽस्याः शालायाः प्रमाणमायामाधिक्यवत, अथवा चतुरश्रकवदिति तन्मानकथनक्रमः । स्थलान्तरस्थापनविषये तु मण्डलाकार-मथवा षडश्रकामष्टाश्रकां, द्वादशाश्रकां प्रकल्पयेदिति तद्विकल्पोऽपि

भौमान्विता सा संयोज्या पार्श्वाङ्गणसमेयुषी ।
द्वादशाङ्गणमारभ्य द्व्यङ्गुलविवर्धनात् ॥ १० ॥

त्रिहस्तं भित्तिविस्तारं स्थापयेन्मानवे गृहे ।
भूभुजाञ्च चतुर्हस्तं पञ्चहस्तं तु दैविके ॥ ११ ॥

---

शिल्पशास्त्राभिज्ञाभ्युपगत एवेति भावश्च ध्वन्यते ॥

एवं तत्तत्स्थलानुगुणं परिकल्पितायाश्शालाया मध्य-भागेऽतिवैशाल्यवदङ्गणमवश्यं कार्यम् । तत्र खल्वङ्गणभागे विवाहादिसमयेषु दम्पतीप्रभृतीनामासनस्थापनं तत्पुरतो वारनारीनाट्याभिनयादिकमिति च भावः । एवमस्याः शालाया अतिवैशाल्यवन्मध्यमाङ्गणपरिकल्पनस्य प्रयोजनं स्पष्टमेवेत्यर्थः । किञ्च तत्पार्श्वस्थितक्षुद्रप्रमाणांगणस्थापनेषु द्रष्टॄणामन्येषाञ्च निवेशनासनपरिकल्पनमिति क्रमः ॥

तस्माद्विशेषतो मध्यमाङ्गणस्थलमधश्चोपरि नानाचित्र-मनोहरं नवावितानादिभूषितञ्च रचयेदिति समयः । किञ्चैतादृश-लक्षणान्वितां महाशालामेकभौमान्वितामथवा त्रिभौम्यां, पञ्चभूमिकां वा यथाविभवं परिकल्प्य, तां परितः पार्श्वाङ्गण-स्थलान्तिककल्पनमात्रमेकभौमावधिकमेव प्रकल्पयेदिति च शिल्पसमयः ॥

तस्मात्तादृशान्तिककल्पनभित्तीनामायतिस्तु त्रिहस्तावधिका

दुर्गादौ हस्तषट्कश्च शिल्पविद्भिः प्रकीर्तितम् ।
अन्योन्यमधिका वाऽपि न्यूना वा सा च भित्तिका ॥

समा सर्वत्र मुख्या हि शाखानां हीनसंख्यका ।

इति महाशालालक्षणकथनम् ॥

---

मानवगृहभवनेषु कार्या । राज्ञां भवनप्रासादेषु चतुर्हस्तप्रमाणा । दैविकप्रासादेषु पञ्चहस्तप्रमाणा योजनीयेति भावः । किञ्च क्वचिद्दुर्गनगरेषु मुखभागे भूपालन्यायवित्पण्डितप्रमुखसम्मेलनार्थं परिकल्पनीयायाश्शालायाः साधिष्ठानायाः पार्श्वभित्तिविस्तारस्तु षड्ढस्तप्रमाणकः कार्य इति भावः ॥

एवं सर्वत्र शिल्पितक्षकक्रकचकारप्रमुखैस्तत्तत्कल्पनदार्ढ्ययोत्पादनार्थं भित्तिमानं प्रयोज्यमिति भावः । उपभित्तीनां शाखाभित्तीनामायामादिप्रमाणं त्वेतदपेक्षया किञ्चिन्न्यूनमिति समयः । भित्तीनामौन्नत्यादिकं तु सर्वत्र क्वचित्कल्पने किञ्चिद्धीनं क्वचित्समं, क्वचित्तदधिकमित्यादिक्रमेणोपर्युपरि कल्पनीयभौमप्रमाणानुगुणं कार्यमिति भावः । तस्मात्कार्यज्ञाः स्थपतिप्रमुखाः मानवानां शुभप्रदामिमां महाशालां पार्श्वस्थकल्पनाविरुद्धं समसूत्रप्रमाणकोपेतां नानागवाक्षां, नानाद्वारकां, मङ्गलवेदिकादिरचनोपेतां, मनोहरचित्रादिभासुराञ्च प्रकल्पयेयुरिति पिण्डितार्थः ॥

अथ विशेषशालालक्षणकथनम् ॥

भौमान्विता तु सा शाला विशेषाख्या प्रकीर्तिता ।
प्रासादहर्म्यभवनेष्वपि सा योग्यका मता ॥ १ ॥

---

एवं ग्रामनगरादिषु कल्पनीयभवनसदनालङ्कारभूत-महाशालाया निर्माणप्रमाणक्रमं संग्रहेण प्रतिपाद्याधुना क्वचिदतिधनिकानां भूपालानाञ्च हर्म्यप्रासादप्रभृतिषूत्तमकल्पनेषु कल्पनीयाया विशेषशालाया लक्षणमुपपादयति — **भौमान्विता त्वित्यादिना** । कश्चिदत्र चोदयति । यथा — को वा भेदोऽत्र प्रतिपादितयोर्महाशालाविशेषशालापरिकल्पनयोः ? उभयत्रापि भौमान्वितत्वस्यैव मुख्यलक्षणत्वेन प्रतिपादनादिति ॥

अत्रैवं परिहारश्शास्त्रवचनस्वारस्यवेत्तृभिराकलनीयः । यथा — तत्र तु महाशालाकल्पने भौमान्विता वेति विकल्पः । अत्र तु विशेषशालायां तन्नैवमित्येकः प्रकारः । प्रकारान्तरन्तु तत्र तु महाशालानिर्माणे मध्यमाङ्गणस्थानस्योपरिभागमात्रस्यैव नानाभौमयुतत्वम् । अस्मिंस्तु विशेषशालापरिकल्पने साकल्येन सर्वकल्पनानामपि नैयत्येन नानाभौमयुतत्वमिति । तृतीयः प्रकारस्तु अस्यां किल विशेषशालायां स्वाम्यावासस्थलतत्कलत्र-निवासस्थलसंमिलितमध्यकल्पनस्यैव विशेषकल्पनासूचकत्व-मित्याद्यूह्यमिति तटस्था एव वयम् । अतः पूर्वोक्तरीत्या

एकद्वित्रिचतुश्शालां तां क्रमात्स्थापयेद्बुधः ।
स्वाम्यावाससमोपेता क्वचिद्भौमेषु सा मता ॥ २ ॥

स्वभित्तेर्दक्षिणे भागे स्वाम्यावासः प्रशस्यते ।
रङ्गभागे चोत्तरस्थे तद्गृहिण्यास्स्थलं मतम् ॥ ३ ॥

चतुष्कूटसमायुक्ता तथा पृष्ठसभान्विता ।
पार्श्वयोरुभयोर्वाऽपि चाग्रभागे च शालका ॥ ४ ॥

---

धनिकभूपालप्रासादहर्म्यादिषु स्थापनीयाया अस्या विशेषशालायाः नानास्तम्भभासुरायाः, नानाभूमिकोपेताया मध्यभागे चतुष्कूटसभा कार्या । एवमस्याः शालायाः पृष्ठभागे, पार्श्वभागयोरग्रतश्च मध्यकल्पनोपेतामेव कूटसभां परस्परकल्पनावैषम्यादिरहितामेकभौमान्वितां वा तदौन्नत्यात्क्वचिद्धीनप्रमाणकां वा प्रकल्पयेदिति क्रमः ॥

किञ्च प्रायशस्सप्ततलकावधिकल्पितस्यास्य विशेषशालापरिकल्पनस्य मध्यभागे गृहपतेरावासस्थानमपरत्र तत्कलत्रस्यावासस्थानपरिकल्पनमपि शास्त्रचोदितमिति भावः । अयञ्च क्रमोऽतिविशालस्थलकल्पितविशेषशालाकल्पनविषयक इति भावः । अथवात्र स्वाम्यावासार्हस्थलाभावे तस्य तत्कलत्रस्य च स्थानं स्वभित्तेर्दक्षिणे, रङ्गभित्तेश्चोत्तरे क्रमात्पृथक्संमिलितं वा स्थापनीयमिति भावः । स्वभित्तिर्नाम शिखरस्थापनस्थलम् ।

भागद्वयेन निष्क्रान्तिः प्राक्प्रत्यग्भागयोस्तथा ।
इति सप्ततलं राज्ञां प्रशस्तं परिकीर्तितम् ॥ ५ ॥

क्वचिदाषोडशतलं कुर्यादेवं विधानवित् ।
सर्वतोभद्रका शाला स्वस्तिका वर्धमानका ॥ ६ ॥

नन्द्यावर्ता च चरका पञ्चधा सा प्रकीर्तिता ।
सर्वतोभद्रमष्टास्यं षण्णेत्रं स्वस्तिकं भवेत् ॥ ७ ॥

पार्श्वयोः पुरतश्चैव वर्धमानं तथा भवेत् ।

---

रङ्गभागस्तु विवाहादिसमये नाट्यप्रदर्शकस्थानमिति तदर्थो बोध्यः । क्वचिदाषोडशतलमित्यादिः स्पष्टार्थः ॥

एवमत्र प्रतिपादितप्रकारेण स्थलजातिभेदेन च बहुविधानां नानारूपाणां महाशालाविशेषशालाकल्पनानां स्वरूपं तु प्रसिद्धं पञ्चविधं भवति ॥ यथा —

(१) सर्वतोभद्ररूपका शाला
(२) स्वस्तिकरूपका शाला
(३) वर्धमानरूपका शाला
(४) नन्द्यावर्तरूपका शाला
(५) चरकरूपका शाला

एतासां लक्षणञ्च क्रमात्प्रतिपादयति **सर्वतोभद्रमष्टास्य-मित्यादिना** । सर्वतोभद्रशालायाः द्वाराष्टकं कल्पनीयम् ।

नन्द्यावर्तं मतं पूर्वे पश्चिमे दक्षिणे तथा ॥ ८ ॥
उत्तरे द्विमुखोपेतं निष्पटश्चरमं मतम् ।
चरकं देवयोग्यन्तु कथितं पूर्वसूरिभिः ॥

एकानेकतलोपेता नानालङ्कारभासुरा ।
खल्लूरिकायुता राज्ञां प्रासादेषु विशेषतः ॥ १० ॥

डोलास्थानसमायुक्ता कटकस्थलमण्डिता ।

---

स्वस्तिकशालाया द्वारषट्कं, वर्धमानशालायाः पश्चाद्भागं विनाऽन्यत्र स्थानत्रये द्वारत्रयं, नन्द्यावर्तशालायाश्चतुर्ष्वपि मध्यदिग्भागेषु द्वारचतुष्कमिति क्रमः । 'निष्पटं चरकं मतम्' इत्यत्रायमर्थः। सर्वतो भागेषु भित्तिद्वारकवाटाद्यावरणरहिता चरकाख्या शाला तु न मानववासार्हा । परन्तु कचिल्लीला-विहाराद्यर्थं देवयोग्येति समय इति ॥

तस्मादस्याः विशेषशालायाः निर्माणं यदि भूपालप्रासादेषु कृतं तदा तत्पूर्वभागे सव्यापसव्यकस्थाने कचित्खल्लूरिकाख्ययोध-प्रहरणस्थापनस्थलं क्षुद्रमण्डपाकारं कूटाकारं वा प्रकल्पयेत् । नान्यत्रेति मतिः । अत एवं प्रकारलक्षणान्विताया महाशालायाः विशेषशालायाश्च वधूवरवेदिकासमीपे वा कल्पनमध्यभागे वा, मुखद्वारसमीपस्थले वा विहारडोलास्थानं प्रकल्प्य, सर्वतो भूमि-भागेष्वधःस्थले मसृणीकृते, कचिच्चित्रिते मृदुकम्बलैः, कदादि-

सचित्रतोरणा रम्या लोकानाञ्च विधीयते ॥ ११ ॥

इति विशेषशालालक्षणकथनम् ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे

महाशालालक्षणविशेषशालालक्षणकथनात्मकौ

**चतुश्चत्वारिंशपञ्चचत्वारिंशाध्यायौ ॥**

---

प्रसारणनानासनस्थापनादिकं च प्रकल्पयेदित्यर्थः । अपि चैवं शालादिनिर्माणे कल्पनान्तरलक्षणमानादिकं सर्वमपि स्वयमेवोह्य शिल्पी प्रकल्पयेदिति च भावः ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
**महाशालालक्षणविशेषशालालक्षणकथनात्मकौ**
**चतुश्चत्वारिंशपञ्चचत्वारिंशाध्यायौ ॥**



अथ कल्याणशालालक्षणकथनात्मक पञ्चभौम-

विधानक्रम गोपुरविधानक्रमनिरूपणात्मकाः

## षट्चत्वारिंशसप्तचत्वारिंशाष्टचत्वारिंशाध्यायाः ॥

तत्राद्यकल्याणशालालक्षणमाह —

कल्याणशाला शुभदा सर्वेषामेव भूतले ।
तस्मात्तां कल्पयेद्धीमान् शुभकाले शुभस्थले ॥ १ ॥
कनीयसीं मध्यमां वा चोत्तमाङ्कारयेद्बुधः ।

---

॥ षट्चत्वारिंशसप्तचत्वारिंशाष्टचत्वारिंशाध्यायाः ॥

एवमध्यायद्वयेन महाशालाविशेषशालयोर्लक्षणादिकं प्रतिपाद्याधुनाऽध्यायत्रयेण सर्वेषामत्यन्तक्षेमवर्धिन्याः कल्याणशालायाः स्वरूपादिकं प्रतिपादयति—कल्याणशाला शुभदेत्यादिना ॥

नन्वत्र पौनरुक्त्यदोषप्रसक्तिः; कथं? पूर्वोक्ताध्यायद्वयप्रतिपादितलक्षणोपेतयोः महाशालाविशेषशालयोरेव वैवाहिकाद्याचरणस्योक्तत्वात, कल्पनान्तरनिर्माणकथनस्य वैफल्यादिति चेन्न। तयोर्विवाहादीनां क्वचित्काचरणस्योक्तत्वात् । अत्र तु सन्ततं नैयत्येन विवाहाद्याचरणस्य विहितत्वाच्च । किञ्च क्षुद्रग्रामादिनगरराजधान्यन्तासु वास्तुभूमिषु एवं कल्याणशालाकल्पनस्थापनस्य शास्त्रचोदितत्वाद्युक्तमेव पृथक्कल्पनमस्याश्शालाया इति युक्तं पश्यन्ति प्रमाणज्ञाः । तस्मादिमां कल्याणशालां प्राप्तस्थल-

प्रासादस्य पुरोभागे द्वारस्थानन्तरस्थले ॥ २ ॥
शालानां मध्यमे भागे पूर्वे वाऽऽवरणस्य तु ।

विभवाद्यनुगुणं ग्रामादिषु कनीयसीं, पुरादिषु मध्यमां, नगरादिषूत्तमां स्थापयेदित्युपदेशः ॥

किञ्चात्रोक्तकनीयसीमध्यमोत्तमशब्दार्थस्तु पूर्वोक्तरीत्या नगरपुरग्रामादिषु दैर्घ्यवैशाल्यौन्नत्यस्तम्भस्थापनसुषिरभौमकल्पनचित्रकलनादिरचनासु क्रमात्किञ्चित्किञ्चिद्धीनद्योतकः । तस्मादस्याः कल्याणशालायाः ग्रामेषु कल्पनीयायाः स्तम्भद्वयमथवा स्तम्भचतुष्कं, स्तंभषट्कमथवा सति स्थलविभवे स्तम्भाष्टकं स्थापनीयमिति क्रमः । एवं पुरनगरादिषु स्तम्भबाहुल्यौन्नत्यादिकं क्रमाद्वर्धनीयमिति भावः । रचनान्तरमानान्तरादिकन्तु तत्तत्स्थलानुगुणं शिल्पिप्रमुखास्स्वयमेवोह्य स्थापयेयुरिति भावः ॥

किञ्च तामिमां कल्याणशालां कुत्र वा स्थले स्थापयेयुरित्याकाङ्क्षायां तदर्हस्थलानि निर्दिशति – **प्रासादस्य पुरोभाग इत्यादिना।** भूपालादीनामतिधनिकानां प्रासादहर्म्यादिकल्पनानां पुरोभागे पृथगेव तामिमां कल्याणशालां दृढाधिष्ठानकल्पनस्योपरि नानाभौमान्वितां स्थापयेत् । अथवा प्रथमद्वितीयद्वारभागतरणानन्तरस्थले वा, तद्भागतरणानन्तरस्थले ब्रह्मभागे चतुर्ष्वपि दिग्भागकोणेषु स्थापितानां शालानां मध्यस्थले वा स्थापयेत् । अथवा

हर्म्याणां सदनानाञ्च गृहाणाञ्च विशेषतः ॥ ३ ॥

वक्षःस्थले नाभिदेशे कल्पयेत्तां मनोहराम् ।
मध्यचत्वरभागाढ्यां पादरङ्गान्वितान्तु वा ॥ ४ ॥

चतुरश्रां व्यासयुतामुपशालावृतस्थलाम् ।
चतुरङ्गणसङ्कीर्णां मण्डलाकृतिकान्तु वा ॥ ५ ॥
स्थापयेन्मानविच्छिल्पी यथासूत्रप्रमाणकम् ।

---

तादृशशालातरणानन्तरं पूर्वभागकल्पनस्यान्तिमस्थले पूर्वावरणस्यान्तिमस्थले वा स्थापयेत् । क्वचिद्ग्रामादिषु गृहकल्पनस्य यथासूत्रमानितस्य वक्षःस्थाने वा, क्वचिन्नाभिस्थाने वा, वास्तुनाथवक्षःस्थलभागं विना स्थलान्तरे तामिमां कल्याणशालां नैयत्येन विवाहाद्याचरणार्थं कार्यम् । न तु शयनभोजनसुहृत्सल्लापननाट्यप्रदर्शनाद्याचरणं कार्यमिति प्राचां व्यवहारो ज्ञायते ॥

तदेतद्युक्तमेव धनिकभूपालादिमहाभवनहर्म्यप्रासादादिषु । क्षुद्रग्रामगृहादिकल्पने तु कल्याणशालायामस्यां पूर्वोक्तरीत्या विविधेषु समयेषु भोजनसुहृत्सल्लापनश्रमापनोदननाट्यप्रदर्शनविवाहाद्याचरणानि न दोषायेति मतिः । नवीनानामयञ्च क्रमोऽर्वाचीनग्रन्थादिषूक्त इत्यलम् ॥

तस्मात्तामिमां विवाहशालां चतुरश्रप्रमाणोपेतां वा, दैर्घ्यभाजं वा क्वचिन्मण्डलाकारप्रमाणकल्पनाभाजं स्थापयेदित्यस्याः

देवभूसुरभूपालविट्शूद्रादिगृहान्तरे ॥ ६ ॥

मानयेद्ब्रह्मदण्डेन दैवे वास्तुस्थले तथा ।
प्रासादे भूपदण्डेनान्यत्रान्येन वा क्रमात् ॥ ७ ॥

चतुर्दण्डादिकं तत्र मानं द्वादशकावधि ।
कीर्तितं मुनिभिर्दिव्यदृष्टिभिस्तत्त्वदर्शिभिः ॥ ८ ॥

---

स्थलनिरूपणक्रमः । एवमस्याश्शालायाः कल्पने भवनादिषु प्रायशः परितश्चतुरङ्गणसम्मेलनमेव कार्यमित्युपदेशः । तदानीमेव विशेषशोभादिरिति भावः । तस्मादेवं चतुरङ्गणमिलितकल्पनोपेतामिमां विवाहशालां देवप्रासादेषु, भूपालानां हर्म्यप्रासादादिषु धनिकभवनेषु, ब्राह्मणवैश्यशूद्रादीनां गृहभवनेषु च प्रकल्पयेत् ॥

एवं कल्पने कोऽपि नियमः । यथा वा — तत्र देववास्तुभूमिषु ब्रह्मदण्डेन, नृपवास्तुभूमिषु नृपदण्डेनान्यत्र च साधारणदण्डेन मानादिकं शिल्पिवर्यैः कार्यमिति समयः । अत एतादृशदण्डेन सर्वत्र चतुर्दण्डकप्रभृति द्वादशदण्डकावधि मानं स्वीकार्यमिति प्रमाणकथनक्रमः ॥

अस्य विशदार्थस्त्वेवम् — अत्र ग्रामादौ इतरजनगृहादिषु साधारणदण्डचतुष्कादिद्वादशदण्डावधिकं, नृपप्रासादेषु भूपदण्डचतुष्कादिद्वादशदण्डावधिकं, देवप्रासादेषु ब्रह्मदण्डचतुष्कादिद्वादशदण्डावधिकञ्च क्रमात्संप्राप्तस्थलानुकूलं मानं कल्याणशाला-

एकभागविहीनं वा क्वचिदर्धेन हीनकम् ।
मानं प्रयोज्यमित्युक्तं स्थपतीन्द्रैः क्वचित्स्थले ॥ ९ ॥
मानुषी सा च गान्धर्वी दैवीति बहुधेरिता ।

---

कल्पनाय स्वीकार्यमित्यर्थः । एतादृशदण्डानां प्रमाणादिकं तूक्तपूर्वमेव ॥

किञ्च क्वचित्स्थले एतादृशप्रमाणादर्धभागविहीनत्वेन, क्वचिदेकभागविहीनत्वेन च कल्पनमानस्य विकल्पोऽर्वाचीनैः स्थपतिवरैरुदीर्यत इति मूलकारेणैवात्र तन्मताविष्करणं कृतं बोध्यम् । तस्मादेतादृशप्रमाणकल्पनीयैषा कल्याणशाला तत्तद्दशकल्पनादिभेदेन नानास्वरूपाऽपि मुख्यतश्शैलीत्रयशोभिनी परिकीर्तिता बोध्या ॥

यथा — मानुषी कल्याणशाला
गान्धर्वी कल्याणशाला
दैवी कल्याणशालेति ॥

अत्राद्या मानुषशैलीकशाला तु विप्रवैश्यशूद्रप्रभृतिगृहेषु स्थापनीया । द्वितीया गान्धर्वशैलीकशाला तु भूपभवनादिषु स्थाप्या । अन्त्या दैवशैलीकशाला तु देवमन्दिरेष्वेव कलनीयेति तत्क्रमः । किञ्चात्र शालासु किं नाम मानुषीशैलीका रचनेत्याकाङ्क्षायां साधारणदण्डेन मात्वा स्थलस्वीकरणं महर्षिप्रमुखानां चित्रादिरूपस्थापनमित्यर्थः ॥

एवङ्गान्धर्वशैल्यां भूपदण्डेन स्थलस्वीकरणं गन्धर्वप्रमुखबिम्ब-

प्रागुदक्पश्चिममुखा कल्पयेत्सूत्रवेदिभिः ॥ १० ॥
एवं द्वारयुता शाला स्मृता मङ्गलदायिनी ।

---

योजनमिति । अनेनैव प्रकारेण दैविकशैल्यामपि हरिहरब्रह्मप्रमुखानां देवादीनां बिम्बयोजनमिति केषांचिन्मतम् ॥

अन्येषां स्थपतिश्रेष्ठाणान्तु अत्रोक्तशैलीशब्दस्तु न मानवगान्धर्वदेवादिबिम्बस्थापनमुपदिशति । परन्तु साधारणदण्डमानितस्वल्पस्थलस्वीकरणमेव मानवशैलीकशाला । तदपेक्षया किञ्चिदधिकस्थलस्वीकरणमेव गन्धर्वशैलीकशाला । तदपेक्षया किञ्चिदधिकस्थलस्वीकरणमेव दैवशैलीकशालेति ॥

परेषामाशयस्तु तत्तत्स्थलानुगुणं स्वेच्छाधीनं शालाकल्पनमेव मानवशैलीकरचना । भूपालेच्छाधीनं शालाकल्पनमेव गान्धर्वशैलीकरचना । भट्टारकदीक्षितस्थपतिप्रमुखेच्छाधीनं शालाकल्पनमेव दैवशैलीकरचनेति । ग्रन्थविस्तरभिया मतान्तरमत्र नोच्यते । तस्माद्देशभेदेन, क्रियाभेदेन, स्थलभेदेन, शिल्पकार्योपदेशभेदेन च विविधप्रमाणामिमां कल्याणशालां कार्यज्ञाः यथाप्रमाणं निर्मापयेयुरिति पिण्डितार्थः ॥

किञ्च **नन्दिवास्तुशास्त्रादिषु** अस्यैव कल्याणशालाकल्पनस्य लक्षणान्तरमुक्तम् । तच्च तत्रैव ज्ञेयं विस्तरभयान्नात्र लिख्यत

वरस्थानद्वयोपेता स्थानत्रयसमन्विता ॥ ११ ॥
चतुःस्थानान्विता वापि पञ्चस्थानान्विताथवा ।
सार्धदण्डं दण्डयुगं व्याप्तेनेयमुदाहृता ॥ १२ ॥
क्वचित्तदधिकं स्थानमथवाङ्गणकल्पने ।
चतुष्पञ्चषदण्डान्तं स्थलयोग्यं प्रकल्पयेत् ॥ १३ ॥

---

इति । तस्माद्यथाचारविभवं कल्पनीयाया अस्याः कल्याणशालायाः प्राङ्मुखमुदङ्मुखमथवा तत्तत्स्थलानुगुणं पश्चिममुखं प्रकल्पनीयं। इदमेव मङ्गलकरमिति भावः । सर्वत्र शुभस्थलकल्पनेषु दक्षिणाशाया निषिद्धत्वादिति । एवं शास्त्रोक्तस्थलकल्पितद्वारोपेतायामस्यां कल्याणशालायां मध्यभागे वधूवरवेदिकासहितं वरस्थानाख्यं कल्पनमवश्यं स्थापनीयम् ॥

किञ्च कैश्चिच्छिल्पिभिः केषुचिद्देशेषु वरस्थानकल्पनमिदं चन्दनादिसारदारुमयसुधेष्टिकामयस्तम्भचतुष्कोपेतं स्थावरजङ्गमरूपं चतुरश्रप्रमाणकं पूर्वतो वह्निवेदिकोपेतं च क्रियते यथासंभवकल्पनमादरणीयमिति भावः । तस्मादत्र शालायास्समुचितस्थले समसूत्रं तादृशवधूवरस्थानकल्पनद्वयमथवा तेषां त्रयं, क्वचिच्चतुष्कं क्वचित्पञ्चकं वा प्रयोज्यम्, नाधिकमिति । तेषां वरस्थानकल्पनानां प्रमाणन्तु सार्धैकदण्डं वा दण्डयुग्ममथवा क्वचिद्दण्डानां त्रयं चतुष्कं, पञ्चकं षट्कं वा स्थलवित्तादिविभवानुगुणं स्वीकरणीयमिति ॥

परितोऽङ्गणभाजं वा द्वारोपद्वारकान्वितम् ।
युग्माङ्गणचतुश्शालाकूटकां वा प्रकल्पयेत् ॥ १४ ॥

चतुष्षडष्टदशकद्वादशाधिकपादकैः ।
धारितान्तरभागां वा महासुषिरकान्विताम् ॥ १५ ॥

---

किञ्चास्याश्शालायाश्चतुर्ष्वपि भागेषु द्वारोपद्वारसंयुक्ताङ्गणानां चतुष्कं वा त्रयमथवा द्वयं प्रकल्पनीयम् । अथवा क्वचिदस्याश्शालायाः पार्श्वयोरुभयोरङ्गणान्तराङ्गणकल्पनं कार्यमिति पार्श्वस्थकल्पनानुगुणपरिकल्पनक्रमः । एवं क्वचित्पार्श्वयोः कूटागारकल्पनं वा कर्तव्यम् । अपि चास्यां शालायां स्थलविभवानुगुणं दारुसुधालोहकलितानां स्तम्भानां चतुष्कं, षट्कमष्टकं, द्वादशकमथवा षोडशकं, चतुर्विंशतिकं, क्वचिद्द्वात्रिंशत्कं, चत्वारिंशत्कं, क्वचित्तदधिकसंख्याकमपि स्थापनीयमिति स्तम्भसंख्याक्रमो बोध्यः । स्तम्भस्थापनशैली तु मण्डपलक्षणादिग्रन्थेष्वपि अस्मिन्नेव शास्त्रे स्थलान्तरेपूक्तक्रमतो गुरूपदेशतश्च तक्षकादिभिर्ज्ञेयेति समयः ॥

एवमत्र कल्याणशालायां स्तम्भस्थापनानन्तरं तेषां स्तम्भानामुपरिभागेषु क्षुद्रबृहत्प्रमुखान्धारिकापरिकल्पनं कृत्वा तदुपरि कल्पनाच्छादनं प्रकुर्युः । अथवा भवनहर्म्यादिषु क्वचित्तेषां स्तम्भानामुपरि मौलिभागेषु सुधेष्टिकालेपनादिना

भागत्रये कुड्यभाग्वा द्वयोरेकत्र वा क्वचित् ।
शृङ्खलाकीर्णिता वापि दारुपट्टान्विताऽथवा ॥ १६ ॥
नानाकल्पनसंयुक्ता सम्मुखस्थितशालका ।
नानालङ्कारसंयुक्ता युग्मायुग्मगवाक्षका ॥ १७ ॥
संयुक्ता वा वियुक्ता वा कल्पनीया दृढान्तरा ।
सममाना समौन्नत्या शिलालोहादिकस्थला ॥ १८ ॥

---

दृढसुषिरकल्पनं विरचय्य तदुपरि भूमिकायोजनं यथाविभवं स्थापनीयमिति विकल्पः । एवं क्वचिदस्याः कल्याणशालाया उपरिभागे भौमस्थापने तेषां भौमानां भागत्रयेष्वथवा भागद्वये सगवाक्षकुड्यस्थापनं कार्यम । आचरणमिदं पृथक्कल्पनविषयकमिति भावः ॥

अथ पार्श्वस्थकल्पनाविरुद्धकल्पनेषु चतुश्शालादिमध्यकल्पने चास्याः कल्याणशालाया उपरि भौमस्थाने द्वारभागं विनाऽन्यत्र परितः शृङ्खलायोजनं वा दारुपट्टिकाघटनं वा स्थापनीयमिति क्रमो ज्ञेयः ॥

किञ्चास्यां शालायामधश्च भौमानामुपरि युग्मयुग्मगवाक्षस्थापनं वा, एकैकगवाक्षस्थापनं वा कारयित्वा प्रथमभौमे द्वितीयभौमादिष्वपि पूर्वभागे चतुरष्टकस्तम्भभासुरां मुखशालां स्थापयित्वा नानाचित्रकल्पनादिकमपि प्रकल्पनीयम् । किञ्चास्या-

तत्र कल्याणशालायां पञ्चभौमविधानक्रमः—

[1]क्वचिद्भूपालहर्म्येषु प्रासादे वा विशेषतः ।
तां पञ्चभूमिकोपेतां कल्पयेत्सूत्रविद्बुधः ॥ १९ ॥
भौमशालासमां वापि किञ्चिन्न्यूनप्रमाणकाम् ।

शालायाः किञ्चिदौन्नत्याधिक्यकल्पनं विरचय्य पार्श्वशालासु सर्वास्वपि विषममानादिरहितं, चित्रादिभासुरं कल्पनञ्च संयोजनीयमित्यर्थः ॥

॥ सप्तचत्वारिंशाध्यायस्य व्याख्या ॥

यथैवं धनिनां हर्म्येषु, भूपालानां प्रासादादिषु विशेषतश्चित्रादिभासुरां प्रकल्पनीयामिमां कल्याणशालां भौमत्रयोपेतामथवा, भौमपञ्चकभासुरप्रकल्पनां प्रकल्पयेत् । तत्रापि कोऽपि विशेषः । यथा—अस्याः कल्याणशालायाः प्रथमतलनामकभूस्थलप्रकल्पनस्य यावद्वैशाल्यदैर्घ्यप्रमाणं कल्पितं तावन्मात्रसहितमेव प्रायशः कल्याणशालाया उपरि भौमतलं प्रकल्पनीयम् ॥

क्वचित्तु प्रथमभौमस्य वैशाल्याद्याधिक्यं कृत्वा, द्वितीयतृतीयभौमेषु तदपेक्षया प्रथमभूमिप्रमाणापेक्षया किञ्चिन्न्यूनप्रमाणपरिकल्पनं वा योजनीयमिति तत्कल्पनप्रमाणविकल्पो ज्ञेयः । सर्वथाऽस्याश्शालायाः प्रथमभौमप्रभृति भौमान्तिकस्थला-

1. सप्तचत्वारिंशाध्याय आरभ्यते

पार्श्वहर्म्यसमोपेतां पार्श्वभागाङ्गणस्थलाम् ॥ २० ॥
पूर्वशालासमोपेतां वातायनशतावृताम् ।

---

वधिकं पार्श्वभागेषु क्वचित्पुरतश्च पार्श्वहर्म्याख्यमुपहर्म्यकल्पनं कल्पनीयम् ॥

किञ्च तादृशोपहर्म्यकल्पनस्य शालायाश्चाविरुद्धभित्त्यादिस्थापनं द्वारोपद्वारसंमिलितक्षुद्रसदनरूपं वा कल्पनं स्थापनीयमिति भावः । अथवा क्वचित्तादृशोपहर्म्यकल्पनाभावेऽस्याश्शालायाः पार्श्वशालाङ्गणकल्पनं वा नानास्तम्भयुतं स्थापनीयमित्यर्थः । एवं तत्र तत्र गृहपतिस्थपतिप्रमुखवाञ्छानुगुणं पार्श्वशालापार्श्वाङ्गणादिकल्पननिर्माणे कृतेऽपि प्रायशोऽवश्यमस्याश्शालायाः पुरोभागे नानावातायनादिभासुरं पूर्वशालाकल्पनं करणीयमित्युपदेशः ॥

इदं प्रासादादिषु पृथक्कल्पितकल्याणनिर्माणलक्षणमिति शिल्पसमयः । किञ्च पूर्वोक्तरीत्या ग्रामनगरादिषु प्रथमद्वितीयद्वारभागतरणानन्तरस्थानेषु ब्रह्मभागादिषु कल्पनीयकल्याणशालानिर्माणविषये तु सति स्थलाद्यनुकूलसंभवे क्षुद्रप्रमाणका वा पार्श्वशालानिर्मितिश्शस्ता । तदभावेऽपि न दोषायेति साधवः शिल्पक्रियाविदः ॥

तस्मात्सर्वथाऽस्याः कल्याणशालायाः कल्पने पार्श्वहर्म्यशालापार्श्वाङ्गणादिकल्पनाविरुद्धप्रथमभौमनिर्माणं कृत्वा तदुपरि

तले तले डोलकं स्यान्नानाचित्रमनोहरम् ॥ २१ ॥

कूटमण्टपवैमानमानकं तत्प्रकीर्तितम् ।
मध्यभागं विशालाढ्यं समं वा पार्श्वकल्पनम् ॥ २२ ॥

पादसन्धारितं वापि महासुषिरधारितम् ।

---

पूर्वोक्तप्रमाणकं द्वितीयतृतीयपञ्चकावधि तलकल्पनं क्रमाद्दृढभित्तिबन्धनादिकं कारयित्वा तत्र प्रतिभौममारोहणस्थलं सोपानादिकल्पनोपेतं स्थापयेत् ॥

किञ्चात्र कल्याणशालाया उपरिभागे कल्पितस्य निर्माणस्योपरिभागे कूटाकारकल्पनं चा यथाभिरुचि, यथाप्रमाणं नानाचित्रमनोहरं प्रकल्पनीयम् । किञ्चैवंप्रकारेणात्र कल्याणशालाया उपरिभौमप्रकल्पने भूतलभौमाख्यप्रथमभौमस्थले यया रीत्या मध्यभागे वैशाल्याधिक्यं प्रयोजितं तत्समं किञ्चिन्न्यूनं वा प्रयोजयित्वा तत्र तत्र पादादिसन्धारितमन्तिमभागेषु दृढभित्तिरचनं च प्रकल्पयेदित्यर्थः ॥

एवमत्र कल्याणशालाया उपरिभागे भौमस्थापने क्रमः कीदृश इत्याकाङ्क्षायामाह — सुषिरधारितमिति । यदि कल्याणशालाया आद्यभूमिके भूतले दारुमयस्तम्भस्थापनं तर्हि उपरिभूमिकभागेषु तन्मयस्तम्भस्थापनमेव (दारुमयस्तम्भस्थापनमेव) कार्यम् । एवं

द्विदण्डं वा त्रिदण्डं वा नेष्यतेऽतः परं बुधैः ॥
सर्वेषां प्राङ्मुखं शस्तं भूपालानामुदङ्मुखम् ।

---

क्वचिदादिभूमिकतले सुधेष्टकामयस्तम्भस्थापनमेव तदोर्ध्वभूमिकल्पनेषु दारुमयस्तम्भस्थापनं वा लोहघटितस्तम्भस्थापनं वा कल्प्यतामिति समयः ॥

एवं क्वचिदादिभूमिकतले सुषिरमयस्तम्भकल्पनं (सुषिर= கமான்) कृतं तदोर्ध्वभूमिकतलेषु सुधामयदारुमयलोहमयादिस्तम्भान्यतमकल्पनं वरं दार्ढ्यशोभादये, न तु आद्यभूमितले दारुस्तम्भकल्पनं कृत्वोपरिभूमितले सुषिरस्तम्भस्थापनं श्रेयसे दार्ढ्यशोभादय इत्यर्थः । तस्मान्मानविदः स्थपतितक्षकवराः स्तम्भस्थापनादिक्रमं सर्वत्र ज्ञात्वा तदनुगुणमस्याश्शालाया उपरिभूमिषु यथासौकर्यं स्तम्भस्थापनं कृत्वा दृढं तलं कल्पयेयुरिति शास्त्रोपदेशः ॥

किञ्च सर्वत्रैवं स्तम्भस्थापने प्रतिस्तम्भतलं मध्यभागवैशाल्यं तु साधारणदण्डद्वयं वा क्वचिद्दण्डत्रयं वा यथास्थलविभवं योजनीयम् । नातः परं मुनिभिरुदीरितमिति भावः । तेषु कल्पनदार्ढ्याद्यर्थमेवैवमुपदेश इति भावः । एवं तत्र तत्र स्थलविभववाञ्छाद्यनुगुणमेकभौमोपेतं वा नानाभूमिकोपेतं वा कल्याणशालायाः कल्पनं विरचय्य तस्याश्शालायाः मुख्यं मुखद्वारं प्राङ्मुखं स्थापनीयम् । इदं विप्रवैश्यशूद्रसङ्कीर्णवर्णादीनां

जङ्गमस्थावरक्षेमकल्पनं डोलकस्थलम् ॥ २४ ॥
करभित्तिसमायुक्तभित्तिसोपानकल्पनम् ।
कल्पयेन्मतिमान्युक्त्या सर्वतस्समवृत्तकम् ॥ २५ ॥
सव्यापसव्ययोर्मार्गस्त्वथवाऽत्र चतुःस्थले ।

---

सर्वेषामपि गृहेषु मङ्गलप्रदमिति भावः । क्षत्रियाणां प्रासाद-कल्पितकल्याणशालाया मुख्यद्वारकल्पनं तूदङ्मुखमेव कार्यम् । तत्तु तेषां शुभकरमिति भावः । वासवदिग्द्वारकल्पनमपि तेषां शुभादय इति समयः ॥

एवमिमां शालां वाञ्छानुगुणं प्रकल्प्य पूर्वोक्तवरस्थानसमीपे कचिदस्याः कल्याणशालायाः मध्यभागे वा कचिदन्तिकपट्टद्वारादि-समीपे वा मङ्गलडोलास्थापनं कार्यम् । किञ्चैतादृशडोलावीजन-स्थानन्तु केनचित्कल्पनाविशेषेण संयुक्तं कचिद्धनिकभूपाल-भवनादिषु स्थापनीयमिति शिल्पसंप्रदायः । स च कल्पनाविशेष-स्तत्तत्स्थलानुगुणं कल्पनीयो जङ्गमस्थावररूपको द्विविधः । जङ्गम-रूपस्तु चन्दनादिदारुखण्डफलकाघटितकल्पनात्मकः । स्थावर-रूपस्तु सुधेष्टिकाकृतकल्पनात्मकः । एवंरीत्याऽत्र शालान्तः-कल्पनीयडोलास्थानकल्पनाविशेषस्तु क्षुद्रप्रमाणकः क्षुद्रमण्डपतुल्य इति ज्ञेयः ॥

अपि चैवंलक्षणोपेताया अस्याः कल्याणशालाया आदि-

वलभीतोरणोपेता मार्गस्योपरि वा तले ॥ २६ ॥

कारयेन्मध्यमान्तं वा भित्त्यन्तं वा विशेषतः ।

* तत्र कल्याणशालायां विमानगोपुरविधानक्रमः ॥

प्रायः प्रासादके राज्ञां विमानं तत्र कारयेत् ।

---

भूमिकतलाद्द्वितीयभूमिकतलारोहणार्थं चतुर्ष्वपि भागेषु, अथवा सव्यापसव्यभागयोः सारदारुफलकासुधेष्टिकादिविरचितसोपानस्थापनं कार्यम् । तेषां सोपानानामन्तिकस्थलेषु सर्वत्र पतनभीत्यादिनिरासाय पूर्वोक्तरीत्या शृङ्खलादारुखण्डादिकरभित्तिस्तम्भादि संमुखरहितं समसूत्रकन्यासं विषमरचनाहीनं वलभीतोरणचित्रादिकं योजयेत् । कल्पनीयकल्पनान्तररचनान्तरादिकं तु शिल्पिभिः स्वयमेव युक्त्या ज्ञात्वा, तत्र तत्र तलपार्श्वस्थकल्पनानुगुणं करणीयमिति सङ्ग्रहेण भौमकल्पनक्रमः प्रतिपादितः ॥

॥ अष्टचत्वारिंशाध्यायव्याख्या ॥

एवमत्र कल्याणशालायां भूमिकास्थापनक्रमं सङ्ग्रहेण प्रतिपाद्याधुना क्वचिदेतन्मौलिस्थाने कल्पनीयविमानगोपुरादिस्थापनस्थलक्रममाह — **प्रायः प्रासादक इत्यादिना** । यथा वा कल्याणशालानिर्माणेन सद्मनादेर्मङ्गलावाप्तिः, तथैव विमानादिनिर्माणेन तस्याः कल्याणशालायाः मङ्गलशोभावाप्तिरिति प्राचा

---

* अष्टाचत्वारिंशोऽध्याय आरभ्यते ।

मागधेष्वपि पाञ्चालेष्वपि कालिङ्गिकेषु च ॥ २७ ॥
पूर्वद्वारोपरि स्थाप्यं तद्विमानं मनोहरम् ।
आस्थानमण्टपस्योर्ध्वे चूलीहर्म्यस्य मौलिषु ॥ २८ ॥
कल्याणशालायाश्चोर्ध्वे राज्ञां मन्दिरकूटके ।
क्वचिद्देवगृहस्योर्ध्वे भागे वा मङ्गलप्रदम् ॥ २९ ॥
विमानकल्पनङ्कार्यं शिखरेणापि भासुरम् ।
वर्तुलश्चतुरस्रं वा व्यासाधिक्यं द्विदण्डकम् ॥ ३० ॥

---

महर्षीणां व्यवहारं मनसि निधाय तादृशविमानादिस्थापनस्थलं क्रमशो व्यनक्तीत्यर्थः । यथा — मागधशैलीनिर्माणरीत्या, पाञ्चालकल्पनरीत्या, कालिङ्गशैलीरचनारीत्या, धनिकानां, भूपालानाञ्च सदनहर्म्यप्रासादादीनां प्राथमिकद्वारस्य पुरोभागे वा तद्वारस्योपरि मौळिकल्पनस्थाने वा कल्पनालङ्कारभूतविमान-गोपुरादिकं मनोहरकल्पनं निर्मापणीयम् । शैल्यन्तरे त्वास्थानशाला-मण्डपमौलिभागे वा चन्द्रशालामौलिभागे वाऽत्रोक्तकल्याण-शालाया भूमितलानामूर्ध्वभागेषु पट्टमहिष्यावासस्थानस्यो-परिभागे वा क्वचिद्गृहदेवतामन्दिरमौलिभागे वा नानाशिखरो-पेतं विमानरूपं, क्षुद्रगोपुररूपं कल्पनमवश्यं कार्यमिति लक्षण-वाक्यार्थः ॥

तच्च विमानगोपुरकल्पनं तावदधःस्थितनिर्माणप्रमाणानुगुणं

नानातलसमोपेतं गोपुराकृति वा क्वचित् ।
हस्तायामं मध्यतलं द्विहस्तं पार्श्वपट्टिकम् ॥ ३१ ॥

क्षुद्रान्धारिकया युक्तं वलभीतोरणान्वितम् ।
मुखपट्टिकया युक्तं नानाचित्रमनोहरम् ॥ ३२ ॥

देवगन्धर्वचिह्नानि मातॄणां चिह्नकानि वा ।
योजयेन्मतिमाञ्छिल्पी शालामौलिविमानके ॥ ३३ ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे
कल्याणशालालक्षणकथनात्मकपञ्चभौमविधानक्रम
गोपुरविधानक्रमनिरूपणात्मकाः
षट्चत्वारिंशसप्तचत्वारिंशाष्टचत्वारिंशाध्यायाः ॥

---

मण्डलं, चतुरश्रमथवा दीर्घमानयुतं द्विदण्डादिपरिकल्पननिर्माण-भित्तियुतं नानातलभूषितम् एकहस्तविस्तारमध्यतलरन्ध्रान्वितं तत्कल्पनस्योभयपार्श्वयोर्द्विहस्तविस्तारपार्श्वपट्टिकारचनोपेतं गोपुर-लक्षणप्रकरणोक्तरीत्या वलभीतोरणक्षुद्रान्धारिकामुखपट्टिका-चित्रादिभासुरं कल्पनं कल्पनीयमित्यर्थः ॥

एवं क्षुद्रविमानगोपुररूपनिर्माणं तु प्रायशः सर्वत्र देशेषु सुधेष्टिकादिभिरधःप्राप्तक्षुद्राधिष्ठानं क्रमात्परिकल्प्य तत्र तत्र मुखपट्टिकातलेषु देवगन्धर्वप्रमुखबिम्बचिह्नानि योजयित्वा प्रस्तरकण्ठस्योर्ध्वभागे सुधेष्टिकालोहादिकृतलुपादिशिखरावलिं

नासाकर्णमण्डितपार्श्वकलशनमवाङ्मुखादिदोषहीनां मनोहराकृतिं मानज्ञः शिल्पी प्रकल्पयेदित्यध्यायत्रयेण सङ्क्षेपतः कल्याणशाला-प्रकल्पनविधिरेको ज्ञेयः ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां विश्वकर्मवास्तुशास्त्रव्याख्यायां

**कल्याणशालालक्षणकथनात्मकपञ्चभौमविधानक्रम-गोपुरविधानक्रमनिरूपणात्मकाः षट्चत्वारिंश-सप्तचत्वारिंशाष्टचत्वारिंशाध्यायाः ॥**



अथ रङ्गशालालक्षणकथनात्मकः

## एकोनपञ्चाशोऽध्यायः ॥

प्रासादस्य पुरोभागे स्वास्थानस्य तु दक्षिणे ।
मन्त्रिसेनेशभवनपार्श्वे वा पुरमध्यमे ॥ १ ॥

---

एकोनपञ्चाशोऽध्यायः ॥

अथास्मिन्नेकोनपञ्चाशाध्याये रङ्गशालानिर्माणक्रमं विशिनष्टि— **प्रासादस्येत्यादिना**। रङ्गशाला नाम नाटकप्रदर्शनार्हस्थलविशेषः। रसिकानां सर्वेषां जनानां भावुककुशीलवनटप्रमुखैः पूर्वतनपुरुषचरित्राभिनयप्रदर्शनादिवशादानन्ददायिन्यास्तस्या रङ्गशालायाः स्थापनस्थलानि कानीत्याकाङ्क्षायां तानि निर्दिशति— **प्रासादस्येत्यादिना** ॥

'द्विसहस्रजना यत्र तत्स्थलं रङ्गयोग्यकम्' इति वचनात् प्रायशः पुरनगरादिषु स्थापितस्य भूपालप्रासादस्य पुरोभागाख्यमुखचत्वरस्थलस्य सव्यभागस्थले वाऽपसव्यभागस्थले वा तामिमां रङ्गशालां निर्मापयेत् । अथवा भूपालप्रासादस्यान्तरस्थलस्थापितस्यास्थानस्थलाख्यकल्पनविशेषस्य दक्षिणभागे स्थापयेत् ॥

आहोस्वित्सचिवसेनानायकहर्म्यकल्पनस्य पार्श्वस्थले समुचिते स्थापयेदिति स्थलानुकूलविकल्पः । अत्रोक्तसचिवादिहर्म्य-

मध्यसद्मसमीपे वा मेलनस्थानकेऽपि वा ।
राजवीथीमुखान्ते वा शृङ्गाटकतलेऽथवा ॥ २ ॥

---

कल्पनशब्दस्तावद्भूपालप्रासादस्यावरणस्थलेषु स्थापितकल्पनविशेषद्योतक इति भावः । अनेन मुख्यतो भूपालतन्महिष्यादिभिरुपसेवनदर्शनयोग्याया राजकीयरङ्गशालायाः स्थापनस्थलनिर्देशः कृत इति भावः ॥

अथ भूपालेतरजनैस्सेवनीयपौररङ्गशालायाः स्थापनस्थलं निर्दिशति—**पुरमध्यम** इत्यादिना । सर्वतोभद्रादिनगरस्य मध्यभागे समुचितस्थले मानवरङ्गशालां निर्मापयेत् । अथवा नगरगर्भस्थानाख्यनगरमध्यभागे क्वचित्स्थापितस्यालोकनादिमध्यसद्मनस्समीपे तां रङ्गशालां निर्मापयेत् । अथवा तादृशकल्पनानिर्माणाद्यभावे नगरेषु राजवीथीनां, महाप्रतोलिकादीनां वा यत्र संमेलनं संभवति तत्र स्थले स्थापयेत् ॥

किञ्च नगरादिषु देवप्रासादस्य पुरोभागे स्थापिता, उभयपक्षहर्म्यका वीथी सन्निधिवीथीनामभाग्भवति । भूपालप्रासादस्य पुरोभागे स्थापितोभयपक्षहर्म्यका वीथी मुखराजवीथीति व्यवहारः किल । तस्याः मुखराजवीथ्या मुखभागे ललाटस्थले वा तामिमां रङ्गशालां स्थापयेत् । अथवा क्वचिन्नगरादिषु शृङ्गाटकस्थलसमीपे स्थापयेत् ॥

रङ्गशालां गीतिशालां मिलितां स्थापयेद्बुधः ।
देवगन्धर्वमानुष्यभागत्रयविभाजिताम् ॥ ३ ॥
गीतिशाला नाट्यशाला पृथक्स्थाप्या क्वचित्स्थले ।

---

शृङ्गाटकस्थलं नाम पञ्चषसंख्याकानां महाप्रतोल्यादीनां मेलनस्थानमिति केचित् । राज्ञः प्रासादस्य पुरःस्थले, राजवीथीमुखान्तःस्थले वा महाभेरीमहाघण्टावादनार्थं कल्पितं बहुभौमं स्थलमित्यन्ये । तस्मादेवं निर्दिष्टेषु स्थलेषु समुचितवास्तुभूभागे सङ्गीतशालामण्डपकल्पनामिलितामेव तामिमां रङ्गशालां स्थापयेदिति स्थलनिर्देशविकल्पः ॥

क्वचिन्नगरादिषु भूपालवाञ्छानुगुणं नाट्यशालां, सङ्गीतशालां, नाटकशालाञ्च समुचितस्थले पृथक्पृथक् स्थापयेदित्युपदेशश्शास्त्रीयोऽवधार्यः । तस्मादेवं निर्दिष्टस्थलेषु यथाभूलाभादिविभवं स्थापनीयामिमां रङ्गशालां देवभागगन्धर्व-भागमानवभागाख्यभागत्रयेण संयुतां निर्मापयेत् ॥

अत्र कोऽपि क्रमः । यथा — नाट्यशालासङ्गीतशालयो-र्निर्माणक्रमस्तु शास्त्रकारेणानेन विश्वकर्मणा न प्रतिपादितः, ग्रन्थान्तरेषु ज्ञेयः । तस्मादत्रोक्तकल्पनत्रये नाट्यशालैवाङ्गी; इतरद्वयमपि तदङ्गं भवतीति स्फूर्त्या रङ्गशालाख्यनाटकशालाया निर्मितिक्रममेव स्पष्टमुदाहृतवान् शास्त्रकार इति भावः ॥

चतुर्दण्डं समारभ्य द्विद्विदण्डविवर्धनात् ॥ ४ ॥
विंशद्दण्डान्तकं मानं प्रतिभागं विधीयते ।
राजधान्यां क्वचिद्भागे मानाधिक्यन्तु मानुषे ॥ ५ ॥

अथवा यद्द्विगुणितं मानं वा नेयमीरितम् ।
अथवा मण्डलं भागं मानुषं कल्पयेद्बुधः ॥ ६ ॥

---

अत एतस्या रङ्गशालाया दैर्घ्यादिप्रमाणन्तु तत्र तत्र स्थलविभवानुगुणं भूपदण्डचतुष्कप्रभृतिविंशतिदण्डान्तं योज्यम् । क्वचिद्राजधान्यां कल्पनीयायां महारङ्गशालायां मानवासनस्थानं विंशतिदण्डाधिकमपि सौकर्यार्थं करणीयमित्युपदेशः । अत्रैवं कल्पने शिल्पिनां व्यवहारो यथा— दैवभागे दण्डचतुष्कं प्रमाणं, गान्धर्वे दण्डाष्टकं, मानुषभागे दण्डद्वादशकादीति । एवंविधप्रमाणमानितं रङ्गशालाकल्पनमपि स्पृहणीयमेव ॥

मतान्तरमत्र यथा — दैवगान्धर्वमानवाख्यभागत्रयमपि सममानमेव स्थापनीयम् । तथाऽपि मानवभागे परं द्वितलत्रितलपार्श्वाङ्गणादिस्थापनं द्रष्टॄणां सौकर्यावहम् । तदेव कार्यज्ञानां तोषायेति ॥

एवमत्र कल्पनेऽपि क्वचिद्विकल्पः । यथा — पूर्वोक्तदैवगान्धर्वाख्यस्थलद्वयकल्पनमपि समसूत्रं वैशाल्योपेतं दैर्घ्योपेतं स्थापयित्वा मानवासनभरितं मानवस्थलं मण्डलाकारम् , क्वचिदष्ट-

अथवाऽऽवरणस्थानात्कचिद्भौमादिभेदतः ।
पार्श्वाङ्गणस्थापनाद्वा महिष्याद्यवलोकनम् ॥ ७ ॥

यथा स्फुटन्तु सर्वेषां तथैतत्कल्पनं वरम् ।
महाधिष्ठानसंयुक्तं नेत्रत्रयसमन्वितम् ॥ ८ ॥

कल्पनं सुखदं नृणां देवाद्यानन्दवर्धकम् ।

---

कोणयुतं, द्वादशकोणयुतं वा स्थापनीयमिति । एवं मानवस्थलकल्पनं प्रथमावरणद्वितीयावरणादिस्थापनवशादावरणतलं (स्थलं) संविभक्तनानाभौमसहितं पार्श्वतो नानाङ्गणोपेतं, उपरिभौमतलेषु स्थितानामवरोधजनानां यथा स्फुटदर्शनं भवेत्तथाऽविरुद्धसूत्रप्रसारं, विषमदृष्टिविहीनं शिल्पकर्मज्ञाश्शिल्पिनः प्रकल्पयेयुरित्युपदेशः ॥

किञ्चात्र रङ्गशालाकल्पने दृढमहाधिष्ठानयुक्तमेवाद्यतलनिर्माणं शस्तम् । तत्रापि पूर्वोक्तदेवगान्धर्वभागयोरधिष्ठानमौन्नत्याधिक्यसहितम् । मानवभागकल्पनाधिष्ठानं तु तदपेक्षया किञ्चिदौन्नत्यहीनं प्रकल्पयेदिति विकल्पः ॥

एवमधिष्ठाननिर्माणक्रमं प्रतिपाद्य तदुपरि कल्पनीयनिर्माणक्रममुदाहरति — **नेत्रत्रयसमन्वितमि**त्यादिना । नेत्रस्थलं नाम गोपुरद्वारमानानुगुणमहाद्वारमित्यर्थः । तादृशनेत्रत्रयेणोपेतं अस्याश्शालायाः मुखस्थलं प्रकल्पनीयमिति भावः । एवं नेत्र-

दैवेऽलङ्करणं शस्तं गान्धर्वे गानमीरितम् ॥ ९ ॥
मनुष्यभागे स्थानानि कथितानि सभासदाम् ।
मनुष्यभागस्य पुरः स्थानं वैरिञ्चमीरितम् ॥ १० ॥

ब्रह्मद्वारन्तु तत्रस्थमखण्डानन्दवर्धकम् ।

---

त्रयकल्पनमेवाहमहमिकया प्रवेशशीलानां जनानां सौकर्यावहम्, एतत्कल्पनशोभाकरं रङ्गशालादेवतानामपि आनन्ददायकमिति च भावः। एतादृशनेत्रस्थानकल्पनं तु पूर्वोक्तदैवगान्धर्वभाग-मध्यतलरेखानुगुणं मध्यनेत्रम्, तत्पार्श्वयोः सव्यापसव्याख्ययो-रितरद्वयमिति तद्विवेकः। तस्मादत्र रङ्गशालाकल्पने प्रथमतो नेत्रत्रयम्, ततो मानवभागस्ततो गन्धर्वभागस्ततो देवभाग इति विभजनक्रमः पूर्वोक्तप्रमाणक इति मन्तव्यम् ॥

एवं दैवगान्धर्वभागमानवभागकल्पनानिर्माणानां प्रयोजनं किमिति चेत्तद्विवृणोति — दैवेऽलङ्करणमित्यादिना। दैवभागे नटादीनां तत्तन्नाटकोचितभूमिकालङ्क्रियादिः करणीयः। तदर्थ-मेव कल्पितस्य स्थानस्य दैवभागव्यवहार इति भावः। एव-मुत्तरत्रापि। किञ्चात्र रङ्गशालाकल्पने गान्धर्वभागे गायकाना-मासनकल्पनं निस्साणमुरळीवीणामर्दलादिस्थापनमिति। एवं मानवभागे सामाजिकानामासनस्थानकल्पनमिति तदर्थः ॥

किञ्चात्र रङ्गशालानिर्माणे मानवगन्धर्वभागयोः मध्यतलं

द्वारोत्सेधसमं श्रेष्ठं चतुरंशविहीनकम् ॥ ११ ॥

मध्यमे द्वित्रिभागे च कन्यसंवृषभोदयम् । (?)
गर्भार्धकस्य तद्द्वारव्यासमत्र प्रकीर्तितम् ॥ १२ ॥

---

ब्रह्मस्थानं कथितम् । तत्रस्थं द्वारं ब्रह्मद्वारमिति । तादृशद्वारेणैव नटादीनां रङ्गवेदिकातलादन्तःप्रवेशनिर्गमनादिकमिति भावः । किञ्चैतादृशब्रह्मद्वारस्य पुरोभागे एव रङ्गवेदी कल्पनीया । तस्यामेव वेद्यां नटीनटादयो भूमिकाधारिणोऽभिनयादीन् प्रदर्शयेयुरिति क्रमः ॥

किञ्च पूर्वोक्तब्रह्मद्वारस्य किं वा प्रमाणमिति चेत्तदाह— द्वारोत्सेधसममित्यादिना । नेत्रद्वाराख्यस्य प्रथमद्वारस्य यन्मानं क्रियते तत्समानप्रमाणयोजनमेव ब्रह्मद्वारे वरमित्याद्यः पक्षः। अथवा कचिद्रङ्गशालाकल्पने नेत्रद्वारप्रमाणं षोडशधा विभज्य तत्र चतुरंशहीनप्रमाणं वाऽत्र ब्रह्मद्वारे योज्यम् ॥

अत्र तु कोऽपि कल्पनाविशेषक्रमो यथा — नेत्रद्वारत्रय-स्थापनवदत्रापि ब्रह्मद्वारस्थापनभागे द्वारत्रयं स्थाप्यम् । तत्रापि मध्यद्वारस्य नटादिप्रवेशनयोग्यस्य वैशाल्यादिप्रमाणाधिक्यं योज्यम् । इतरयोर्द्वारयोः शोभाजनकयोः किञ्चिद्धीनप्रमाणयोजन-मिति । अथवा कचिदत्र रङ्गशालायां दैवगान्धर्वभागयोर्यावद्-वैशाल्यं तन्मानवदेव तदर्धमानकं वाऽस्य ब्रह्मद्वारस्य कल्पने

रङ्गवेद्या समायुक्तं स्थलमेतन्निगद्यते ।
गायकानां स्थानकं वा निस्साणातोद्यभूमिकम् ॥ १३ ॥

तदन्तरेऽष्टभागं वा नवभागमथापि वा ।
विभजेत्तत्र मानज्ञः कल्पयेत्सदनं दिशि ॥ १४ ॥

पश्चादशकरं तुङ्गमेकांशं मात्रमीरितम् ।
पश्चाष्टाङ्गुलमायाममेवं तन्मानमीरितम् ॥ १५ ॥

सव्ये नटीनां वस्त्रादीनितरस्मिन्नटस्य च ।

---

योज्यमिति विकल्पः । किञ्चैतादृशस्य ब्रह्मद्वारस्य यावद्वैशाल्यं तन्मानवत्येवं रङ्गवेदिका पुरतः कल्प्या सुधेष्टिकादारुप्रमुखैरिति । किञ्चैतस्या रङ्गवेदिकाया औन्नत्यं तु द्विहस्तादिचतुर्हस्तावधिकमिति अत्रैव नान्दीरचनेति समयः ॥

अपि च तादृशब्रह्मद्वारस्यान्तर्भागस्थलं अष्टधा नवधा वा विभज्य तत्र क्षुद्रगृहाणां चतुष्कमष्टकं वा स्थापयित्वा तेषां मध्यभागे क्षुद्रमण्टपं वा क्षुद्रशालां वा प्रकल्पयेत् । एवं दैवभागे कल्पितस्य तस्य मण्डपस्य पुरोभागे गन्धर्वभागारम्भस्थले सव्यभागे नटीप्रमुखानां योषितामलङ्कारासनानि, अपसव्यभागे नटादीनां पुंसामलङ्क्रियासनानि च प्रकल्पयेदित्यर्थः । एवमेतयोर्दैवगान्धर्वभागकल्पनयोर्भित्त्याद्यौन्नत्यं तु पञ्चदशहस्तकं योजनीयमिति ॥

शाला वा कूटका वाऽपि पूजोपकरणार्हका ॥ १६ ॥

शालाकृतिः प्रकर्तव्या पुरतो नान्दिकोचिता ।
तत्पुरः सदनं तुङ्गं नानाभौमयुतं महत् ॥ १७ ॥

चतुर्दण्डं पञ्चदण्डमथवा दशकावधि ।
मानमत्र प्रयोज्यन्तु तक्षकैः कल्पनार्हकम् ॥ १८ ॥

मध्यभागं विशालञ्च नानाङ्गणविराजितम् ।

---

किञ्चात्र दैवगान्धर्वकल्पने मध्यस्थितमण्डपस्य ब्रह्मद्वारस्य च मध्यतले क्षुद्रोन्नत्ययुता नान्दीवेदी सुधेष्टिकादिभिः कल्पनीया। किञ्चात्र तादृशनान्दीवेदिकाया ब्रह्मद्वारस्य च पुरोभागे मानवासन-योग्यं तुङ्गभौमकल्पनं नानाभौमयुतं प्रकल्पनीयम् । किञ्च तस्याङ्गणस्य वैशाल्यन्तु भूपालदण्डचतुष्कं, कचिद्दण्डपञ्चकादि-दण्डदशकान्तं यथास्थलविभवं योजनीयमिति । सर्वत्र तास्मिन् अङ्गणत्रयकल्पने मध्यमाङ्गणस्य वैशाल्यापेक्षया तत्पार्श्वस्थाङ्गणयोः किञ्चिद्वैशाल्यहीनत्वं कल्पनीयमिति ॥

कुत एवं कल्पनम् ? उच्यते — पूर्वोक्तब्रह्मद्वारवदित्येकः प्रकारः । तस्य शोभार्थमित्यपरः पक्षः । प्रकारान्तरन्तु सामाजिकादीनामासनस्थापनसौकर्यार्थमिति । एवमत्राङ्गण-कल्पनेऽङ्गणान्तरकल्पनं सुषिर (கமான்) स्थापनं ससोपानमपि कचित्कल्पनीयमिति शिल्पसमयः । किञ्च सकलेषु तेष्वङ्गणभागेषु

विमानशिखरोपेतं कर्णनासाविभूषितम् ॥ १९ ॥
तुङ्गस्तम्भशतैर्युक्तमशीतिस्तम्भकं तु वा ।
चतुष्षष्टिस्तम्भयुतमथवैतत्प्रकल्पयेत् ॥ २० ॥
शालाकारमिदं प्रोक्तं राजवेश्मनि मण्टपम् ।
वदन्ति मुनयश्शस्तं ज्ञानानन्दकरं परम् ॥ २१ ॥
मणिदर्पणशोभाढ्यं वातायनशतान्वितम् ।

---

आहृत्य संख्यायां स्तम्भानां शतानि स्थापनीयानि । इदमुत्तमरङ्गशालानिर्माणमिति समयः । अशीतिस्तम्भयुक्तं वा कचिच्चतुष्षष्टिस्तम्भयुतं वा कल्पनमपि मध्यमपक्षद्योतकमेव । पञ्चाशत्स्तम्भयुतं चतुश्चत्वारिंशत्स्तम्भयुतं रङ्गशालाकल्पनं त्वधमः पक्ष एवेति ॥

एवंरीत्या स्तम्भस्थापने शालाकारमेव मानवासनकल्पने वरम् । भूपालरङ्गशालायान्तु स्तम्भस्थापनस्थलं मण्डपाकारं प्रकल्पयेत् । एवं स्थापनमेव ज्ञानानन्दशान्त्यादिवर्धकमिति मुनीनामभिमतं बोध्यम । किञ्चैवमत्र कल्पितनानाङ्गणोपेतस्य मानवासनस्थलभागस्योर्ध्वभूमिषु वा ब्रह्मद्वारभागस्योर्ध्वभूमिषु वा देवगन्धर्वभागस्योर्ध्वभूमिषु वा नासाकर्णादिभिरुज्ज्वलं सशिखरं विमानं स्थापनीयमिति । तत्क्रमश्च शिल्पिभिर्ज्ञेयः ॥

किञ्चात्र मानवभागस्तम्भाङ्गणेषु भित्त्यन्तस्थलेषु ब्रह्मद्वारपार्श्वभित्तिषु रमणीयदर्पणादिकं सचित्ररचनं लम्बयेत् । किञ्च

तोरणादीनि चित्राणि तत्र तत्र प्रकल्पयेत् ॥ २२ ॥

विधातारश्च वाणीश्च गीतिशास्त्रप्रवर्तकान् ।
विद्याधरीं जगद्धात्रीं कल्पयेच्चन्द्रसूर्यकौ ॥ २३ ॥

द्वारपार्श्वस्थले योधं स्थापयेद्खड्गधारिणम् ।
चामरग्राहिणीं दिव्ययोषितं वाऽत्र कल्पयेत ॥ २४ ॥

लक्ष्मीमुमां शिवं दिव्यगायकान्वा प्रकल्पयेत् ।
पार्श्वभित्तिसमायुक्तामङ्गणाङ्गणकल्पनाम् ॥ २५ ॥

सुषिरद्वारभागाढ्यामात्तपङ्क्तिक्रमां तथा ।
कल्पयेल्लक्षणोपेतैः नानाचित्रादिभिर्युताम् ।
क्वचिदुद्यानवापीं वा सुखदां शुद्धवास्तुकाम् ॥ २६ ॥

इति विश्वकर्मप्रणीते **विश्वकर्मवास्तुशास्त्रे**

रङ्गशालालक्षणकथनं नाम

एकोनपञ्चाशोऽध्यायः ॥

---

स्तम्भललाटपट्टिकाभागेषु स्थलान्तरेष्वपि समुचितेषु नानाचित्र-तोरणादीन्प्रकल्पयेत्। 'विधातारश्च वाणीश्च' इत्यादिपाठस्सुगमार्थः। ब्रह्मद्वारभागभित्तिषु, नेत्रद्वारभागभित्तिष्वपि विधातारं वाणी-प्रमुखाः जगन्मातॄश्च नानाभरणादिभूषिताः लोहसुधेष्टिकादिभिः प्रकल्पयेयुरिति ॥

अथ मन्त्र्यादिभवनलक्षणकथनं नाम

पञ्चाशोऽध्यायः ॥

प्रासादादिषु सर्वेषु राज्ञां यन्मानयोजनम् ।
तदर्धं वा तदर्धं वा मन्त्रिसेनेशहर्म्यके ॥ १ ॥

---

एतादृशलक्षणोपेतामिमां रङ्गशालां क्वचित्सर्वतोभद्रादिनगरेषु उद्यानभागान्तःस्थले वा, वापीतीरे वा स्थापयित्वा तत्स्थलानुगुणं मार्गादिकञ्च प्रकल्पयेयुरिति संग्रहेण रङ्गशालालक्षणवाक्यार्थः ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
**रङ्गशालालक्षणकथनं नाम**
**एकोनपञ्चाशोऽध्यायः ॥**



॥ **पञ्चाशोऽध्यायः** ॥

अथास्मिन्पञ्चाशत्तमेऽध्याये भूपालकुटुम्बभूतसचिवसेनापतियुवराजप्रमुखानां निवासयोग्यभवनलक्षणं संग्रहेण प्रतिपादयति— **प्रासादादिष्वित्यादिना** । तत्रादौ सचिवसेनापतिभवनहर्म्यनिर्माणस्य कियद्वा मानादिकमिति चेत्तदाह — **तदर्धं वेत्यादिना** । सर्वतोभद्रादिषु नगरेषु भूपालप्रासादनिर्माणाय

योजयेत्स्थपतिश्रेष्ठः अन्तस्स्थं पूर्ववक्त्रकम् ।
बहिश्चेत्पश्चिमास्यं वा कौबेरास्यमथापि वा ॥ २ ॥

क्षुद्रप्राकारसंयुक्तं भौमत्रयसमन्वितम् ।

---

यावत्प्रमाणं भूतलं परिकल्पितं तत्प्रमाणार्धभागं वा स्थलाभावे तदर्धभागं वा सचिवसेनापतिहर्म्यपरिकल्पनाय विभजेदिति क्रमः । सर्वथा नृपप्रासादप्रमाणादर्धप्रमाणं, क्वचित्पादप्रमाणं वा एतयोः सचिवसेनापत्योर्हर्म्येषु योजनीयम् ; न तत्सदृशप्रमाणयोजनं, नापि न्यूनप्रमाणकमिति भावः । इदञ्च लक्षणं समभूमिषु नगरेषु कल्पनीयहर्म्यविषयकमिति भावः । दुर्गस्थलेषु क्वचित्पर्वतोपरिभागेषु कल्पनीयमन्त्रिसेनापतिहर्म्याणां मानन्तु तत्तत्स्थलानुगुणमिति शिल्पकार्यविदामाशयः ॥

तस्मात्तदिदं सचिवसेनानायकहर्म्यादिनिर्माणं कुत्र वा स्थले कल्पनीयमिति चेत्तदाह— **अन्तस्स्थमित्यादिना** । क्वचिन्नगरादिषु नृपप्रासादवास्तुसीम्नोऽन्तर्भागे पृथगेव प्रकल्पयेत् । तदा वासवदिङ्मुखप्राथमिकद्वारकल्पनमेव श्रेयस्करमिति शिल्पसमयः । एवं नृपप्रासादवास्तुभागस्यान्तस्स्थले एतयोः हर्म्यस्थापनयोग्यस्थलाभावे पद्मकसर्वतोभद्रादिनगरेषु, क्वचिद्वनदुर्गसलिलदुर्गादिस्थलेष्वपि, नृपप्रासादमुखराजवीथ्यादिषु समुचितस्थानेषु प्रकल्पयेत् इति विकल्पः ॥

त्रिपञ्चसप्तभौमान्तं कल्पनं प्रविधीयते ॥ ३ ॥
शतदण्डप्रमाणं वा द्विशतावधिमानकम् ।
नेयमत्र विधानेन कल्पनार्हं पृथुक्रियम् ॥ ४ ॥

---

एवमेतयोर्मन्त्रिसेनेशयोः हर्म्यस्थापनयोग्यस्थलतत्प्रमाण-कथनानन्तरं संक्षेपतस्तत्क्रममाचष्ट — क्षुद्रप्राकारमित्यादिना । तदिदमेतयोर्हर्म्यं क्षुद्रप्राकारत्रययुक्तं वा प्राकारद्वयोपेतं वा कचिदेकप्राकारावृतं वा परिकल्प्य, स्थलविभवानुगुणं समसूत्र-प्रमाणं मध्यस्थमुख्यकल्पनं त्रिभौमभासुरं वा पञ्चभौमभासुरं वा कचित्सप्तभौमोज्ज्वलं स्थापयेत् ॥

अत्रैवं शिल्पसमयः । यथा—यदि नृपप्रासादकल्पनं नवभूमिकं कृतं तदैतयोर्हर्म्यं सप्तभूमिकमेव कल्पयेदिति । एवमुत्तरत्रापि ज्ञेयम् । सर्वथा नृपप्रासादादेतद्धर्म्यकल्पने हीन-प्रमाणादियोजनमेव प्रजानां मण्डलस्य राज्ञश्च तेषां क्षेमकरं नृपप्रासादकल्पनौत्कर्ष्यद्योतकमिति च भावः । आचरणमिदं गिरिमस्तकादिषु कल्पनीयदुर्गस्थलेष्वपीति प्राचां शिल्पिनामाशयः ॥

एवं साधारणलक्षणमुक्त्वाऽऽन्तरालिकलक्षणमद्य विवृणोति—शतदण्डप्रमाणं वेत्यादिना । किञ्चैतयोस्सचिवसेनानायकयोर्हर्म्यस्य मध्यस्थमुख्यकल्पतस्य कियद्वा प्रमाणमिति चेत्साधारणदण्डशतं वा कचित्तदधिकं वा कचित्स्थलविभवसंभवे द्विशतावधिकमेव

मण्डलाकारमध्यस्य शालकं सोपशालकम् ।
तत्र द्वारचतुष्कोणयुक्तं कल्पनकं बहिः ॥ ५ ॥
अष्टशालासमायुक्तं मध्यद्वारसमुज्ज्वलम् ।

---

योजनीयमिति क्रमः । आप्रथमद्वारमा चान्तिमद्वारं सूत्रविधानेन तत्तत्कल्पनार्हभित्तिस्थापनाद्यविरुद्धं तन्मानकल्पनं वरमिति सतामाशयः ॥

किञ्चैतादृशप्रमाणपरिकल्पनयोग्यस्य मध्यस्य मुख्यकल्पनस्य मध्यभागस्थलमतिवैशाल्योपेतं मण्डलाकारनिर्माणयुतं प्रकल्पयित्वा तन्मध्यभागे षोडशभिरथवा द्वादशभिरष्टभिरथवा चतुर्भिस्स्तम्भकैरुपेतां मध्यशालां सुषिरकल्पनचित्रादिमनोहराकृतिं स्थापयेत् । कचित्तस्याश्शालायाश्चतुर्ष्वपि वा भागेषु भागत्रये दैर्घ्योपेतक्षुद्रशालापरिकल्पनमप्युपकारादय इति कल्पनस्यास्योपशालाकल्पनमिति विदुः ॥

किञ्च तादृशोपशालाकल्पनस्य मध्यतले समसूत्रप्रसारद्वारचतुष्कं स्थापयित्वा तद्बहिश्च स्थले कल्पनीयक्षुद्रशालाक्षुद्रसदनादिकल्पनाविरुद्धं वेदिकानिर्माणाविरुद्धञ्च सावरणं कल्पनं कल्पनीयम् । अयमेकः प्रकारः । प्रकारान्तरं तु पूर्वोक्तरीत्या मण्डलाकारमध्यस्थले नवरङ्गमण्डपकल्पनं विधाय तस्य चतुर्ष्वपि दिग्भागेषु चतुश्शालां स्थापयित्वा तद्बहिः पुनरपि तत्समीपे

महाचत्वरयुक्तं वा महाङ्गणसमावृतम् ॥ ६ ॥

सामन्तानां क्षत्रियाणामुत्तमासनयोग्यकम् ।
कारयेन्मतिमान् शिल्पी हर्म्यकं शिखरोज्ज्वलम् ॥

अथ युवराजभवनलक्षणकथनम् —

युवराजस्य भवनमन्तर्वा बहिरेव वा ।

---

महाशालाचतुष्कं प्रकल्पयेत् ॥

अथवा पूर्वोक्तमध्यस्थाने चत्वरस्थलं चन्द्रिकातपादिपतनयोग्यं निरावरणं प्रकल्पयित्वा, तत्स्थलं परितश्चतुश्शालाकल्पनमथवाऽष्टशालाकल्पनं क्वचिदतिदीर्घमहाङ्गणं वा तत्कल्पनान्तः प्रवेशयित्वा सावरणं कल्पनान्तरमपि तदन्तर्विधाय तत्र भागेषु समुचितेषु शयनासनभोज्यासनस्थानादीनि स्वेच्छाधीनं सममानशिखरकल्पनानि प्रकल्पयेदिति लक्षणवाक्यार्थः ॥

किञ्चात्र सचिवसेनानायकहर्म्यकल्पनस्य पूर्वभागे राज्यकार्यनिर्वहणाद्ये समुचितेषु समयेषु आगमनशीलानां सामन्तभूपालादीनामासनसहितं तत्सौकर्यावहं मञ्जुलाकारं कल्पनमेकं पृथगेव कल्पनीयमिति सङ्ग्रहेण सचिवसेनापतिहर्म्यलक्षणं प्रतिपाद्याधुना युवराजभवननिर्माणक्रमं युक्तमिति तत्स्थलं निर्दिशति — **अन्तर्वेत्यादिना** । चक्रवर्तिभूपालादिक्षत्रियाणां प्रासादवास्तुभागस्यान्तरेव प्रायशो युवराजभवननिर्माणं कार्यम् ।

प्राकारत्रययुक्तं वा क्षुद्रगोपुरभासुरम् ॥ ८ ॥
शतदण्डप्रमाणं वा पञ्चाशद्दण्डकं तु वा ।

---

क्वचित्तस्य प्रासादस्य बहिःस्थले मुखराजवीथ्यारम्भस्थले तद्युवराजभवनं स्थाप्यमिति स्थलविकल्पः । आशैशवमन्तःपुरादिस्थलेषु नृपपुत्रस्य वर्धनखेलनपठनादिकार्यसंभवेऽपि समुचितवयसि सुमुहूर्ते मन्त्रिपुरोहितपुरोगमैः पौरमण्डलभूपालेन च यदि कश्चिद्राजकुमारो युवराज्यसिंहासनपदेऽभिषिक्तस्तदारभ्य तस्य युवराजस्य पृथगेव भवनकल्पनस्य श्रेयस्करत्वादस्य युवराजभवनकल्पनस्य निर्माणलक्षणप्रसक्तिरत्र युज्यत इति शिल्पसमयः ॥

तस्मादस्य युवराजस्य भवनहर्म्यादिकं पूर्वोक्तशैल्या नृपप्रासादवास्तुभागस्यान्तस्स्थले ऐशान्यामाग्नेय्यां वा दिशि यदि पृथक्कृतम्, तदा तद्भवनं परितः क्षुद्रप्राकारभित्तीनां त्रयमथवा क्वचिद्द्वयं स्थापयित्वा, तस्य हर्म्यस्य प्रवेशद्वारं प्रागाननं पश्चिमाननं वा प्रकल्प्य तस्य द्वारस्थलस्योर्ध्वभागे क्षुद्रगोपुरञ्च निर्मापयित्वा तदनन्तरस्थले प्रथमावरणद्वितीयावरणादिस्थले तत्सेवकवाहनादिस्थानं विहारादिस्थानञ्च क्वचित्परस्पराविरुद्धसूत्रं निर्मापयेत् । तस्य कल्पनस्य प्राकारावरणकल्पनमिति नाम च बोध्यम् ॥

किञ्चात्र युवराजभवने मध्यकल्पनस्य कियद्वा प्रमाणमिति

मध्यकल्पनमानन्तु नेयमत्र विशारदैः ॥ ९ ॥
पूर्वद्वारसमायुक्तं पूर्ववेदिकया युतम् ।
नवभौमं सप्तभौममथवा पञ्चभूमिकाम् ॥ १० ॥
शिखरत्रयसंयुक्तं भित्त्यन्तकलशान्वितम् ।

---

चेत्तदाह — शतदण्डप्रमाणं वेत्यादिना । साधारणदण्डानां शतं वा पञ्चाशद्वा मध्यकल्पननिर्माणार्थं स्वीकृत्य पूर्ववेदिकाद्वयसहितं वासवदिङ्मुखं प्राथमिकद्वारञ्च स्थापयित्वा तादृशप्राथमिकद्वार-समीपस्थलस्योपरिभागे वा पुरकार्यविचारणार्थं कल्पनीयस्यास्थान-शालाकल्पनस्योपरिभागे वा मध्यशालाकल्पनस्योपरिभागे वा शिखरत्रयभासुरं वा नानाभौमसमसूत्रपरिमाणमानितपरिकल्पनं स्थापनीयमिति लक्षणवाक्यार्थः ॥

अपि चास्य युवराजभवनकल्पनस्य भौमसंख्याव्यवस्था तु चक्रवर्त्यादिभूपालप्रासादेषु यावत्संख्याकमुपरिभौमकल्पनं तावत्संख्याकमेवात्रेति । कुतः ? युवराजस्य महाराजस्य च राज्यधूर्वहणमहिमादिविषये तौल्यादिति । एवं समभौम-संख्यापरिकल्पनेऽपि भूपप्रासादवैशाल्यादिप्रमाणादर्धं तदर्धकमेव वा मानमत्र प्रयोज्यमिति शिल्पसमयः ॥

तस्मादत्र युवराजभवननिर्माणे नवभौमयुते वा सप्तभौम-युते वा पञ्चभौमयुते वा प्रकृतेऽपि तत्र तत्र भित्त्यन्तभागेषु

नानाङ्गणसमायुक्तं चूलीहर्म्यविराजितम् ॥ ११ ॥

पार्श्वशालामध्यशालापुरश्शालासमन्वितम् ।

मध्यचत्वरसंयुक्तं नवरङ्गादिभिर्युतम् ॥ १२ ॥

---

सुधेष्टिकादिभिः मनोहरकलशावलिप्रमुखकल्पनाविशेषं विरचय्य तत्कल्पनोपरिभागे समुचितप्रदेशे चूलीहर्म्याख्य क्षुद्रप्रमाणचन्द्रशालानिर्माणमपि अवश्यं कार्यमित्यर्थः ॥

किञ्चात्र युवराजभवनकल्पने नानावातायनादिमनोहरे नानाङ्गणनिर्माणभासुराः बहिश्शालाः मानज्ञः स्थापयेत् । कुत्र वा स्थले ? कल्पनस्यास्य मध्यभागस्थलं परितश्चतुर्ष्वपि वा दिग्भागेषु, भागत्रये, पूर्वभाग एव वा महती शाला नानास्तम्भमेदुरितावकाशा अन्तस्सदनसहिता स्थापनीयेति शिल्पक्रियाविदमाशयः । क्वचित्कल्पने मध्यभागस्थलेऽपि नितरां महती शाला सस्तम्भा, समुषिरा वा स्थापनीया । तदा मध्यशाला पार्श्वशाला पुरश्शालेति नाम ज्ञेयमिति समयः ॥

किञ्च पूर्वोक्तरीत्या सचिवसेनानायकभवनलक्षणप्रकरणोक्तरीत्या मध्यकल्पनस्य मध्यस्थाने चत्वरस्थापनं वा नवरङ्गमण्डपनिर्माणं वा प्रकल्पयेदित्यैच्छिको विकल्पः तथाऽप्यत्र युवराजभवनकल्पने शालाचतुष्कमेव कार्यम् । तत्र तु सचिवसेनानायकभवननिर्माणे तु शालाष्टकयोजनमिति विवेकः किञ्च गवाक्षस्थापन-

मङ्गलासनसंयुक्तं पूर्वमण्टपकल्पनम् ।
पट्टिकामार्गसंयुक्तं मुखभद्रं प्रकल्पयेत् ॥ १३ ॥

पुरकार्यालयोपेतं न्यायवित्पीठिकान्वितम् ।
अमात्यासनयुक्तञ्च कल्पनं पूर्वभागके ॥ १४ ॥

---

स्तम्भस्थापनाङ्गणकल्पनादिक्रियाजालं सर्वमपि तुल्यमेवेति बोध्यम ॥

किञ्चास्य युवराजभवनस्य प्राथमिकद्वारस्य पुरोभागे कल्पनीयपूर्वभवनकल्पने कोऽपि विशेषो यथा — अस्मिन्नेव विश्वकर्मवास्तुशास्त्रे षोडशाध्याये सिंहासनप्रकरणे व्याख्यातपूर्व-वचनरीत्या युवराजस्य विजयासनस्थानं कल्पनीयं खलु; तल्लक्षणान्वितमासनमत्र पूर्वभवने स्थापयित्वा, ततः पश्चात्किञ्चि-दन्तर्भागे तत्कल्पनमिलितं वा पृथग्वा चतुरश्राकारं कञ्चन मण्डप-निर्माणं विरचय्य तन्मध्ये अमात्यपुत्रादीनां सवयसां तस्य च युवराजस्य मङ्गलासनं प्रकल्पनीयमिति । अस्मिन्नेव किल मङ्गलासने निषण्णास्ते भूपालमन्त्रिकुमाराः मिथस्सल्लपनं कुर्युरिति भावः । तदर्थमेवेदं कल्पनान्तरमिति शिल्पविदः ॥

केषुचिद्देशेष्वेवमाचरणम् । परन्तु देशान्तरेषु युवराज-कुमारस्य सचिवकुमारादिभिस्समुचितेषु समयेषु द्वितीयतृतीयादि-भौमतलेष्वेव वा सल्लपनादिकमिति । अस्मिंस्तु विषये ऐच्छिकं

नानासदनकोपेतमन्तःस्थलमुदीरितम् ।
एकावरणकं वापि क्वचिदावरणद्वयम् ॥ १५ ॥
कल्पयेन्मतिमाञ्छिल्पी क्वचिदावरणत्रयम् ।
पृथक्कल्पनयुक्तं वा तद्युतं वा विहारकम् ॥ १६ ॥
स्थलमस्य प्रकर्तव्यं नानालङ्कारभासुरम् ।

---

देशीयाचरणमपि युक्तं पश्यन्ति शिल्पविदः । तस्मात्तादृश-सङ्गलासनस्थानस्य पूर्वोक्तविजयासनस्थानस्य च पार्श्वयोरुभयो-श्चन्दनादिसारदारुकल्पितपट्टिकामार्गः परिकल्पनीयः ॥

किञ्चास्य कल्पनस्य मुखभागे नानालङ्कारमण्डिताङ्गं मुख-भद्राख्यं कल्पनमपि संयोजनीयम् । अपि चात्र युवराजभवनस्य पूर्वभागस्थापितपूर्वभवनकल्पने ग्रामनगरादिषु स्थितानां प्रकृतीनां वाञ्छापूरणार्थं कञ्चन कल्पनान्तरञ्च कृत्वा तत्र चोत्तुङ्गस्थाने युवराजस्य तस्य क्वचित्प्राड्विवाकासनं वा पार्श्वयोः पुरतश्च क्वचिन्न्यायविदां पौराणामासनानि च स्थापनीयानीति च क्रमः ॥

किञ्चैतादृशलक्षणान्वितं पूर्वभवनं प्रथमावरणस्थाने वा द्वितीयावरणस्थाने वा क्वचित्तृतीयावरणस्थानेऽथवा प्राथमिकद्वार-समीपे प्रकल्पनीयमिति शास्त्रकारविकल्पवचनमपि शिल्पकार्यज्ञै-रवधार्यमिति भावः । किञ्चात्र युवराजभवनकल्पने तस्य युवराजस्य स्निग्धैस्सल्लपनकन्दुकक्रीडाद्यर्हं स्थलन्तु मध्यभाग-

भोज्यशय्यास्नानशालाः पूर्वाग्नेयोत्तरस्थिताः ।
युक्त्यान्यकल्पनं धीमान्स्थापयेच्छिल्पयोग्यकम् ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे
मन्त्र्यादिभवनलक्षणकथनं नाम
॥ पञ्चाशोऽध्यायः ॥

---

कल्पनेन सहितमथवा वियुक्तं नानालङ्कारमनोहरं प्रकल्पनीयमित्यर्थः । किञ्चात्र युवराजभवनमध्यकल्पने प्रमाणज्ञशिल्पी वासवदिग्भागे भोजनस्थानमाग्नेयदिग्भागे स्नानशालामुत्तरदिग्भागे शयनस्थानञ्च यथाप्रमाणं सुखवर्धकं प्रकल्पयेदिति क्रमः ॥

किञ्चास्य युवभूपालस्य विविधेषु समयेषु सौख्यवृद्धिकराणां नानाद्रव्याणां स्थापनार्हमहासदनक्षुद्रसदनादिनिर्माणक्रमं तु स्वयमेवोह्य शिल्पी तत्तत्कल्पनानुगुणं निश्चित्य विषममानविषमदृष्ट्यादिरहितं प्रकल्पयेदिति संक्षेपतो युवराजभवनलक्षणवाक्यार्थः कथितो बोध्यः ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
मन्त्रिसेनेशयुवराजभवनलक्षणकथनं नाम
॥ पञ्चाशोऽध्यायः ॥



अथ ग्रामगृहनिर्माणक्रमकथनं नाम

## एकपञ्चाशोऽध्यायः ॥

ग्रामास्तु विविधाः ख्याता देशस्थलविभागतः ।
शुद्धैश्च मिश्रितैरन्यैः कल्पनैर्भिन्नमानकैः ॥ १ ॥

तस्मात्तद्गृहनिर्माणं विविधं परिकीर्तितम् ।
मानज्ञश्च क्रियावेदी तक्षको लोकबान्धवः ॥ २ ॥

गृहादीन्स्थापयेद्दोषहीनान्मङ्गलसिद्धये ।

---

॥ एकपञ्चाशोऽध्यायः ॥

अथास्मिन्नेकपञ्चाशेऽध्याये ग्रामेषु विविधेषु विविधब्राह्मणक्षत्रियवैश्यादीनां सर्वेषां साधारणगृहवेश्मनिकेतनादीनां मानस्थापनादिक्रमं विशदयति—**ग्रामास्तु विविधा** इत्यादिना । इह खलु भारतखण्डाख्यभूभागे गङ्गानद्यादिप्रवाहावाप्तसारे वङ्गाङ्गपाञ्चालकोसलादिदेशभेदेन जाङ्गलानूपादिस्थलभेदेन शुद्धद्रव्यकल्पनमिश्रद्रव्यकल्पनादिना, नानाप्रमाणपरिकल्पनेन च सर्वे ग्रामाः परस्परं वैलक्षण्यभासुराः विविधाकाराश्च भवन्तीति शास्त्रकारवचनप्रतीतिबलात्तेषु कल्पनीयगृहादिनिर्माणप्रकारश्च पूर्वोक्तभेदवशाद्विविध एव भवतीति भावः । तस्मात्तत्तत्स्थलानुगुणकल्पनप्रमाणनयनक्रमज्ञः तदनुगुणक्रियायोजनक्रमज्ञश्च शिल्पी क्रियाकारिषु दयादाक्षिण्यसान्त्ववचनादीन्प्रदर्श्य तद्द्वारा

ब्राह्मणक्षत्रियविशां शूद्राणामपि जीविनाम् ॥ ३ ॥

सङ्कीर्णवर्णजानाञ्च गृहं वेश्म निकेतनम् ।

प्राङ्मुखं वोत्तरमुखं पश्चिमास्यं स्थलोचितम् ॥ ४ ॥

दक्षिणाननयुग्वाऽपि पूर्ववेदिसमन्वितम् ।

---

यथाविभवं ब्राह्मणादीनां सर्वासां प्रकृतीनां मङ्गलशोभादिप्राप्तये दोषहीनानि गुणोपेतान्येव नानाविधानि कल्पनानि स्थापयेदित्युपदेशो ज्ञेयः ॥

किञ्च तत्र तावदिमे पूर्वोक्ताः क्षुद्रग्रामाः बृहद्ग्रामा इति च द्विधा भवन्ति । तेषु क्षुद्रग्रामेषु स्थापनीयगृहप्रमाणादिकमादौ कथयति— **प्राङ्मुखमित्यादिना** । पूर्वोक्तेषु विविधाकारेषु सर्वेष्वपि ग्रामकल्पनेषु तत्र तत्र वीथीक्षुद्रवीथीविशिखादीनां निर्माणक्रमानुगुणं क्वचिद्गृहादीनां प्राथमिकं मुख्यद्वारं समसूत्रं प्राङ्मुखं निर्मापणीयम् । एवं क्वचिद्वीथीषूत्तरमुखद्वारं क्वचित्पश्चिममुखद्वारं, क्वचिद्दक्षिणमुखद्वारञ्च गृहनिर्माणं समसूत्रं विप्रादिश्रेयस इत्यर्थः । सर्वथा गृहद्वारस्थापनं न ऐशानादिकोणचतुष्कोन्मुखं करणीयमिति शिल्पसमयः ॥

किञ्चैवं समसूत्रप्रसारद्वारस्थापनानन्तरं प्राथमिकद्वारस्य पार्श्वयोरुभयोः वेदीं निर्मापयेत् । तत्र च वेदीनिर्माणे एकस्मिन्भागे दैर्घ्याधिक्यवेदीमितरस्मिन्दैर्घ्यहीनां वेदीमथवा

युग्मस्तम्भालिन्दशालातूलपट्टादिभिर्युतम् ॥ ५ ॥

---

पार्श्वयोरुभयोरपि समदैर्घ्यं वा वेदीप्रकल्पनं, तदनुगुणद्वारस्थापनं च प्रकल्पनीयमिति तद्रचनाक्रमो बोध्यः । एवं वेदिकादैर्घ्यविकल्पः । वैशाल्यन्तु सर्वत्र तुल्यमेवेति ॥

एवं ब्राह्मणानां प्राथमिकद्वारसमीपे बहिर्वेदीकल्पनन्तु वाङ्गकौसलद्राविड्याख्यासु शैलीष्वेवाभिमतम् । पाञ्चालमागधशौरसेनाख्येषु शैल्यन्तरेषु देहलीभागे मध्यतलं विहायोभयतः, कचिच्चतुरस्थलेऽन्तर्वेदीप्रकल्पनं प्रसिद्धमिति समयः । तस्मादनेनैव प्रकारेण पाञ्चाल्यादिषु सप्तविधशैलीकल्पनेषु सर्वेष्वपि स्थलभेदेन, प्रमाणभेदेन, रचनाभेदेन च निर्माणानां बहूनां भेद ऊह्यः शिल्पक्रियादक्षैरित्याशयः ॥

किञ्चैवमत्र प्रथमद्वारं तत्समीपे बहिःस्थले वेदिकाञ्च स्थापयित्वा तादृशवेदिकोपर्यग्रभागे युग्मसंख्यान्स्तम्भान् स्थापयेत् । एवमालिन्दभागे कल्याणशालायां कल्पनान्तरे नानाङ्गणप्रान्तभागेषु चत्वरप्रान्तेषु च युग्मसंख्याकस्थूलदारुखण्डान् कचित्तत्संख्याकान स्तम्भांश्च प्रकल्पयेत् ॥

किञ्चात्र क्षुद्रग्रामगृहेषु देहलीतरणानन्तरं द्वितीयद्वारंततःसव्येऽपसव्ये च भागे विवाहशालां, कचिन्मध्यचत्वरप्रान्ते महाशालाञ्च निर्मापयित्वा, पाश्चात्यभागसमीपे नानाविधद्रव्य-

एकद्वित्रिचतुःपञ्चषट्छालाभिः समन्वितम् ।
शावलैरिष्टिकाखण्डैः पटलैर्वा विशेषतः ॥ ६ ॥

दृढावरणकं शस्तं तज्जीवानां सुखप्रदम् ।
वामे च दक्षिणे भागे शालाकल्पनशोभितम् ॥ ७ ॥

चत्वरादिसमाक्रान्ततलमध्येन भाजितम् ।

---

स्थापनार्हं क्षुद्रगृहनिर्माणं कारयित्वा तदनन्तरस्थले पुनरपि महाशालायां द्वयं वा त्रयं क्वचिद्भोजनशालासंमिलितं वा स्थापयित्वा तत्र च पाश्चात्यभागान्ते द्वितीयचत्वरप्रकल्पनञ्च निर्मापणीयम ॥

एवं दक्षिणभागे वा वामभागे उभयत्र वा स्थले स्थापनीयायाः कल्याणशालाया भित्त्यादेरधिकौन्नत्यं प्रकल्पयित्वा पार्श्वकल्पने क्वचित्तत्समानं, क्वचित्तद्धीनप्रमाणं स्थलानुगुणोपरिभागकल्पनं वर्षासलिलपतनयोग्यं प्रकल्प्य कोणशावलकैर्वेष्टिकाखण्डैरथवा तप्तमृत्पटलैर्दृढं विरचय्य चित्रैरुपरिभागाच्छादनं कारयेत्। एवं सर्वत्र ग्रामगृहोपरिभागे निरन्तरशावलादिसंयोजनमेव ग्रीष्मवर्षादिसमयेषु तद्गृहवास्तव्यानां प्राणिनां सौख्यादिहेतुरिति भावः ॥

किञ्चैतादृशग्रामगृहेषु पूर्वोक्तस्थानेषु तत्र तत्र स्थलमानानुगुणं स्थापितानामेकद्वित्रिचतुःपञ्चषशालानां पार्श्वभित्तिकल्पनैः

शालाकुड्यादिभिर्युक्तं चत्वरालिन्दसंयुतम् ॥ ८ ॥

नानागृहसमायुक्तं युग्मतूलादिवेशकम् ।
क्षुद्रग्रामेष्वियं शैली प्रशस्ता परिकीर्तिता ॥ ९ ॥
त्रिविधं भवनं प्रोक्तं बृहद्ग्रामादिषु क्वचित् ।

---

सह मध्यचत्वराङ्गणभित्तिं परस्परदाढ्यार्थं मेलयित्वा, तैः साकमङ्गणान्तःस्थले शालान्तःस्थले च निखातानां स्तम्भानां सम्मेलनमपि तिर्यग्दारुयोजनवशात् कारयित्वा मिथः कल्पनदार्ढ्यं सुधालेपनमापाद्य तक्षककर्कशकारादयः समसूत्रकल्पनार्हं स्थलविभजनं प्रकल्पयेयुरिति क्रमः ॥

अपि चान्तरालिकद्वारस्य वेशकमिति नामान्तरं शिल्पप्रसिद्धम् । अतस्तादृशवेशककल्पनं तत्र तत्र शालास्वलिन्दादिस्थापनान्तरेष्वपि मुखभागे विरचय्य, तत्समसूत्रकं वेशकान्तरमपि प्रतिमुखशालास्थाने संयोज्य, मध्ये मध्ये समुचितस्थलेषु पाकादिकार्योचितनानाविधद्रव्यस्थापनार्हक्षुद्रगृहनिर्माणञ्च करणीयमिति । एवं क्षुद्रग्रामेषु कल्पनीयक्षुद्रगृहादीनां लक्षणशैली सङ्ग्रहेण प्रतिपादिता ज्ञेया ॥ ९ ॥

अथ बृहदाकारमहाग्रामेषु कल्पनीयसद्मनिकेतनादीनां प्रमाणनिर्माणादिक्रमं व्यनक्ति— **त्रिविधं भवनं प्रोक्तमित्यादिना** । बृहदाकारग्रामादिषु पञ्चसहस्राधिकजनाध्युषितेषु

सौधं शावलकं मिश्रं कल्पभेदप्रमाणकैः ॥ १० ॥
वीथीषु च प्रतोलीषु नमिश्रं कारयेद्बुधः ।
दृढभूलम्बनोपेतः कल्पस्सर्वत्र कीर्तितः ॥ ११ ॥
प्रतिलोमानुलोमाभ्यां तत्र मानमुदीरितम् ।

---

कल्पनीयभवनकल्पनं तावत्त्रिविधरूपं भवति । यथा—दारुस्तम्भसुषिरस्तम्भादिधारितसौधभवनरूपं, सुषिरकल्पनसौधकल्पनादि विना शावलकवक्रेष्टिकाद्याच्छादितमहासदनरूपं, क्वचित्क्वचिदेतदुभयकल्पनामिश्रितनिकेतनरूपमिति । एतेषु त्रिविधेष्वपि कल्पनेषु निर्माणभेदप्रमाणभेदादिकं स्थलाधीनम्, क्वचिदिच्छाधीनं वा योजनीयमिति शिल्पसमयः ॥

किञ्च वीथीषु महावीथीषु प्रतोलीषु विशिखासु चोभयपक्षसदनावलीः सौधभासुराः, क्वचिच्छावलकाद्याच्छादनभासुराः स्थापयित्वा, क्षुद्रवीथीष्ववान्तरवीथीकोणस्थलेष्वपि मिश्रद्रव्यगृहकल्पनं कार्यमिति शास्त्रकारः । कुतः ? शोभादये । तस्मादेवं कल्पनीयेषु महाग्रामगृहादिषु सर्वत्र कल्पननिर्माणं दृढालम्बनोपेतं दृढतरभूमिलम्बनभित्तिस्थापनस्तम्भादितिर्यग्दारुसम्मेलनसन्धिबन्धनोपेतं उपरितनसौधादिकल्पनभारवहनक्षमं कल्पनीयमिति लक्षणवाक्यार्थः ॥ ११ ॥

किञ्चैवमत्र महावीथीप्रतोल्यादिस्थानेषु गृहकल्पने प्रमाणन्तु

व्यासविस्तारमानन्तु त्रिदण्डादिप्रमाणतः ॥ १२ ॥

विंशद्दण्डावसानं तद्ग्रामगेहेषु कीर्तितम् ।
भूभागेऽधिकमाने तु मध्यतिर्यक्क्रिया मता ॥ १३ ॥

---

द्विविधमुक्तं शास्त्रकारैः । यथा — प्रतिलोमप्रमाणमनुलोमप्रमाणं चेति । प्रतिलोमप्रमाणं तावत् गृहादिनिर्माणात्पूर्वमेव वीथी-व्यासादिकं निश्चित्य तदनुगुणं सूत्रादिना मात्वा तादृशवैशाल्योपेत-वीथीस्थापनानुगुणं क्वचिद्वीथीषु एकभौमलसितभवनकल्पनं क्वचित् द्विभौमयुतभवनकल्पनं, क्वचित भौमत्रयभवननिर्माणमपि स्थापनीयमिति मानादिस्वीकरणम ॥

अनुलोमप्रमाणन्तु ग्रामनिर्माणार्थं यथाविभवं संप्राप्तवास्तु-भूमिकल्पितवीथीवैशाल्याद्यनुगुणं गृहवैशाल्यभौमस्थापनादि-कल्पनतदनुगुणप्रमाणपरिकल्पनमिति । किञ्च पूर्वोक्तभवनसदन-निकेतनाख्येषु त्रिषु कल्पनेष्वपि एतादृशप्रतिलोमानुलोमप्रमाण-कल्पनयोजनमपि युक्तमिति भावः ॥

तथाऽपि सर्वत्र क्षुद्रग्रामेषु महाग्रामेष्वपि कल्पनीय-विविधगृहनिकेतनभवनादीनामायामप्रमाणं कियद्वा योजनीय-मित्याकाङ्क्षायामाह — **व्यासविस्तारमानं तु इत्यादिना ।** पूर्वोक्तक्षुद्रग्रामेषु कल्पनीयगृहाणां वैशाल्यं तु त्रिदण्डकादि-विंशतिदण्डकान्तमिति । किञ्च महाग्रामादिवीथीषु यदि विंशति-

पूर्ववेदिकया युक्तं तुङ्गद्वारसमन्वितम् ।
पूर्ववेदीपादमानतदर्धार्धविभेदतः ॥ १४ ॥

भित्तिकल्पनमत्रोक्तं ग्रामेषु विविधेष्वपि ।
मध्यालिन्दद्वयोपेतं मध्यचत्वरयुग्मकम् ॥ १५ ॥
नानाशालासमायुक्तं नानाक्षुद्रगृहान्वितम् ।

---

दण्डाधिकवैशाल्यवद्भूमेर्लाभस्तदा तस्यामेव वास्तुस्थल्यां तद्वैशाल्यं द्विधा, त्रिधा, चतुर्धा, पञ्चधा वा यथाभिरुचि विभज्य, मध्य-तिर्यक्कल्पनक्रियाख्यनिर्माणं समसूत्रप्रसारवैशाल्यसहितं नाना-द्वाराङ्गणादियुतं मठमण्टपादिकल्पनवद्वा प्रकल्पनीयमिति भावः ॥

किञ्चात्र महाग्रामगृहादीनां प्राथमिकद्वारस्यात्युन्नतस्य पुरोभागे द्वारभित्तिमिलितमेव पूर्ववेदिकाकल्पनं कार्यम् । अपि च तादृशप्राथमिकद्वारभित्तेरौन्नत्यन्तु तादृशपूर्ववेदिकाप्रान्त-भागस्थापितस्तम्भानामौन्नत्यादर्धभागाधिकं वा, क्वचित्तदर्धभागा-धिकं वा योजनीयमिति तत्क्रमः । आचरणमिदं सर्वविधेष्वपि ग्रामेषु प्रोक्तमिति भावः ॥

किञ्चात्र महाग्रामगृहादिषु मध्ये अलिन्दद्वयनिर्माण-कल्पनं कार्यम् । तत्र एकं प्राथमिकद्वारतरणानन्तरस्थलस्थं, इतरत् द्वितीयद्वारतरणानन्तरस्थलस्थमिति तत्स्थलविवेकः । तस्मात्तादृश-द्वितीयालिन्दतरणानन्तरं नानाद्रव्यस्थापनार्हं नानाक्षुद्रगृहनिर्माणं

अन्त्यकल्पनयुक्तं वा तद्दूरे वा क्वचित्स्थले ॥ १६ ॥
वाजिगोमहिषादीनां स्थानकं कल्पयेद्बुधः ।
वापीकूपसमायुक्तं निष्कुटारामशोभितम् ॥ १७ ॥
नानावरणयुक्तं वा कल्पनश्च क्वचिन्मतम् ।
ब्राह्मगान्धर्वमानुष्यभागत्रयविभाजितम् ॥ १८ ॥
कारयेन्मतिमाञ्छिल्पी कल्पनार्हपृथुक्रियम् ।
ब्राह्मे वेदप्रचारश्च गान्धर्वे शयनादिकः ॥ १९ ॥

---

समद्वारादिप्रमाणं मुखभागादिहीनं विरचय्य तदनन्तरस्थले मध्यभागे महतीं शालामेकां नानास्तम्भभासुरां निर्मापयेत् । किञ्च तां परितस्तदपेक्षया क्षुद्रप्रामाणिकशालान्तराणां कल्पनमपि यथास्थलविभवं स्थापनीयमिति च क्रमः ॥

किञ्चैतादृशक्षुद्रग्रामगृहभूमिश्च, महाग्रामगृहभूमिश्च भागत्रयात्मिका विभक्ता भवति । यथा—ब्रह्मभागात्मिका, गान्धर्वभागात्मिका, मानुषभागात्मिका चेति । किञ्चास्य भागत्रयस्य स्थलनिर्देशस्तु, प्राथमिकद्वारपुरःस्थलप्रभृति द्वितीयद्वारभागतरणानन्तरस्थलावधिका ब्रह्मभागभूमिः । ततः शालाचत्वरतरणानन्तरस्थली गान्धर्वभागभूमिः । ततः पचनालयभोजनालयस्थलावधिका मानुषभागभूमिरिति । एवं कल्पननिर्माणसौकर्यार्थं शास्त्रकारैः स्थपत्याचार्यैश्च विभक्तेषु भागत्रयभूभागेषु ब्रह्मभागस्थले

मानुष्ये भोज्यशालादिः क्रमादेवं प्रकीर्तितः ।
स्तम्भान्धारिकया युक्तं समकल्पनशोभितम् ॥ २० ॥

मध्यभागद्वारकन्तु कल्पनं सर्वयोग्यकम् ।
हीनभागद्वारकन्तु ग्रामेष्वेव क्वचिद्विदुः ॥ २१ ॥

नित्यनैमित्तिकद्वारकल्पनादिसमान्वितम् ।
चतुष्कर्णद्वारकूटं द्वादशद्वारकल्पनम् ॥ २२ ॥

---

वेदाध्ययनशास्त्रपठनाद्यर्थं शाला वा कूटो वा मण्टपो वा कल्पनीयः । किञ्चास्मिन्नेव ब्रह्मभागे विद्याभ्यासस्थलकल्पनं श्रेयस्करमिति फलितार्थः । एवं द्वितीये गान्धर्वभागे शयनादिस्थलं, तृतीये मानुषभागे भोजनशालादिकं च क्रमात्करणीयमिति लक्षणवाक्यार्थः ॥

अपि चैतादृशभागत्रयस्थलेषु स्थलान्तरेष्वपि क्षुद्रगृहादिपरिकल्पने समुचितभागे स्तम्भान्नानारूपान् विषमहीनान स्थापयित्वा तद्दलभागकल्पितां दार्ढ्यान्वितां आन्धारिकाख्यामुपदारुकल्पनां च क्रमाद्बहिर्वर्धयित्वा तदुपरि कल्पनाच्छादनादिकं च दृढं प्रकल्पयेत् । तथा कल्पने क्वचित्क्षुद्रगृहमहागृहशालादिस्थानेषु समसूत्रभागमध्यतले मध्यद्वारस्थापनं विरचय्य तन्मानमेव पुरोभागकल्पनादिकमपि वातायनादिशोभितं नित्यनैमित्तिकादिव्रतविवाहादिकार्याचरणयोग्यं चतुष्कर्णभागेष्वपि द्वारस्थापनयुक्तं करणीयमिति लक्षणवाक्यार्थः ॥

महावासनिकायुक्तग्रामशैलीमनोहरम् ।
स्थापयेन्मानविच्छिल्पी ग्रामगेहादिकल्पनम् ॥ २३ ॥

क्वचिच्छालागृहोपेतमनेकतलभूषितम् ।
नानाचित्रादिसंयुक्ताभित्तिकल्पनवेशकम् ॥ २४ ॥

---

किञ्च ग्रामगृहादिषु सर्वेषु द्वाराणां द्वादशकमवश्यं स्थाप्यम् । न तन्न्यूनतेति भावः । परन्तु क्षुद्रग्रामगृहादिषु किञ्चिद्धीनप्रमाणद्वारस्थापनस्तम्भस्थापनवातायनस्थापनाच्छादनस्थापनादिरित्ययं क्रमस्तु स्थलकल्पनौचित्यद्योतक इति सामञ्जस्यं पश्यन्ति शिल्पवेत्तारः ॥

किञ्च पूर्वोक्तरीतया महाग्रामकल्पनीयभवनमहासदननिकेतनादिनिर्माणविशेषे तु मध्यभागे वास्तुनाथस्थाने नवरङ्गस्थानके वा महावासनिकाख्यं महामण्डपाकारकल्पनं स्थापनीयम् । किमर्थं ? तस्मिन्नेव किल महावासनिकमण्डपे बन्धुप्रमुखैः कुशलादिसल्लपनं, कस्मिंश्चित्समयेऽक्षलीलादिकं, समयान्तरे युवतिभिः श्रेयसे गौरीकल्याणगानपठनादिरिति । एतदर्थमिदं कल्पनीयं महावासनिककल्पनं सौधत्रयभासुरमथवा सौधद्वयोल्लसितं क्वचिदेकसौधभाग्वा नानाचित्रादिमनोहरं सगवाक्षादिरचनं प्रकल्पयेदिति फलितार्थः ॥

किञ्चैतादृशमहावासनिककल्पनभित्तिभागेषु शालाभित्तिषु

मिर्णिकाकुञ्चिकोपेतकवाटैराभिशोभितम् ।
वातायनशतोपेतं वितानाद्यैरलङ्कृतम् ॥ २५ ॥

नाराचवास्तुनाथादिस्थानकेनापि वर्जितम् ।
विषमैः कल्पनैर्हीनं यथाशोभं यथाबलम् ॥ २६ ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे
ग्रामगृहनिर्माणकथनं नाम
एकपञ्चाशोऽध्यायः ॥

---

प्राथमिकद्वारभित्तिषु स्थलान्तरेष्वपि देवगन्धर्वादिचित्ररचनाऽवश्यं योजनीया । अपि चैतादृशमहाग्रामसौधस्योपरिभागे कल्याणशालाया उपरिभागे वा स्थलान्तरे वा समुचिते क्षुद्रप्रमाणं चन्द्रशालाकल्पनं विरचय्य, तत्र चन्द्रशालाकल्पनेऽन्तरस्थितप्राथमिकद्वारद्वितीयद्वारान्त्यद्वारादिस्थलं मध्यभागकल्पितविविधक्षुद्रगृहस्थद्वारस्थानं च दृढमिर्णिकाकुञ्चिकार्गलशृङ्खलाकवाटादियोजनेन सुरक्षितं कारयेत् ॥

किञ्च सर्वत्र शालासु दर्शनीयस्थलेष्वपि वितानाद्यलङ्करणानि च योजयेत् । एतादृशलक्षणान्वितं स्वयमेव शिल्पिभिर्युक्त्या तत्र तत्र नेयकल्पनयोग्यमिदं गृहकल्पनं यथाविभवं प्रकल्पयित्वैतदाधारभूतग्रामगृहस्थलेन सह न नाराचभूभागसम्मेलनं कार्यम् । तत्त दूरतो वर्ज्यमिति भावः । तथा

अथ विशेषतो विप्रादिचातुर्वर्ण्यगृहलक्षणकथनं नाम

## द्विपञ्चाशोऽध्यायः ॥

तत्रादौ ब्राह्मणगृहलक्षणकथनम् —

ब्राह्मणानां पूर्वमुखं गेहं शस्तं प्रकीर्तितम् ।
राजधान्याश्च नगरे शुभदं सर्वादिङ्मुखम् ॥ १ ॥

---

सर्वत्र शिल्पिभिर्विषमकल्पनविहीनं यथाशोभं यथाबलं सर्वमपि कल्पनजालं प्रकल्पनीयमिति भावः ॥

किञ्च तत्र तलान्तरालिककल्पनभित्तितदन्तरस्थलतत्पुरस्स्थल-प्रमाणनिर्माणक्रमादिस्तु स्वयमेव शिल्पिभिरूह्य नेय इति सङ्क्षेपतो ब्राह्मणादीनां ग्रामगृहनिर्माणप्रमाणादिक्रमः प्रतिपादितो ज्ञेयः ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
ग्रामगृहनिर्माणक्रमकथनं नाम
एकपञ्चाशोऽध्यायः ॥



॥ द्विपञ्चाशोऽध्यायः ॥

अथास्मिन्द्विपञ्चाशाध्याये विशेषतो ब्राह्मणादिचातुर्वर्ण्य-गृहलक्षणं विशदयति— **ब्राह्मणानामित्यादिना** । क्षुद्रग्रामेषु वा महाग्रामेषु वा ब्राह्मणानां गृहभवननिकेतनादिकं प्राङ्मुख-द्वारोपेतमेव स्थापनीयम् । इदमेव तेषां शुभावहम् ।

चतुर्दण्डं व्यासकन्तु तत्त्रिभागेन दैर्घ्यकम् ।
क्वचित्तदधिकं वाऽपि नेयमत्र शुभे गृहे ॥ २ ॥

अलिन्दद्वययुक्तं वा चतुश्शालान्वितं तु वा ।
विशेषकल्पनं ब्रह्मभागे मङ्गलदायकम् ॥ ३ ॥

प्राङ्मुखा शुभशालाऽत्र कल्पनेऽनेकपादका ।

---

क्वचिद्राजधान्यां नगरे नगरोत्तमे वा कल्पितराजवीथीमुखवीथ्यादिस्थित्यनुगुणं समसूत्रं प्रागाननमुदगाननं पश्चिमाननमथवा दक्षिणाननं प्राथमिकद्वारकल्पनञ्च तेषां श्रेयःप्रदमेवेति नगरवास्तुविशेषलक्षणार्थो बोध्यः। परन्तु दिक्कोणचतुष्काद्युन्मुखं द्वारकल्पनं सर्वथा सर्वत्र न कार्यमिति समयः । तस्याः दोषावहत्वादिति भावः ॥

एवं ब्राह्मणगृहप्राथमिकद्वारस्थापनस्थलमभिधाय तद्गेहस्य दैर्घ्यवैशाल्यादिक्रममाह—**चतुर्दण्डं व्यासकं त्वित्यादिना**। सर्वत्र ब्राह्मणगृहे साधारणदण्डचतुष्कायतिः कार्या । तत्त्रिगुणितं वा, क्वचिच्चतुर्गुणितं वा गृहकल्पदैर्घ्यमानञ्च क्वचित्स्थले तदधिकदैर्घ्यमानञ्च योज्यम्। इदमेवोत्तमगृहलक्षणमिति भावः ॥ २ ॥

किञ्चात्र ब्राह्मणगृहकल्पने अलिन्दद्वयकल्पनं चतुश्शालास्थापनं, ब्रह्मभाग एव विवाहशालादिविशेषशालासहितं कल्पनं करणीयमिति लक्षणवाक्यार्थः। किञ्चात्र ब्राह्मणगृहे कल्पनीयाया

नानाभौमान्वितं वाऽपि तन्मानश्च क्वचिन्नयेत् ॥ ४ ॥

तदर्धं वा तदर्धं वा मुखभद्रादिसंयुतम् ।
नानागृहसमायुक्तं मध्यचत्वरकल्पनम् ॥ ५ ॥

---

अष्टाधिकस्तम्भसमेतायाः विवाहशालायाः मुखभागोऽपि प्राङ्मुख एव तेषां शुभप्रद इति भावः ॥

किञ्चात्र ब्राह्मणगृहभवननिकेतनादौ ग्रामनगरादौ कल्पनीये भौमनिर्माणमपि क्वचित्कार्यमेव । तदेयं व्यवस्था । यथा—प्रथमभौमाख्यभूतलभौमनिर्माणाय यावत्प्रमाणभूमिः स्वीकृता तावत्प्रमाणवत्येव स्थले उपरिभागे भौमद्वयभौमत्रयादिस्थापनं विहितम् । अथवा वित्तस्थलविभवाद्यभावे प्रथमतलाख्यभूतलकल्पनप्रमाणादर्धप्रमाणवन्तं वा भागं, तदर्धप्रमाणवन्तं वा भागमुपरिभौमतलकल्पनाय स्वीकुर्यादिति विकल्पः । एवं ब्राह्मणगृहेषु भौमकल्पने प्रतिभौमं मुखभद्राख्यरचना संयोजनीया ॥

किञ्चात्र ब्राह्मणसौधनिर्माणे प्रथमतले महाचत्वरकल्पनं वा मध्यचत्वरकल्पनं, क्षुद्रचत्वरकल्पनं वा, जपवेदिकादिस्थलसहितं स्थलानुगुणं स्थापयित्वा, तादृशाद्यभौमकल्पनानुगुणमेवोपरिभौमकल्पने स्थलभागं विभज्य तच्छुद्धमिश्ररूपं दृढकल्पनं नानागेहं कार्यम् । अयन्तु प्रकारः सर्वत्र भौमकल्पनेषु

सार्धदण्डं दण्डयुगं सार्धदण्डद्वयं तथा ।
दण्डत्रयप्रमाणं वा तच्च गेहं प्रकल्पयेत् ॥ ६ ॥
ब्राह्मचिह्नेन संयुक्तं तद्द्वारं शुभदं मतम् ।
समसूत्रप्रमाणेन सर्वकल्पनमीरितम् ॥ ७ ॥

---

संयोजनीय इति शिल्पकार्यविद्भ्य उपदेशश्शास्त्रीयः ॥

किञ्चात्र ब्राह्मणसौधनिर्माणे प्रथमालिन्दभागे द्वितीयालिन्दभागे विवाहशालासमीपस्थले भोजनशालापचनालयादिसमीपे स्थलान्तरे च कल्पनीयानां नानाविधद्रव्यस्थापनार्हाणां क्षुद्रगृहाणामायामदैर्घ्यादिकं कियद्वेति चेत्, उच्यते — सार्धदण्डप्रमाणं वा क्वचिद्दण्डद्वयप्रमाणं वा सार्धदण्डद्वयप्रमाणमथवा स्थलादिविभवे दण्डत्रयप्रमाणं वा यथाक्रमं नातिविशालं नातिदीर्घं परस्परद्वारमुखसमसूत्रप्रसारं क्षुद्रगृहनिर्माणं निर्मापयेदिति पिण्डितार्थः । एवं क्षुद्रगृहेषूक्तं प्रमाणन्तु सर्वत्र ग्रामनगरादौ कल्पनीयनानाजातिजनालयेषु प्रायशः संयोजनीयमिति भावः ॥ ६ ॥

एवञ्चेदत्रोक्तब्राह्मणगृहकल्पनस्य किंवा मुख्यलक्ष्मेति चेत्तद्विशदयति — ब्राह्मचिह्नेति । पूर्वोक्तषष्ठाध्याये गर्भविन्यासलक्षणकथनप्रकरणे ब्राह्मणक्षत्रियवैश्यशूद्रादीनां गर्भविन्यासार्थं यद्यल्लक्ष्म करणीयमिति प्रतिपादितं, तदेव लक्ष्म सर्वत्र तेषां तेषां

द्विद्विनासाकवाटाढ्यं तिर्यक्पक्षकशालकम् ।
तिर्यक्कूटयुतं वापि कल्पयेच्छिल्पवित्तमः ॥ ८ ॥

---

गृहेषु प्राथमिकद्वारललाटभागे कचित्सर्वद्वारनेत्रभागेषु चित्ररूपं वा तक्षणरूपं वा बिम्बसंयोजनरूपं वा कारयेदिति व्यवस्था ज्ञेया । एवमग्रेऽपि । लक्षणान्तरञ्च तेषाञ्चातुर्वर्ण्यक्रमाणामुक्तपूर्वमेवेति ॥

किञ्च विशेषतो ब्राह्मणगृहेषु सर्वेषु तिर्यक्पक्षशाला-तिर्यक्कूटशालादिकं स्थापनीयम् । एतत्कल्पनं नैव विहितं क्षत्रियवैश्यादिगृहेष्विति भावः । तिर्यक्पक्षशालाकल्पनं नाम, कस्मिंश्चिद्ब्राह्मणगृहे मध्यचत्वरस्थानसमीपे उभयोरपि पार्श्वयोर्यदि दक्षिणोत्तरमुखशालाकल्पनं कृतं तयोश्शालयोराद्यप्रान्तस्थले पाश्चात्यप्रान्तस्थले च वासववारुणदिङ्मुखशालान्तरकल्पनमपि कार्यम् । तस्यैव वासववारुणदिङ्मुखशालान्तरकल्पनस्य तिर्य-क्छालेति नाम वदन्ति शिल्पविदः ॥

किञ्चानेनैव प्रकारेण चत्वरसमीपकृतकूटस्य यत्कल्पनं तिर्यग्भूतं तस्य तिर्यक्कूटकल्पनमिति नामान्तरम् । एतत्तिर्य-क्कूटकल्पनं पूर्वोक्ततिर्यक्छालाकल्पनमपि ब्राह्मणगृहभवन-निकेतनादिष्वेव योज्यम । नान्यत्र क्षत्रियवैश्यशूद्रादिगृहेष्विति समयः । तेषां गृहे तादृशतिर्यक्छालाकल्पनस्थाने महाङ्गण-क्षुद्राङ्गणशालादिकल्पनमेव तेषां शुभाय भवतीति प्रसिद्धिः ।

अथ क्षत्रियगृहलक्षणकथनम् —

प्रायः क्षत्रियवंश्यानां ग्रामान्ते भवनं शुभम् ।
दुस्सहत्वादनर्हत्वाद्ग्रामे वास्तुमही पृथक् ॥ ९ ॥

---

एतावता प्रबन्धेन विशेषतो ब्राह्मणगृहलक्षणमुक्तं ज्ञेयम् ॥ ८ ॥

अथ क्षत्रियभवनस्य विशेषलक्ष्म किमिति चेत्तद्विवृणोति— प्रायः क्षत्रियवंश्यानामित्यादिना । क्षत्रियवंशजातानां सर्वेषामेव भूभुजां नगरादिष्वेव प्रासादहर्म्यमहाभवनादिकल्पनं युक्तम् । तथापि केषाञ्चित्क्षत्रियाणां नातिधनिकानामेकद्वित्र्यादिग्रामैक-नायकानां महासदनकल्पनं कुत्र वा स्थाप्यमिति चेदुच्यते— ग्रामान्ते तेषां वास्तुभूमिः पृथगेव स्वीकार्येति ॥

कुत इयं व्यवस्था ? उच्यते — 'ब्राह्मणानां पृथग्वीथी क्षत्रियाणां तथा स्थलम्' इति वचनशैल्या सर्वत्र ब्राह्मणानां वीथी पृथगेव स्थाप्या । तत्र नान्यगृहस्थानकल्पनमिति । तेषामन्यत्रैव तत्कल्पनस्मरणात । तस्मादनयैव शैल्या क्षत्रियवंशजातानां मितधनानामपि कचिद्ग्रामान्ते शुभवास्तुसीमनि गृहकल्पनं तस्य चान्येषां क्षेमकरम् । कथमेवमेतयोर्गृहस्थापनस्य वास्तुभूमिः पृथक्करणीयेति चेत — दुस्सहत्वादनर्हत्वादिति । अस्य विशदार्थस्तु— ब्राह्मं क्षात्रञ्च तेजः सर्वथा तदितरजनैरसह्यमेव भवतीति । तस्मात्तत्स्थानस्य जात्यन्तरभवनमध्यभागकल्पनस्या-

चतुरश्रायता वापि सममानोदया मुखे ।
पूर्वद्वारयुता वापि उत्तरास्याऽविशेषतः ॥ १० ॥
पञ्चाशद्दण्डकान्ता वा द्वित्र्यावरणमण्डिता ।
सीमान्तभक्तियुक्ता वा क्षुद्रगोपुरमण्डिता ॥ ११ ॥

---

नर्हत्वादिति । तस्मात्सर्वत्र सर्वेष्वपि देशेषु ब्राह्मं क्षात्रञ्चावासभवनादिकल्पनं पृथगेव कार्यमिति फलितार्थः ॥ ९ ॥

अपि चास्य क्षत्रियभवनस्य वास्तुभूमिस्तावच्चतुरश्रप्रमाणा वा दैर्घ्याधिक्यवती वा स्वीकार्या । क्वचित्स्थलविशेषे मुखभागे, पृष्ठभागे चायामवती वास्तुभूमिरपि स्वीकार्यैव शिल्पिभिरिति । किञ्चैतादृशलक्षणशालिन्यां ग्रामवास्तुभूमौ कल्पनीयस्य क्षत्रियभवननिकेतनस्य प्राथमिकमुखद्वारं प्राङ्मुखमुत्तरमुखं वा स्थापनीयम् ॥

किञ्चास्य क्षत्रियग्रामगृहस्य दैर्घ्यवैशाल्यादिप्रमाणन्तु साधारणदण्डविंशतिकादारभ्य द्विद्विदण्डवृद्धिक्रमात् पञ्चाशदण्डकावधिकप्रमाणमिति स्थलानुकूलमानकथनम् । किञ्च तादृशवास्तुभूमौ तत्तत्स्थलानुगुणमेकप्राकारकल्पनं वा प्राकारद्वयनिर्माणं वा प्राकारत्रयस्थापनं वा क्वचित्कल्पनीयम् । किञ्च तादृशावरणभूमिसीमान्तस्थले मध्यसूत्रप्रसारितमध्यभागे क्षुद्रगोपुरकल्पनं क्वचित्करणीयम् । किञ्च तादृशावरणभूमिसीम्नि तदकरणेऽपि न दोषायेति समयः ॥

द्वारान्तर्द्वारसंयुक्ता चूलीहर्म्यादिमण्डिता ।
द्विभौमा वा त्रिभौमा वा शिखरान्तकलशान्विता ॥

नवरङ्गसमोपेता मध्यशालाविराजिता ।
अलिन्दभागसंयुक्तयुग्मयुग्मकशालका ॥ १३ ॥

तदन्तः क्षुद्रशाला वा तथा प्राप्तोपशालका ।
क्षत्रचिह्नेन संयुक्ता मुखद्वारस्थली वरा ॥ १४ ॥

मुख्यगेहाष्टकोपेता कूपारामादिभिर्युता ।
कल्पनीया शिल्पिवरैः कालसेव्यगृहान्विता ॥ १५ ॥

---

किञ्च पूर्वोक्तरीत्या तादृशावरणस्थलेषु भृत्यवाहनधान्यादि-द्रव्यस्थापनस्थलं यथाविभवं कल्पयित्वा तदन्तर्भागे मध्यकल्पने मध्यमाधिष्ठानरीति भौमद्वयं वा कचिद्भौमत्रयावधिकमेव कल्पनं द्वारान्तर्द्वाररक्षितमुपरि क्षुद्रप्रमाणचन्द्रशालासमेतं प्रकल्पयेत् । किञ्चात्र क्षत्रियग्रामकल्पने प्रथमद्वारद्वितीयद्वारतरणस्थले अलिन्दद्वयं निर्माय तदन्तर्युग्मसंख्याककल्याणशालादिमहाशाला-निर्माणं सचित्रभित्तिरचनं प्रकल्पयेत् ॥

अपि चात्र क्षत्रियभवने तादृशशालान्तस्स्थले मुख्य-गेहानामष्टकं स्थापयित्वा तद्गृहद्वारसमीपे प्राथमिकद्वारललाटभागे च खड्गचन्द्रसूर्यपताकासिंहगजतुरगादिरूपयोजनं कारयेत् । एवं कल्पितानां तेषां मुख्यगेहानामष्टानां नामानि यथा —

(१) स्नानगृहम् । (५) पूजागृहम् ।
(२) अलङ्करणगृहम् । (६) भोजनगृहम् ।
(३) द्रव्यस्थापनगृहम् । (७) शयनगृहम् ।
(४) पचनगृहम् । (८) धनगृहमिति ॥

किञ्चैतद्गृहाष्टकं ग्रामनगरादिषु सर्वेष्वपि मानववासार्हकल्पनेषु सर्ववर्णजातानामवश्यं कल्पनीयमेव । किन्तु तत्र ग्रामादिषु गृहरूपकल्पनं, नगरादिषु शालारूपकल्पनमिति केषाञ्चिन्मतम् । अन्येषान्तु यदि स्थलविभवो ग्रामगृहनिर्माणेष्वपि महाप्रमाणवतीनां सौधरचनोपेतानां पूर्वोक्तशालानामष्टसंख्याकानां स्थापनमेव सुखाय, श्रेयसे, वास्तुनाथतोषादय इति । तस्मादस्मिन्क्षत्रियग्रामभवने तादृशमुख्यगेहाष्टकं मध्यचत्वरनवरङ्गादिकल्पनं वितानवातायनादिशोभितं स्थापयित्वा सति स्थलविभवे वास्तुभूपाश्चात्यभागे दीर्घिकानिष्कुटस्थापनमपि सुखायेति ॥

किञ्चास्मिन्क्षत्रियग्रामगृहे उपरिभागे न विमानशिखरस्थापनं युक्तम् । परन्तु प्रतिभौमतलभित्त्यन्तभागे क्वचिद्द्वोपानसीतलभागेष्वपि सुधेष्टिकादिभिः क्षुद्रकलशस्थापनमेव वरमिति सङ्ग्रहेण क्षत्रियग्रामभवनसौधलक्षणमुक्तं बोध्यम् । किञ्च कल्पनस्यास्यान्तरालिकलक्षणान्तरकल्पनान्तरप्रमाणादिकं तु सूक्ष्मधीभिः स्थपतितक्षकप्रमुखैः स्वयमेवोह्यमिति ॥

अथ वैश्यशूद्रगृहलक्षणकथनम् --

ग्रामक्लृप्तं वैश्यगृहं सदनं भवनन्तु वा ।
पूर्वास्यमुत्तरास्यं वा क्वचिद्वारुणवक्त्रकम् ॥ १६ ॥

शुभदं नगरे याम्यमुखं तु नगरोत्तमे ।
दण्डपञ्चकमत्रोक्तं मानं तद्दशकावधि ॥ १७ ॥

कल्पनं कल्पयेच्छिल्पी शुद्धं वा मिश्रकन्तु वा ।

---

अथ ग्रामेषु स्थापनीयानां वैश्यगृहादीनां मुख्यलक्षणमाह— **ग्रामक्लृप्तमित्यादिना** । वैश्यवंशजातानां साधारणगृहं वा सदनं, महासदनाख्यभवनं वा पूर्वमुखद्वारमथवा स्थलानुगुण-मुत्तरमुखद्वारं वा क्वचित्स्थले वारुणमुखद्वारं वा स्थापयेत् । एवं कल्पनं तेषां वैश्यानां शुभलाभादिप्राप्तय इति भावः । मतान्तरमत्र नोच्यते । नगरवीथ्यादिस्थले तु दक्षिणाननमुखद्वारभवनमपि विशां मङ्गलाय भवतीति । किञ्च सर्वत्र विशां गृहभवनादि-कल्पनवैशाल्यप्रमाणन्तु साधारणदण्डपञ्चकमारभ्य दण्ड-दशकावधीति । यदि क्वचिद्ग्रामादौ विशेषतः वैशाल्याधिक्य-वद्भूलाभे तदैकपञ्चाशाध्याये 'मध्यतिर्यक्क्रिया मता' इति मूलवचनस्योक्तार्थानुसारेण मध्यतिर्यक्कल्पनमत्रापि वरमिति युक्तं पश्यन्ति शिल्पविदः ॥

एतादृशग्रामवास्तुभूमिषु स्थापनीयानां वैश्यगृहसदन-

युग्मपादं तथा युग्मकवाटं तत्र योजयेत् ॥ १८ ॥

शालाकूटादिकैस्सर्वकल्पनैरपि संयुतम् ।
शूद्राणामपि चान्येषां तदर्धं वा तदर्धकम् ॥ १९ ॥

मानं गेहेषु संयोज्यं तत्तच्चिह्नैश्च भासुरम् ।
मुखद्वारं कल्पनीयं देवगन्धर्वरूपयुक् ॥ २० ॥

मानेन युक्त्या स्थपतिः स्थापयेन्मिश्रकल्पनम् ।

---

भवनानां कल्पनन्त्वेकद्वित्रिभौमभूषितं वा शावलकाद्याच्छादितोपरिस्थलं वा, मिश्रकल्पनयुक्तं वा यथाविभवाभिरुचि स्थपतिनियोगवर्तिनः स्थापयेयुरित्यर्थः । किञ्चात्र वैश्यगृहनिर्माणे सर्वत्र युग्मयुग्मस्तम्भस्थापनं, युग्मकवाटभासुरद्वारस्थापनं पूर्वोक्तरीत्या युग्मसंख्याकतूलादिस्थापनमेव तच्छुभकरमिति भावः ॥

किञ्च क्वचिन्मध्यकल्पने महाशालां कल्याणशालां, नानारूपं क्षुद्रगृहमपि स्थापयित्वा तुलादण्डस्वर्णखण्डरजतखण्डादिवैश्यचिह्नं तत्र तत्र द्वारललाटतत्पार्श्वभित्त्यादौ योजनीयमित्युपदेशः। एवमेव स्वर्णकारलोहकारतक्षकस्थपतिगृहेष्वपि योज्यम् । अनेनैव प्रकारेण शूद्राणां ग्रामगृहादौ किञ्चित्क्षुद्रप्रमाणवति सीरवृषादिचिह्नं योजयित्वा स्थलविभवाद्यनुगुणं सर्वमपि कल्पनजालं प्रकल्पनीयमित्यर्थः ॥

एवं वर्णक्रमाद्ग्रामभवनं परिकीर्तितम् ॥ २१ ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे
विशेषतो विप्रादिचातुर्वर्ण्यगृहलक्षणकथनं नाम
द्विपञ्चाशोऽध्यायः ॥

---

एवं केषुचिद्देशेषु ग्रामादिषु पूर्वोक्तलक्षणान्वितं तत्तज्जातियोग्यचिह्नभासुरं गृहभवनादिकल्पनं करणीयमिति शास्त्रकारोपदेशश्शिल्पिभिरादरणीय इति ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
विशेषतो विप्रादिचातुर्वर्ण्यगृहलक्षणकथनं नाम
द्विपञ्चाशोऽध्यायः ॥



अथ कवाटार्गलादिलक्षणकथनं नाम

## त्रिपञ्चाशोऽध्यायः ॥

यन्मुख्यरक्षकं प्रोक्तं कवाटादिप्रकल्पने ।
दृढसन्धिक्रियं कार्यमिति प्रोक्तं मुनीश्वरैः ॥ १ ॥

नानाकल्पनयोग्यं तन्मानं बहुविधं मतम् ।
दारुखण्डैर्दृढैः पीनैरयःकीलात्तदार्ढ्यकैः ॥ २ ॥

---

॥ त्रिपञ्चाशोऽध्यायः ॥

एतावता प्रबन्धेन बहुधा प्रतिपादितानां विविधानां गृहभवनादिकल्पनानां रक्षणयोग्यकवाटस्थापनक्रमकथनात्मकं त्रिपञ्चाशाध्यायमारभते — **यन्मुख्यरक्षकमित्यादिना** ॥

पूर्वोक्तग्रामनगरादिवास्तुषु कल्पितानां विविधरूपाणां गृहभवननिकेतनहर्म्यप्रासादादिकल्पनानां मुख्यरक्षकं किम? भित्तिस्थापनकवाटसंयोजनमित्येतद् द्वयमेव । तत्र भित्तिस्थापनतत्सन्धिबन्धनक्रमस्तु तत्र तत्र प्रकरणे क्रमेण प्रतिपादित एव । तस्मादस्मिन्नध्याये विशेषतः कवाटलक्षणं प्रतिजानीते — **दारुखण्डैरित्यादिना** ॥

तच्च कवाटकल्पनं तावत्तत्तद्द्वारस्थलादिवशात् नानाप्रमाणं भवति । तथापि प्रायशः तच्च कवाटकल्पनं पीनदृढान्तस्सारवत्फलकाखण्डैरेव निर्मापणीयम् । यथा विविधेषु कल्पनेषु तत्र तत्र स्थापितप्राथमिकद्वारद्वितीयादिद्वारप्रमाणानुगुणं काचिद्भवाक्ष-

प्रान्तखण्डयुतैश्चापि मध्यखण्डयुतैरपि ।

---

स्थलानुगुणमन्यत्र शिबिकावाहनादिद्वारानुगुणं दैर्घ्यवैशाल्यघनादि-प्रमाणं स्वीकृत्य कवाटकल्पनं प्रकल्पयेदिति क्रमः ॥

एवं मानवसदनेषु प्रायशः फलकाभिरेव कवाटकल्पनं मङ्गलाय भवति । क्वचिन्न्यायशालावाजिशालागजशालागोशाला-युधशालामण्डपादिकल्पनेषु ताम्रपित्तलायःखण्डशृङ्खलामयकवाट-स्थापनमपि कार्यम् । तादृशायःखण्डकवाटादीनां प्रान्तभागेषु क्वचित्तिर्यक्पट्टिकास्वपि नानारन्ध्राणि विधाय, तद्वशाद्दृढायः-कीलसंयोजनं कृत्वा, दृढीकृत्य, तादृशकवाटकल्पनं तत्तद्द्वार-मुकुलिकाग्रथितग्रन्थि विधाय समसूत्रं स्थले दृढमिणिकाकुञ्चिका-योजनमपि कार्यमिति लोहकारकार्यक्रमो ज्ञेयः ॥

अत्र तु प्रायशो मानवसदनभवनद्वारादिषु योजनीय-फलकाकवाटनिर्माणक्रमः कथमिति चेत्, तदाह — **प्रान्तखण्ड-युतैरित्यादिना** । सर्वत्र किल मानवसदनगृहेषु प्राथमिकद्वार-द्वितीयद्वारादिद्वारभागे कवाटयोजनं द्विविधं भवति — एककवाट-योजनं, कवाटद्वययोजनमिति । अपि च क्वचिदुपरिभौमद्वार-भागेषु, गवाक्षस्थानेषु, नवरङ्गद्वारभागेषु, देवपूजामन्दिरद्वारभागेषु स्थलान्तरेष्वपि कवाटचतुष्कमथवा क्वचित्कवाटानामष्टकं वा संयोजनीयमिति तद्विभजनक्रमः ॥

तिर्यग्दलैश्च संयोज्यं कवाटं कुञ्चिकायुतम् ॥ ३ ॥

द्वारसन्धियुतं तच्च भित्तिसन्धियुतं क्वचित् ।

द्वारमानान्वितं खण्डरूपं वा भिन्नरूपकम् ॥ ४ ॥

गवाक्षद्वारमुख्यान्तं पार्श्वदारुसमायतम् ।

---

यथाभिरुचिकल्पनेऽपि तत्तद्द्वारवैपुल्यौन्नत्यादिकं पार्श्वसूत्रेण तिर्यक्सूत्रेणोर्ध्वसूत्रेण च सम्यक्प्रमात्वा, तत्प्रमाणापेक्षया एकाङ्गुलादिषडङ्गुलाधिक्यवत्पार्श्वपट्टिकासु मानं नीत्वा फलकासम्मेलनादिना तादृशकल्पनं प्रकल्पनीयम् ॥

किञ्च सर्वेषामपि तेषां कवाटानां प्रान्ताञ्चलभागादिस्थाने दार्ढ्योत्पादनार्थमयःकीलघटितफलकान्तरसंमेलनं कार्यम् । एवं तेषु कवाटेषु क्वचिन्मध्यदारुखण्डसम्मेलनं क्वचित्तिर्यग्दारुखण्डसम्मेलनमपि सायःकीलकं रचयित्वा तदञ्चलभागे समुचिते मिर्णिकाकुञ्चिकामेलनञ्च दृढं कारयेत् ।'

एवंरीत्या यथाक्रमं कल्पितं कवाटं द्वारस्तम्भयोजितमुकुलिकाखण्डोपरि संस्थाप्य, यथाक्रमं, यथामानं घाटनोद्घाटनार्हञ्च दृढीकृत्य बन्धयेदित्यर्थः । मुकुलिका नाम कवाटधारणस्थलम् । क्वचिद्गोपुरकवाटानां बृहदाकृतीनामेतादृशमुकुलिकास्थानस्थापनवत् कवाटपार्श्वभित्तिमध्यभागे एकवितस्तिप्रमाणरन्ध्रकल्पनं दृढं कारयित्वा तत्र दृढार्गलसंयोजनञ्च कारयेदिति क्रमः ॥

एकाङ्गणं द्व्यङ्गणं वा त्र्यङ्गणं वा क्वचिन्मतम् ॥५॥

चतुरङ्गणकं योज्यं षडष्टदशकाङ्गणम् ।
प्रान्तचित्रसमोपेतं शुकहंसादिमण्डितम् ॥ ६ ॥

नानाकुसुमरूपं वा नानापत्रस्वरूपकम् ।
पार्श्वपट्टद्वारभागकृतबन्धं क्वचिन्मतम् ॥ ७ ॥

कवाटपतनस्थाननिम्नमेकाङ्गुलं मतम् ।
दृढबन्धनिकं तत्र मिर्णिकार्गलयोजनम् ॥ ८ ॥

---

एवंरीत्या देवालयगोपुरद्वारदुर्गद्वारपुरद्वारन्यायशालामण्डपादि-महाकल्पनद्वारेष्वर्गळसंयोजनं कार्यम् । स्थलान्तरेषु मानव-सदनादिषु पूर्वोक्तरीत्या द्वारस्य दक्षिणभागे प्रदक्षिण-क्रमात्कवाटसम्मेलनं कारयित्वा तत्र तयोः मिर्णिकाकुञ्चिकादि-मेलनादिकमपि तत्तत्कल्पनयोग्यं स्थापनीयमिति निष्कृष्टार्थः ॥

किञ्चैवं तत्र तत्र द्वारवैपुल्यादिप्रमाणानुगुणमेककवाट-स्थापने, कवाटद्वयस्थापने वा मध्यमध्यरन्ध्रिकानेककवाटस्थापने वा सर्वत्रालोकनीयकवाटस्य पूर्वभागतलं क्वचिदेकाङ्गणं विभज्य नानाकुसुमपत्रादिरचनावलीः प्रायशस्तक्षणवशेनैव योजयेत् । किञ्च क्वचिदङ्गणद्वयमथवाऽङ्गणत्रयमथवाऽङ्गणानां चतुष्कं षट्कमष्टकं दशकं वा सममानं, क्वचिच्छिल्पी वाञ्छाक्रियानुगुणं विषममानं वा विभज्य तत्र चित्रादिकमपि योजयेदिति कार्यक्रमः ॥

कांस्यराजतसौवर्णमुकुलाद्यैर्दृढीकृतम् ।
श्लक्ष्णितं टङ्कवेशेन क्वचिद्वर्णादिभूषितम् ॥ ९ ॥

देवभूसुरभूपालवणिजामपि दैवतम् ।
संयोजनन्तु शुभदं सर्वद्वारेषु कीर्तितम् ॥ १० ॥

---

एवं तत्राङ्गणकल्पने क्वचिच्छुकहंसादितक्षणं सौवर्णराजतताम्रमयं वा योजयित्वा तादृशाङ्गणतलस्य प्रान्तभागाख्याञ्चलभागेषु मनोहररेखादिचित्रं च रचयित्वा, क्वचित्तादृशचित्रयोजनार्थं युक्त्या तत्स्थलानुगुणं सूक्ष्मफलकां सायःकीलबन्धनां प्रयोजयेदित्यर्थः । किञ्चात्र कवाटकल्पने तत्र तत्राङ्गणस्थले टङ्कवेशनादिना श्लक्ष्णीकृते कांस्यराजतसौवर्णपट्टिकादिचित्रबिम्बसंयोजनमपि कल्पयेदिति ॥

तत्र तु कवाटस्थापने दैवद्वारकवाटभागे, राजद्वारकवाटभागे, वर्णान्तरद्वारकवाटभागे च वाजिवारणगोमहिषादिशालाद्वारकवाटभागेषु च, देवगन्धर्वयक्षकिन्नरादिरूपकल्पनमेव सर्वेषां क्षेमकरमिति शिल्पसमयः । किञ्च, क्वचिद्देवगर्भगृहद्वारकवाटभागेषु मणिकिङ्किणीयोजनं शस्तम । भूपालयनिकेतनादिमानवशयनशालाद्वारकवाटेषु मणिदर्पणसंयोजनं, लक्ष्मीगौरीप्रमुखदेवीरूपसंयोजनादिकमपि स्थापनीयमित्यर्वाचीनाशिल्पिनां समयः स्वीकार्य एवेति ॥

गवाक्षद्वारशिबिकाकल्पनादिषु मानवित् ।
समसूत्रं प्रयुञ्जीत यथाशोभं यथाबलम् ॥ ११ ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे
कवाटार्गलादिलक्षणकथनं नाम
त्रिपञ्चाशोऽध्यायः ॥

---

किञ्चैवंरीत्या द्वारगवाक्षशिबिकाखट्वादिस्थानेषु समसूत्रवत्कवाटयोजनं, दृढबन्धनं, युक्तिवशान्मनोहरचित्रादिसहितञ्च स्थापयेदिति च क्रमः। अर्गलस्वरूपन्तु सारदारुमयमथवा, दृढपर्ववेणुमयं, क्वचिद्दुर्गद्वारभागादौ अयोदण्डमयं चतुरश्रं वर्तुलरूपमिति । लक्षणान्तराण्यस्यार्गलनिर्माणस्य तु अस्मत्कृतशिल्पकलादीपिकाख्यायां द्रष्टव्यानीति ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
कवाटार्गलादिलक्षणकथनं नाम
त्रिपञ्चाशोऽध्यायः ॥



अथ सर्वविधसोपानलक्षणकथनं नाम

## चतुःपञ्चाशोऽध्यायः ॥

भौमाद्यारोहणार्थं यत्कल्पनं दृढसन्धिकम् ।
सोपानमिति तत्प्राहुर्मुनयश्शास्त्रपारगाः ॥ १ ॥

शिलादार्विष्टिकाक्लृप्तं लोहपट्टादिभूषितम् ।
स्थापयेत्स्थपतिश्रेष्ठः स्थलमानस्वरूपवित् ॥ २ ॥

दैवे शिलामयं शस्तं मानवेऽन्यत्प्रकल्पने ।

---

॥ चतुःपञ्चाशोऽध्यायः ॥

अथास्मिंश्चतुःपञ्चाशाध्याये सर्वविधसोपाननिर्माणक्रमं व्यनक्ति — **भौमाद्यारोहणार्थमित्यादिना**। विशेषतो मानवगृह-भवनहर्म्यप्रासादादिषु, क्वचिद्गोपुरद्वारादिस्थलेषु द्वितीयतृतीय-भौमतलप्राप्त्यर्थं कृतं कल्पनं सोपानमिति महर्षिभिरुदीरित-मित्यर्थः । तस्मात्तादृशसोपानकल्पनन्तु शिल्पिभिः क्वचि-द्दारुखण्डैः इष्टिकाभिरपि, क्वचिद्दृढबन्धनं क्वचिल्लोहपट्टिका-वृतञ्च स्थापनीयमिति लक्षणवाक्यार्थः ॥

तत्र कोऽपि नियमः स्वीकार्यः । यथा — देवालये शिला-पटलैरेव सोपानकल्पनं प्रशस्तं भवति । मानवगृहादिषु प्रायशस्सुधेष्टिकादिभिः, क्वचित्सारदारुखण्डैश्च कृतं मङ्गलाय भवतीति। तथापि मानवगृहाधिष्ठानस्थानेषु विवाहशालादीनामधः-

द्वादशाङ्गुलकं वापि षोडशाङ्गुलकं क्वचित् ॥ ३ ॥
सार्धहस्तप्रमाणं तदौन्नत्यं समुदीरितम् ।
द्विहस्तं वा त्रिहस्तं वा क्वचित्तदधिकं तु वा ॥ ४ ॥
तदङ्गणं मिथो बद्धं प्रान्तकीलादिघट्टितम् ।
प्रान्तशृङ्खलिकायुक्तं दारुपट्टयुतं क्वचित् ॥ ५ ॥
भूलम्बं भित्तियुक्तं वा क्वचित्सुषिरभागपि ।
दारुपट्टात्तदार्ढ्यं वा मिथःकीलादिघट्टितम् ॥ ६ ॥

---

प्रदेशेषु च शिलामयकतिपयसोपानकल्पनमपि तद्वास्तुवासिनां मङ्गलादय एवेति शिल्पसमयः । 'शस्तं मानवेऽन्यत्प्रकल्पने' इति लक्षणवाक्यन्तु प्रायिकार्थद्योतकमिति मतिः ॥

तस्मात्तादृशसोपानस्य कियद्वा प्रमाणमिति चेत्तद्विशदयति—द्वादशाङ्गुलकमित्यादिना । सर्वत्र सोपानकल्पनयौन्नत्यवैशाल्ये तु क्वचिद्द्वादशाङ्गुलं स्थलान्तरे षोडशाङ्गुलं, क्वचित्सार्धहस्तप्रमाणञ्च योजनीयम् । किञ्चैतादृशौन्नत्यवैशाल्यभाजां सोपानानां स्थापने तत्सोपानाङ्गणवैशाल्यं तु क्वचिद्द्विहस्तप्रमाणं क्वचित्त्रिहस्तप्रमाणं, क्वचित्तदधिकप्रमाणमपि योजनीयमिति व्यवस्था ॥

किञ्च तादृशाङ्गणकल्पनन्तु प्रान्तभागेऽव्ययःकीलायःपट्टिकादिकृतदार्ढ्यमधःप्रदेशे भूमिलम्बनोपरि सुधेष्टिकाभित्तिधारितमथवा, क्वचित्सुषिरकल्पनधारितं वा प्रकल्पयेत् । एवं

द्वारोपद्वारयुक्तं वा मध्यविश्रान्तिकस्थलम् ।
सोपानकल्पनं प्रायः यथामानं यथाबलम् ॥ ७ ॥
मध्ये वा पार्श्वयोः प्रायः पद्मचित्रादिकल्पनम् ।
दीपाट्टालकयुक्तं वा वितानादिविभूषितम् ॥ ८ ॥
करलम्बसमोपेतं लोहपट्टावृतं क्वचित् ।
श्लक्ष्णितं टङ्कवेशेन क्वचिद्वर्णादिभूषितम् ॥ ९ ॥

---

तत्र तत्र प्राकारभित्तिपुरद्वारदुर्गद्वारगोपुरतलप्रासादभौमादिस्थलेषु तत्तत्स्थलौन्नत्यानुगुणं कल्पनीयसोपानानामारम्भाख्यमुखभागे, क्वचिन्मध्यभागे, अन्त्यभागे च दारुखण्डकृतद्वारोपद्वारस्थापनभासुरं पार्श्वभागेषु पतनभयनिरासाय करलंबनदारुपट्टिकाशृंखलादिसहितं दशसोपानतरणानन्तरं मध्यमध्यभागे विश्रान्तिस्थलं द्विहस्तायतिकं तन्मयमेव कृत्वा, प्रायशस्तत्तत्स्थलानुगुणं, दीपप्रभापतनयोग्यं दीपस्थलमट्टालकस्थलञ्च पार्श्वभागेषूपरि वा तले प्रकल्पयित्वा तादृशसोपानानां मध्यभागे वा क्वचिदुभयोरपि पक्षयोः पद्मकुमुदहंसशुकसारिकादिचित्रतक्षणसम्मेलनं प्रकल्पनीयम् ॥

किञ्चात्र सोपानकल्पने उपरिभागे वितानाद्यलङ्करणानि च कल्पयित्वा सति वित्तादिविभवे सौवर्णराजतताम्रलोहादिपट्टिकाच्छादितं कारयित्वा दृढसन्धिबन्धनं क्वचिन्मिथस्संप्राप्तायःकीलञ्च स्थापनीयमित्युपदेशः ॥

अपि चात्र सोपाननिर्माणे दारुकृते द्रव्यान्तरकल्पिते वा

पादशाटीयुतं प्रायो नात्युन्नततलाक्रियम् ।
समं तिर्यक्कृतं वक्रं वर्तुलाकारवत्क्वचित् ॥ १० ॥
भौमस्थानवशान्नेयं सोपानं मध्यदण्डभाक् ।

---

टङ्कवेशनादिना श्लक्ष्णता संपादनीया । एवं शिलामयसुधेष्टिकामयेष्वपि सोपानकल्पनेषु मध्यरेखाकल्पनमपीति भावः । किञ्चात्र सोपाननिर्माणे प्रासादादिस्थानेषु भूपालादिपादन्यसनार्हपदशाटीप्रसारणं कृत्वा अत्युन्नतकल्पनहीनं क्वचिन्नीचकल्पनविहीनमपि स्थापनीयम ॥

किञ्चात्र कोऽपि रचनाक्रमो ज्ञेयः । यथा—क्वचिदत्युन्नतभौमादिस्थलप्राप्त्यर्थं सोपानानां विंशतिकमथवा क्वचित्त्रिंशत्कं समसूत्रमृज्वाकारं कल्पनीयम । अयमेकः प्रकारः । प्रकारान्तरन्तु पूर्वोक्तरीत्या सोपानानां कल्पनं किञ्चिद्दूरमृज्वाकारं कल्पयित्वा तदनु सव्यभागे वा वामभागे वा तिर्यक्कृतं किञ्चिद्दूरं प्रकल्प्यतां स्थलास्थित्यनुगुणम । अथवा तस्मात्स्थलात्पुनरपि तत्रत्यभूमिकल्पनानुगुणं ऋज्वाकारं वा पुनरपि तिर्यक्कृतं वा कार्यमिति । प्रकारान्तरन्तु प्रथमतलाख्यभूमितलप्रभृति द्वितीयतृतीयादिभौमिकस्थलारोहणार्थं क्वचित्कल्पनेषु कूपाकारमध्यकल्पनदण्डं विधाय सर्पवेष्टनवत्क्रमादुपर्युपरि सोपानस्थानं स्थापयेदिति ॥

किञ्च क्वचिद्धान्यशालाचन्द्रशालोपरि भौमाद्यारोहणार्थं रुक्कृतजङ्गमसोपानस्थापनमपि निःश्रेणिकाकारवत्कलनीयमिति

नातिदीर्घान्तरतलं नातिनीचमपि क्वचित् ।
स्थपतिः कल्पयेद्युक्त्या सोपानं मुखभद्रभाक् ॥ ११ ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे
सर्वविधसोपानलक्षणकथनं नाम
चतुःपञ्चाशोऽध्यायः ॥

---

अर्वाचीनानां शिल्पविदामाशयश्च ज्ञेयः । एवं सर्वविधसोपानकल्पनं तत्तत्स्थानकल्पनीयनिर्माणानुगुणं नातिदीर्घाकारं नातिनीचाकारञ्च बहुचित्रादिमनोहरं यथाशोभं यथाबलञ्च स्थापयेदित्युपदेशः ॥

एवं सर्वविधसोपाननिर्माणक्रमं सङ्ग्रहेण शास्त्रकार उपदिदेश । मतान्तरशैल्या कल्पनान्तरलक्षणान्तराणि तु क्रियाकुशलैस्तक्षकप्रमुखैश्शिल्पिभिः स्वयमेवोह्य कार्यमिति भावः ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
**सर्वविधसोपानलक्षणकथनं नाम**
**चतुःपञ्चाशोऽध्यायः ॥**



अथैकशालाद्विशालाबहुशालालक्षणकथनं नाम

पञ्चपञ्चाशषट्पञ्चाशसप्तपञ्चाशाध्यायाः ॥

ग्रामक्लृप्ता त्वेकशाला मण्डलस्था द्विशालका ।
राजधान्यां स्थापिता तु कथिता बहुशालका ॥ १ ॥

स्थाप्या नृपेण सर्वत्र स्वदेशेषु विशेषतः ।
नानाविद्यापरीक्षार्थं कल्पनानेकशोभिता ॥ २ ॥

---

॥ पञ्चपञ्चाशषट्पञ्चाशसप्तपञ्चाशाध्यायाः ॥

अथात्र पठितृसौकर्याय कुलकरूपेण गुम्भितमिदमध्यायत्रयं पञ्चपञ्चाशषट्पञ्चाशसप्तपञ्चाशाध्यायात्मकं एकशालाद्विशालाबहुशालाख्यकल्पनाविशेषलक्षणं प्रतिपादयति — ग्रामक्लृप्तेत्यादिना ॥

पूर्वोक्तचतुश्चत्वारिंशपञ्चचत्वारिंशाध्याययोः महाशालाविशेषशालादिलक्षणन्तूक्तपूर्वमेव । तादृशशालादिकल्पनस्यैव सर्वत्र मानवगृहादिषु औचित्यप्रसक्तिः । अत अत्रोक्तानामेकशालादिकल्पनानां किं नाम स्वरूपम? किमर्थमेतत्कल्पनमिति चेत्तद्विवृणोति— नानाविद्यापरीक्षार्थमित्यादिना । काव्यनाटकपुराणेतिहासतर्कव्याकृतिमीमांसाश्रुतिस्मृतिप्रमुखशास्त्रवेत्तारो ये, ये च देशीयभाषाविदः, ये च लोके धातुज्ञानादिविदः सङ्गीतवाद्यचित्रमाल्यग्रथनग्रहज्ञानवास्तुज्ञाननानाशिल्पक्रियाविदस्तेषां विद्या-

**ग्राम्यशाला पूर्वमुखा पञ्चाशद्दण्डमानका ।**
**मण्डलस्थोत्तरमुखा शतदण्डप्रमाणका ॥ ३ ॥**

---

नैपुण्यपरीक्षार्थं कल्पनीयं भवनोत्तममिदं एकशालादिसङ्केतनाम भजतीति लक्षणवाक्यार्थः ॥

एवमनेकविधविद्याभ्यसनशीलान् परीक्ष्य तेषां नैपुण्यानुगुणं भूपालप्रमुखैरस्मिन्नेव खल्वेकशालादिकल्पने पारितोषादिकं देयमिति भावः । तस्मादेतद्विद्यापरीक्षास्थानं त्रिविधं भवति । यथा–एकशाला, द्विशाला, बहुशालेति । तत्र देशेषु ग्रामशतनिर्माणानां मध्ये विद्यापरीक्षार्थं स्थापितं स्थानमेकशाला । कस्यचिन्मण्डलस्य मुख्यनगरे विद्यापरीक्षार्थं स्थापितं स्थानं द्विशालाख्यं, राजधान्यां विद्यापरीक्षार्थं स्थापितं स्थानं तु बहुशालेत्येवं सङ्केतनाम प्राप्नोतीति शिल्पसमयनिष्कृष्टार्थः । एवं त्रिविधनिर्माणप्रकारं विद्यास्थानं चक्रवर्त्यादिमहीपालैः स्वस्वदेशेषु, सामन्तभूपालदेशेष्वपि तत्र तत्र जनसौकर्यार्थं अनेकसंख्यं प्रकल्पनीयमित्युपदेशः ॥ २ ॥

किञ्चैतादृशशालात्रयकल्पनानां किं वा लक्षणमित्याकाङ्क्षायां तद्विवृणोति — **ग्राम्यशाला पूर्वमुखेत्यादिना** । साधारणदण्डपञ्चाशदायामदैर्घ्यवति भूतले ग्राम्यशालाख्यामेकशालां पूर्वादिङ्मुखां स्थापयेत् । शतदण्डप्रमाणभासुरे नगरवास्तुतले उत्तरदिङ्मुखस्थापिता परीक्षाशाला द्विशालेति नाम्ना प्रसिद्धं भवति । एवं

बहुशाला पश्चिमास्या शतदण्डाधिकस्थला ।
कौसलीं मागधीं वापि शौरसेनीमथापि वा ॥ ४ ॥

शैलीमाश्रित्य शिल्पज्ञश्शालाकल्पनमादिशेत् ।
समकल्पनसंयुक्तां समालङ्करणक्रियाम् ॥ ५ ॥

उत्तमां मध्यमां वापि कल्पनां वा कनीयसीम् ।
मानभेदाद्योग्यशालां स्थापयेच्छुभवास्तुनि ॥ ६ ॥

---

शतदण्डाधिक्यप्रमाणवति राजधानीवास्तुभागे पश्चिमास्या वा दक्षिणास्या वा स्थापिता परीक्षाशाला बहुशालेति व्यवह्रियते । एवंप्रकारेण एकशालादिनिर्माणस्थापने कोसलशैली वा मागधशैली वा शूरसेनशैली वा यथाभिरुचिकल्पननिर्माणाय स्थपतिभिः स्वीकार्येति शैलीप्रकारकथनक्रमः ॥

किञ्चैतादृशशैलीस्वीकरणेऽपि ग्रामनगरराजधान्यादिस्थलस्थापनीयासु तासु शालासु समकल्पनं, समालङ्करणादियोजनमेव शुभप्रदमिति भावः । अस्य विशदार्थस्त्वनुपदमेव स्पष्टीभविष्यति । तस्मादेतदेकशालादिनिर्माणं शुभवास्तुभागे उत्तमप्रमाणोपेतं वा मध्यमप्रमाणोपेतं वा अथवाऽधमप्रमाणयुतं विषमसूत्रादिविहीनं स्थापनीयमित्यर्थः ॥

किं नाम उत्तममध्यमाधमलक्षणमिति चेदुच्यते—अत्रोक्तदण्डपञ्चाशत्कदण्डशतकादिकन्तु तस्याश्शालाया मध्यभाग-

**भौमद्वयं पूर्वभागे दशदण्डस्थले मतम् ।**

---

कल्पनीयमुख्यकल्पनस्थलप्रमाणमिति विवेकः। तादृशमध्यभागस्थलमुख्यकल्पनस्य पार्श्वतः प्राकारवत्केवलप्रान्तभूमिरवश्यं कल्पनीया। तत्प्रमाणवत्येत्र प्रान्तभूमिर्यत्र स्थाप्यते, स्थानस्य तस्योत्तमकल्पनमिति नामेति भावः । तादृशप्रमाणहीनप्रान्तभूमिपरिवृतशालाकल्पनन्तु मध्यमकल्पनम् । प्रान्तभूमिं विनैव कल्पितं परीक्षार्थकल्पनमधमकल्पनमिति तत्तत्स्थलानुगुणं कल्पनीयप्राकारभूमिस्थलविकल्पद्योतकं लक्षणवाक्यमिति ज्ञेयम् ॥

तस्मादेवं तत्र तत्र ग्रामनगरादिस्थलवशाद्यथासौकर्यं संप्राप्तवास्तुभूमौ प्राकारभूम्याख्यप्रान्तभूमियुतं वा तद्विहीनं वा यथाप्रमाणं कल्पनीयमिति भावः । परन्तु मध्यकल्पनस्थलनिर्माणार्थमत्र यन्मानं पञ्चाशद्दण्डादिकमित्युक्तं तन्मानमवश्यं तत्र कल्पने योजनीयमेव । न तन्न्यूनतेति भावः। किञ्च सति स्थलविभवे प्राकारभूमिः कल्पनीया । नो चेत्प्राकारभूभागं विनैवात्र शास्त्रोक्तप्रमाणमेकशालादिमुख्यकल्पनभागे योजनीयमेवेति पिण्डितार्थः ॥

तत्राद्यायाः ग्रामे स्थापनीयायाः एकशालायाः निर्माणक्रममुपदिशति — **भौमद्वयं पूर्वभाग** इत्यादिना । किञ्चैकशालाकल्पननिर्माणार्थं वास्तुभूमौ दशदण्डप्रमाणं पूर्वस्थलं,

तन्मानद्विगुणे व्यासे ततश्शालाप्रकल्पनम् ॥ ७ ॥

भौमत्रयं तत्र योज्यं शिखरत्रयभासुरम् ।

स्थाने रूपञ्च तन्मध्ये शिखरैस्सप्तभिर्युतम् ॥ ८ ॥

एवमुत्तुङ्गमानेन क्रमात्तदवरोहयेत् ।

मध्यभागे महाशालां कल्पयेत्सुषिरोज्ज्वलाम् ॥ ९ ॥

---

ततस्तथैव दशदण्डप्रमाणं मध्यमस्थलं, पुनरपि दशदण्डप्रमाण-मन्त्यस्थलं मात्वा स्वीकुर्यादिति स्थलस्वीकरणक्रमः । एवं समप्रमाणं विभक्ते भागत्रयस्थलेऽपि पृथगेव कल्पनं कार्यमिति कौसलीनिर्माणशैली । एतद्भागत्रयस्थलकल्पनं परस्परमिलितमेवेति मागध्यादिशैल्यन्तरक्रियापरिपाटी । तस्मात्स्थपतियजमानेच्छाधीनं कल्पनं कार्यमिति सौकर्यद्योतकवचनं ज्ञेयम् ॥

किञ्चैतादृशभागत्रयस्थलेषु पूर्वभागे भौमद्वयकल्पनं कृत्वा, मध्यभागे भौमत्रयं कारयित्वाऽन्त्यभागे पुनरपि भौमद्वयकल्पन-मेव कार्यमित्येकः पक्षः । एवं कौसलरीत्या एकशालाख्यपरीक्षा-स्थानकल्पने पूर्वभागे प्रमाणापेक्षया द्विगुणितमानं मध्यभागे योजनीयमिति केषाञ्चिन्मतम् । तदेवात्रोदाहृतवान् शास्त्र-कारः — **तन्मानद्विगुणव्यास** इत्यादिना । अस्य विवृतिर्यथा— प्रथमभागाख्यपूर्वभागे दशदण्डप्रमाणं, मध्यभागे विंशतिदण्ड-प्रमाणमन्तिमभागे पुनरपि दशदण्डप्रमाणमिति । एवंरीत्या

द्वारोपद्वारसंयुक्ता पार्श्वशाला क्वचिन्मता ।
समावरणका वापि विषमावरणा क्वचित् ॥
युग्मद्वारा युग्मपादा युग्माङ्गणसमन्विता ॥ १० ॥

इत्येकशालालक्षणकथनम् ॥

अथ द्विशालालक्षणकथनम् ॥

द्विशालाकल्पनं प्रायश्चतुर्द्वारसमन्वितम् ।

---

प्रमाणसंयोजने वा, पूर्वोक्तरीत्या समप्रमाणसंयोजने वा कल्पने प्रकल्पितेऽपि, तत्कल्पनप्राथमिकद्वारसमीपे युग्मद्वारकल्पनं, युग्मस्तम्भस्थापनं, युग्माङ्गणप्रकल्पनमपि कार्यमिति लक्षणवाक्यार्थः । अयमेव कोसलशैलीप्रकल्पनक्रमः ॥

किञ्चात्रैकशालाकल्पने प्रथमभागान्त्यभागप्रमाणापेक्षया द्विगुणितप्रमाणवति मध्यभागे स्तम्भषोडशकं वा स्तम्भानां चतुर्विंशतिकं वा यथाभिरुचि स्थापयित्वा तेषां स्तम्भानां मौलिभागेषु सुषिरशैलीनिर्माणं प्रकल्प्य, तदुपरि दृढं भौमत्रयकल्पनं शिखरत्रयभासुरं स्थापयेदित्येकशालालक्षणक्रमः । क्वचित् अस्मिन्नेकशालाकल्पने मध्यभागस्योपरिभागे पञ्चभौमकल्पनं कृतं यदि, तदा तद्विमानमौलिभागशिखरसप्तकं स्थापनीयमिति क्रमश्च तक्षकप्रमुखैर्विज्ञेय इति ॥

अथ नगरमध्यभागे कल्पनीयद्विशालाख्यपरीक्षास्थलस्य

चतुःपादसमायुक्ता चतुरङ्गणभूषिता ॥ ११ ॥
कुड्यान्ते मध्यभागे च चतुस्सूत्रप्रमाणकम् ।
मध्यशालाकल्पनं वा मध्यकूटप्रकल्पनम् ॥ १२ ॥

---

निर्माणक्रममाह — **द्विशालाकल्पनमित्यादिना** । 'आदिमध्यान्तभागेषु कल्पनं पूर्ववन्मतम्' इति वचनाद्ग्रामकल्पनीयाया एकशालायाः यथा भागत्रयविभजनं तदुपरि भौमकल्पनादिकमुक्तं, तथैवात्रापि द्विशालाकल्पने नगरस्थापनीये कार्यमिति क्रमः । अथापि तादृशभागत्रये प्रतिभागं दैर्घ्यवैशाल्यप्रमाणन्तु एकशालाप्रमाणापेक्षया द्विगुणितमित्येव भेदः । भेदान्तराणि च यथा — अत्र तु द्विशालाकल्पनस्य प्राथमिकद्वारसमीपस्थले चतुर्द्वारप्रकल्पनं, चतुःस्तम्भस्थापनं, तथैव चतुरङ्गणकल्पनमपि योजनीयमिति ॥

किञ्चात्र द्विशालाकल्पने भागमध्यस्थलकल्पितकुड्यान्तप्रान्तावधिकस्थले समसूत्रप्रमाणं मध्यमहाशालाकल्पनं वा मध्यमहाकूटकल्पनं वा स्थापनीयमित्युपदेशः । किञ्च पूर्वोक्ते एकशालाकल्पने चात्र द्विशालाकल्पने एवं वैशाल्यमध्यभागस्थापितमध्यशालायामङ्गणस्थल्यामपि पूर्वोक्तनानाशास्त्रविदां परीक्षार्थमागमनशीलानामासनपीठादिकं स्थापयित्वा तन्मध्ये परीक्षाकार्यव्यापृतस्य विद्यागुरोरासनं तुङ्गमपि प्रकल्पनीयमिति भावः । अयञ्च क्रमो बहुशालालक्षणेऽपि योज्य इति मतिः ॥

कारयेन्मानविच्छिल्पी महाशालाप्रकल्पनम् ।
आदिमध्यान्तभागेषु कल्पनं पूर्ववन्मतम् ॥ १३ ॥

द्वारस्थाने पूर्वसङ्घस्थाने मध्यप्रकल्पने ।
सुषिरव्याससमानार्धं पार्श्वकूटप्रकल्पने ॥ १४ ॥

इति द्विशालालक्षणकथनम् ॥

अथ बहुशालालक्षणकथनम् ॥

बहुशालाकल्पनं तु मण्डपाकारवन्मतम् ।

---

किञ्चात्र द्विशालाकल्पने कोऽपि विशेषो ज्ञेयः । यथा—द्विशालाकल्पनस्यास्य सव्यापसव्ययोर्भागयोः पार्श्वकूटकल्पनं वा पार्श्वाङ्गणकल्पनमतिदैर्घ्यवत्करणीयमिति । किञ्च पूर्वोक्तस्यैक-शालाकल्पनस्यास्य च द्विशालाकल्पनस्य प्राथमिकं मुखद्वारं निर्दिष्टस्थाने स्थापयित्वाऽवशिष्टदिग्भागत्रयेऽपि तत्कल्पनप्रमाण-चित्रादियुतद्वारत्रयस्थापनं वा, किञ्चिदूनकल्पनप्रमाणचित्रादि-रचनाभासुरं वा द्वारत्रयं प्रयोज्यमिति शास्त्रक्रियाविदामाशयो-ऽप्यादरणीय इति । अत एव खल्वस्य कल्पनस्य परितः प्राकार-स्थलविभजनवचनप्रसक्तिरिति । एवं क्वचिद्द्वारचतुष्कस्थापनाभावो-ऽपि न दोषायेति शिल्पसमयः । सर्वथा द्वारद्वयहीनता पूर्वोक्त-कल्पनशैलीविहीनता च न कार्येति शास्त्रोपदेशस्सर्वैरपि सर्वत्राद-रणीय इति ॥

सप्तभौमयुतं कार्यं राजधान्यां विशेषतः ॥ १५ ॥
नवभौमयुतं वापि रुद्रभौमयुतं तु वा ।
मानज्ञस्स्थपतिस्तत्र प्रथमात्किञ्चिदूनकम् ॥ १६ ॥
ततः किञ्चिन्मानहीनं तृतीयं भौममादिशेत् ।
हीनप्रमाणमत्रैवमङ्गणं प्रान्तभूमिषु ॥ १७ ॥
योजयेत्तुङ्गशिखरकल्पनं बहुचित्रकम् ।
महाशालाकल्पनं वा महामण्डपकल्पनम् ॥ १८ ॥

---

एतावता प्रबन्धेन नगरकल्पनीयद्विशालाख्यपरीक्षास्थल-निर्माणक्रममभिधायाधुना राजधान्यां कल्पनीयबहुशालाख्यपरीक्षा-स्थाननिर्माणलक्षणमभिधत्ते — **बहुशालाकल्पनं** त्वित्यादिना । बहुशालाकल्पननिर्माणन्तु प्रायशो मण्डलाकारां भूमिं स्वीकृत्य तत्र दृढभूमिलम्बं विधाय, तदुपरि तदनुगुणमेव दृढभित्तिं सवातायनरचनां स्थापयित्वा, पूर्वोक्तरीत्या मध्यस्थाने मध्यशालां नानासनान्वितामनेकस्तम्भभासुरां विधाय, तदुपरिभागे ससोपान-रचनं सप्तभौमकल्पनं वा नवभौमकल्पनमथवा कचिदिच्छावशा-देकादशभौमकल्पनं वा स्थापनीयमिति चोपदेशः ॥

किञ्चैतादृशभौमान्वितस्य बहुशालाकल्पनस्य दैर्घ्यादि-प्रमाणन्तु पूर्वोक्तरीत्या साधारणदण्डशताधिकमिति समयः । तस्मादेतादृशैवशालयवति स्थले तादृशभौमसम्पादिकं कर्तुं वित्तादि-शक्त्यभावे तदा कल्पनस्यास्य मध्यभागे कचिद्वा...लाख्यं कल्पन-

महाभागे प्रकर्तव्यं वातायनशतोज्ज्वलम् ।
पाठकासनसंयुक्तं पङ्क्तिपङ्क्तिक्रमक्रमम् ॥ १९ ॥
पाठवित्स्थानयुक्तश्च तन्मध्यं रम्यचित्रकम् ।
काव्यं देशीयभाषां वा नाटकादीनथापि वा ॥ २० ॥
मीमांसान्यायविस्तारं वेदं धर्मसमुच्चयम् ।
मणिक्रियां लोहकर्म नानाशिल्पक्रियामपि ॥ २१ ॥

---

मपि मण्डलाकारमेव विधाय, तद्वशात्कल्पनसौकर्यं संपादयित्वा पूर्वोक्तशैल्यैव तत्राप्युपरितनभौमतलस्थापनं करणीयमिति शिल्पक्रियाविदः । तस्मात्स्थपतिप्रमुखैः तत्प्रमाणवति स्थले वा तदर्धत्रिभागवति स्थले वा, तस्मात्किञ्चिदूनप्रमाणस्थले वा, एतादृशबहुशालानिर्माणकल्पने प्रकल्पितेऽपि अयञ्च क्रमोऽवश्यं स्वीकार्यः । यथा — अस्मिंस्तु बहुशालाकल्पने मण्डलाकारप्रमाणवति प्रथमतलप्रमाणापेक्षया द्वितीयतले किञ्चिदूनप्रमाणयोजनं, तस्मात्प्रमाणात्किञ्चिदूनप्रमाणयोजनं तृतीयभौमतले इत्यादिक्रमोऽवश्यं कल्पनीय इति ॥

अस्य विशदार्थस्तु यथा — प्रथमभौमकल्पने साधारणदण्डाशीतिकप्रमाणं, द्वितीयभौमतलेऽष्टसप्ततिदण्डप्रमाणं, तृतीयभौमतले षट्सप्ततिदण्डप्रमाणं, चतुर्थभौमतले चतुस्सप्ततिदण्डप्रमाणकमित्यादिक्रमेण प्रतिपादितं प्रतिभौमं द्विद्विदण्डप्रमाणहीनत्वं योजनीयमित्यर्थः । तथा च वर्तुलाकाररथप्रमाणवत्कल्पितस्य

विदन्ति ये पुण्यवशात्तत्परीक्षास्थलन्त्विदम् ।
पुमर्थसिद्धये राज्ञो विजयाय च मण्डले ।
कल्पयेन्मतिमाञ्छिल्पी समनेत्रं समक्रियम् ॥ २२ ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे
एकशालाद्विशालाबहुशालालक्षणकथनं नाम
पञ्चपञ्चाशषट्पञ्चाशसप्तपञ्चाशाध्यायाः ॥

---

बहुशालाकल्पनस्य परितो नानास्तम्भधृतमङ्गणकल्पनं प्रकल्पनीयमिति च क्रमः । एवं नानासनस्थापनयोग्यं प्रतिभौमकल्पनं क्रमाद्धीनप्रमाणकं विरचय्यान्तिभौमोपरितले चूलीगृहं वा चूलीहर्म्यं वा नानाचित्रमञ्जुलाकारं विधाय तदुपरि नवैकादशपञ्चदशककलशस्थापनमपि भूपालप्रकृतिश्रेयस इति शास्त्रोपदेशः ॥

किञ्च पूर्वोक्तरीत्याऽत्रापि बहुशालाकल्पने मध्यभागे महाशालाकल्पने नानारूपदेवगन्धर्वयक्षादिचित्ररचनादिकं योजयित्वा परीक्षार्थमागतानां विदुषां, परीक्षकाणाञ्चासनानि यथाप्रमाणं स्थापनीयानीति सङ्ग्रहेण परीक्षाशालात्रयलक्षणमुक्तं बोध्यम् ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
**एकशालाद्विशालाबहुशालाख्यपरीक्षास्थललक्षणकथनं नाम**
**पञ्चपञ्चाशषट्पञ्चाशसप्तपञ्चाशाध्यायात्मकाः कुलकरूपाः ॥**



अथ नानाविधपीठिकावेदिकालक्षणकथनं नाम

## अष्टपञ्चाशोऽध्यायः ॥

### तत्रादौ देवालयवेदिकालक्षणकथनम् ॥

देवप्रीतिकरी वेदिर्वेदिका पीठिका तथा ।
भुक्तिमुक्तिप्रदा पुंसां देवसान्निध्यकारिणी ॥ १ ॥

शुभे मुहूर्ते भट्टार्यैर्गर्भिता चाभिमान्त्रिता ।
तस्मात्तां योजयेच्छिल्पी यथामानं यथाबलम् ॥ २ ॥

---

॥ अष्टपञ्चाशोऽध्यायः ॥

अथास्मिन्नष्टपञ्चाशत्तमेऽध्याये देवप्रासादगर्भगृहमध्यस्थापनीयवेदिकादीनां स्थलान्तरकल्पनीयानां पीठिकादीनाञ्च कल्पनक्रममुदाहरति — देवप्रीतिकरीत्यादिना । पूर्वोक्तदेवालयगर्भगृहादौ शुभमुहूर्ते यथामानं दीक्षितभट्टारकस्थपतिप्रमुखैर्वेदिकादिपरिकल्पनेन किं वा फलमिति चेत्तन्मध्यभागप्रतिष्ठापितवासुदेवशङ्करादिदेवतानां प्रीतिर्भवति । तद्वशात्तस्मिन्वेदिकामध्ये तेषां बिम्बादीनां सान्निध्यञ्च जायते । तत्सेवाजुषां पुंसां भुक्तिमुक्त्यादिश्रेयश्च भवति । तस्मात्स्थपतितक्षककशकारादयस्तादृशवेद्यादीनां प्रकल्पनात् पूर्वमेव तत्तद्वेदिकाजात्यनुगुणं तन्मध्ये गर्भविन्यासं प्रकल्पयेयुरित्युपदेशः ॥

किञ्च पूर्वोक्तरीत्या तदेव श्रेयस्करमिति भावः । तादृश-

देवभूपालमानुष्यनानावास्तुविभागवित् ।
चतुरश्रं षडश्रं वा तथाष्टाश्रं क्वचिन्मतम् ॥ ३ ॥

द्वादशाश्रं षोडशाश्रं व्यासहीनं त्रिकोणकम् ।
चापाकारं क्वचित्कार्यं वर्तुलं मुखपङ्क्तिकम् ॥ ४ ॥

---

गर्भविन्यासाकरणे देवालयादीनां महादोषप्रसङ्गादिति भावः। अतो लोके देववेदिका, भूपालवेदिका, मानववेदिकेति त्रिधा तद्विभजनं शास्त्रचोदितम् । तस्मात्पूर्वोक्तगर्भविन्यासप्रकरण- प्रतिपादितशैल्या विष्णुमन्दिरे शङ्खचक्रादिलक्ष्म, शिवमन्दिरे शूलादिलक्ष्म, भूपालप्रासादादिषु खङ्गादिचिह्नमित्यादिक्रमेण तत्तज्जात्यनुगुणगर्भचिह्नानि ताम्रपट्टादिलिखितानि, सुवर्णमाणिक्य- वैडूर्यादिसहितानि, तादृशवेदिकामध्ये स्थापयित्वा सुधेष्टिका- शिलादिभिराच्छाद्य तत्कल्पनं दृढं पूरयेदिति लक्षणवाक्यार्थः ॥

तस्मात्तादृशदेवालयगर्भगृहवेदिका तु वासुदेवनारायण- केशवमाधवमत्स्यत्रिविक्रमकूर्मवामननरसिंह्मदाशरथिगोविन्दशङ्कर- गौरीश- नटपति- पशुपति- भिक्षाटनादितत्तद्देवबिम्बतालमानानुगुणं विविधाकारा भवति । यथा — क्वचिद्गर्भगेहे द्वादशतालमूर्तीना- मधस्स्थापितवेदिका तु चतुरश्राकारा स्थापनीया । स्थलान्तर- गर्भगृहे तु षडश्रा भवतीति । एवंप्रकारेणाष्टाश्रा, द्वादशाश्रका, षोडशाश्रकाऽतिदैर्घ्यसंयुक्ता, क्वचित्त्रिकोणाकारा, क्वचिच्चापाकारा,

द्विमुखं त्रिमुखं वापि चतुर्मुखमथापि वा ।
कटिसूत्रसमायुक्तं कर्णनासादिमण्डितम् ॥ ५ ॥
चतुष्पादयुतं वापि पादाष्टकसमन्वितम् ।
षोडशस्तम्भकं वापि निष्पादं मुखभूषितम् ॥ ६ ॥
किङ्किणीतोरणैर्मण्डैर्भ्रुकुटीभिस्समन्वितम् ।

---

क्वचिद्वर्तुलाकारा, मुखपट्टिकोपेता, क्वचिद्द्विमुखा, क्वचित्त्रिमुखा, चतुर्मुखा च कल्पनीयेत्येवं त्रयोदश प्रकारा वेदिकाकल्पनस्योक्ता भवन्ति ॥

किञ्चैवं भट्टारकदीक्षितस्थपतिप्रमुखैः तत्तत्तालमानानुगुणं वेदिकास्थापनं सर्वशुभप्रदमिति भावः । एतादृशाकारवतीनां वेदिकानां कल्पनन्तु घनशिलाभिर्लोहपट्टकवर्चिताभिः क्वचित्सार-दारुखण्डैः, क्वचित्सुधेष्टिकादिभिरपि कल्पनीयमिति क्रमः । सर्वथेयं देवबिम्बाधःस्थितवेदिका तु शिलामय्येव चिरकालस्थितये । द्रव्यान्तरकल्पितवेदिका त्वभिषेकसलिलादिपतनादिना न दीर्घकाल-स्थितय इति विवेकः । तस्माद्यथाभिरुचिविभवं स्थापनीयेति तत्तत्कल्पनक्रमः ॥

किञ्चैवमत्रोक्तरीत्या कल्पनवतीषु वेदिकासु वासुदेवादि-मुख्यदेवताबेरं तत्सव्यापसव्यभागयोस्तद्देवीबेराणि क्वचिदनन्त-गरुडादिभक्तवर्गबेराणि च क्रमात्स्थापयेदिति प्रतिष्ठाक्रमविदः ॥

देवसोपानसंयुक्ताधिष्ठानोपरिसंस्थितम् ॥ ७ ॥

तदर्धं वा तदर्धार्धाधिकमौन्नत्यमीरितम् ।

---

किञ्च देवसोपानमित्यत्रायमर्थः । यथा— तत्तद्बेरताल-प्रमाणसंख्यानुगुणं सोपानकल्पनमिति केचित् । अन्ये तु सोपानानां त्रयं, पञ्चकं, सप्तकं, नवकमिति । परे तु तत्तद्देव-बिम्बक्षेपणायुतमिति । तन्मास्तु । कुतः ? भट्टारकादिपदस्पर्शन-संभवात् । किन्तु वह्निवरुणवासवादिविबुधबृन्दस्वरूपात्मकं सोपानमेव देवसोपानमित्यन्ये । तस्मात्तादृशवेदिकाधिष्ठानकल्पन-सहितमेवैतादृशसोपानानां त्रिपञ्चकादीनां स्थापनं तत्तत्स्थल-विभवानुगुणं कल्पनीयम् । तत्रापि तादृशसोपानकल्पने तु अयमेव प्रकारः परिकल्पनीय इति । यथा—गर्भगृहमध्यस्थितायाः पूर्वोक्तवेदिकायाश्शिलामयत्वे तत्पुरतः कल्पनीयानामेषां सोपानानामपि शिलामयत्वम् । तस्याः लोहपट्टसुवर्णपट्टाद्यावृतत्वे तेषामपि तद्युक्तत्वमित्यादिक्रम इति । एवमुक्तैषा परिपाटी तु क्वचिदेव देवालयेषु युक्ता भवति । ग्रामादिस्थलकल्पितक्षुद्र-प्रमाणगर्भगृहमध्यस्थवेदिकायाः सोपानकल्पनं विनैव स्थापनमपि न दोषायेति शिल्पविदामाशयोऽप्यादरणीय इति ॥

किञ्चात्र गर्भगृहवेदिकाकल्पनेऽयञ्च क्रमोऽवधार्यः । यथा— वासुदेवशङ्करादिदेवबिम्बानां पृथगेव वेदिका । तत्पार्श्व-

एकहस्तं द्विहस्तं वा त्रिहस्तमथवा क्वचित् ॥ ८ ॥
सूत्रमानमिदं प्रोक्तं देवागारे विशेषतः ।

---

भागस्थापनीयानां देवीप्रमुखानान्तु वेदिका पृथगेवेति । एवं कल्पने मध्यस्थदेववेदिकाप्रमाणापेक्षया पार्श्वस्थितदेवीवेदिकायाः किञ्चित्प्रमाणहीनतैव शस्तेति । अपि चात्र वेदिकायाः प्रमाणं कियद्वेति चेत् — गर्भगृहप्रमाणादर्धमानं वा क्वचित्तदर्धमानं वा वैशाल्ये योज्यमिति । औन्नत्ये तु तत्तत्तालबेरौन्नत्यानुगुणं एकहस्तद्विहस्तत्रिहस्तादिमानमिति तत्क्रमः । तस्मादेतादृश-वैशाल्यौन्नत्यवतां नानारूपाणां वेदिकाकल्पनानामलङ्क्रिया तु कटिसूत्राख्यवर्धनचित्रं, क्वचिन्निम्नकम्परूपं वा, योजयेदिति क्रियाकौशलविदः ॥

एवमेव शैल्याऽत्र वेदिकाकल्पने विशेषतो नानारूप-किङ्किणीयोजनं कर्णनासाख्यचित्रादिरचनाञ्च प्रान्तभागेषु चतुर्ष्वपि भ्रुकुट्याख्यचित्राकार...... च मुखबालादिकल्पनञ्च शोभार्थं संयोजनीयमिति क्रमः । किञ्च पूर्वोक्तरीत्याऽत्र देववेदिका-कल्पने पार्श्वभागेषूपरि यद्यन्मनोहरचित्ररचनादिकं तत्सर्वमपि यथामानं कल्पयित्वा टङ्कादिना क्वचित्तक्षयित्वा तादृशवेदिकाया मध्यभागे समश्लक्ष्णितशिलामयवासुदेवशङ्करलिङ्गादिबिम्बजालं स्थापयेदिति क्रमः ॥

शिवस्य विष्णोर्देवीनां गर्भवेदिं प्रकल्पयेत् ॥ ९ ॥

सव्ये सव्येतरे भागे गोमुखादिसमन्वितम् ।

---

किञ्च पाञ्चसात्वतकामिकवातुलाद्यागमप्रतिपादितरीत्या शुभे मुहूर्ते एतादृशशिलावेदिकाया मध्यभागे वासुदेवशङ्करादिदेवविम्बं शिलाविम्बं स्थापयित्वा तत्पूर्वभागे दारुसुधेष्टिकादिभिः निर्मितक्षुद्रवेदिकासनादौ सुवर्णरजतताम्रादिलोहकृतानामुत्सवार्हाणां देवबिम्बानां जालानि स्थापयेदिति क्रमश्च बोध्यः । तथा च शिलाकल्पितविम्बानां मूलबेरं, सौवर्णराजतताम्रादिलोहकल्पितविम्बानामुत्सवबेरमिति च व्यवहारसंप्रदायोऽवगन्तव्यः । अतः एवं प्रतिपादितरीत्या मूलबेराणामुत्सवबेराणाञ्च स्थापनार्थं कल्पनीयवेदिकायाः सुधारूपाया वा शिलारूपाया वा दारुरूपाया वा पादस्थापनं कार्यम् । कथम ? गर्भगृहमध्यभागकल्पनीयाया एतादृशवेदिकायाः क्वचित्पादचतुष्कं, क्वचित्पादाष्टकं, क्वचित्पादषोडशकं वा योजनीयमिति तत्क्रमो ज्ञेयः । एवं पादाष्टकोपेतपादषोडशकोपेतमहाप्रमाणवेदिकायान्तु वासुदेवनारायणमाधवश्रीभूमिप्रमुखानेकदेवविम्बस्थापनमित्यागमवेत्तारः ॥

किञ्चैतादृशपादकल्पनन्तु वेदिकाद्रव्यैरेव कार्या । नान्यद्रव्येणेत्यान्तरालिको भावः । किञ्चैवमत्र गर्भगृहवेदिकायां स्थापनीयदेवविम्बाभिषेकसलिलानां बहिर्निर्गमनार्थं गोमुख-

प्रणालीं क्षुद्रमानां वा स्थपतिस्तत्र योजयेत् ॥ १० ॥

जन्मान्तं मूलविस्तारभागार्धाधिकमानकम् ।
समं वा विषमं मानं गेहान्ते योजयेद्बुधः ॥ ११ ॥

कल्पयेद्द्विविधं रूपं शैललोहद्रुमादिभिः ।
पूर्ववेदिकया युक्तं पूर्वं भद्रविभूषितम् ॥ १२ ॥

वर्णसङ्करहीनं तत्प्रशस्तमिति भाषितम् ।
पद्मपीठं शेषपीठं क्षेत्रपीठमथापि वा ॥ १३ ॥

---

प्रणाल्यादिकं कुत्र वा स्थले स्थाप्यमिति चेत्तत्क्रममाह — प्रायशो देवालये तादृशदेवबिम्बानां सव्यभागे गोमुखं, प्रणालीं वा भित्तिभागघनमेलनोपेतां कल्पयेदित्यर्थः । क्वचित्पादभागे च कार्यमिति च व्यवस्था । किञ्चात्रोक्तगोमुखप्रणालीकल्पनक्रम-लक्षणादिकं तु काश्यपमयमतादिषु ग्रन्थान्तरेषु ज्ञेयम् । विस्तरभयान्नात्र लिख्यते ॥

एवं गर्भगृहे भित्तिभागे गोमुखादिकल्पने तादृशगर्भगृह-जन्मान्तप्रमाणं वा मूलबेरवेदिकाविस्तारभागादर्धभागप्रमाणोपेतं वा सत्वबेरालये समकल्पनं रुद्रबेरालये विषमकल्पनञ्च कार्यमिति तत्क्रमः सङ्ग्रहेण विवृतस्सूक्ष्मधीशिल्पिवर्गायेति भावः ॥

किञ्चैवंरीत्या दृढकल्पनगोमुखसहितगर्भगृहवेदिकां कारयित्वा तदुपरि विष्णुबेरस्थापनार्थपद्मपीठं वा क्वचिच्छेषपीठं, क्वचित्त-

लिङ्गपीठं सौम्यपीठं वृत्तपीठं तथा क्वचित् ।
यथाबलं यथाशोभं नानाचित्रमनोहरम् ।
मानज्ञः स्थपतिश्रेष्ठो दृढं कल्पं प्रकल्पयेत् ॥ १४ ॥

अथ मानवगृहवेदिकालक्षणम् ॥

सर्वेषामपि वर्णानां नानारूपप्रकल्पने ।
शिलावेदिर्न शुभदा तस्मात्तां वर्जयेद्बुधः ॥ १५ ॥

वेदिकां शुभदां शिल्पी सुधालोहादिनिर्मिताम् ।
कल्पयेद्विविधाकारां स्थलमानादिभेदतः ॥ १६ ॥

---

त्तत्क्षेत्रनाथपीठादिकं वा विष्णुमन्दिरे प्रकल्पयेत । एवं शिवमन्दिरे तु लिङ्गपीठं सोमपीठं वा वृत्तपीठं वा कल्पयेदित्यागमसंप्रदायक्रमः कथितः ॥ १४ ॥

एतावता प्रबन्धेन सकलदेवमन्दिरेष्वपि कल्पनीयविविधमूलबेरोत्सवबेरस्थापनार्हनानारूपवेदिकाकल्पनप्रकारलक्षणादिकं संग्रहेण प्रतिपाद्याधुना मानवगृहकल्पनीयवेदिकालक्षणं प्रतिपादयति — **सर्वेषामित्यादिना** । ब्राह्मणक्षत्रियवैश्यशूद्रादिसकलवर्णवासार्थं कल्पनीयेषु विविधेषु **गृहादिनिर्माणेषु शिलामयवेदिका न शुभफलप्रदा** । देवालयभूपालप्रासादादिष्वेव शिलामयी क्वचिच्छस्तेति । तस्मात्सर्वत्र मानवगृहादिषु विविधनिर्माणेषु दारुलोहेष्टिकादिभिरेव वेदिकां स्थापयेदित्युपदेशः ॥

शालाप्रान्ते चत्वरान्ते गेहद्वारान्तिकस्थले ।
महाशालामध्यभागे कूटकल्पनमध्यमे ॥ १७ ॥

देहल्यलिन्दभागेषु देवागारस्थलेषु च ।
भोज्यशालाप्रान्तभागे पचनालयकोणके ॥ १८ ॥

विश्रान्तिस्थानके वापि भौमभागे क्वचित्तथा ।
हस्तं सार्धैकहस्तं वा द्विहस्तं वा त्रिहस्तकम् ॥ १९ ॥

---

कुत्र वा स्थले मानववेदिकेयं स्थाप्येत्याकाङ्क्षायां तादृशस्थलानि निर्दिशति—शालाप्रान्त इत्यादिना । ग्रामनगरादिवास्तुस्थलेषु कल्पितविविधमानवभवननिर्माणेषु विश्रान्त्यर्थं विवाहशालामुखप्रान्तेषु, शालान्तरमुखप्रान्तभागेषु, पूर्वोक्ताष्टगृहद्वारसव्यापसव्यभागेषु, चत्वरकल्पनस्य मध्यस्थले, क्वचिच्चत्वरकोणस्थानेषु, नवरङ्गकूटादिमध्यभागस्थलेषु, तत्कोणस्थलेषु वा, मानवदेहलीभागेषु, मानवालिन्दभागेषु, देवागारदेहल्यालिन्दभागेषु, मानवभोजनालयसमीपभागेषु, पचनालयकोणभागेषु, विश्रान्तिप्राप्तये कल्पितनिर्माणस्थलेषु समुचितेषु पूर्वभवनादिकोणभागस्थलेषु द्वितीयतृतीयादिभौमस्थलेष्वपि समुचितेषु कन्दुकखेलनस्थलसमीपेषु स्थलान्तरेष्वपि तादृशवेदिकानिर्माणमवश्यं कार्यम् । तत्प्रमाणन्तु क्वचिदेकहस्तप्रमाणमन्यत्र सार्धैकहस्तं, क्वचिद्द्विहस्तं, त्रिहस्तमित्यादिकं मानं वेदिकासु नेयमिति भावः ॥

क्वचित्तदधिकं वापि स्थलयोग्यं प्रकल्पयेत् ।
षोडशांशं द्वादशांशमष्टांशं चतुरंशकम् ॥ २० ॥

विभजेज्जन्मकं वेदिरचनामत्र योजयेत् ।
सपादं वा पादहीनं पृष्ठकट्यादिभूषितम् ॥ २१ ॥

श्रीकान्तं सौम्यकान्तं वा गान्धर्वं कान्तमेव वा ।
नानालङ्कारसंयुक्तं कल्पयेन्नृपवेश्मनि ॥ २२ ॥

---

किञ्चैतादृशमानववेदिकायाः कल्पनं चतुरश्रं व्यासहीनं क्वचित्पार्श्वस्थभित्त्यादिकल्पनानुगुणं रेखातर्जनीरूपमेव(८)माकारं वा तत्तत्यस्थलानुकूलं स्थापनीयमिति भावः । किञ्च तादृशाकार-वेदिकाप्रकल्पने तदौन्नत्यं षोडशधा वा द्वादशधाऽष्टधा चतुर्धा वा यथाभिरुचिस्थलविभक्तं तादृशभागेष्वधिष्ठानलक्षणरीत्या कम्पवाजनप्रतिवाजनपद्मादितक्षणक्षेपणवर्धनादिकं कारयेदिति क्रमः । कुतः ? शोभार्थम् । अतः एतादृशकल्पनाविशेषादिभासुर-मिदमेव मानववेदिकानिर्माणं पादयुतं वा क्वचित्पादविहीनं वा यथाभिरुचि यथास्थलमानं प्रकल्पयेदिति च क्रमः कल्पना-प्रकारः ॥

एवमत्र पादकल्पनेषु येन द्रव्येण वेदिका निर्मीयते, तेनैव द्रव्येण पादकल्पनमपि श्रेय इत्युत्तमः पक्षः । वर्णान्तरद्रव्यान्तर-सङ्कुलनमधमः पक्ष इति शिल्पक्रियाविदः ॥

अथ पीठिकालक्षणकथनम् ॥

पीठिका विविधा प्रोक्ता देवानां भूभुजामपि ।
नवरत्नादिघटिता मानवानां क्वचिन्मता ॥ २३ ॥

एकपक्षं द्विपक्षं वा सिंहपक्षमथापि वा ।
एकद्वित्रिचतुःपञ्चषट्सप्ताष्टनवाधिकैः ॥ २४ ॥

भागैर्जन्माधिकैर्युक्तं नानाक्षेपणभाजितम् ।

---

तस्मादेवमुक्तरीत्या यथाभिरुचि वेदिकायाः स्थापने क्वचिन्निद्राप्राप्त्यादिसमयेषु पृष्ठकट्यादिभागसुखकरीं तत्तन्मयीमुपधानक्रियारचनां कारयित्वा तत्र च नानाचित्रादिकं योजयित्वा तद्वेदीकल्पनं श्रीकान्तरूपं वा, सौम्यकान्तरूपं वा गान्धर्वकान्तरूपं वा स्थापनीयमित्यर्थः । किञ्चात्रोक्तकान्तपदस्तु निर्माणविशेषद्योतक इति क्रमः ॥ २२ ॥

अथ धनिकभूपालदेवादिप्रासादभागेषु पीठिकाख्योत्तमासनस्य लक्षणमाह — पीठिका विविधेत्यादिना । देवानां राज्ञाञ्च नवरत्नावलिप्रत्युप्तपार्श्वमुखभागपट्टिकं सिंहासनकल्पनवदेकपक्षं, क्वचिद्द्विपक्षञ्च मञ्चवत्क्वचित्सिंहपक्षहंसपक्षादिकल्पनभासुरं, जङ्गमस्थावररूपं करपट्टिकादिचित्रक्रियाभासुरञ्च कल्पयेदिति भावः ॥

किञ्चात्र भूपालपीठिकासनादिनिर्माणे नानाद्रव्यकलनीये

कूटकोष्ठादिसंयुक्तमान्धारसहितन्तु वा ॥ २५ ॥

एकहस्तादिमानन्तु तत्र नेयं यथाबलम् ।

चतुरङ्गुलकं मानं जङ्गमे स्थावरेऽपि च ॥ २६ ॥

विष्कम्भादिसमोपेतं नानारूपं मनोहरम् ।

यथायुक्ति यथामानं दृढमासनकल्पनम् ।

कल्पयेत्स्थपतिश्रेष्ठः स्थलकालप्रमाणवित् ॥ २७ ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे

नानाविधवेदिकापीठिकालक्षणकथनं नाम

अष्टपञ्चाशोऽध्यायः ॥

---

पादजन्माद्यासनफलकान्तमेकद्वित्रिचतुष्पञ्चषादिभागं विभज्य तत्र कल्पनदार्ढ्योत्पादनार्थं आन्धारिकाख्यकल्पनं घनं सम्मेलयित्वा तत्रैकहस्तप्रमाणे भागे कूठकोष्ठमुखपट्टाविष्कम्भादिविविधकल्पनं युक्त्या मनोहरं कल्पयेदिति चोपदेशस्संग्रहेणेति ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां

विश्वकर्मवास्तुशास्त्रव्याख्यायां

नानाविधवेदिकापीठिकालक्षणकथनं नाम

अष्टपञ्चाशोऽध्यायः ॥



अथ पोतिकालक्षणकथनं नाम

## एकोनषष्टितमोऽध्यायः ॥

दीपस्थलं पोतिकाख्यं कथितं शास्त्रपारगैः ।
देवेषु मानवेष्वन्यत्कल्पनेष्वपि भूरिषु ॥ १ ॥

---

एकोनषष्टितमोऽध्यायः ॥

अथास्मिन्नेकोनषष्टितमेऽध्याये सर्वविधकल्पनालङ्कारभूतपोतिकानिर्माणलक्षणादिकमाह — **दीपस्थलं पोतिकाख्यम्** इत्यादिना । पोतिका नाम दीपपात्रम् । लक्षणया क्वचिद्दीपपात्रादिस्थानञ्च निर्दिश्यते । तस्मादेतल्लक्षणमत्र प्रतिपाद्यत इति समयः । यथा वा देवालयस्थापितेषु नानाविधगोपुरद्वारभागेषु एवं द्वितीयतृतीयादिगोपुरतलभागेषु, प्राकारभित्त्यन्तभागेषु वीथ्यादिस्थानेषु समुचितस्थलेषु विविधमण्टपांगणभागेषु देवदेव्यादिगर्भगृहद्वारोभयपक्षकेषु क्वचिदन्तर्गेहकुड्यप्रान्तेषु, तटाकसोपानेषु स्तम्भादिस्थलेषु स्थलान्तरेषु समुचितेषु ब्राह्मणक्षत्रियवैश्यादीनां गृहभवनप्रासादादिनिर्माणेषु सर्वद्वारोभयपक्षकेषु, पूर्वभवनमध्यभागेषु कल्याणशालाभोजनशालाशयनगृहादिभित्त्यन्तभागेषु, तत्र तत्र स्थापितस्तम्भपालीप्रदेशेषु क्वचित्सोपानावलीप्रान्तभागेषु नानालिन्दप्रदेशेषु नवरङ्गकूटादिस्थानेषु द्वितीयभौमतृतीयभौमादिविविधनिर्माणेषु, स्थलान्तरेष्वपि

**शिलालोहसुधारूपादैवभूपालमानवम् ।**
**तत्कल्पनं त्रिधा प्रोक्तं निर्माणानां शुभप्रदम् ॥ २ ॥**

**पञ्चताला सप्तताला वाऽष्टताला क्वचिन्मता ।**

---

समुचितेषु, रात्रौ दीपप्रकाशो भवेत्तथा तादृशनानारूपदीपपात्र-स्थापनं कलयेदित्युपदेशः । एवं तत्र तत्र निर्माणानुगुणं पोतिकाख्य-दीपस्थापनेनान्धकारनिरासनेन सर्वेषां प्राणिनां सुखारोग्यादिश्रेयः-प्राप्तिरिति स्पष्टमेव ॥

तस्माद्ग्रामनगरादिवास्तुभागेषु कल्पितविविधनिर्माणानां क्वचिन्मध्यभागे क्वचिद्द्वारोभयपक्षकेषु, क्वचित्कुड्यप्रान्तेषु, क्वचित् स्तम्भादिस्थानेषु एतादृशदीपस्थापनं विहितं भवति । तस्मात्तादृश-दीपपात्रनिर्माणद्रव्यं तु त्रिविधमेव । यथा — शिलाद्रव्यं, लोहद्रव्यं, दारुखण्डेष्टिकादिसङ्कीर्णद्रव्यमिति । तत्र च देवालय-निर्माणेषु प्रायशश्शिलाद्रव्यकल्पितदीपस्थापनं, भूपालभवनेषु लोहकृतदीपस्थापनं, अन्येषां गृहादिषु लोहदार्वादिमिश्रितद्रव्य-कल्पितदीपस्थापनञ्च शुभप्रदमिति प्राचामाशयः । मतान्तरमत्र न लिख्यते ॥ २ ॥

एवमत्र दैवभूपालमानवभवनेषु शिलालोहसङ्कीर्णद्रव्यवर्गैः दीपस्थापनं शुभप्रदमिति प्रतिपाद्य प्रायशस्तत्स्थापनस्थलानि च निर्दिश्य, तादृशदीपनिर्माणक्रममुदाहरति — **पञ्चतालेत्यादिना ।**

नवताला क्वचिल्लोहशिलादिघनयोजिता ॥ ३ ॥
गान्धर्वी किन्नरी विद्याधरी वा पक्षिरूपिका ।
नानालङ्कारसंयुक्ता दीपपात्रकधारिणी ॥ ४ ॥
महासना वा साधारा देवभूपालकल्पने ।
मानङ्गेन स्थलङ्गेन स्थापितव्या शुभस्थले ॥ ५ ॥
तद्युग्मकं वा पुरतो युग्मं त्रिपरिवृत्तकम् ।
शालासु स्तम्भपालीसु सोपानेऽलिन्दशालके ॥ ६ ॥
कूटे च नवरङ्गे च भौमकल्पनपालिषु ।
गोपुरद्वारभागेषु मण्डपास्थानभूमिषु ॥ ७ ॥
प्राकारकुड्यभागेषु तटाकादिस्थलेष्वपि ।
द्वारपार्श्वे चत्वरान्ते देवगेहे विशेषतः ॥ ८ ॥

---

नानारूपेषु दीपेषु नवतालपञ्चतालादिप्रमाणयुतं गन्धर्व्यादियुवतिबिम्बं लोहादिभिः निर्माय, तत्करतलपुटे तैलधारकनामकशरावस्थापनं विरचय्य, तत्र दीपारोपणमेव सर्वदेवप्रीतिकरमिति प्राचां शास्त्रकाराणामाशयोऽवधार्यः ॥

किञ्च तादृशदीपधारिणीयुवतिबेरनिर्माणक्रमो यथा — पुंशिलाभिरथवा स्त्रीशिलाभिस्सल्लोहखण्डैर्वा गान्धर्वीबिम्बरूपं वा किन्नरीबिम्बरूपं वा, यक्षिणीबिम्बरूपं वा, विद्याधरीबिम्बरूपं वा, हंसिकामयूरिकाशुकाद्युत्तमपाक्षिबिम्बरूपं वा निर्माय तत्र तत्र

भोज्यशालादिषु तथा शयनादिस्थलेषु च ।
कल्पनान्तरभागेषु प्रकल्प्या पोतिका क्रिया ॥ ९ ॥
भित्त्यन्ते पादकान्ते च कल्पनान्ते च सुस्थले ।
सुधारूपी दारुमयी क्वचित्कार्या विशेषतः ॥ १० ॥
सम्मुखं समसंख्यश्च पोतिकाकल्पनं वरम् ।
योजनीयं वियोक्तव्यं जङ्गमस्थावरक्रमात् ॥ ११ ॥
शृङ्खलावलितं वापि क्वचिन्माना मुखान्विता ।

---

स्थापयेदिति क्रमः । तत्रापि साधिष्ठानं क्वचित्सोपानयुतं च तादृशदीपबेरकल्पनं वरमिति भावः । कुतः? औन्नत्यकल्पनादिना दीपप्रभास्फूर्तये । किञ्चैतादृशलोहमयदीपपात्रनिर्माणादिशक्त्यभावे लोहमयतैलधारशरावकसहितं सुधामयं दीपपात्रं वा क्वचिच्चन्दनादि-सारदारुकृतदीपस्तम्भं वा क्षुद्रप्रमाणं प्रकल्प्य तत्र स्थापयेत् । तत्राप्यधिष्ठानोपपीठकल्पनं घनमध्यदण्डोपेतं जङ्गमं स्थावरं वा कल्पनं सुखादय इति मतिः ॥

किञ्चात्र लोके विविधकल्पनरूपदीपपात्रनिर्माणे अलिन्द-भागेषु अङ्गणादिस्थलेषु शालास्वप्युभयोरपि पक्षयोर्मिथस्सम्मुख-स्थितिभाग्वा, क्वचिदेकभागं विनाऽन्यत्र स्थले स्थितिमद्वा दीप-कल्पनं स्थापनीयम् । जङ्गमदीपविषये तु ऐच्छिकमिति भावः ॥

किञ्च क्वचिद्देवागारद्वारभित्त्युभयपार्श्वेषु शृङ्खलासंयोजितं

करपङ्क्तिकया युक्तं दर्व्या वापि समायुतम् ॥ १२ ॥

तैलकुण्डिकयुक्तं वा द्विहस्तं वा त्रिहस्तकम् ।
छटादीपं सपक्षं वा विपक्षं वा वितानकम् ॥ १३ ॥

चतुश्चतुःपञ्चपञ्च क्वचिद्व्यत्यस्तकल्पनम् ।
कर्णनासादिसंयुक्तं दशास्थानसमान्वितम् ॥ १४ ॥

शतपत्रस्थानयुतं सहस्रकलशन्तु वा ।
पत्रतोरणरूपं वा लतातोरणरूपकम् ॥ १५ ॥

---

लोहमयं मध्यदारुसहितं दीपपात्रं लम्बनीयम् । तत्र मध्यदण्डस्य अधःस्थले एकादशसंख्यतैलशरावकदीपस्थापनं, तदुपरि नवशरावकदीपस्थापनं, तदुपरि सप्ततैलशरावकदीपस्थापनं इत्यादिक्रमभासुरकल्पनं कल्पनीयम् ॥

अथवा देवालयेषु स्थलेषु देवबिम्बपश्चाद्भागस्थापनीयप्रभाकारवद्दारुभिः सुवेष्टिकादिभिर्लोहपटलैर्वा प्रभाकाररचनां द्वारभित्त्युभयपार्श्वकेषु विरचय्य, तस्य दण्डस्याधोभागं विना भागत्रयेऽपि तत्र तत्रायुतदीपशरावकं वा शताधिकदीपशरावकं वा, क्वचिद्गोपुरदुर्गनृपप्रासादद्वारादिभागेषु सहस्रदीपशरावकं वा स्थापयेत् ॥

अथवा क्वचिन्मण्डपाङ्गणादिस्थानेषु, शालादिषु, लतातोरणाकारानेकदीपपात्रस्थापनमपि शस्तं भवति । किञ्च सर्वत्र

नानाबिम्बसमोपेतं प्रपारूपं क्वचिन्मतम् ।
युक्त्या प्रकल्पयेत्तत्तत्कल्पनार्हं मनोहरम् ॥ १६ ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे
पोतिकालक्षणकथनं नाम
एकोनषष्टितमोऽध्यायः ॥

---

एतादृशदीपपात्रेषु दर्वीयोजनकरपट्टिकासंयोजनादिकमपि अवश्यं कार्यम् । किञ्चात्र दीपभाजनेषु शताधिकदशास्थानमुखभागेषु एकद्वित्र्यादिपरिमितदीपदशामुखभागेषु, कर्णनासादिमुखपत्र-विन्यासं नानारूपं योजयेदित्यपि चोपदेशः ॥

किञ्च क्वचित्क्वचिद्ग्रामगृहद्वारभित्त्यन्तस्थानेषु विविध-रूपेषु स्थलान्तरेष्वपि पञ्चषाङ्गुलनिम्नभिष्टिकादीपस्थानं च विरचय्य तन्मध्ये मृन्मयदीपशरावकं वा स्थापयेदिति च क्रमः । किञ्च गृहादिनिर्माणेषु तत्र तत्र युक्त्या स्थलानुगुणं दीपपात्रदीपशरावकादिस्थापनमेव रात्र्यादिसमयेषु सर्वेषां जीवानां हितारोग्यादये भवतीति स्पष्टमेव ॥

एतावता प्रबन्धेन शिलामयनारीकरधृतदीपपात्रकल्पनं वा, दारुलोहादिमिश्रितदीपशरावकल्पनं वा, शृङ्खलालम्बित-मेकादशोपेतदीपकल्पनं वा क्षुद्रगृहादिष्विष्टिकारूपदीपकल्पनं वा कर्तुं तत्तत्स्थलादिप्रमाणज्ञशिल्पी स्वयमेवोह्याचार्योपदेशक्रमा-

अथ चत्वरलक्षणकथनं नाम

## षष्टितमोऽध्यायः ॥

ग्राम्ये नागरिके वापि निर्माणे बहुरूपके ।
दैविके मानवे वापि नानामानविभाजिते ॥ १ ॥

प्रासादन्यायशालासु शालास्वन्यास्वपि क्वचित् ।
चत्वरस्थापनं सर्वप्राणिनां सुखदायकम् ॥ २ ॥

---

दागतमानादिकञ्च परिगृह्य स्थापयेदिति पिण्डितार्थः प्रतिपादितो बोध्यः ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
**पोतिकालक्षणकथनं नाम**
**एकोनषष्टितमोऽध्यायः ॥**



॥ षष्टितमोऽध्यायः ॥

अथास्मिन् षष्टितमेऽध्याये सकलविधगृहादिनिर्माणकल्पनीयचत्वरलक्षणमुदाहरति — **ग्राम्ये नागरिके** इत्यादिना । नानारूपेषु देवालयकल्पनेषु ग्रामनगरादिवास्तुस्थानेषु स्थापितब्राह्मणक्षत्रियवैश्यशूद्रादिगृहभवनप्रासादादिषु बहुविधकल्पनेषु, न्यायशालावैद्यशालापाठशालासङ्गीतशालावाजिशालाहस्तिशालागो-

वास्तुपूरुषनेत्रं तदाहुश्शिल्पविशारदाः ।
तस्मात्तत्कल्पयेच्छिल्पी यथामानं यथास्थलम् ॥ ३ ॥

वार्स्थलाख्यं केवलं वा कल्पनं तद्द्विधा मतम् ।
समसूत्रं पार्श्वसूत्रं कल्पसूत्रमथापि वा ॥ ४ ॥

---

शालादिविविधशालाकल्पनेषु अन्येष्वपि निर्माणेषु, चत्वरस्थापनमवश्यं कार्यमिति शास्त्रकारोपदेशः ॥ २ ॥

किञ्चैतादृशचत्वरस्थापनेन किंवा प्रयोजनमिति चेत, तत्फलं ध्वनिना प्रतिपादयति — वास्तुपूरुषनेत्रं तदिति । अस्य विशदार्थो यथा— तच्चत्वरस्थलं वास्तुपुरुषस्य नेत्रं भवति । यथा वा पुरुषस्य लोके नयनेन सर्वविधश्रेयःप्राप्तिः, तथा निर्माणस्य चत्वरस्थापनेन फलप्राप्तिरिति ध्वन्यर्थो ज्ञेयः । किञ्च वास्तुभूमौ शयालोर्वास्तुनाथस्य नेत्रस्थानभाग एव चत्वरस्थापनमिदं कार्यमित्यप्यर्थो ध्वन्यते । तस्मान्मानवगेहादिषु विशेषतो मानज्ञः शिल्पी चत्वरकल्पनं यथास्थलं कल्पनानुकूलं स्थापयेदिति क्रमः । किञ्च तच्च चत्वरस्थापनं द्विविधं भवति । यथा — वार्स्थलाख्यं, केवलमिति । वार्स्थलन्तु सूर्यातपचन्द्रिकावर्षसलिलादिपतनस्थानम् । केवलन्तु चत्वरस्थानं पूर्वोक्तरीत्या तत्र तत्र नवरङ्गकल्पनचतुरश्रमण्टपादिस्थलमिति तद्विवेकः ॥

अपि च तादृशचत्वरकल्पनस्य वैशाल्यादिप्रमाणं किय-

प्रयोज्य स्थापयेच्छिल्पी कल्पनार्हेक्षमाक्रियम् ।
एकं द्विकं त्रिकं वापि नानासंख्यं क्वचित्स्थले ॥ ५ ॥

---

द्वेति चेत्तदाह — सममूत्रमिति । गृहभवनप्रासादादिकल्पनस्य यदि वैशाल्याधिक्यप्रमाणं कृतं तदत्रापि चत्वरे वैशाल्याधिक्यप्रमाणं युक्तम । यदि तत्र कल्पने दैर्घ्याधिक्यमत्रापि तदिति तदर्थो बोध्यः । इदं प्रायिकलक्षणमिति भावः । मतान्तररीत्याऽस्य चत्वरस्थानस्य लक्षणमाह — कल्पसूत्रमथापि वेति । अस्य विशदार्थो यथा — तत्र तत्र गृहादिकल्पनेषु यजमानविभवादिना वा ऐच्छिकेन वा स्थललाभादिना वा क्वचिन्नगरादिषु कल्पितभवनान्तर्गतनानाविधक्षुद्रगृहनिर्माणप्रमाणानुगुण्येन वा चत्वरकरणं करणीयमित्यर्थः फलति । तथा चैकदण्डादिदशदण्डावधिकप्रमाणयुतं चत्वरस्थापनं सुखप्रदम् ॥

क्वचिद्ग्रामगृहादिषु भूपालप्रासादादिप्रदेशेषु वा दशदण्डाधिकवैशाल्यशालिन्याश्चत्वरभागभूमेर्यदि लाभस्तदा किं कर्तव्यमिति चेत्तद्विवृणोति — एकं द्विकं त्रिकं वापीति । तादृशस्थलवैशाल्यानुगुणं प्रथमावरणकल्पनं, कल्याणशालादिकल्पनं विधाय, ततः पश्चाद्भागे क्षुद्रगृहादिनिर्माणञ्च कारयित्वा पुनरपि द्वितीयचत्वरस्थापनं ततः पश्चाद्भागे तृतीयचत्वरस्थापनमित्येवं क्रमतश्चत्वरकल्पनं स्थापनीयमिति भावः ॥

द्विहस्तं सार्धहस्तं वा हस्तं वापि तदर्धकम् ।

---

अथवा यजमानस्थपतिप्रमुखानां इच्छायां सत्यामेकस्मिन्नेव स्थले तादृशवैशाल्यवति सव्यभागे पृथक्पृथक्चत्वरद्वयं दक्षिणभागे च तयैव शैल्या पृथक्पृथगेव चत्वरद्वयञ्च स्थापयित्वा तेषां मध्ये कल्पनां परप्राप्त्यर्थं अङ्गणशालाकूटादिनिर्माणं कार्यमिति भावः । एवमेकस्मिन्नेव स्थले कल्पितानां तेषां चत्वराणां प्रमाणे तु परस्परं न न्यूनताऽधिकता योज्या । किन्तु तुल्यप्रमाणचित्रादिरचनैव शस्ता तेषामिति शिल्पविदामाशयः ॥

किञ्चानेनैव प्रकारेण नगरकृतभवनादिनिर्माणेष्वपि विवाह-शालासमीपे ततः पश्चाद्भागे भोजनशालासमीपे वा स्थलान्तरे कल्पितानां चत्वराणाञ्च समप्रमाणयोजनमेव शस्तमिति भावः । तथा चैकस्मिन्नेव गृहादिनिर्माणे बहूनामपि चत्वराणां समप्रमाण-योजनमेव शास्त्रसम्मतम् । क्वचिद्वैशाल्याधिक्यचत्वरस्थापनं, स्थलान्तरे दैर्घ्याधिक्यचत्वरस्थापनमित्यादिक्रमस्तु अधमपक्षद्योतक इति भावः ॥

एतावता वाक्येन चत्वरस्य वैशाल्यादिप्रमाणक्रममुक्त्वा तस्य निम्नतादिप्रमाणमाह — **द्विहस्तमित्यादिना** । क्वचिन्न्याय-शालादिकल्पनस्थापितचत्वरस्य तत्पार्श्वस्थिताङ्गणतलाद्विहस्त-प्रमाणनिम्नं कार्यम् । क्वचित्सार्धैकहस्तप्रमाणनिम्नं, क्वचिदेकहस्त-प्रमाणनिम्नं अथवा क्वचिद्ग्रामगृहादिषु अर्धहस्तनिम्नं वा

अङ्गणान्निम्नकं तस्य कल्पयेत्सर्वकल्पने ॥ ६ ॥

प्रणालीसंयुतं प्रायः संवृतास्यं प्रकल्पयेत् ।
परितश्शालकं वापि कूटं वाऽङ्गणकल्पनम् ॥ ७ ॥

---

स्थापनीयमिति क्रमः । किञ्च तादृशवैशाल्यनिम्नताद्युपेतस्य चत्वरस्येशानादिकोणभागेषु प्रायशः प्रणालीकल्पनं कल्पनीयम् । अथवा क्वचित्तत्रत्यकल्पनानुगुणमीशानवासवदिङ्मध्यभागे वा वासवाग्नेयदिङ्मध्यभागे वाऽऽग्नेयतले वा, एवंरीत्या तत्तत्कल्पनानुगुणं संवृतास्यमपि सलिलादिप्रवेशार्हरन्ध्रयुतं क्षुद्रप्रमाणप्रणालीमहाप्रणाल्यादिकं दृढाश्मभिर्वा, सुतप्तघनेष्टिकाभिर्वा स्थापयित्वा सुधालेपनादिकं मूषकाद्युत्त्रुटनानुदयाय चिरकालस्थितये कार्यमित्युपदेशः ॥ ६ ॥

किञ्चैवंप्रकारेण पार्श्वभागस्थितं वाऽङ्गणतलात् चत्वरस्य निम्नप्रमाणं, तत्र च क्वचिद्भागे स्थापनीयप्रणालीसंस्थापनं चोक्त्वाऽद्य तादृशचत्वरं परितः कल्पनीयकल्पनक्रममाह—**परितश्शालकमित्यादिना** ॥

ग्रामगृहेषु वा नगरकृतभवनसदनप्रासादादिकल्पनेषु वा कल्पितस्य चत्वरस्य समीपे परितः एकदण्डाद्यायामयुतमङ्गणकल्पनं स्थापनीयम् । अथवा चत्वरसमीपे विवाहशालादिसौध-

स्तम्भभित्त्यादिसूत्रेण विरुद्धं कल्पनं मिथः ।
योजयेत्सममानं वा मध्यवेशाङ्गणं क्वचित् ॥ ८ ॥

वास्थले कल्पने नानारूपे भागविराजिते ।

---

निर्माणे कृते तदा तत्कल्पनानुगुणं द्विदण्डाद्यायामयुतं कूटकल्पनं वा, दण्डत्रयाद्यायामादिभासुरपार्श्वशालाकल्पनं वा, प्रकल्पयेदिति तत्क्रमः । एवं स्थलविभववाञ्छाद्यनुगुणं नानारूपाणां कल्पनानां स्थापनं कृतमपि एतच्चत्वरवैशाल्यदैर्घ्याद्यविरुद्धं तादृशपार्श्वकल्पन-स्तम्भस्थापन भित्तिस्थापनवलभीगोपानसीप्रमुखकल्पनस्थापनादिकं प्रकल्पनीयमित्यर्थः ॥

किञ्चैतादृशचत्वरस्य समन्ततश्शालादिकल्पने कृते यदि क्वचिद्भवनसदनप्रासादादिषु तादृशशालाकल्पनमध्यतलादेक-दण्डाद्यायामभासुराङ्गणमेकं तच्चत्वरमध्यतलपाति कारयित्वा तदनुगुणमेव तिर्यगङ्गणकल्पनमपि दारुमयस्तम्भोपेतं वा, शिलालोहेष्टिकादिकृतस्तम्भोपेतं वा करणीयमिति शिल्पसमयः । एवञ्चत्वरमध्यभागे तिर्यग्रूपाङ्गणकल्पनं साच्छादनप्रवेशमार्ग-कल्पनञ्च कालिङ्गीशूरसेनीशैल्योरेवाभिमतम् । क्वचिद्द्राविडशैल्या-मप्येवं रचयन्त्यर्वाचीनाः स्थपतिप्रमुखा इति समयः ॥

किञ्चैतादृशचत्वरकल्पनस्याष्टास्वपि दिग्भागेषु प्रान्तशिला-पट्टिकोर्ध्वभागेषु क्वचित्कुमारादिपतनभयनिवारणार्थं शोभायै

करपट्टिक्रयोपेतं शृङ्खलान्वितमेव वा ॥ ९ ॥

फलकावृतभागं वा सरन्ध्रं वा क्वचिन्मतम् ।
अङ्गणस्तम्भसंयुक्तमथवा स्तम्भकल्पनम् ॥ १० ॥

स्तम्भनेत्रं द्वारनेत्रं मुखनेत्रं क्रमान्नयेत् ।
केवलं ग्रामनिर्माणेष्विदमाहुर्मनीषिणः ॥ ११ ॥

---

च द्विहस्तप्रमाणोन्नतिकसरन्ध्रसचित्रदारुमयलोहमयशिलामयादि-पट्टिकास्थापनं कार्यम् । न तु ग्रामगृहचत्वरादिस्थानेष्विति भावः । अथवैतादृशपट्टिकास्थापनाद्यकरणे द्वित्रिचतुस्संख्यादिशृङ्खलायोजनं वा कार्यम् । अथवैककिष्कुप्रमाणोन्नतफलकायोजनमिति वाञ्छानु-गुणकल्पनाविकल्पः ॥

किञ्चात्र चत्वरस्थाने क्वचिद्भवनप्रासादादिष प्रान्तभागेषु अङ्गणस्थानेष्विव स्तम्भस्थापनमपि कार्यम् । एतदकरणेऽपि न दोषायेति मतिः । किञ्च तत्र कोऽपि विशेषो यथा — एतादृश-स्तम्भस्याङ्गणप्रान्तभागस्थापितस्तम्भस्य च मिथः सम्मेलनं नाना-चित्रविन्यासञ्च स्थापयेत् । इयन्तु शैली पाञ्चालमागधकोसलेषु क्वचिद्द्राविडेषु च प्रसिद्धेति भावः । किञ्चैतादृशस्तंभस्थापनशैल्या संपादितं स्तम्भमध्यभागाङ्गणन्त्वेकं, द्वयमथवा त्रयं, यथा वा तत्तद्भागानुगुणं भवेत् तथा प्रतिभागं मनोहरं चित्ररचना कार्येति प्रसिद्धिः ॥

शावलोर्ध्वगभागाद्वा भौमस्योर्ध्वतलादपि ।
नानावरणिकस्थानाज्जलपातं प्रकल्पयेत् ॥ १२ ॥

पाते घनं शिलं वापि तन्मयं वा सुधेष्टकम् ।
मुखसोपानसंयुक्तं मुखपट्टादिभूषितम् ॥ १३ ॥

प्रान्तभागे शिला स्थाप्या साधिष्ठानाऽथ केवला ।
मध्यवेदीकल्पनं वा प्रान्ते वा तत्प्रकल्पनम् ॥ १४ ॥

एकद्वित्र्यादिनिर्माणयोग्यं सर्वत्र कारयेत् ।
कल्पनङ्कल्पयेद्युक्त्या वीथीमानप्रमाणकम् ॥ १५ ॥

गेहव्यासार्धभागं वा तदर्धं वा तदर्धकम् ।

---

किञ्चैतादृशरचनादिभासुरस्य चत्वरस्य प्रान्तभागेषु वर्षधारासलिलपतनस्थानेषु दृढशिलास्थापनं कार्यम । अथवा वित्तादिविभवसंभवे तादृशचत्वरभूतलं साकल्येन शिलाखण्डमयं सचित्रं रन्ध्रनिम्नत्वोन्नतत्वादिदोषहीनं प्रकल्पयेत् । अथापि तत्र सलिलस्रावार्थं प्रणालीसमीपे यथास्थलप्रमाणं किञ्चिदवाङ्मुखत्वं कल्पनीयमित्युपदेशः ॥

किञ्च चत्वरप्रान्तभागेषूपरिसौधतलात्सलिलपातस्थानमेकं, द्वयं त्रयं वा कार्यम् । क्वचिद्ग्रामगृहादिस्थलेषु सर्वत्र समन्ततो यथा जलधारापतनं तथा शावलकादि (௲) विन्यासं कार्यमिति च क्रमः । अथवा सुधेष्टिकाचिक्कणादिमसृणस्थापनादिकं कार्य-

मध्यभागस्थलोपेतं तिर्यग्भागस्थलान्वितम् ॥ १६ ॥
क्षुद्रचत्वरनिर्माणं भौमयोग्यं प्रकल्पयेत् ।
द्वारकल्पस्तम्भकल्पभित्तिकल्पादिहीनकम् ॥ १७ ॥
कूपकल्पविहीनञ्च समस्तत्रप्रसारकम् ।
न्यूनातिरेकहीनञ्च कल्पयेत्स्थलमानवित् ॥ १८ ॥
दशभागादष्टभागं षड्भागञ्चतुरंशकम् ।
लतापुष्पादिचित्राढ्यं श्लक्ष्णभूतलभासुरम् ॥ १९ ॥
स्तम्भान्धारिकयुक्तं वा पटल्यादियुतं क्वचित् ।
स्थापयेत्कल्पनान्ते वा चत्वरस्य प्रकल्पनम् ॥ २० ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे
चत्वरलक्षणकथनं नाम
षष्टितमोऽध्यायः ॥

---

मिति चोपदेशः । अपि चात्र चत्वरस्थलेऽत्यगाधे एकत्र वोभयपक्षयोश्चतुर्ष्वपि वा भागेष्वङ्गणतलाच्चत्वरावरोहणार्थं त्रिचतुःपञ्चषसोपानकल्पनमपि स्थापनीयम् । किञ्चैतादृशसोपानेषु तत्समीपस्थलेषु चत्वरमध्यतलेषु नानालताकुसुमपत्रादिरचना कार्या । किञ्च केषुचिद्देशेषु अत्र चत्वरकल्पने चत्वरमध्यतले सावरणा बृहती वेदिका वा, निरावरणा बृहती वेदिका वा, कलशशिखरादिसहिता वा स्थापनीयेति भावः । तथा चैतादृश-

अथ सन्धिबन्धकथनं नाम

**एकषष्टितमोऽध्यायः ॥**

**सन्धिबन्धस्तु सर्वत्र कल्पदार्ढ्याय कल्पते ।**
**तद्विना विफलं कर्म सुखञ्च न भवेद्ध्रुवम् ॥ १ ॥**

---

प्रमाणकल्पनक्रमलक्षणादिरीत्या ग्रामनगरादिकल्पिततत्तद्गृह-भवनादिस्थलानुगुणं चत्वरकल्पनमवश्यं कार्यमिति पिण्डितार्थो ज्ञेयः । तस्मात्स्थपतितक्षकक्रकशकारादयस्तत्र तत्र कल्पितगृहादि-कल्पनानुगुणं प्रमाणादिकं प्रथमत एव स्वयमूह्य यथाविभवं चत्वरं स्थापयेयुरिति लक्षणवाक्यार्थः । स्पष्टमन्यत् ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
**चत्वरलक्षणकथनं नाम**
**षष्टितमोऽध्यायः ॥**



**॥ एकषष्टितमोऽध्यायः ॥**

एतावता प्रबन्धेन प्रतिपादितानां नानारूपाणां शिला-लोहदार्विष्टिकादिकल्पितगृहभवनमण्टपस्तम्भगोपुरकवाटगवाक्षपीठ शिबिकादीनां सन्धिबन्धनलक्षणकथनात्मकमेकषष्टितमाध्याय-मारभते — **सन्धिबन्धस्त्वित्यादिना** ॥

तस्मात्तद्योजयेद्युक्त्या स्थपत्याज्ञानुवर्तिनः ।
ऊर्ध्वमानमधोमानं पार्श्वमानं प्रकल्पयेत् ॥ २ ॥

---

एवमुक्तरीत्या सर्वविधनिर्माणकार्येष्वपि तत्र तत्र बहुभागेषु घनसन्धिबन्धनिर्माणमेव दार्ढ्यादये भवति । एतादृशघनसन्धिबन्धक्रियां विना क्लृप्तं सर्वविधकल्पनजालं व्यर्थमेव स्यात्, न प्राणिनां सुखकरञ्चेत्यादिविषयस्तु स्पष्ट एव लोके । तस्मात्स्थपतितक्षकलोहकारकंकशकारादिभिस्स्वस्वकार्येषु तत्तत्कल्पनद्रव्यार्हं सन्धिबन्धनं योजनीयमित्युपदेशः ॥

किञ्च मकरकुण्डलनासामौक्तिकाङ्गदाङ्गुलीयकरवलयनूपुरमेखलादीनां सुवर्णकारकल्पनीयानां सन्धिबन्धरचनाक्रमस्तु शिल्पकलादीपिकायां विस्तरशः प्रतिपादितं; तत्रैव ज्ञेयम् । अत्र तु केवलं तक्षकलोहकारकंकशकारकल्पनीयगृहनिर्माणतदङ्गभूतपीठशिबिकाडोलापर्यङ्किकादीनामेव सन्धिक्रियाक्रमः प्रतिपाद्यत इति भावः ॥

सन्धियोजनं नाम तत्तत्कल्पनानुगुणं विरचितस्तम्भादीनां मौलिभागेषु प्रस्तरदार्वादिस्थापनमिति नानाविधकार्यानुकूलं विरचितानां खण्डानामेकीकरणमित्यर्थः । किञ्चैतादृशसन्धिक्रियाकल्पनार्हं क्वचिदूर्ध्वमानप्रसारणं भित्तिषु, क्वचिदधोमानप्रसारणं स्तम्भादिषु,कचित्सोपानकार्येषु पार्श्वमानप्रसारणं च तास्मिंस्तस्मिन्नेव

शिलैव योज्या शैलेषु चेष्टिकास्विष्टिका सुधा ।
दारुकार्येषु लोहादिः दृढसन्धाय निश्चितः ॥ ३ ॥

तस्माद्युक्त्या यथामानं यथायोगं प्रकल्पयेत् ।
टङ्कादिश्लक्ष्णिते योज्यमन्यथा विफलं भवेत् ॥ ४ ॥

---

कार्यसमये निश्चित्य तदनुगुणं मात्वा यथासौकर्यक्रमं सन्धिक्रियां प्रकल्पयेयुरिति लक्षणवाक्यार्थः । अत्रोक्तमेतत्त्रिविधमानमेव तत्तत्कल्पनान्तरोचितमानान्तराणामप्युपलक्षणं भवति ॥

अत्र सर्वविधसन्धिकल्पनानां द्रव्ययोजनादिक्रममाह — **शिलैव योज्येत्यादिना** । शिलाभिः कल्पितसचित्रस्तम्भप्रस्तरतूलादित्रिविधशिलानिर्माणेषु भागान्तरिकल्पनार्थं प्रायशश्शिलापटल्येव संयोजनीया । एवमिष्टिकानिर्मितभित्त्यादिकल्पनेषु सन्धिकर्मणीष्टिकासुधादिरेव योज्या । दारुफलकाजालैर्विरचितद्वारकवाटगवाक्षडोलाशिबिकापर्यङ्कादिषु लोहमयायःकीलसंयोजनमेव दृढाय भवति । इदं प्रायिकलक्षणम् । एवङ्कल्पनमेव विविधेषु कल्पनेषु तत्तत्कार्यस्थैर्यदार्ढ्यादये भवतीति लोकविदितमेवेत्यर्थः ॥

अस्य विशदार्थस्तु शिलामयस्तम्भमौलिभागेषु किंचिन्निम्नं टङ्कादिना कृत्वा तत्रोपरिभागे प्रस्तरशिलाखण्डकुमुदादिकं प्रवेशयित्वा दृढं तदुपरि निरन्तराच्छादनशिलावलीः प्रकल्पयेत् ।

अङ्गुलादशकं वापि नवकन्त्वष्टकन्तु वा ।
स्थलक्रमात्कीलमानं योजनीयं विचक्षणैः ॥ ५ ॥

नातिरन्ध्रं नातिहीनं न च व्यक्तिकरं मतम् ।
दारुकार्येषु सर्वेषु क्रियाशैली प्रकीर्तिता ॥ ६ ॥

व्यत्यासक्रमतो योज्या इष्टिकादिप्रकल्पने ।
सुधालेपो मध्यभागे दार्ढ्याय परिकल्पते ॥ ७ ॥

---

इत्येवं स्थपतितक्षकप्रमुखैराचार्योपदेशः । स्वयं च युक्त्या तत्तत्कल्पनानुगुणं श्लक्ष्णितघनशिलापटलैः शिलान्तरसंयोजनं कार्यमित्यर्थः ॥

किञ्च गवाक्षकपाटद्वारडोलादिदारुक्रियाजालेष्वङ्गुलदशकं नवाष्टकसप्तकादि यथास्थलप्रमाणं रन्ध्रादिकं, क्वचिन्निम्नतक्षणादिकं विरचय्य तदनुगुणं नातिरन्ध्रस्थलं नातिहीनपरिमितं व्यक्तिरहितं क्वचित्कीलसंयोजनं कार्यम् । सुतप्तघनेष्टिकादिभिः कुड्यादिनिर्माणेषु कम्पपद्मतक्षणरीत्या क्वचिन्मुखभागे वर्धनं, क्वचिदर्धनिम्नतलं, पुनरपि तत्रैव क्वचिन्मुखभागे वर्धनमित्येवं रूपव्यत्यासक्रमेणेष्टिकास्थापनं विरचय्य मध्ये मध्ये सगुडत्वक्सारसलिलमिश्रितसुधालेपनं करणीयम् । अयञ्च क्रमस्सर्वविधेष्टिकानिर्माणेषु सन्धिबन्धनकार्यादिषु नितरां दार्ढ्यप्रद इति भावः ॥ ७ ॥

सिन्दूरमेलनं वापि शिलाचूर्णादिपिष्टिका ।
वज्रबन्धोऽथवा कार्यस्सेतुदुर्गादिषु स्थिरः ॥ ८ ॥

दारुमेलनकं वापि लोहकीलस्य मेलनम् ।
द्वाराणामपि कुड्यानां गवाक्षाणाञ्च मेलने ॥ ९ ॥

स्तम्भमेलनके वापि तूलदार्वादिमेलने ।
सोपानमेलनेष्वेवमधिष्ठानादिमेलने ॥ १० ॥

---

किञ्चात्र सन्धिबन्धनकर्मणि तटाकवापीकूपपरिखासेतुसुषिरादिकल्पनेषु एतादृशसुधेष्टिकादिभिर्भित्तिकल्पने तादृशेष्टकामध्यतलेष्विष्टिकानां मध्येऽतिदार्ढ्योत्पादनार्थं सलिलवीचीप्रमुखैरक्षोभणार्थं च तासामिष्टिकानां मध्यभागे सिन्दूरसंयोजनं शिलाचूर्णसंयोजनञ्च क्वचित्संयोजयित्वा, एतेषां द्रव्याणामप्यतिदार्ढ्यसंपादनाय कूटवज्रबन्धं च निर्मापयेदिति शास्त्रकारोपदेशः । वज्रबन्धो नाम पूर्वोक्तसिन्दूरशिलाचूर्णादिसम्मेलनस्थले टङ्कादिना शश्वत्ताडनदृढीकरणश्लक्ष्णीकरणादिरिति भावः ॥

किञ्च क्वचित्सेतुमार्गपरिखामार्गगोपुरतलभागादिषु मध्यभागे सारदारुफलकामेलनं वा कार्यमिति । किञ्चात्र सन्धिबन्धकर्मणि पूर्वप्रतिपादितरीत्या द्वारकुड्यगवाक्षस्तम्भतूलप्रस्तराधिष्ठानसोपानेषु दारुखण्डफलकादिभिः कल्पितेषु क्वचित फलकादीनां कीलसंयोजनं, क्वचित्कीलपट्टिकासंयोजनञ्च, क्वचित्

सन्धिक्रिया प्रकर्तव्या युक्त्या दार्ढ्याय शिल्पिभिः ।
प्राकाराणां गोपुराणां दुर्गाणामपि कल्पने ॥ ११ ॥

परिखाकल्पनेष्वेवं वापीकूपादिकल्पने ।
भूमिकाकल्पनेष्वेवं पट्टिकादिप्रकल्पने ॥ १२ ॥

सन्धिक्रिया कल्पयोगात्कालयोगात्क्वचित्स्थिरा ।
करनिम्नं भूमिनिम्नं कुंभनिम्नं क्वचिन्मतम् ॥ १३ ॥

खड्गनिम्नं महानिम्नं निम्नं नानाविधं क्वचित् ।
कल्पनार्हं प्रकर्तव्यं शैलदार्विष्टिकास्वपि ॥ १४ ॥

---

सिह्मासनपीठिकादिषु सौवर्णराजतताम्रपित्तलादिलोहपट्टिका-संयोजनञ्च करणीयमिति च क्रमोऽवश्यं कार्यञ्चैज्ञेय इति भावः ॥

किञ्च सोपानादिकल्पने शिलामये, शिलामध्यभागे, सिन्दूरसुधालेपनं, दारुमये सोपानादिकल्पने तन्मध्यभागेऽयः-कीलकरपट्टिकादियोजनमित्यादि क्रमतो नानाविधकल्पनार्हनाना-विधद्रव्यसम्मेलनं यथाप्रमाणं, यथाबलं करणीयमिति लक्षण-वाक्यार्थः ॥

तथाकल्पने क्वचिन्निर्माणेषु करनिम्नाख्यसन्धिबन्धक्रमः, क्वचित्कल्पनेषु कुम्भनिम्नाख्यसन्धिबन्धक्रमः, क्वचिन्महानिम्ना-ख्यसन्धिबन्धक्रम इत्याद्यनेकरूपं सन्धिबन्धनिर्माणसंयोजन-

भित्तिप्रवेशनं वापि शिलायाश्च प्रवेशनम् ।
लोहपट्टप्रवेशं वा दारुकार्यस्य दैर्घ्यकम् ॥ १५ ॥

रथेषु शकटेष्वेवं यानेषु शिबिकासु च ।
डोलास्वन्येषु निर्माणेष्वेवं कीलप्रयोजनम् ॥ १६ ॥

वर्णसंयोगतो वापि तक्षणाच्छलक्ष्णकार्यतः ।
तत्स्थलं कारयेद्गुप्तं घनकल्पनभासुरम् ॥ १७ ॥

नानाभौमाक्रियास्वेवं मण्टपादिक्रियास्वपि ।

---

दृढीकरणवातातपशोषणादिकमेतत्प्रमाणपरिकल्पनादिकं चाचार्योपदेशः कार्यज्ञैरशास्त्रज्ञैरशिल्पिभिरेवावधार्य इति शिल्पसमयविदः ॥

किञ्चालोक्तनिम्नाख्यसन्धिबन्धक्रियाक्रमस्तु शिलाभिरिष्टिकाभिर्दारुभिश्च विविधमानं प्रकल्पितेषु रथशकटयानशिविकाडोलापर्यङ्ककुड्यद्वारादिषु विविधप्रमाणेषु यथाक्रियाक्रमं संयोजनीयमिति भावः । तथा च कुड्यादीनां कोणादिस्थानेषु द्वितीयभौमतृतीयभौमाद्यारोहणार्थं कल्पितसोपानादिस्थानेषु कल्पनान्तरेष्वपि विरचितसन्धावयःकीलाद्यप्रकाशनाय क्वचिच्छ्लक्ष्णीकरणं, क्वचिच्छुक्लपीतरक्तकृष्णादिवर्णभेदेन मनोहरकुसुमादिचित्रकल्पनञ्च यथाशोभं, यथाबलं, यथाप्रमाणं कल्पनीयमित्युपदेशोऽवधार्यः ॥

नावाङ्मुखा नोर्ध्वमुखा दृष्टिदोषविवर्जिता ।
युक्त्या सन्धिक्रिया योज्या यथामानं यथाबलम् ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे
सन्धिबन्धलक्षणकथनं नाम
एकषष्टितमोऽध्यायः ॥

---

किञ्चात्र प्रतिपादितसन्धिकार्यान्तरमानान्तरसंयोजनाक्रिया-क्रमादिकं शिल्पिभिरेवोह्य तत्तत्कार्यानुगुणं यथाक्रमं करणीयमिति ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
**सकलविधसन्धिबन्धलक्षणकथनं नाम**
एकषष्टितमोऽध्यायः ॥



अथ सर्वविधावरणलक्षणकथनं नाम

## द्विषष्टितमोऽध्यायः ॥

यथा वस्त्रेण शोभादिः प्रकृतीनां प्रजायते ।
तथावरणकेनैव निर्माणस्य महत्फलम् ॥ १ ॥

आयव्ययसमायुक्तं तदावरणमुत्तमम् ।
मठे वा मण्डपे वापि गृहे वा भवनेऽपि वा ॥ २ ॥

शालासु वा गोपुरेषु नानानिर्माणभूमिषु ।
दुर्गाणां कल्पने वापि प्राकारादिप्रकल्पने ॥ ३ ॥

---

॥ द्विषष्टितमोऽध्यायः ॥

अथ सर्वविधकल्पनानामावरणलक्षणकथनात्मकं द्विषष्टितमाध्यायमारभते — यथा वस्त्रेणेत्यादिना । तत्रादौ आवरणस्थापनप्रयोजनमाह — वस्त्रेणेति । यथा वा वस्त्रेण सर्वासां प्रजानां शोभारोग्यादिस्सञ्जायते तथा सर्वेषामपि निर्माणानां आच्छादनस्थापनेनैव शोभादार्ढ्यावासयोग्यतादिरुत्पद्यत इति स्फुटमेव । आवरणविहीनकल्पनानां वैफल्यादिकं वासानर्हत्वञ्च सुप्रसिद्धमेवेति भावः । तस्मात्तादृशाच्छादनं क्वचिदायप्रमाणयुतं क्वचित्तत्कल्पनानुगुणं व्ययप्रमाणयुतं च कल्पनीयमित्यर्थः उत्तरवाक्येन स्पष्टीकृतो मूलकारेणेति मतिः ॥

अपि च ग्रामनगरादिवास्तुभागकल्पितमठमण्टपगृहभवन-

दैवेषु कल्पनेष्वेवं शैलमाच्छादनं मतम् ।
कल्पनार्हं प्रकर्तव्यं घनमाच्छादनं शुभम् ॥ ४ ॥

शैलं शाबलकं मिश्रं योजयेत्कल्पनार्हकम् ।
पर्णाद्यावरणं योज्यमुटजादिषु कीर्तितम् ॥ ५ ॥

नवीकुर्याद्गृहपतिः कृत्तिकास्थे दिवाकरे ।
दीपारोपं प्रकुर्वीत चित्रादींश्च यथाक्रमम् ॥ ६ ॥

---

शालागोपुरदुर्गादिविविधनिर्माणेषु, दैवकल्पनराजकल्पनमानवकल्पनमृगादिप्राणिकल्पनाख्येषु यत्र यत्र स्थले क्षुद्रगृहशालालिन्दादिकल्पनं कृतं, तत्र तत्र स्थले तादृशकल्पनोपरिभागेऽवाच्छादनीयं स्थापनीयम् । किञ्च यत्र यत्र स्थले चत्वरादिबाह्यस्थलकल्पनं कृतं तत्रावरणकल्पनं न कार्यमेव । अयमेव क्रम आयव्ययपदार्थ इति भावः । तस्माद्गृहभवनहर्म्यप्रासादमठमण्टपन्यायशालामृगशालादि सर्वनिर्माणेष्वपि भूतलभागकल्पितनिर्माणानुगुणं घनमाच्छादनं वर्षाकालादिसमयवर्षितघनसलिलधाराप्रस्रवणयोग्यं स्थापयेदित्युपदेशः ॥

किञ्चैतादृशाच्छादनस्थापनन्तु त्रिविधं भवति—शैलावरणं, शावलकावरणं, मिश्रितावरणमिति । पर्णाद्यावरणं कचित्कचित् पर्णशालादिषूपरि स्थापनीयमिति भावः । तादृशपर्णाच्छादनसहितोटजादिकं प्रतिसंवत्सरं कृत्तिकाराशिस्थिते सूर्ये जीर्णपर्णा-

सिन्दूरमेलनं वापि शिलाचूर्णादिपिष्टिका ।
वज्रबन्धोऽथवा कार्यस्सेतुदुर्गादिषु स्थिरः ॥ ८ ॥

दारुमेलनकं वापि लोहकीलस्य मेलनम् ।
द्वाराणामपि कुड्यानां गवाक्षाणाञ्च मेलने ॥ ९ ॥

स्तम्भमेलनके वापि तूलदार्वादिमेलने ।
सोपानमेलनेष्वेवमधिष्ठानादिमेलने ॥ १० ॥

---

किञ्चात्र सन्धिबन्धनकर्मणि तटाकवापीकूपपरिखासेतुसुषिरादिकल्पनेषु एतादृशसुधेष्टिकादिभिर्भित्तिकल्पने तादृशेष्टकामध्यतलेष्विष्टिकानां मध्येऽतिदार्ढ्योत्पादनार्थं सलिलवीचीप्रमुखैरक्षोभणार्थं च तासामिष्टिकानां मध्यभागे सिन्दूरसंयोजनं शिलाचूर्णसंयोजनञ्च क्वचित्संयोजयित्वा, एतेषां द्रव्याणामप्यतिदार्ढ्यसंपादनाय कूटवज्रबन्धं च निर्मापयेदिति शास्त्रकारोपदेशः । वज्रबन्धो नाम पूर्वोक्तसिन्दूरशिलाचूर्णादिसम्मेलनस्थले टङ्कादिना शश्वत्ताडनदृढीकरणश्लक्ष्णीकरणादिरिति भावः ॥

किञ्च क्वचित्सेतुमार्गपरिखामार्गगोपुरतलभागादिषु मध्यभागे सारदारुफलकामेलनं वा कार्यमिति । किञ्चात्र सन्धिबन्धकर्मणि पूर्वप्रतिपादितरीत्या द्वारकुड्यगवाक्षस्तम्भतूलप्रस्तराधिष्ठानसोपानेषु दारुखण्डफलकादिभिः कल्पितेषु क्वचित् फलकादीनां कीलसंयोजनं, क्वचित्कीलपट्टिकासंयोजनञ्च, क्वचित्

सन्धिक्रिया प्रकर्तव्या युक्त्या दार्ढ्याय शिल्पिभिः ।
प्राकाराणां गोपुराणां दुर्गाणामपि कल्पने ॥ ११ ॥

परिखाकल्पनेष्वेवं वापीकूपादिकल्पने ।
भूमिकाकल्पनेष्वेवं पट्टिकादिप्रकल्पने ॥ १२ ॥

सन्धिक्रिया कल्पयोगात्कालयोगात्क्वचित्स्थिरा ।
करनिम्नं भूमिनिम्नं कुंभनिम्नं क्वचिन्मतम् ॥ १३ ॥

खड्गनिम्नं महानिम्नं निम्नं नानाविधं क्वचित् ।
कल्पनार्हं प्रकर्तव्यं शैलदार्विष्टिकास्वपि ॥ १४ ॥

---

सिंहासनपीठिकादिषु सौवर्णराजतताम्रपित्तलादिलोहपट्टिका-संयोजनञ्च करणीयमिति च क्रमोऽवश्यं कार्यश्चैर्ज्ञेय इति भावः ॥

किञ्च सोपानादिकल्पने शिलामये, शिलामध्यभागे, सिन्दूरसुधालेपनं, दारुमये सोपानादिकल्पने तन्मध्यभागेऽयः-कीलकरपट्टिकादियोजनमित्यादि क्रमतो नानाविधकल्पनार्हनाना-विधद्रव्यसम्मेलनं यथाप्रमाणं, यथाबलं करणीयमिति लक्षण-वाक्यार्थः ॥

तथाकल्पने क्वचिन्निर्माणेषु करनिम्नाख्यसन्धिबन्धक्रमः, क्वचित्कल्पनेषु कुम्भनिम्नाख्यसन्धिबन्धक्रमः, क्वचिन्महानिम्ना-ख्यसन्धिबन्धक्रम इत्याद्यनेकरूपं सन्धिबन्धनिर्माणसंयोजन-

भित्तिप्रवेशनं वापि शिलायाश्च प्रवेशनम् ।
लोहपट्टप्रवेशं वा दारुकार्यस्य दैर्घ्यकम् ॥ १५ ॥

रथेषु शकटेष्वेवं यानेषु शिबिकासु च ।
डोलास्वन्येषु निर्माणेष्वेवं कीलप्रयोजनम् ॥ १६ ॥

वर्णसंयोगतो वापि तक्षणाच्छ्लक्ष्णकार्यतः ।
तत्स्थलं कारयेद्गुप्तं घनकल्पनभासुरम् ॥ १७ ॥

नानाभौमाक्रियास्वेवं मण्टपादिक्रियास्वपि ।

---

दृढीकरणवातातपशोषणादिकमेतत्प्रमाणपरिकल्पनादिकं चाचार्योपदेशः कार्यज्ञैश्शास्त्रज्ञैश्शिल्पिभिरेवावधार्य इति शिल्पसमयविदः ॥

किञ्चात्रोक्तनिम्नाख्यसन्धिबन्धक्रियाक्रमस्तु शिलाभिरिष्टिकाभिर्दारुभिश्च विविधमानं प्रकल्पितेषु रथशकटयानशिबिकाडोलापर्यङ्ककुड्यद्वारादिषु विविधप्रमाणेषु यथाक्रियाक्रमं संयोजनीयमिति भावः । तथा च कुड्यादीनां कोणादिस्थानेषु द्वितीयभौमतृतीयभौमाद्यारोहणार्थं कल्पितसोपानादिस्थानेषु कल्पनान्तरेष्वपि विरचितसन्धावयःकीलाद्यप्रकाशनाय क्वचिच्छ्लक्ष्णीकरणं, क्वचिच्छुक्लपीतरक्तकृष्णादिवर्णभेदेन मनोहरकुसुमादिचित्रकल्पनञ्च यथाशोभं, यथाबलं, यथाप्रमाणं कल्पनीयमित्युपदेशोऽवधार्यः ॥

नावाङ्मुखा नोर्ध्वमुखा दृष्टिदोषविवर्जिता ।
युक्त्या सन्धिक्रिया योज्या यथामानं यथाबलम् ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे
सन्धिबन्धलक्षणकथनं नाम
**एकषष्टितमोऽध्यायः ॥**

---

किञ्चात्र प्रतिपादितसन्धिकार्यान्तरमानान्तरसंयोजनाक्रिया-क्रमादिकं शिल्पिभिरेवोह्य तत्तत्कार्यानुगुणं यथाक्रमं करणीयमिति ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्याया
विश्वकर्मवास्तुशास्त्रव्याख्यायां
**सकलविधसन्धिबन्धलक्षणकथनं नाम**
**एकषष्टितमोऽध्यायः ॥**



अथ सर्वविधावरणलक्षणकथनं नाम

## द्विषष्टितमोऽध्यायः ॥

यथा वस्त्रेण शोभादिः प्रकृतीनां प्रजायते ।
तथावरणकेनैव निर्माणस्य महत्फलम् ॥ १ ॥

आयव्ययसमायुक्तं तदावरणमुत्तमम् ।
मठे वा मण्डपे वापि गृहे वा भवनेऽपि वा ॥ २ ॥

शालासु वा गोपुरेषु नानानिर्माणभूमिषु ।
दुर्गाणां कल्पने वापि प्राकारादिप्रकल्पने ॥ ३ ॥

---

॥ द्विषष्टितमोऽध्यायः ॥

अथ सर्वविधकल्पनानामावरणलक्षणकथनात्मकं द्विषष्टितमाध्यायमारभते — **यथा वस्त्रेण**त्यादिना । तत्रादौ आवरणस्थापनप्रयोजनमाह — वस्त्रेणेति । यथा वा वस्त्रेण सर्वासां प्रजानां शोभारोग्यादिस्सञ्जायते तथा सर्वेषामपि निर्माणानां आच्छादनस्थापनेनैव शोभादार्ढ्यावासयोग्यतादिरुत्पद्यत इति स्फुटमेव । आवरणविहीनकल्पनानां वैफल्यादिकं वासानर्हत्वञ्च सुप्रसिद्धमेवेति भावः । तस्मात्तादृशाच्छादनं क्वचिदायप्रमाणयुतं क्वचित्तत्कल्पनानुगुणं व्ययप्रमाणयुतं च कल्पनीयमित्यर्थः उत्तरवाक्येन स्पष्टीकृतो मूलकारेणेति मतिः ॥

अपि च ग्रामनगरादिवास्तुभागकल्पितमठमण्टपगृहभवन-

दैवेषु कल्पनेष्वेवं शैलमाच्छादनं मतम् ।
कल्पनार्हं प्रकर्तव्यं घनमाच्छादनं शुभम् ॥ ४ ॥

शैलं शावलकं मिश्रं योजयेत्कल्पनार्हकम् ।
पर्णाद्यावरणं योज्यमुटजादिषु कीर्तितम् ॥ ५ ॥

नवीकुर्याद्गृहपतिः कृत्तिकास्थे दिवाकरे ।
दीपारोपं प्रकुर्वीत चित्रादींश्च यथाक्रमम् ॥ ६ ॥

---

शालागोपुरदुर्गादिविविधनिर्माणेषु, दैवकल्पनराजकल्पनमानवकल्पनमृगादिप्राणिकल्पनाख्येषु यत्र यत्र स्थले क्षुद्रगृहशालालिन्दादिकल्पनं कृतं, तत्र तत्र स्थले तादृशकल्पनोपरिभागेऽप्याच्छादनीयं स्थापनीयम् । किञ्च यत्र यत्र स्थले चत्वरादिवास्थलकल्पनं कृतं तत्रावरणकल्पनं न कार्यमेव । अयमेव क्रम आयव्ययपदार्थ इति भावः । तस्माद्गृहभवनहर्म्यप्रासादमठमण्टपन्यायशालामृगशालादि सर्वनिर्माणेष्वपि भूतलभागकल्पितनिर्माणानुगुणं घनमाच्छादनं वर्षाकालादिसमयवर्षितघनसलिलधाराप्रस्रवणयोग्यं स्थापयेदित्युपदेशः ॥

किञ्चैतादृशाच्छादनस्थापनन्तु त्रिविधं भवति—शैलावरणं, शावलकावरणं, मिश्रितावरणमिति । पर्णाद्यावरणं क्वचित्क्वचित् पर्णशालादिषूपरि स्थापनीयमिति भावः । तादृशपर्णाच्छादनसहितोटजादिकं प्रतिसंवत्सरं कृत्तिकाराशिस्थिते सूर्ये जीर्णपर्णा-

अथ सर्वविधावरणलक्षणकथनं नाम

## द्विषष्टितमोऽध्यायः ॥

यथा वस्त्रेण शोभादिः प्रकृतीनां प्रजायते ।
तथावरणकेनैव निर्माणस्य महत्फलम् ॥ १ ॥

आयव्ययसमायुक्तं तदावरणमुत्तमम् ।
मठे वा मण्डपे वापि गृहे वा भवनेऽपि वा ॥ २ ॥

शालासु वा गोपुरेषु नानानिर्माणभूमिषु ।
दुर्गाणां कल्पने वापि प्राकारादिप्रकल्पने ॥ ३ ॥

---

॥ द्विषष्टितमोऽध्यायः ॥

अथ सर्वविधकल्पनानामावरणलक्षणकथनात्मकं द्विषष्टितमाध्यायमारभते — **यथा वस्त्रेणे**त्यादिना । तत्रादौ आवरणस्थापनप्रयोजनमाह — **वस्त्रेणे**ति । यथा वा वस्त्रेण सर्वासां प्रजानां शोभारोग्यादिस्सञ्जायते तथा सर्वेषामपि निर्माणानां आच्छादनस्थापनेनैव शोभादाढ्यावासयोग्यतादिरुत्पद्यत इति स्फुटमेव । आवरणविहीनकल्पनानां वैफल्यादिकं वासानर्हत्वञ्च सुप्रसिद्धमेवेति भावः । तस्मात्तादृशाच्छादनं कचिदायप्रमाणयुतं कचित्तत्कल्पनानुगुणं व्ययप्रमाणयुतं च कल्पनीयमित्यर्थः उत्तरवाक्येन स्पष्टीकृतो मूलकारेणेति मतिः ॥

अपि च ग्रामनगरादिवास्तुभागकल्पितमठमण्टपगृहभवन-

दैवेषु कल्पनेष्वेवं शैलमाच्छादनं मतम् ।
कल्पनार्हं प्रकर्तव्यं घनमाच्छादनं शुभम् ॥ ४ ॥

शैलं शाद्वलकं मिश्रं योजयेत्कल्पनार्हकम् ।
पर्णाद्यावरणं योज्यमुटजादिषु कीर्तितम् ॥ ५ ॥

नवीकुर्याद्गृहपतिः कृत्तिकास्थे दिवाकरे ।
दीपारोपं प्रकुर्वीत चित्रादींश्च यथाक्रमम् ॥ ६ ॥

---

शालागोपुरदुर्गादिविविधनिर्माणेषु, दैवकल्पनराजकल्पनमानवकल्पनमृगादिप्राणिकल्पनाख्येषु यत्र यत्र स्थले क्षुद्रगृहशालालिन्दादिकल्पनं कृतं, तत्र तत्र स्थले तादृशकल्पनोपरिभागेऽवाच्छादनीयं स्थापनीयम् । किञ्च यत्र यत्र स्थले चत्वरादिबाह्यस्थलकल्पनं कृतं तत्रावरणकल्पनं न कार्यमेव । अयमेव क्रम आयव्ययपदार्थ इति भावः । तस्माद्गृहभवनहर्म्यप्रासादमठमण्टपन्यायशालामृगशालादि सर्वनिर्माणेष्वपि भूतलभागकल्पितनिर्माणानुगुणं घनमाच्छादनं वर्षाकालादिसमयवर्षितघनसलिलधाराप्रस्रवणयोग्यं स्थापयेदित्युपदेशः ॥

किञ्चैतादृशाच्छादनस्थापनन्तु त्रिविधं भवति—शैलावरणं, शाद्वलकावरणं, मिश्रितावरणमिति । पर्णाद्यावरणं क्वचित्क्वचित् पर्णशालादिषूपरि स्थापनीयमिति भावः । तादृशपर्णाच्छादनसहितोटजादिकं प्रतिसंवत्सरं कृत्तिकाराशिस्थिते सूर्ये जीर्णपर्णा-

देवप्रसादात्सुखभाङ्मोदते भुवि नित्यशः ।
त्रिविधं तत्प्रकर्तव्यं निम्नं सौधं करण्डकम् ॥ ७ ॥

ग्राम्येषु निम्नकं कार्यं सौधं नागरिके मतम् ।
वक्रेष्टिकाभिरथवा मिश्रद्रव्यैः क्वचित्क्रमात् ॥ ८ ॥

यथा च सलिलस्रावः प्रपतेदन्तरे गृहे ।

---

च्छादनान्यपोह्य नवपर्णाच्छादनं यथाक्रममुपरि नीत्वा, चित्रादिरचनाञ्च कचिद्यथेष्टं प्रकल्पयित्वा दीपपरंपरां सर्वत्र समुचितस्थानेषु प्रज्वाल्य मङ्गलाचरणङ्कारयेदिति शास्त्रीयक्रमः । एवं करणेन तत्तद्वास्तुनायकाधिनेतृप्रसादमहिम्ना तद्वास्तुवास्तव्यानां जनानां श्रेयःप्राप्तिरिति भावः ॥ ७ ॥

किञ्च पूर्वोक्तेषु विविधावरणेषु शिलाशावलकमिश्रकाख्येषु कुत्र वा कल्पनभागे किं किं स्थापनीयमिति चेत्तद्विशदयति — **ग्राम्येषु निम्नकं कार्यमित्यादिना** । तत्रावरणत्रये शावलकाख्यनिम्नावरणकल्पनं प्रायशो ग्रामकल्पितगृहादिष्वेव कार्यम् । शिलामयावरणन्तु देवालयकल्पनभागेष्वेव शुभप्रदम् । नगरकल्पितभवनादिषु सुधामयावरणादिकं स्थापनीयम् । किञ्च करण्डकाख्यमिश्रद्रव्यैः वक्रेष्टिकाभिश्चावरणं गोशालावाजिशालाहस्तिशालादिषु प्रकल्पयेदित्युपदेशोऽवधार्यः । ग्रन्थविस्तरभिया मतान्तरमत्र नोच्यते ॥

रेखासलिलकाण्डं वा तथा युक्तिवशान्नयेत् ॥ ९ ॥

नात्युन्नतं नातिनीचमविरुद्धं प्रकल्पयेत् ।
क्रमान्निरन्तरं श्लक्ष्णमन्तर्वंशादिवर्जितम् ॥ १० ॥

मध्यरन्ध्रविहीनश्च चिरकालाय कल्पते ।

---

एवं निर्दिष्टप्रकारेण वा प्रकारान्तरेण वाऽऽच्छादनस्थापनेऽपि यथा वाऽन्तर्गेहशालालिन्दादिकल्पनमध्यादिभागेषु वर्षसलिलस्रावो न भवेत्तथारीत्या पार्श्वस्थकल्पनाविरुद्धं युक्त्या स्वयमूह्य तत्तत्कल्पनानुगुणं योजनीयमिति भावः। इदन्तु प्रायिकलक्षणम् । ग्रामकल्पितमहागृहेषु राजभवनादिषु क्वचिद्भागेषु सौधकल्पनं सुधामयं भागान्तरे क्वचिच्छावलकवक्रेष्टिकादिभिः कल्पितघनाच्छादनं च स्थापनीयमिति भावः। तस्मात्तथाकल्पने तादृशवक्रेष्टिकाशावलकाद्याच्छादनपटलेषु नानाङ्गणविभक्तेषु आवरणादिशैथिल्यनिरासाय सुधावक्रेष्टिकादिभिः क्षुद्रकुल्यारूपप्रकल्पनं कृत्वा तादृशकुल्याद्वारा वर्षादिसलिलपतनमेकद्विकत्रिकादिधारापातमार्गेण कल्पनं कारयेदित्यर्थः इष्टिकाकारादिभिः ज्ञेय इति समयः ॥

अत एतादृशशावलकवक्रेष्टिकाद्याच्छादनस्थापनेऽपि तत्र तत्र निर्माणेषु नात्यन्तमुन्नतत्वं मौलिभागे कार्यम् । नापि नीचस्थानकल्पनयुतं स्थापनीयम् । एतदुभयविधकल्पनफलादिकञ्च

क्रियायोगात्कालयोगाद्गोसन्धिकसमन्वितम् ॥ ११ ॥

आच्छादनं प्रकर्तव्यं स्थलमानवशात्स्थिरम् ।
कक्षाच्छादनं वापि फलकाच्छादनं क्वचित् ॥ १२ ॥

---

स्पष्टं विदितमेव शिल्पक्रियावेत्तृभिरित्यान्तरालिको भावः । तस्माच्छावलकादीनां नैरन्तर्यकल्पनं कल्पनवासिसुखकरमिति मतिः । तत्र चावक्रां खण्डादिदोषहीनां क्वचित्क्षुद्रमुखां क्वचिद्बृहन्मुखां शावलकावलिमेव निर्माणेषु प्रकल्पयेदिति शिल्पसमयः ॥

किञ्चात्र नानाविधनिर्माणानामुपरिभागेषु कुड्यतलप्रभृतिस्तम्भतुलातिर्यग्दार्वादिकल्पनावधिकमाच्छादनकरणे तत्र तत्र क्वचित्सौधभागेषु गोसन्धिनामकतिर्यक्पट्टिकादिरचनाविशेषं दृढं सुधादिना प्रकल्पयित्वा त्रिचतुःपञ्चादिमानितादिनकालेषु सूर्यातपादिना तत्कल्पनदार्ढ्यं सम्पादयित्वा मध्यरन्ध्रादिविहीनां तत्तत्स्थलमानाङ्गणादिमानविभक्तकल्पनक्रमतो घनावरणं योजनीयमिति लक्षणवाक्यार्थः ॥

तथा च देवालयमानवालयपरिघादुर्गादिस्थानेषु स्थानान्तरेषु च कल्पनीयावरणक्रमस्तु तादृशावरणान्तर्भागस्थितक्षुद्रगृहशयनगृहविवाहशालादिस्थानेषु वासभाजां प्रजानां सौख्याद्यभिवृद्धये तादृशाच्छादनाधारभूतप्रस्तरादिस्थानेषु चन्दनादिसारदारुफल-

लोहपत्राच्छादनं वा नानाचित्रमनोहरम् ।
स्थलयोगात्प्रकर्तव्यं तैतले मानगेऽपि च ॥ १३ ॥

पार्श्वकल्पनसंयुक्तं कचित्कीलान्वितन्तु वा ।
वातायनादियोग्यं तद्द्वारादिस्थलयोग्यकम् ॥ १४ ॥

---

कावलिं योजयित्वा कचित्ताम्रपित्तलादिफलकां वा योजयित्वा अथवा कचिन्मिश्रद्रव्ययोजनं वा यथेष्टसौकर्यं प्रयोजयेत् । कुतः? अन्तर्भागेषु शीतातपप्रसारनिवारणायेति भावः । तस्मात्तादृशयोजनद्रव्येषु दृश्यभागेषु विविधलताकुसुमादिचित्ररचना मनोहराकृतिः कार्येति शिल्पसमयः ॥

किञ्चैवंप्रकारेणाच्छादनकल्पने मठमण्टपगृहभवनप्रासादादिविविधकल्पनेष्वपि कचिन्मुख्यभागानामौन्नत्यं, तदपेक्षया पार्श्वस्थाङ्गणशालादीनां किञ्चिन्निम्नत्वं, चत्वरप्रान्तभागेष्वथवा सलिलपतनार्हकल्पनान्तरेषु च तदपेक्षया किञ्चिन्न्यूनत्वमित्यादिक्रमेण वर्षासलिलादीनां झटिति पतनार्हं, पृथक्पृथक्कल्पितनानानिर्माणमौलिभागैकोदकस्राववर्त्माख्यप्रणालीयुतं वा रन्ध्रवेण्वाकारपट्टिकाप्रस्थरूपयुतं वा कल्पनीयं यथाप्रमाणमविरुद्धपातक्रममिति आच्छादनस्थापनक्रमः ॥

किञ्चैवंप्रकारेण स्थापनीयाच्छादनप्रकल्पने कचित्कीलादिसंयोजनं, कचित्सुधादिभिः घनलेपनं वा कृत्वा भित्तिमध्ये भित्तिप्रान्तादिस्थानेषु स्थापितगवाक्षद्वारदेहल्यलिन्दशालादि-

भित्तिरक्षणयोग्यञ्च कल्परक्षणयोग्यकम् ।
कल्पयेत्सन्धिसंयुक्तं नानापर्वादिसन्धितम् ॥ २५ ॥

नानाङ्गणयुतं वापि स्रावस्थलसमन्वितम् ।
शावलकान्निश्चलांश्च स्थापयेन्नेत्रमण्डितान् ॥ १६ ॥

---

स्थानेषु यथा सलिलप्रसारो न भवेद्यथा वा तत्कल्पनस्य किंचिद्दूरत एव वर्षसलिलपातादिर्भवेत्तथा विविधेष्वपि निर्माणान्तभागेषु प्रस्तरामिलितघनवलभीगोपानसीपट्टिकाप्रमुखकल्पनमवश्यं करणीयम् । किञ्चैतादृशवलभीगोपानसीपट्टिकाक्षुद्रपट्टिकादिस्थलमार्गेणैव सलिलपतनमिति स्पष्टमेवेत्यर्थः । तस्मात्सर्वविधकल्पनेष्वपि एतादृशगोपानस्यादियोजनमेव तन्मिलितप्रस्तरादीनां दार्ढ्यकरमिति भावः ॥

किञ्चैवंरीत्या वलभीपट्टिकाद्युपेतसुधामयावरणस्थापनेऽपि प्रासादभवनसदनादिनिर्माणेषु द्वितीयतृतीयादिभौमोपरिस्थानेषु तत्तत्कल्पनाक्रममनतिक्रम्यैव पूर्वोक्तकिञ्चित्किञ्चिन्निम्नस्थलक्रममपि योजयित्वा चूलीहर्म्यकलशाद्यविरुद्धं भित्तिप्रस्तरणकीलसंयोजनघनसुधालेपनादिकञ्च कारयित्वा तत्तन्निर्माणार्हमाधारपट्टिकाधःपट्टिकासुधामयाच्छादनशावलकमयाच्छादनमिश्रद्रव्यकाच्छादनादीनि प्रकल्प्यानीति पिण्डितार्थोऽवधार्यः ॥

किञ्च क्वचिद्भौमादिकल्पनेषु घट्टनाख्यनिरावरणसोपान-

ग्रन्थितं कीलितं वापि भौमस्थानादिषु क्वचित् ।
आधाराधेयमानेन कल्पनं सर्वयोग्यकम् ॥ १७ ॥
भित्तिमानं प्रकर्तव्यं घट्टनोद्घट्टनक्षमम् ।
कलशस्थानघट्टं वा योजनीयं यथाक्रमम् ॥ १८ ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे
सर्वविधावरणलक्षणकथनं नाम
द्विषष्टितमोऽध्यायः ॥

---

स्थापनयोग्यं क्वचिदुद्घाटनाख्यसावरणसोपानस्थापनयोग्यं च भित्तिनिर्माणक्षुद्रगोपानसीनिर्माणादिकं सान्द्रेष्टिकासुधादिभिः दृढं प्रकल्पयित्वा तदुपरिभागेषु तत्तत्कल्पनानुगुणं घनमाच्छादनमचञ्चलविलोचनं, विलोचनहीनं वा स्थापनीयमिति क्रमः ॥

अत्रोक्तविलोचनशब्दार्थस्तु वलभीगोपानसीपट्टिकादिस्थानेषु सलिलपतनार्हक्षुद्रद्वारस्थलं द्योतयतीति क्रमः । तस्मात्तक्षकेष्टिकाकारादिशिल्पिवर्गैरेतादृशरीत्यावरणस्थापनक्रमं क्रमान्तरञ्च विज्ञाय, युक्त्या यथाशोभं, यथाबलं तत्तत्कल्पनार्हमाच्छादनं स्थापनीयमिति शास्त्रकारोपदेशक्रमः ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
**सर्वविधावरणलक्षणकथनं नाम**
द्विषष्टितमोऽध्यायः ॥



अथ लुपालक्षणकथनं नाम

## त्रिषष्टितमोऽध्यायः ॥

कथिता शिल्पशास्त्रज्ञैर्लुपा क्षुद्रक्रियापटी ।
शिलालोहसुधादारुखण्डैर्योज्या विशेषतः ॥ १ ॥

कीलपिण्डयुता प्रायः कल्पपिण्डान्विताऽथवा ।
द्व्यङ्गुला त्र्यङ्गुला वापि चतुरङ्गुलभागपि ॥ २ ॥

---

॥ त्रिषष्टितमोऽध्यायः ॥

अथ दृश्येषु कल्पनेषु स्थापनीयलुपालक्षणकथनात्मकं त्रिषष्टितमाध्यायमारभते — **कथिता शिल्पशास्त्रज्ञै**रित्यादिना । लुपा नाम किमित्याकाङ्क्षायामाह — **क्षुद्रक्रियापटी**ति । एतावता प्रबन्धेन प्रतिपादितरीत्या नानाविधानां साच्छादनानां गृहभवनादिकल्पनानां वेदिकासु, द्वारपार्श्वभागेषु स्तम्भकन्धर-मौलिप्रस्तरादिभागेषु, कचिद्वलभीगोपानसीप्रान्तभागेषु गवाक्ष-पक्षभागेषु स्थलान्तरेषु च विमानादिदेवकल्पनभागेषु च समक्रमतो योजनीयवियोजनीयचित्रविशेषपट्टिकायाः लुपाख्या क्षुद्राक्रियापट्टिकाख्या च भवतीति शिल्पसमयप्रसिद्धिः ॥

तस्मात्तादृशलुपाकल्पनस्य स्वरूपविशेषलक्षणादिकमाह — **कीलपिण्डयुतेत्या**दिना । इयन्तु लुपाक्रियाशैली प्रायशो गुरूपदेशयुक्त्यादिभिः शिल्पिभिरेव ज्ञेया भवति नेतरैश्शास्त्रज्ञै-

पञ्चषट्सप्ताङ्गुला वा किष्कुमानप्रमाणतः ।
एकहस्ता द्विहस्तान्ता लुपा सा कथिता क्रमात् ॥

गन्धर्वमुखयुक्ता वा लतापुष्पक्रियान्विता ।
समक्रिया दोषहीना सर्वतोभागभाङ्मुखे ॥ ४ ॥

चतुर्भागस्थिता वापि क्वचित्प्रासादभूमिषु ।

---

रिति । तथाऽप्यस्माभिः यथामति व्याख्यानधोरण्या कचिदर्थः प्रकाश्यते । यथैषा तु लुपा कचिद्व्यङ्गुलपरिणामवती, कचित् कल्पनभागेषु त्र्यङ्गुलप्रमाणवती च योजनीया । किञ्च क्षुद्रद्वारसदनगृहद्वारसदनद्वारगोपुरद्वारदुर्गद्वारमहाद्वारादिस्थानेषु तत्तत्प्रस्तरकल्पनान्तस्थलादिषु विमानकुंभप्रान्तभागेषु स्थलान्तरेष्वपि नानाङ्गणविभक्तेषु तत्तत्कल्पनार्हं चत्वरं चतुरंगुलिकादिका एकहस्ता द्विहस्तपरिमाणवती संयोजनीयेति क्रमो ज्ञेयः ॥

किञ्चैतादृशवैशाल्यसहितायां लुपापट्टिकाक्रियायां तु यक्षविद्याधरगन्धर्वप्रमुखविविधदेवदेव्यादिमुखलक्षणचित्ररूपं, कचित्कमलकुमुदनानालताहंसिकाशुकशारिकापन्नगादि रूपलक्षणचित्ररूपं वा यथाभिमतं कल्पनीयम् । तादृशचित्रादिमनोहरलुपापट्टिकां शिलाभिर्वा, लोहपट्टिकादिभिर्वा, दारुफलकादिभिर्वा, सुधेष्टिकादिभिर्वा, कचित्पर्यङ्कपीठडोलाशिबिकावाहनादिषु गजदन्तखण्डैर्वा यथाप्रमाणं दृढं प्रकल्पयेदित्यर्थः ॥

क्षुद्रपट्टयुता वापि जलपट्टान्विता क्वचित् ॥ ५ ॥

वारकान्तयुता वापि युक्ता मकरतोरणैः ।

मुख्यरेखाकवचिता महानासान्विता क्वचित् ॥ ६ ॥

तोरणैर्जालकैर्नीडैः क्षुद्रकोणैश्च संयुता ।

सुधालेपितका वापि फलकाघटिताथवा ॥ ७ ॥

नानाप्रमाणलसिता योजनीया क्रियार्हका ।

क्षुद्रावरणमानेन क्वचिद्योज्या लुपा मता ॥ ८ ॥

विमाने शिखरप्रान्ते मण्टपान्ते वराटके ।

गोपुरद्वारवलभीप्रान्ते वा पादकान्तके ॥ ९ ॥

---

किञ्चैतादृशलुपाख्यकल्पनां देवभूपप्रासादविमानशिखरादिस्थानेषु क्वचित्क्षुद्रपट्टयुतां क्वचित्पर्यङ्कपीठडोलादिषु जलपट्टयुतां क्वचिद्वारकान्ताख्यकल्पनयुतां क्वचिन्मकरतोरणमध्यरेखिकामहानासादिकल्पनसहितां वा कारयेदिति विकल्पः ॥

किञ्च विमाने शिखरप्रान्ते इत्यादिः स्पष्टार्थः । अथापि काचिद्व्याख्यायते । यथा — विमानशिखरतलगलमध्यकातलशिखरपार्श्वादिस्थानेषु, मण्टपगोपानसीप्रान्तभागेषु वराटकाख्यस्तम्भप्रस्तरान्तर्भागेषु स्तम्भानां वा क्वचिन्मौलिभागे तदुभयपक्षकल्पितकुमुदादिचित्रस्थानसमीपे गोपुरादिसकलविधद्वाराणामुपरि पार्श्वयोर्भागयोः क्वचिद्गवाक्षादिद्वारस्थानेषु समन्ततः प्रान्तभागेषु

द्वारचित्रप्रतोल्यां वा चूलीहर्म्यप्रतोलिषु ।
सभाशिखरभागान्ते गृहद्वारान्तिके तथा ॥ १० ॥

वेदिकाप्रान्तभागे वा पीठाद्यन्तस्थले तथा ।
शालाद्वारोपरिप्रान्ते भौमप्रान्ते तथैव च ॥ ११ ॥

खल्लूरिकाप्रान्तभागे वीथिकाप्रान्तभागिके ।
स्थूपिकाकल्पने वापि वलभीकल्पने तथा ॥ १२ ॥

सेतुनेत्रप्रान्तभागे गोपानस्यादिके स्थले ।
आयव्ययसमोपेता नानामानप्रकल्पने ॥ १३ ॥

द्विमुखा त्रिमुखा वापि तक्षणाद्वर्धनादपि ।
संयोज्या च वियोज्या च संयोज्या दैवकल्पने ।
मानवे कल्पने वापि दारिका शिल्पिभिः क्रमात् ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे
लुपालक्षणकथनं नाम
त्रिषष्टितमोऽध्यायः ॥

---

सभाकूटादिशिखरकलशाधारभूतकर्णिकाद्वारसमीपस्थलेषु सर्वविध-वेदिकाद्वारादिकल्पनमध्यप्रान्ततलेषु चूलीगृहवलभीप्रान्ततलेषु खल्लूरिकावापीसेतुकूपतटाकादिसोपानमुखभागप्रान्ततलेषु, स्थलान्तरेष्वपि शोभाजनकेषु लुपाख्यकल्पनं यथामानं, यथावलं यथाशोभं

अथ सकलविधस्तम्भलक्षणकथनं नाम

## चतुष्षष्टितमोऽध्यायः ॥

निर्माणस्य यथा भूमिराधारस्संप्रकीर्तितः ।
तथा तस्याधारमाहुः पादं शिल्पविशारदाः ॥ १ ॥

---

प्रयोज्य, कालक्रमेण कीलादियोजनेन च दृढीकुर्यादिति लुपाध्याय-लक्षणवाक्यार्थो ज्ञेयः ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
लुपालक्षणकथनं नाम
त्रिषष्टितमोऽध्यायः ॥



### चतुष्षष्टितमोऽध्यायः ॥

अथास्मिंश्चतुष्षष्टितमेऽध्याये सकलविधस्तम्भानां स्वरूप-लक्षणादिकं प्रतिपादयितुमादौ तादृशस्तम्भस्थापनावश्यकतां तत्फलादिकञ्च प्रतिजानीते— **निर्माणस्य यथा भूमिरि**त्यादिना । यथा वा सकलविधनिर्माणानां वसुन्धरा आधारभूता, तथा तादृश-निर्माणानां सर्वेषामपि स्तम्भा एवाधारभूताः । आधारं विनाधेयस्य स्थितिस्सर्वत्र न भवेदेव । किञ्च तादृशस्तम्भस्थापनेन

सौकर्यञ्च सुखं शोभालाभः पादप्रकल्पनात् ।
तस्मात्तत्कल्पयेच्छिल्पी शिलालोहद्रुमेष्टकैः ॥ २ ॥

---

प्रयोजनान्तराणि च सम्पद्यन्ते । यथा ग्रामनगरादिवास्तुस्थलकल्पितगृहभवनादिनिर्माणेषु कुड्यस्थापनानन्तरं तन्निर्माणान्तर्भागस्थानेषु स्तम्भस्थापनेनैव शालाकूटनवरङ्गदेहल्यलिन्दाङ्गणादिर्जायते । किञ्च तादृशनिर्माणपरिसमाप्त्यनन्तरं तादृशशालाङ्गणादिषु जनानां नानाविधद्रव्यस्थापनशयनभोजनादिविविधकार्याचरणवशात्परमं सुखमपि जायते । किञ्च तादृशशालादिनिर्माणानां शोभा च जृम्भते । स्तम्भविहीनकल्पनस्य प्रायशो ग्रन्थान्तरेषु वासानर्हत्वप्रतिपादनाच्च ॥

तस्मादेवंरीत्या नानाविधोपकारकारणभूतस्तम्भानां स्थापनस्यावश्यकतां प्रतिपाद्याधुना तल्लक्षणजात्यादिभेदक्रममुदाहरति शास्त्रकारः — **शिलालोहद्रुमेष्टकैरित्यादिना** । शिलाभिः सारवतीभिः क्वचिल्लोहमयैः, क्वचिद्द्रुमखण्डैः, क्वचित्सुधेष्टिकाघटनैश्च पादकल्पनानामेवं चातुर्विध्यं बोध्यमिति भावः । तथा च देवालयकल्पितगोपुरतलालिन्दतलमुखमण्टपादिषु सर्वेष्वपि कल्पनेषु शिलामयस्तम्भस्थापनमेव शुभदम् । एवं दुर्गालिन्दभागेषु ग्रामद्वारदुर्गद्वारनगरद्वारादिस्थलकल्पितवेदिकाङ्गणशालादिषु वाजिशालावारणशालावैद्यशालापाठशालान्यायशालादिस्थानेषु परिव्राजकाचार्यवासयोग्यमठमण्डपादिकल्पनेषु आलोकन-

खातपीठविभागेन द्विविधं तदुदाहृतम् ।

---

मण्टपादिकल्पनेष्वपि शिलामयस्तम्भस्थापनं शुभदम् । चक्रवर्त्यादिसकलक्षत्रियवासस्थानाख्यप्रासादहर्म्यमहासदनभवनादिषु लोहमयस्तम्भस्थापनं, तत्रैव कचिद्भागान्तरे द्रुमखण्डसुधेष्टिकाघटितस्तम्भस्थापनमपि मङ्गलकरमेव सम्पद्यते । अनयैव शैल्या धनिकानामितरेषां ब्राह्मणवैश्यशूद्रादीनां गृहभवनादिसकलविधनिर्माणेष्वपि द्रुमसुधेष्टिकास्तम्भस्थापनं मङ्गलायेत्युक्तं भवति ॥

इत्थं स्तम्भस्थापनार्हं स्थलक्रममुपदिश्य ततस्तादृशस्तम्भानां जातिक्रमादिकमाह — **खातपीठविभागेने**त्यादिना । नदीसेतुजलाशयसेतुतटाकदुर्गपरिघादेवालयमण्टपमानवगृहादिसकलविधनिर्माणेष्वपि पूर्वोक्तरीत्या निर्माणाधारभूतस्तम्भस्थापनं द्विविधं भवति । यथा — खातस्तम्भकल्पनं, पीठस्तम्भकल्पनमिति । नदीसेतुजलाशयसेतुजलमध्यमण्टपादिकल्पनेषु भूमिं खात्वा तन्मध्ये स्तम्भं स्थापयित्वा पार्श्वभागेषु दृढतरकल्पनं विधाय दृढीकृत्य तादृशस्तम्भमौलिभागेषु सुषिर(கமாண்)कल्पनपटलादिकं स्थापनीयमिति तत्क्रमः । इयञ्च खातस्तम्भस्थापनशैलीषु कचित्क्षुद्रग्रामगृहवाजिशालामृगशालास्थापनेषु स्थलान्तरेष्वपि समुचितेषु योजनीयेति शिल्पविदामाशयः ॥

किञ्च देवालयनिर्मितमण्डपादिस्थानेषु भूपालयनिर्मित-

देवकान्तं ब्रह्मकान्तमिन्द्रकान्तमथापि वा ॥ ३ ॥

विष्णुकान्तं स्कन्दकान्तं सोमकान्तमिति क्रमात् ।
वर्तुलं चतुरश्रश्च षडश्रन्त्वष्टपट्टिकम् ॥ ४ ॥

द्वादशाश्रं षोडशाश्रं पादकल्पं विदुर्बुधाः ।

---

प्रासादभवनशालादिषु जात्यन्तरगृहभवनशालाङ्गणादिषु च समुचितस्थानेषु पूर्वोक्तरीत्याऽधिष्ठानं विधाय तदुपरि स्तम्भकल्पनं कार्यमिति खातस्तम्भपीठस्तम्भस्थापनक्रमो ज्ञेयः ॥

अथैतेषां स्तम्भानां तक्षणक्रमजात्यादिकमाह—देवकान्तमित्यादिना । (१) पूर्वोक्तरीत्या घनशिलाभिर्वा, लोहपटलैर्वा, सारदारुखण्डैर्वा सुधेष्टिकादिकल्पनैर्वा कल्पितो वर्तुलरूपस्तम्भो **देवकान्तस्तम्भः** इति नामभाग्भवति ।

(२) चतुरश्ररूपस्तम्भः **ब्रह्मकान्तस्तम्भः** इति नामभाग्भवति ।

(३) षडश्ररूपस्तम्भः **इन्द्रकान्तस्तम्भ** इति नाम भजते ।

(४) अष्टाश्ररूपस्तम्भो **विष्णुकान्तस्तम्भ** इति नाम प्राप्नोति ।

(५) द्वादशाश्ररूपस्तम्भः **स्कन्दकान्तस्तम्भ** इति नाम प्राप्नोति ।

(६) षोडशाश्ररूपस्तम्भः **सोमकान्तस्तम्भ** इति नाम प्राप्नोति इति क्रमान्वयो ज्ञेयः । किञ्चेदं स्तम्भषट्कं दृढाकारं नातिचित्रकल्पनमेकखण्डभासुरमिति भावः ॥

खातपीठविभागेन द्विविधं तदुदाहृतम् ।

---

मण्टपादिकल्पनेष्वपि शिलामयस्तम्भस्थापनं शुभदम् । चक्रवर्त्यादिसकलक्षत्रियवासस्थानाख्यप्रासादहर्म्यमहासदनभवनादिषु लोहमयस्तम्भस्थापनं, तत्रैव कचिद्भागान्तरे द्रुमखण्डसुधेष्टिकाघटितस्तम्भस्थापनमपि मङ्गलकरमेव सम्पद्यते । अनयैव शैल्या धनिकानामितरेषां ब्राह्मणवैश्यशूद्रादीनां गृहभवनादिसकलविधनिर्माणेष्वपि द्रुमसुधेष्टिकास्तम्भस्थापनं मङ्गलायेत्युक्तं भवति ॥

इत्थं स्तम्भस्थापनार्हस्थलक्रममुपदिश्य ततस्तादृशस्तम्भानां जातिक्रमादिकमाह — खातपीठविभागेनेत्यादिना । नदीसेतुजलाशयसेतुतटाकदुर्गपरिघादेवालयमण्टपमानवगृहादिसकलविधनिर्माणेष्वपि पूर्वोक्तरीत्या निर्माणाधारभूतस्तम्भस्थापनं द्विविधं भवति । यथा — खातस्तम्भकल्पनं, पीठस्तम्भकल्पनमिति । नदीसेतुजलाशयसेतुजलमध्यमण्टपादिकल्पनेषु भूमिं खात्वा तन्मध्ये स्तम्भं स्थापयित्वा पार्श्वभागेषु दृढतरकल्पनं विधाय दृढीकृत्य तादृशस्तम्भमौलिभागेषु सुषिर(கமான்)कल्पनपटलादिकं स्थापनीयमिति तत्क्रमः । इयञ्च खातस्तम्भस्थापनशैलीषु कचित्क्षुद्रग्रामगृहवाजिशालामृगशालास्थापनेषु स्थलान्तरेष्वपि समुचितेषु योजनीयेति शिल्पविदामाशयः ॥

किञ्च देवालयनिर्मितमण्डपादिस्थानेषु भूपालयानिर्मित-

देवकान्तं ब्रह्मकान्तमिन्द्रकान्तमथापि वा ॥ ३ ॥

विष्णुकान्तं स्कन्दकान्तं सोमकान्तमिति क्रमात् ।
वर्तुलं चतुरश्रञ्च षडश्रन्त्वष्टपट्टिकम् ॥ ४ ॥

द्वादशाश्रं षोडशाश्रं पादकल्पं विदुर्बुधाः ।

---

प्रासादभवनशालादिषु जात्यन्तरगृहभवनशालाङ्गणादिषु च समुचितस्थानेषु पूर्वोक्तरीत्याऽधिष्ठानं विधाय तदुपरि स्तम्भकल्पनं कार्यमिति खातस्तम्भपीठस्तम्भस्थापनक्रमो ज्ञेयः ॥

अथैतेषां स्तम्भानां तक्षणक्रमजात्यादिकमाह — देवकान्तमित्यादिना । (१) पूर्वोक्तरीत्या घनशिलाभिर्वा, लोहपटलैर्वा, सारदारुखण्डैर्वा सुधेष्टिकादिकल्पनैर्वा कल्पितो वर्तुलरूपस्तम्भो **देवकान्तस्तम्भः** इति नामभाग्भवति ।

(२) चतुरश्ररूपस्तम्भः **ब्रह्मकान्तस्तम्भः** इति नामभाग्भवति ।

(३) षडश्ररूपस्तम्भः **इन्द्रकान्तस्तम्भ** इति नाम भजते ।

(४) अष्टाश्ररूपस्तम्भो **विष्णुकान्तस्तम्भ** इति नाम प्राप्नोति ।

(५) द्वादशाश्ररूपस्तम्भः **स्कन्दकान्तस्तम्भ** इति नाम प्राप्नोति ।

(६) षोडशाश्ररूपस्तम्भः **सोमकान्तस्तम्भ** इति नाम प्राप्नोति इति क्रमान्वयो ज्ञेयः । किञ्चेदं स्तम्भषट्कं दृढाकारं नातिचित्रकल्पनमेकखण्डभासुरमिति भावः ॥

**पुरः पश्चात्सर्वतो वा कल्पस्तम्भप्रकल्पनम् ॥ ५ ॥**
**युग्मद्वियुग्मसङ्कीर्णोपस्तम्भादिप्रकल्पनम् ।**
**सुप्रतीकान्तकं सूर्यकान्तं ब्राह्मणकान्तकम् ॥ ६ ॥**
**कैलासमेरुकं कान्तं तथा नन्दीशकान्तकम् ।**

---

अथैतादृशैकखण्डस्तम्भस्योपस्तम्भकल्पनवशात्संप्राप्तनाम-भासुरं स्तम्भषट्कमपि क्रमशो विवृणोति— **पुरः पश्चादित्यादिना।** (७) पुरोभागस्थल एवैकेनोपस्तम्भेन वोपस्तम्भद्वयेन वा,क्वचिदुपस्तम्भत्रयचतुष्कादिना वा सहितः स्तम्भः **सुप्रतीकान्तस्तम्भ** इति नाम भजते ॥

(८) पुरोभागे सव्यापसव्ययोः क्रमेणोपस्तम्भसहितः **सूर्यकान्तस्तम्भ** इति नाम भजते ।

(९) मध्यस्तम्भं परितश्चतुर्ष्वपि दिग्भागेषूपस्तम्भकल्पनसहितः स्तम्भो **ब्राह्मणकान्तस्तम्भ**नाम भजते ।

(१०) एवंरीत्या द्विद्विरूपस्थापितस्तम्भस्तु **कैलासकान्तस्तम्भ** इति प्रसिद्धिः ।

(११) एवंरीत्या युग्मयुग्मद्वयक्रमकल्पितः स्तम्भो **मेरुकान्तस्तम्भ** इति नाम प्राप्नोति ।

(१२) स्तम्भद्वयकल्पने वा स्तम्भचतुष्कादिकल्पने वा **शृङ्खला**-रूपेणापादमौलितलं मिथस्संबद्धं मध्ये मध्ये रन्ध्रान्वितं कल्पित-

इति द्वादशभेदेन स्तम्भानां कल्पनं मतम् ॥ ७ ॥

स्तम्भो नन्दिकान्तस्तम्भ इति च नाम भजतीति ॥

एवंरूपेण स्तम्भानां सर्वविधनिर्माणस्थापनयोग्यानां द्वादशविधा जातिरुक्ता ज्ञेया ॥

| | |
|---|---|
| १. देवकान्तस्तम्भः । | ७. सुप्रतीकान्तस्तम्भः । |
| २. ब्रह्मकान्तस्तम्भः । | ८. सूर्यकान्तस्तम्भः । |
| ३. इन्द्रकान्तस्तम्भः । | ९. ब्राह्मणकान्तस्तम्भः । |
| ४. विष्णुकान्तस्तम्भः । | १०. कैलासकान्तस्तम्भः । |
| ५. स्कन्दकान्तस्तम्भः । | ११. मेरुकान्तस्तम्भः । |
| ६. सोमकान्तस्तम्भः | १२ नन्दिकान्तस्तम्भ इति ॥ |

किञ्च काश्यपीयमतमानसारादिशिल्पशास्त्रवास्तुशास्त्र-लक्षणशास्त्रग्रन्थेषु प्रतिपादितमतान्तरस्तम्भजात्यादिशैली तु ग्रन्थ-विस्तरभिया नात्र प्रपञ्च्यते । तच्च तत्रैव ज्ञेयमिति युक्तं पश्यामः ॥

तस्मादेवंरीत्याऽत्र प्रतिपादितस्तम्भकल्पनमेव प्रायशो मतान्तरस्तम्भलक्षणद्योतकं भवति । इदमेव देवभूपालमानव-वारणशालादिनानाविधनिर्माणस्थापनानुकूलमिति च भावः । किंचात्रोक्तद्वादशविधस्तम्भकल्पनशैल्येव पूर्वोक्तपाञ्चाल्यादि-सप्तविधकल्पनशैलीद्योतकनिर्माणेषु स्थापनार्हा भवतीति शिल्प-समयः ॥

विभजेन्मानवित्छिल्पी योजयेत्स्थलयोग्यकम् ।
द्विभागं वा त्रिभागं वा चतुर्भागमथापि वा ॥ ८ ॥
पञ्चभागञ्च षड्भागं सप्तभागं क्वचित्स्थले ।
अष्टभागक्रमात्सर्वमुत्सेधं सूत्रमानिते ॥ ९ ॥
जन्मनिक्षेपपद्मादिकल्पनं कल्पयेत्क्रमात् ।

---

किञ्चात्र प्रतिपादितस्तम्भेषूपस्तम्भकल्पने कोऽपि नियमोऽवधार्यः । यथा वैतादृशोपस्तम्भकल्पनं तावत्खातस्तम्भेषु न सर्वथा योज्यम् । परन्तूपपीठादिसहितस्तम्भकल्पनेष्वेव कार्यम् । तत्रापि कोऽपि शिल्पकार्यक्रमो यथा — उपपीठकल्पनोपरि किल स्तम्भस्थापनम् । तस्मात्तादृशोपपीठमौलिभागसहितमथवा तादृशस्तम्भाधारसहितं योजनीयमिति सर्वथा न पृथक्कार्यम् ॥

किञ्चोपपीठस्य नात्युच्छ्रायभागेऽपि योज्यम् । किन्तु यथात्र मागधादिसर्वविधशैलीषु शोभा जायते तथा कार्येति भावः । इयमेव कल्पनरचना मनोहरा शिल्पसौष्ठवविद्भिरप्यङ्गीकृता । किञ्च स्तम्भमध्यभागादिषूपस्तम्भस्थापनशैलीं नानुमन्यन्ते शिल्पिनो वास्तुशास्त्रकाराश्चेति मतिः ॥

तस्मादेतादृशोपस्तम्भभागं मध्यस्तम्भभागञ्च द्विभागमथवा क्वचित्त्रिभागं चतुर्भागादिभागदशकावधिकं यथाभिरुचि स्तम्भानामौन्नत्यानुगुणं वा वाञ्छानुगुणं वा विभज्य तत्र

मूले मध्ये मौलिभागे पट्टं वा योजयेत्क्रमात् ॥ १० ॥
पिण्डितार्यं कराग्रं वा तक्षयेद्वा क्वचित्स्थले ।
कमलं रेखिकां कर्णनालं मध्यतलं तथा ॥ ११ ॥
व्रतेरुपरि पद्मश्च चित्रखण्डं कपोतिकम् ।
गजवाजनमुख्यश्च यथामानं प्रकल्पयेत् ॥ १२ ॥
चक्रवाकस्वरूपं वा हंसरूपमथापि वा ।
शारिकाशुकरूपं वा नानादेवस्वरूपकम् ॥ १३ ॥
चित्रतोरणरूपं वा लताकुसुमरूपकम् ।
व्यालेभसिंहमकरगजाश्वादिस्वरूपकम् ॥ १४ ॥
भागेषु पट्टिकाभागेष्वन्यद्यच्च मनोहरम् ।
कल्पनं तत्प्रकर्तव्यं नानाटङ्कक्रियावटैः ॥ १५ ॥
प्रान्तरेखासमायुक्तं चित्रपट्टयुतं क्वचित् ।

---

चाङ्गेषु कमलं रेखिकां मध्यनालं क्वचिच्छैल्यन्तरेषु एकहस्तौन्नतिकप्रमाणं वा तन्न्यूनं क्वचित्तदधिकप्रमाणं वा क्वचिन्नानाङ्गणविभजनं कारयित्वा, तादृशाङ्गणतलेषु चक्रवाकचित्रं वा हंसीहंसशुकशारिकाचूतलताकुसुमादिचित्रं वा तत्रैव भागान्तरस्थिताङ्गणतलेषु व्यालरूपं वा वारणरूपमथवाऽश्वरूपं क्वचिन्मीनकुटुम्बरूपं, क्वचित्तोरणरूपं, क्वचिन्मनोहरचित्रपट्टिकारूपं नानाटङ्कादिक्षेपणतक्षणवर्धनवशात्करणीयमिति तत्कल्पनक्रमो बोध्यः ॥

पीठिकां बोधिकां कुम्भं मौलिभागक्रियावटम् ॥

नानाचित्रसमायुक्तं चित्रपोतकसंयुतम् ।
कल्पनं कल्पयेद्युक्त्या क्षेपयेत्तक्षयेत्कचित् ॥ १७ ॥

उपपादप्रमाणेन पञ्चपाङ्गुलमानतः ।
किष्कुहस्तप्रमाणेन चैकहस्तप्रमाणतः ॥ १८ ॥

पृथक् तक्षणपद्मञ्च सोपपीठपदक्रियाम् ।

---

किञ्चैतादृशस्तम्भस्थापने कचित्तत्र तत्र कल्पितानेकाङ्गण-प्रान्तभागेषु प्रान्तरेखाख्यचित्रकल्पनमथवा चित्रपट्टं चित्रपोतिकादिकं वा यथाभिरुचि विरचय्य, तादृशस्तम्भानां प्रस्तरभागेषु मौलिभागेषु च कचित्पीठिकाख्यकल्पनं वा, बोधिकाकल्पनं वा, कुम्भकल्पनं वा मण्डपशालामहाशालागोपुरालिन्दादिकल्पनानुगुणं तक्षयेदिति भावः । किञ्चात्र सर्वविधस्तम्भस्थापने वङ्गाङ्गादिदेशेषु कल्पनीयतत्तच्चित्रादिकल्पनभेदप्रमाणेन वा पाञ्चाल्यादिशैली-प्रमाणेन वा शिल्पाचार्याभीप्सितक्रममानेन वा सहितं चित्र-कल्पनादिकं च कचिद्योजनीयम् । तच्च प्रायशः स्तम्भानां मूल-भागे उपपीठस्योर्ध्वतले मध्यभागे मौलिभागे च क्रमान्मध्ये मध्ये चतुरश्रवर्तुलादिस्थलं निर्माय तदन्तरेवं कल्पनीयमिति भावः ॥

किञ्च मध्यस्तम्भकल्पने वा उपस्तम्भादिकल्पनेषु वा किष्कु-प्रमाणादिना विभक्तेषु भागेषु मध्यरेखिकासहितोपस्तम्भकल्पनं

मूलमौलितले योज्यं मध्यकार्यं पृथग्गतम् ॥ १९ ॥

नोपपादो दारुकल्पे प्रशस्तः परिकीर्तितः ।

समक्रियं न्यूनहीनं कोणेष्वधिककल्पनम् ॥ २० ॥

समक्रियं वा सर्वत्र यथाशोभं प्रकल्पयेत् ।

सार्वदेशिकभेदेन शैलीभेदेन वा पुनः ॥ २१ ॥

शिल्पतक्षणभेदेन नानाद्रव्यविनिर्मितः ।

स्तम्भकल्पस्सोपपीठः कथितश्शास्त्रपारगैः ॥ २२ ॥

---

क्वचिदधःपद्मोर्ध्वपद्मकल्पनयुक्तं कर्णिकागलकुमुदवाटिकारेखिकालताकुसुमादिनानाचित्रकल्पनं वा कार्यम् । इयञ्च शैली प्रायशश्शिलास्तम्भेष्वेव कल्पनीया । दारुमयेष्विष्टिकामयेषु स्तम्भेषु कल्पनीयेति केचित् । शिल्पशास्त्रविदामाशयस्तु शिलास्वेव कार्या नेतरत्रेति । तस्मात्पूर्वोक्तरीत्या शिलाभिर्लोहैर्वा, दारुभिरिष्टिकाभिर्वा, कल्पितानां वेदिकाङ्गणशालादितत्तत्स्थलानुगुणप्रमाणभाजां स्तम्भानां नानारूपयुतानामेतेषां मौलिभागेषु तिर्यक्प्रस्तरतूलवलभ्याधारपृथुपट्टिकास्थापनार्हं श्लक्ष्णीकृत्य तलं तत्र तदचञ्चलं स्थापयित्वा तदुपरि तत्तत्कल्पनानुगुणमाच्छादनं च स्थापयेदित्यर्थः ॥

अपि च क्वचिद्भूपालप्रासादन्थायशालामहाशालाविशेषशालाद्युत्तमकल्पनेषु स्थापनीयानां स्तम्भानां मुखभागेषु क्वचिद्दलादि-

पुंवृक्षस्तिलकश्शालः श्रीपर्णश्चन्दनश्शमी ।
पादयोग्याश्चित्रयोग्याः सारवन्तश्च ये द्रुमाः ॥ २३ ॥
वक्रव्रणेन हीना ये वायूपप्लववर्जिताः ।
अग्निदाहविहीना ये श्मशानावासवर्जिताः ॥ २४ ॥
देवालयविदूरा ये वल्मीकावासवर्जिताः ।
दोषहीना ये तरवस्सारवन्तो महीरुहः ॥ २५ ॥
गवाक्षद्वारडोलासु तिर्यक्पट्टादि केचन ।

---

स्थानेषु सौवर्णराजतादिपट्टिकां वा कचित्खण्डाख्यफलकान्तर-कल्पनान्तरादियोजनं, कचिद्यक्षविद्याधरगान्धर्वोरगादिविविध-चित्रफलकामेलनं वा कारयित्वा युग्मसंख्याकं कुड्यमुखद्वार-मुखादिदोषहीनं स्तम्भस्थापनमेव सर्वेषां शुभकरमिति भावः ॥

एतावता प्रबन्धेन सङ्क्षेपतो विविधग्रामनगरादिवास्तुस्थानेषु कल्पनीयगृहभवनप्रासाददेवालयनानाशालाद्यनेककल्पनार्हस्तम्भानां स्वरूपलक्षणजात्यादिकं प्रतिपाद्याधुना तादृशस्तम्भार्हवृक्षान् निर्दिशति— **पुंवृक्षस्तिलक** इत्यादिना । 'तिलकस्सालः' इत्यादिकः पाठः स्पष्टार्थः ॥

पूर्वं द्रव्यसङ्ग्रहणाध्यायप्रकरणे श्रेष्ठवृक्षप्रतिपादनेऽपि अत्र पुनरवश्यमेतादृशतिलकादिसारवृक्षैरेव रन्ध्रादिदोषहीनैः स्तम्भ-स्थापनमित्याशयेन ग्रन्थकारस्योक्तिरिति भावो ज्ञेयः । घन-

फलकास्वपि पर्यङ्ककार्येष्वासनकर्मणि ॥ २६ ॥
कवाटादिक्रियाजालेष्वपि योज्याः प्रकीर्तिताः ।
सौवर्णं राजतं ताम्रं पैत्तलं वा क्वचित्स्थले ॥ २७ ॥
पट्टिकं योजयेद्युक्त्या द्रुमपाटप्रमाणवित् ।
चित्रसङ्कलनं शस्तमन्यकल्पेषु कीर्तितम् ॥ २८ ॥
समसूत्रं समतलं समभित्त्यादिकल्पनम् ।
प्रस्तरोत्तरवेशार्थं बहिरन्तःक्रियान्वितम् ॥ २९ ॥
वलीकोत्तरतूलादियुग्ममावरणादिकम् ।
तलपट्टिकया युक्तं मुखपट्टयुतन्तु वा ॥ ३० ॥
व्यालेभमुखयुक्तं वा यक्षाननयुतन्तु वा ।
नानाचित्रवलीताङ्गं शुकहंसादिरेखिकम् ॥ ३१ ॥
युग्मक्रियं दोषहीनं क्वचिदेकक्रियन्तु वा ।
सुधालेपनकं वापि श्लक्ष्णकं वा क्वचित्स्थले ॥ ३२ ॥
यथाविभवतः कार्यं स्तम्भकल्पनमीरितम् ।
शुभकालेऽलङ्कृतानां पादानां स्थापनं शुभम् ॥ ३३ ॥
स्थपतिब्राह्मणानाञ्च तोषणं माननं गवाम् ।

---

शिलाभिः क्वचित्ताम्रपित्तलादिलोहखण्डैरेतादृशदारुखण्डैः सुतप्रेष्टिकाभिर्वा यथाविभवं कल्पितानां विविधप्रमाणानां स्तम्भानां वस्त्रगन्धादिभिर्यथाशक्ति भूषितानां, क्वचिदावाहितानां वा स्थापन-

कन्यकागीतिकं चापि शुभदं परिकीर्तितम् ॥ ३४ ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे
सकलविधस्तम्भलक्षणकथनं नाम
चतुष्षष्टितमोऽध्यायः ॥

---

समये स्वस्तिकपठनकन्यकागानमङ्गलवाद्यघोषणब्राह्मणार्चनस्थपतिप्रमुखसन्तोषणाद्याचरणन्तु भूयसे श्रेयसे कल्पत इति । मतान्तररीत्या स्तम्भलक्षणादिकं तु मानसारादिग्रन्थेषु ज्ञेयमिति ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
स्तम्भलक्षणकथनं नाम
चतुष्षष्टितमोऽध्यायः ॥



अथ धान्यगृहलक्षणकथनं नाम

## पञ्चषष्टितमोऽध्यायः ॥

देवानां भूमिपालानां ब्राह्मणानां विशेषतः ।
वैश्यानां सर्ववर्णानां धान्यशाला शुभप्रदा ॥ १ ॥

तस्मात्तां सर्वयत्नेन स्थापयेल्लक्षणान्विताम् ।
देवागारेषु वायव्यामैशान्यां वा विशेषतः ॥ २ ॥

---

॥ पञ्चषष्टितमोऽध्यायः ॥

अथ धान्यशालालक्षणकथनात्मकं पञ्चषष्टितमाध्यायमुपक्रमते — **देवानां भूमिपालानामि**त्यादिना । देवालयेषु ब्राह्मणक्षत्रियवैश्यशूद्रादिवर्णगृहभवनहर्म्यप्रासादादिषु धान्यशालास्थापनेन हरिहरविरिञ्चिवासवमुखानां वास्तुनाथप्रमुखानां वास्तुदेवानां, भूदेवीप्रमुखदेवीगणानाञ्च तृप्तिर्भवति । तेन च क्रमात् मानवानां शुभपरम्पराप्राप्तिः । अत एतादृशक्षेमकारिणीं धान्यशालां यथाविभवं भूपालादयस्सर्वेऽपि मानवाः स्वस्वगृहभवनादिस्थानेषु शास्त्रोक्तलक्षणान्वितां स्थापयेयुरित्युपदेशः ॥

ततस्तादृशधान्यशालास्थापनस्थलानि निर्दिशति शास्त्रकारः **देवागारेषु वायव्यामि**त्यादिना । सकलविधदेवानामालयेषु देवीनामालयेषु च द्वितीयतृतीयादिप्राकारस्थलेष्वथवा समुचितेषु स्थानेषु गर्भगृहसूत्रप्रसारणशैल्या वायव्यां दिश्यथवा दिशाया-

भूपालभवने स्थाप्या कौबेर्यां सालकान्तरे ।
शोषे वाथ मृगे रोगे शालान्ते मानवे क्वचित् ॥ ३ ॥

चत्वरद्वितयान्ते वा क्वचिदन्तर्बहिर्मता ।
चतुरश्रं व्यासयुतं कल्पनं क्षेमदं नृणाम् ॥ ४ ॥

पूर्वाननमुदग्वक्त्रमथवा पश्चिमाननम् ।

---

ऐशान्यां तामिमां देवागारधान्यशालां शिलाघटितामाहोस्विदिष्टिकायोजितां वा यथाविभवं स्थापयेत् ॥

एवं ब्राह्मणक्षत्रियगृहभवनादिवास्तुस्थानेषु कौबेर्यां दिशि मध्यशालासूत्रप्रसारणरीत्या प्रकल्पयेत् । वैश्यशूद्रादिवर्णजानां गृहभवनादिवास्तुस्थानेषु शोषदेवभागे वा मृगदेवभागे वा विवाहशालासमीपस्थक्षुद्रगृहादिस्थानेषु वा तत्समीपे वा तामिमां धान्यशालां स्थापयेत् । अथवा क्वचिद्ग्रामनगरादिकल्पनेषु एवंरीत्या प्रथमचत्वरस्थानसमीपे वा द्वितीयचत्वरस्थानसमीपे वा सेयं धान्यशाला स्थाप्या । अथवैवं गृहकल्पनसहितां वा पृथक्कल्पनयुक्तां वा तामिमां शालां गृहरूपां शालारूपां कूटकल्पनयुक्तां वा प्रकल्पयेदिति स्थलनिर्देशक्रमो ज्ञेयः । ग्रन्थविस्तरभिया मतान्तरमत्र नाविष्क्रियते । तस्मादत्रोक्तशैल्या कल्पनीयस्यास्य धान्यशालानिर्माणस्य प्रमाणन्तु क्वचिच्चतुरश्रमानयुतं, क्वचिद्दैर्घ्याधिक्यवद्वा प्रजानां धान्यादिसम्पद्वर्धकमिति भावः ॥

कवाटानां द्वयं प्रायश्चतुष्कं क्वचिदीरितम् ॥ ८ ॥

---

किञ्चैतादृशधान्यशालाकल्पनस्य प्राथमिकद्वारन्तु पूर्वाननं स्थाप्यम् । अथवा तत्तत्कल्पनक्षुद्रगृहशालादिनिर्माणानुगुणमुदगाननं वा पश्चिमाननं वा स्थापयेदिति क्रमः । तथा चास्य धान्यशालाकल्पनस्यैतादृशद्वारस्थापनक्रमस्तु वैलक्षण्यभासुर इत्युत्तरवाक्यप्रतिपादितनानाकवाटस्थापनक्रमेणेति प्रतिभाति । कथम्? ग्रामगृहेषु वा नगरगृहेषु वा स्थापितसदनमहासदनभवनादिस्थानेषु तदन्तिकस्थलेषु वा क्वचित्कल्पितस्यास्य धान्यगृहनिर्माणस्य द्वारद्वयं स्थापनीयम् । कथं? वासववारुणदिशोरथवा दक्षिणोत्तरयोरथवा दिशासु तिसृषु कुड्यस्थापनं कारयित्वा एकस्यां दिशायां द्वारद्वयस्थापनं शुभकरमिति शिल्पसमयः ॥

किञ्च कलिङ्गद्राविडादिशैल्या द्वारस्थापनन्तु पूर्वोक्तरीत्या धान्यागारस्य दिशात्रयस्थलेषु भित्तिकल्पनमेकस्यां दिशायां द्वारमेकं स्थापयित्वा, तदुपरिभागे तन्मानं वा तत्प्रमाणहीनमानं वा द्वितीयद्वारं स्थापनीयमिति क्रमः । एवङ्करणेऽन्तस्स्थापनीयधान्यादिग्रहणे सौकर्यमिति भावो ज्ञेयः । एवमत्र धान्यागारे द्वारद्वयमेव कार्यम् । न तु द्वारत्रयं द्वारचतुष्कमिति क्रमः । एवंरीत्या मण्डलाकारधान्यगेहस्थापनमपि केचिन्नेच्छन्ति शिल्पक्रियाविदः । अन्ये तु पलालादिना स्थापनीयतात्कालिकधान्यस्थानन्तु मण्डलाकारवच्छुभदमिति । एवंरीत्या स्थापनीयेऽत्र

भिन्नप्रमाणभेदेन क्वचित्षट्कं तथाष्टकम् ।
अधःपट्टसमोपेतं घनपट्टादिभूषितम् ॥ ६ ॥
गोरूपं देवतारूपं कौबेरं रूपमेव वा ।
धान्यदेवीरूपयुक्तं तत्कल्पनमुदीरितम् ॥ ७ ॥
द्वारद्वययुतं वापि द्वारत्रययुतं क्वचित् ।

---

धान्यशालागारद्वारभागे कवाटद्वयमथवा कवाटचतुष्कं, क्वचिदुत्तमकल्पने कवाटानां षट्कमष्टकं वा स्थापनीयमिति तत्क्रमः ॥

किञ्च तादृशकवाटेषु प्रान्तभागमध्यभागतिर्यग्भागादिस्थलेष्वधःपट्टिकायोजनं कारयित्वा तत्र कवाटमध्यभागे वा तद्द्वारपार्श्वभित्त्यन्तस्थानेषु वा समुचितेषूपरिभागेषु वा धान्यदेवीरूपं चित्रादिना तक्षणादिना योजनादिना वा स्थापनीयमिति क्रमः । किञ्च क्वचित्केषुचिद्देशेषु शैल्यन्तररीत्या धान्यशालाकल्पने दीर्घाकारे सव्यपार्श्वस्थानेषु द्वारत्रयमपसव्यपार्श्वाङ्गणस्थानेषु च द्वारत्रयं स्थापयित्वा तत्पुरोभागेऽङ्गणकल्पनं शकटाद्यारोहणावरोहणस्थलसहितं दृढं कारयेदिति स्थलान्तरदेशान्तरशैल्यन्तररीतिश्चाविष्कृता ज्ञेया— **द्वारद्वययुतं...क्वचि-दित्यादिना** ॥

तथापि तत्र कल्पने प्रथमाविष्कृतरीत्या द्वारोपरि द्वारस्थापनं वा प्रत्यङ्गणयुग्मद्वारस्थापनं वा कार्यमिति च विकल्पः ।

प्रतिक्रमादूर्ध्वभागं क्वचिद्भूमेरधस्स्थितम् ॥ ८ ॥
सोपानसहितं वापि सौधशाबलकान्वितम् ।
कूटकल्पनयुक्तं वा शालाकल्पनरूपकम् ॥ ९ ॥

---

किञ्च कठिनभूमिषु वा उन्नतभूमिषु वा पर्वतोपरि स्थापितदुर्गनगरगृहादिषु वा समुचितस्थले प्रथमचत्वरद्वितीयचत्वरस्थानेषु वा चतुरश्रं वर्तुलं वा यथेप्सितमवटं खात्वा तत्र यथास्थलविभवं घनशिलासोपानावलिं कालेष्टिकाभिः कल्पनञ्च स्थापयित्वा भूगर्भाख्येऽवटे तस्मिन्धान्यराशिं पुञ्जीकृत्य तादृशावटमुखभागं पर्णफलकाद्याच्छादनोपरि मृन्मयादिना पुनरप्याच्छाद्य रक्षयेदिति क्वचिद्देशीयो विषयः प्रतिपादितः '**क्वचिद्भूमेरधस्स्थितम्**' इति लक्षणवाक्येन ॥

किञ्चैवंरीत्या क्वचिद्देशेषु केषुचिद्भूपालादीच्छानुगुणं खलादिस्थलं समुचितभूभागेषु घनशिलावलीभिः मध्यमधिष्ठानं कारयित्वा तदुपरि दृढीकृते स्थले घनशिलामयं कल्पनं सद्वारं स्थापयित्वा, तन्मध्ये धान्यराशिं विन्यस्य रक्षयेत् ॥

किञ्चैतादृशलक्षणान्वितस्यास्य कल्पनस्योर्ध्वधान्यगृहमिति नाम, पूर्वोक्तकल्पनस्य भूमिधान्यगृहमिति च नाम वदन्ति शास्त्रज्ञा इति । सर्वथाऽत्र धान्यागारकल्पनमेकभौमयुतं वा शाबलकवक्रेष्टिकाद्याच्छादनसहितं वा यथाभिरुचि यथाविभवं

स्थलार्हं विभवार्हं वा सदीपस्थानकं मतम् ।
दृढभूलम्बनोपेतं शिलाकुड्यान्वितन्तु वा ।
धान्यशालाकल्पनं तत्कल्पयेद्वा सपादकम् ॥ १० ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे
धान्यशालालक्षणकथनं नाम
पञ्चषष्टितमोऽध्यायः ॥

---

कारयित्वाऽस्य कल्पनस्याधोभागे दृढभूमिलम्बनं भित्त्यन्तभागेषु सुधालेपकल्पनञ्च तथा कार्यम्, यथा धान्यकणग्रहणपराणां मूषकादीनामुपद्रवादिकं न जायेतेति तत्क्रमः ॥

केचित्तु शिल्पशास्त्रप्रमाणज्ञाः क्रियासौष्ठवज्ञाश्च स्थपतिप्रभृतयो धान्यागारकल्पनमिदं परित उपभित्तिस्थापनादिकमिच्छन्ति । अन्ये तु मण्टपस्थापनरीत्या स्तम्भस्थापनपूर्वकमेतद्धान्यागारकल्पनमपि श्रेयस इति । अत एतादृशपरिपाटी च ग्रन्थान्तराभ्युपगतैवेति वयमत्र तटस्था इति सङ्ग्रहेण धान्यालयकल्पनलक्षणक्रमो विवृतः ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
धान्यगृहलक्षणकथनं नाम
पञ्चषष्टितमोऽध्यायः ॥



अथ गोशालालक्षणकथनं नाम

## षट्षष्टितमोऽध्यायः ॥

देवानाञ्च पितॄणां च गोसेवाऽऽनन्दकारिणी ।
गोभिस्स्वर्गफलं विन्दन्मोदते दिवि मानवः ॥ १ ॥

गोभिरेव सुखं पुंसां जायते नात्र संशयः ।
तस्मात्स्थपतिभिस्स्थाप्या गोशाला शुभवास्तुके ॥

चतुर्थभागसीमान्ते निष्कुटाराममध्यमे ।

---

॥ षट्षष्टितमोऽध्यायः ॥

अथ गोशालालक्षणकथनात्मकं षट्षष्टितमाध्यायमुपक्रमते— **देवानाञ्च पितॄणाञ्चे**त्यादिना । गोशालास्थापनेन गोरक्षणेन च भक्तिपूर्वसेवादिना च देवाश्च पितरस्तुष्यन्ति । गोसेवापरः पुमान्निर्धूतकल्मषः देहवियोगान्ते विमानं दिव्यमवाप्य स्वर्गलोके राजते । गोभिरेव धर्मो वर्धते, यागादिकर्मसाफल्यञ्च भवति । गोभिरेव पुंसामारोग्यादिः सम्पद्यत इत्यादिशास्त्रसंप्रतिपन्नफलश्रुतिं मनसि निधाय सर्वक्षेमजनकानां गवामावासशालां शुभवास्तुभागे स्थापयेदित्युपदिशति शास्त्रकारः । अत्रोक्तगोपदं तावल्लक्षणया वृषभमहिषादीनामप्युपलक्षणमिति साधवः ॥ २ ॥

तस्माच्छुभवर्धनीनां तासां गवां गोष्ठं वा शालां कुत्र वा स्थले स्थापयेदित्याकाङ्क्षायां तदर्हस्थलानि निर्दिशति — **चतुर्थभाग-**

शोषे वा भृङ्गराजे वा पश्चाद्भागस्थलेऽथवा ॥ ३ ॥

कल्पनेन समायुक्तं वियुक्तं वाऽथ कल्पयेत् ।
गोशाला मण्टपाकारा पार्श्वाङ्गणसमन्विता ॥ ४ ॥

---

**सीमान्ते** इत्यादिना । सर्वविधग्रामगृहाणां नगरगृहभवनादीनां च दैर्घ्यमानमष्टधा विभजेत् । अथवा कचिद्दशधेत्युक्तरीत्या प्रथमभागे प्राथमिकद्वारस्थापनं देहल्यलिन्दशालादिस्थापनञ्च संभवति किल । एवं द्वितीयभागे महाशालाचत्वरादिस्थापनं तृतीयभागे पुनरपि चत्वरान्तरक्षुद्रसदनानन्तरभोजनशालापाकशालाकूपादिस्थापनञ्च क्रमात्करणीयमित्युक्तं किल । अथ गृहवैशाल्यानुगुणं कचिद्दैर्घ्यानुगुणञ्च चतुर्थभागारम्भस्थले तामिमां गोशालां स्थापयेत। अथवा तादृशचतुर्थभागावसानस्थले स्थापयेत्। अथवा पञ्चमभागषष्ठभागादिस्थापितनिष्कुटभूमिभागे वा स्थापयेदित्यर्थः । अथवा पूर्वप्रतिपादितगृहदेवमण्डलभागविभजनरीत्या कचिद्गृहभवनादिस्थानेषु शोषदेवभागे वा भृंगराजदेवभागे वा एतद्भागान्तिमस्थले वा गोशाला स्थापनीयेति इच्छास्थलविभवानुकूलविकल्पोऽत्रधार्यः ॥

किञ्चैवंरीत्या निर्दिष्टे स्थले गोशालास्थापने गृहभवनादिमध्यनिर्माणपश्चाद्भागकल्पनेन सहितां वा तद्दूरतः पृथक्कल्पनयुतां वा यथेच्छं यथास्थलसौकर्यं प्रकल्पयेत् । किञ्च तामिमां गोशालां

कूटाकारा क्वचित्कार्या सपादा वा विपादका ।
सार्कप्रभा सावरणा हेमन्तादौ सुखप्रदा ॥ ५ ॥

समसूत्रसमायुक्ता महाद्वारक्रियान्विता ।
सुषीरभागद्वारा वा मुखकल्पयुता क्वचित् ॥ ६ ॥

---

पार्श्वाङ्गणे पेतशालारूपामथवा नेत्रस्तम्भस्थापनवशान्मध्याङ्गण-विभक्तमण्डपरूपिणीं वा क्वचिन्नृपभवनादौ स्थापयेत् । अथवा क्वचिद्गोपालालयभूमिषु ग्रामभूमेस्समुचिते स्थले पादस्थापनपूर्वक-विभक्तातिदीर्घाङ्गणपरम्परां निर्माय मध्यभागे कूटाकारकल्पनं वा निर्मापयेत् ॥

किञ्चैवंरीत्या चत्वरसहितचत्वररहितविविधरूपानिर्माणेऽपि शावलकाच्छादनं वा निरन्तरवक्रेष्टिकाच्छादनं वा क्वचिद्दारु-फलकालोहफलकाद्याच्छादनं वा सूर्यप्रभावातादिप्रसारणयोग्या-नेकगवाक्षस्थापनञ्चावश्यमत्र गोशालाकल्पने कार्यमेव । अन्यथा तेषां सुखादिर्न स्यादिति भावः । अपि चैवमत्र गोशालास्थापने मानवगृहद्वारप्रमाणापेक्षया प्रायशो द्विगुणितमानभासुरं द्वारं स्थापयेत् । केचित्तु द्वारद्वयमत्र स्थापनीयमिति ; तत्तु नाङ्गीकृतं शास्त्रज्ञैः स्थपतिवरैश्चेति भावः ॥

किञ्चैतादृशप्रमाणसहितगोशालाद्वारनिर्माणन्तु प्रायशः कल्पनस्थलस्य समसूत्रपातस्थायि कारयित्वा तादृशद्वारस्य पुरःप्रदेशे

सोपानद्वययुक्ता वा त्रिसोपाना क्वचिन्मता ।
नानाङ्गणविभक्ता वा नानारज्जुस्थलान्विता ॥ ७ ॥

पलालपङ्क्तिकोपेता मुखवेदिकया युता ।

---

वा तद्द्वारस्याधोभागे वा सोपानद्वयं क्वचित्सोपानत्रयं स्थापनीयमिति क्रमः ॥

अत्र तु कोऽपि नियमः । यथा — गोशालाकल्पनस्यास्य द्वारनिर्माणं तु घनशिलाभिः अथवा सुधेष्टिकाभिः, आहोस्विन्मानवगृहद्वारवत्सारदारुखण्डैर्यथाविभवं कल्पितमप्यत्रोक्तरीत्या एतादृशद्वारभागस्याधोभागे स्थापनीयसोपानत्रयकल्पनं त्ववश्यं घनशिलाखण्डकैरेव कल्पनीयम् । तत्र च सोपाने कमलरेखां क्वचिदिक्षुरेखां, क्वचिद्वलाहकरेखां नानाङ्गणविभक्ते स्थलान्तरे गोवत्सरेखामन्यत्र सस्याग्निवह्निदेवादिरूपञ्च यथाभिरुचि यथाप्रमाणशोभं तक्षयेदिति भावः । अयञ्च क्रमो गवां, तदुपासिनीनां प्रजानाञ्च क्षेमायेति शिल्पसमयः ॥

किञ्चैवंरीत्या यथाविभवं द्वारस्थापनेऽपि क्वचित्तादृशद्वारभागं सुषिरकल्पनोपेतं क्वचित्साधारणमानवगेहद्वारवदुपरिभागे कुड्याद्याच्छादनसमावृतं क्वचिन्नृपभवनादिगोशालाकल्पने एतादृशप्राथमिकद्वारसहितमेव क्षुद्रप्रमाणमुखमण्डपकल्पनमपि स्थाप्यमिति च विवेकः ॥

पञ्चकट्यसमोपेता नातिश्लक्ष्णा न कर्कशा ॥ ८ ॥
चिक्कणैरिष्टिकाखण्डैः पाषाणैर्वा क्वचित्स्थली ।
भूमिका कल्पनीयाऽत्र गोशालायां विशेषतः ॥ ९ ॥
मध्यचत्वरयुक्ता वा चत्वरानेकमण्डिता ।

---

अपि चैतादृशद्वारभागे यथाभिरुचि तदनुगुणप्रमाणभासुरं दृढकवाटयोजनं कारयित्वा एकाद्विकदण्डसूत्रस्थलतरणानन्तरं तदन्तस्स्थले नानाङ्गणतलं सममानं स्तम्भैस्सहितमथवा स्वशक्तिगोसंख्याद्यनुगुणं स्तम्भैर्हीनं वा कल्पनं साधयित्वा तादृशकल्पनोपरिभागे पूर्वोक्तरीत्या दृढाच्छादनं स्थापयेत् । अत्राच्छादनं शिलामयमपि न दोषायेति मतिः ॥

किञ्चैतादृशगोशालाया भूमितलं चिक्कणखण्डैरिष्टिकाघनखण्डैर्वा क्वचित्पाषाणखण्डकैर्घनीकृत्य दृढीकृत्य नातिकर्कशतां नातिश्लक्ष्णताञ्च नीत्वा तादृशाङ्गणतलेषु कुड्यसमीपे वा पलालतृणतुषंगादिस्थापनस्थानं, गवां वृषभानां महिषाणाञ्च वत्सादीनाञ्च शयनादिस्थलं पृथक्कारयित्वा तेषां पट्टिकानिर्माणं कारयित्वा तत्समीप एव बन्धनरज्जुकाण्डादिकं च स्थापयेत् । सति च गोवृषभमहिषादिबाहुल्ये पञ्चविंशतिगोबन्धनस्थानाख्यपञ्चकट्यकल्पनमेकाद्विकादिचत्वरस्थानञ्च यथास्थलवैशाल्यादिप्रमाणं स्थापयेदित्यर्थक्रमश्च बोध्यः ॥

कल्पनीया विशालान्तर्भागिका रेखणान्विता ॥ १० ॥

वाजिशालाप्रमाणा वा क्वचित्कार्या नृपालये ।
मुखाङ्गणसमोपेता मुखनासादिभूषिता ॥ ११ ॥

कण्डूपट्टिकयोपेता क्वचित्कार्या प्रकल्पना ।
नातिनिम्नोन्नतस्था च न कण्टकमहीरुहा ॥ १२ ॥

न जलस्रावकण्ठा च गोशाला शुभदा मता ।
मुखे वा द्वारपट्टे वा गोदेव्याकारकल्पनम् ॥ १३ ॥

---

किञ्च क्वचिद्भूपालगोपालाद्यर्थं कल्पनीयगोशालायां तु वाजिवारणशालाप्रमाणशैल्या नानाकल्पनं कल्पयेदिति च तत्कल्पनक्रमोऽपि विज्ञेयः । किञ्चैतादृशमध्यचत्वरादिस्थानेषु गोवृषभादीनां कण्डूनिवारणशिलादण्डञ्च निखाय प्राथमिकद्वारपुरोभागेषु तच्छालाकल्पनेन सहितं वा वियुक्तं पूर्वभागाङ्गणकल्पनं कार्यम् । अथवा तादृशाङ्गणकल्पनस्थापनाभावे प्राथमिकद्वारभागसमीप एव मुखनासामुखभद्राख्यकल्पनं वा विधीयताम् ॥

तस्मादेतादृशलक्षणोपेतामेव स्थापनीयामिमां गोशालां ग्रामनगरादिवास्तुभागेषु न निम्नत्वोन्नतत्वादिदोषदुष्टस्थलेषु स्थापयेत् । एवं कण्टकवृक्षसमीपे जलप्रस्रवणस्थलसमीपे वा वल्मीकस्थलसमीपे च गोशालामिमां न प्रकल्पयेत् । परन्तु यया रीत्या मानवानां सौख्यकारिणी गृहादिकल्पनरचना क्रियते

वंशशालां शाद्वलकां सौधकल्पयुतान्तु वा ।
सुकल्पनं गवां क्षेमकारणं परिकीर्तितम् ॥ १४ ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे
गोशालालक्षणकथनं नाम
षट्षष्टितमोऽध्यायः ॥

---

तथैव रीत्या इमामपि गोशालां शुभवास्तुस्थले तासां सुखदायिनीं मङ्गलकररचनोपेतां तोरणाद्यलङ्कृतां दीपस्थापनादिभासुरां च स्थापयेदिति भावः । क्वचिन्मागधवङ्गादिनिर्माणशैल्या गोशाला-निर्माणे मध्यचत्वरस्थाने एकद्वित्रिभौमकल्पनं नानावातायन-शिखरभासुरमवश्यं कल्पनीयमिति च क्रमः स्थपतिनियोग-कारिभिर्ज्ञेय इति ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
गोशालालक्षणकथनं नाम
षट्षष्टितमोऽध्यायः ॥



अथ ग्रामपुरद्वारलक्षणकथनं नाम

## सप्तषष्टितमोऽध्यायः ॥

ग्रामाणामपि सर्वेषां दुर्गाणाञ्च पुरामपि ।
मुखद्वारं व्यक्तरूपं यथामानं प्रकल्पयेत् ॥ १ ॥

गोपुरस्थापनाद्वापि महामण्टपकल्पनात् ।

---

॥ सप्तषष्टितमोऽध्यायः ॥

अथ ग्रामनगरमुखद्वारभागे कल्पनीयकल्पनलक्षणकथनात्मकं सप्तषष्टितमाध्यायमारभते— **ग्रामाणामपी**त्यादिना । तत्र खलु मण्डकादिनानाविधग्रामाणां भद्रकसर्वतोभद्रादिनानाविधनगराणां च मुखद्वारस्थलमतिमनोहरकल्पनभासुरं दूरतो दर्शनेऽपि पथिकादीनां सुव्यक्तरूपं कल्पनीयमिति लक्षणवाक्यार्थः । केन वा प्रकारेणैतादृशग्रामनगरमुखद्वारं सुव्यक्तं कल्पनीयमिति चेदाह **गोपुरस्थापनाद्वे**त्यादिना ॥

ग्रामाणां वा नगराणां वीथ्यादिसीमान्तिकस्थले समुचिते प्राच्यादिभागे जनगोवृषभवाजिवारणशकटादिगमनागमनयोग्यवैशाल्यौन्नत्याद्युपेतं कवाटार्गलादिसंरक्षणसामग्रीलसितं स्थानं मुखद्वारनामभाग्भवतीति प्रसिद्धिः । तस्माद्ग्रामलक्षणनगरलक्षणाध्यायोक्तरीत्या ग्रामद्वारपुरद्वारनगरद्वारराजधानीद्वाराख्यस्यास्य मुखद्वारभागस्योपरि सुधेष्टिकादिभिस्त्रिभौमगोपुरनिर्माणं

महास्तम्भस्थापनाद्वा महावृक्षप्रवर्धनात् ॥ २ ॥
अट्टापथस्थापनाद्वा घण्टास्थानप्रकल्पनात् ।

---

वा पञ्चभौमगोपुरनिर्माणं वा, सप्तभौमगोपुरनिर्माणं वा यथाभिरुचिविभवं स्थापयेत् । तस्मान्महामार्गादिषु गमनशीलानां जनानामेतादृशमुखद्वारगोपुरदर्शनेनैव दूरतः स्थानादयमत्र ग्रामादिः इति बोधो जायेत इति भावः ॥

अथवैतादृशपुरद्वारोपरि गोपुरस्थापनाभावे तस्य पुरद्वारस्य किञ्चिद्दूरे मुखभागे आलोकनशालाकल्पनरीत्या पञ्चतलसहितं सप्ततललसितं वा महामण्टपनिर्माणं कार्यम् । अथवा तादृशमण्टपकल्पननिर्माणशक्त्यभावे घनशिलामयमहास्तम्भनिखननं वा वरम् । तथाकरणस्यापि विभवाद्यभावे वटाश्वत्थाद्युन्नततरुबृन्दवर्धनं वा तन्मुखद्वारसमीपे कार्यम् । अथवा क्वचिदट्टापथाख्यं स्तम्भरूपकल्पनं इष्टिकासुधादिकल्पितं वा तत्र फलप्रदम् । अथवा तादृशमुखद्वारदेहल्यादिस्थानेषु समयनिवेदकघण्टावादनस्थलं कल्पयित्वा तत्र च महाघण्टां नीत्वा वादयेदिति । अयञ्च प्रकारो जीवानां क्षेमकर इति भावः ॥

किञ्चैतादृशभौमयुतमण्डपकल्पनमहास्तम्भस्थापनादिकन्तु ग्रामनगरराजधान्यादिमुखभागस्थलेष्वेव कार्यम् । न पर्वतोपरि कल्पितदुर्गनगरादिमुखद्वारभाग इति । तथाऽपि क्वचित्पर्वत-

तटाकसहितं वापि सन्निकृष्टमहीरुहम् ॥ ३ ॥
जलाशययुतं वापि नदीह्रदसमन्वितम् ।

---

सानुभागादिस्थानेषु स्थापितस्य ग्रामनगरादेः मुखद्वारभागेऽत्रोक्त-महास्तम्भादिस्थापनमपि श्रेयस इति शिल्पसमयः । किञ्च पद्मकनगरसर्वतोभद्रनगरादिमुखद्वारस्थलं च नानादेशगामिनां महामार्गेण संयुतं कल्पयेत् ॥

किञ्चात्र महाग्रामनगरादिमुखद्वारसमीपे समुचिते स्थले पथिकादीनां वाजिवारणगोवृषभादीनां च विश्रान्तिस्थानकल्पनं यथाविभवं स्थापयेत् । अपि चैतादृशमुखद्वारसमीपभूमौ तटाक-वापीकूपादिनिर्माणं यथास्थलविभवं कारयेत् । किञ्च क्वचित्सार-वद्भूभागेषु अस्य द्वारभागस्य समीपे रसालपनसनारिकेलचूत-पुन्नागादीन्वर्धयेत् । एतेनास्य मुखद्वारतलस्य स्पृहणीयता, सुखकरता च प्रतिपादिता ज्ञेया । किञ्च नगरग्रामादिमुखद्वार-समीपभूमौ एतादृशफलवृक्षच्छायावृक्षादिवर्धनविभवेन तादृश-नगरादेरन्तर्वासिनां जनानामत्यन्तारोग्यकरत्वं सौकर्यादिकञ्च भवेदिति ध्वन्यते ॥

अपि चात्र मुखद्वारतले मधुरजलस्रवणशीलतटाकादि-कल्पनाद्यभावे जलाशयस्थापनं वा नदीसैकतभागात्कुल्यानयनं वा ह्रदादिस्थापनं वा कार्यम् । किञ्चात्र मुखद्वारस्थले कन्दुक-

सुरक्षितं योधगणैर्भटैर्वा भृत्यकैरपि ॥ ४ ॥

सायुधन्तु पुरद्वारं रक्षणीयं विशेषतः ।
एकं द्वयं त्रयं वापि चतुष्कं मेलनं भुवः ॥ ५ ॥

विहारस्थानकोपेतं दर्शनस्थानकं तथा ।
महापणश्रेणियुतं भूरिद्रव्यैर्युतं क्वचित् ॥ ६ ॥

वार्षिकं मासिकं स्थानं पाक्षिकं वा क्वचिन्मतम् ।
लोहदारुशिलावेणुक्रयस्थानादिसंयुतम् ॥ ७ ॥

---

क्रीडास्थानाश्वारोहणस्थानमल्लयुद्धाजादियुद्धस्थानानि च यथास्थलविभवकल्पनमानं स्थापयेत् । किञ्चात्रैव स्थलान्तरे आलोकनकल्पनस्थानं निर्माय नगरवीथीतलादेतादृशमुखद्वारभागे एकं वर्त्म वा वर्त्मद्वयं वा नगरलक्षणप्रकरणोक्तरीत्या चतुर्ष्वपि दिग्भागेषु मार्गचतुष्कं वा कार्यम् । अतः पूर्वोक्तरीत्या तादृशद्वारमार्गचतुष्केन सह देशान्तरगामिमहापथसम्मेलनं कारयित्वा तेषु स्थानेषु यथास्थलविभवं क्वचित्प्रतिवर्षं प्रतिमासं प्रतिपक्षं वा संघीभूय नानाविधद्रव्यक्रयविक्रयशीलानां वणिजां निवासस्थानं तदीयद्रव्यस्थापनस्थानञ्च कल्पयेत् । किञ्च स्थलान्तरे क्वचिद्भागे भूरिप्रमाणवत्ताम्रपित्तलकांस्यादिलोहानां क्रयस्थानं, क्वचिद्भूरिदारुफलकादिक्रयस्थानं, क्वचिद्घनशिलावेणुप्रमुखद्रव्यक्रयस्थानानि एतादृशद्रव्यवर्गनिर्माणशालादीनि च स्थापयेत् ॥

तद्दूरभागकोणेषु चण्डालानामपि क्वचित् ।
पुलिन्दानां किरातानां मांसविक्रयिणामपि ॥ ८ ॥

नीचानामपि दिक्कोणे स्थानं भूमिवशान्नयेत् ।
स्थलयोग्यं खलस्थानं कचित्तत्रैव कल्पयेत् ॥ ९ ॥

नृत्तस्थलयुतं वापि लोहकार्यालयान्वितम् ।
मुखद्वारं कल्पनीयं सुखदं शिल्पिभिः क्रमात् ॥ १० ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे
ग्रामपुरद्वारलक्षणकथनं नाम
सप्तषष्टितमोऽध्यायः ॥

---

किञ्चैतादृशमुखद्वारस्य बहिर्दूरतरस्थले, चतुर्ष्वपि दिक्कोणेषु यथास्थलविभवं चण्डालपुलिन्दकिरातमांसविक्रयिणां आवासस्थानानि च स्थापनीयानीति । अपि चास्य मुखद्वारकल्पनस्य समीपस्थले व्रीहिचणकगोधूमादिसमीकरणार्हखलभूमिं निर्दिशेत ॥

किञ्च नगरादिद्वारभागस्थानेषु स्थपतिभूपालप्रमुखेच्छया स्थलविभवेन च मदिरागृहं नाटकशालां नानाविधक्रियाशालादींश्च जनसौकर्यदायिनः प्रकल्पयेत् । किञ्च येन वा प्रकारेण पथिकानां श्रान्तानां अन्येषाञ्चात्र मुखद्वारभागसमीपस्थले सुखादिर्भवेत्तथा

अथ मार्गलक्षणकथनमार्गशालालक्षणकथनात्मकौ

**अष्टषष्टितमैकोनसप्ततितमाध्यायौ**

**कुलकरूपौ ॥**

**दुर्गमार्गः स्थापनीयः स्थलमानवशात्क्वचित् ।**
**पञ्चदण्डप्रमाणेन हीनस्तु न सुखप्रदः ॥ १ ॥**

---

युक्त्या शिल्पिभिरूह्य नानाविधकल्पनं करणीयमिति सङ्क्षेपतो ग्राममुखद्वारनगरमुखद्वारलक्षणं प्रतिपादितं बोध्यम् ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
**ग्रामपुरद्वारलक्षणकथनं नाम**
**सप्तषष्टितमोऽध्यायः ॥**



॥ अष्टषष्टितम-एकोनसप्ततितमाध्यायौ ॥

अथ मार्गलक्षणमार्गशालालक्षणकथनात्मकौ अष्टषष्टितमैकोनसप्ततितमाध्यायौ कुलकरूपौ प्रतिजानीते — **दुर्गमार्गः स्थापनीय** इत्यादिना । पूर्वोक्तग्रामनगरमुखद्वारभागतलमारभ्य तत्र तत्र ग्रामान्तरनगरान्तरदेशान्तरादिगमनार्थं कल्पनीयमार्गस्तु साधारणदण्डदशकवैशाल्यसहित एव स्थापनीयः । क्वचित्तन्न्यूनप्रमाणसहितो वा, तदधिकप्रमाणयुतो वा मार्गस्थलविभवानुगुणं

गिरिदुर्गसरण्यान्तु किञ्चिन्न्यूनप्रमाणकम् ।
कल्पनं पङ्क्तिसंयुक्तं विश्रान्तिस्थलकान्वितम् ॥ २ ॥

क्वचित्करग्रहोपेतं तुङ्गसत्वं सभूरुहम् ।
क्वचित्सानुपुरद्वारायनमानं प्रकल्पयेत् ॥ ३ ॥

---

महीधरनदीजलाशयादितलप्रान्तस्थलवैशाल्यानुगुणं च स्थापनीय इति मतान्तरमानक्रमश्च बोध्यः ॥

किञ्च दुर्गलक्षणप्रकरणोक्तरीत्या महीधरमौलिभागे यदि दुर्गनगरं निर्मितं तदा तादृशदुर्गगिरिदुर्गनगरगमनार्हमार्गवैशाल्यन्तु स्वशक्तिस्थलविभवानुगुणं योजनीयम् । अथापि सर्वथा न साधारणदण्डपञ्चकवैशाल्यहीनता कार्या । पर्वतमौलिकल्पितदुर्गनगरमार्गस्यैतादृशमार्गवैशाल्यकथने मार्गान्तरवैशाल्ययोजनक्रमस्तु न कथनीय एव । तत्र तत्र स्थलानुगुणं मानलक्षणप्रकरणप्रतिपादितरीत्या च मार्गवैशाल्यादिकं योजनीयमिति भावः कार्यज्ञैर्ज्ञेयः ॥

किञ्च सर्वत्र देशेषु पर्वताद्युन्नतस्थलारोहणार्थं कल्पनीयेषु सोपानमार्गेषु सोपानरहितशकटादिगमनयोग्यमार्गेषु च मध्ये मध्ये गमनशीलानां विश्रान्तिस्थलकल्पनं, क्वचित्तादृशमार्गस्योभयोरपि पार्श्वयोर्भृग्वादिस्थलादेरत्यगाधताद्युपेतस्थलेषु जनानामश्वादीनाञ्च पार्श्वभागपतनभयनिरासाय सौकर्यहेतवे च करग्रहाख्यकुड्यकल्पनं चावश्यं कार्यमित्युपदेशः ॥

प्रतोलीमानगणनाद्द्विगुणं त्रिगुणं तु वा ।
कुल्यासेतुयुतं वापि महासेतुयुतं क्वचित् ॥ ४ ॥

पक्षयोस्सलिलस्रावो घनकल्पनमेदुरः ।

---

किञ्च सानुपुरं = पर्वतसानुभागनिर्मितनगरं, तस्य द्वारमार्गवैशाल्यादिकं तु नगरमार्गवैशाल्यसममानं वा तादृशसानुतटवैशाल्याद्यनुगुणमानं वा योजनीयमिति प्राचां व्यवहारः। शास्त्रकारस्याशयस्तु ग्रामवीथ्यादिषु यद्वैशाल्यं तद्द्विगुणितमानं वा त्रिगुणितमानं वा ग्रामद्वारमार्गादिषु योज्यम् । एवंरीत्या पद्मकादिनगरवीथिषु यद्वैशाल्यं कृतं तद्द्विगुणितमानं वा तात्त्रिगुणितवैशाल्यं वा नगरमार्गस्य नेयमिति क्रमः ॥

किञ्च पूर्वप्रतिपादितरीत्या वीथीमार्गलक्षणकथनप्रतिपादितरीत्या ग्राममार्गनगरमार्गराजधानीमार्गमहामार्गादिषु एतन्माननयनमपि सतां सम्मतमिति मतभेदेन प्रमाणमुक्तं बोध्यम् — 'प्रतोलीमानगणनाद्द्विगुणं त्रिगुणं तु वा' इति ॥

किञ्चैतादृशवैशाल्यसहितस्य देशान्तरनगरान्तरगमनयोग्यस्य मार्गस्य मध्यभागे स्थलान्तरे वा जलाशयकुल्यादीनां तिर्यग्गमने तादृशकुल्यादिमानानुगुणं विधाय, तत्र घनकल्पनसेतुस्थापनं कारयित्वा तत्सेतोरुपरि तादृशमार्गप्रसारं प्रसारयेदित्यर्थः। किञ्चैवंरीत्या क्वचित्तादृशमार्गमध्यभागे नदीमहानदीह्रदादीनां

महाजलगतिस्थाप्या दूरे दूरतरेऽपि वा ॥ ५ ॥
नदीमेलनकल्पो वा चाब्धिमेलनकल्पनम् ।
मध्योन्नतिः पार्श्वनिम्नं घनकल्पनसंयुतम् ॥ ६ ॥
शिलाखण्डैः कुम्भिखण्डैर्घनैर्मेदुरकल्पनम् ।
गजपादैरश्वपादैर्मर्दितं च दृढीकृतम् ॥ ७ ॥
जलनेत्रयुतं वापि स्थलनेत्रयुतन्तु वा ।

---

तिर्यग्गमने दृढभूमिलम्बनस्तम्भस्थापनपूर्वकं घनसेतुकल्पनं कार्यमिति च शिल्पसमयः ॥ ४ ॥

किञ्चास्य मार्गस्य पक्षयोरुभयोरपि घनवर्षितसलिलादिनिस्सारणार्हां कुल्यां कचिन्महाकुल्याञ्च खातयित्वा तस्यास्तस्य मार्गस्य च पार्श्वतटं शिलाखण्डघटनादिना दृढकल्पनं विधाय च तादृशमार्गोभयपक्षकुल्यामासन्नजलाशयेषु वा ह्रदेषु नदीषु वा क्वचित्समुद्रेषु योजयेत् । तदानीमेव तद्द्वारा झटिति वर्षादिजलस्रावो भवेदिति भावः ॥

किञ्चैतादृशमार्गतलं घनशिलाघटितं कारयित्वा क्वचित् कुम्भिखण्डाख्यबृहच्छिलाघटितञ्च कारयेत् । किञ्च तादृशमार्गमध्यतलं प्रान्ततलञ्च पूर्वोक्तरीत्या गजपादाख्यमर्दनशिलाखण्डैः क्वचिदश्वपादाख्यमर्दनशिलाखण्डैर्दृढकल्पनं मेलयित्वा कचित्तादृशमार्गतले घनवर्षितजलनिस्सरणार्थं जलनेत्राख्यं सरन्ध्रघनशिलामेलनमुभयोः पार्श्वयोः कारयेत् ॥

कल्पनं विविधाकारं कण्ठालस्थलसंयुतम् ॥ ८ ॥

वकुलस्तिनिशोऽश्वत्थो वटश्च ककुभादयः ।
वर्धयेत्तान्विशेषेण छायावृक्षाश्च ये मताः ॥ ९ ॥

पक्षयोरुभयोरेवं विश्रान्तिस्थानकेषु च ।
कूटिकामुखभागेषु मार्गमेलनकेषु च ॥ १० ॥

वैशाल्यं द्विगुणं स्थाप्यं कल्पनं तत्र सम्मतम् ।
मार्गलक्ष्मशिलोपेतं स्थानलक्ष्मशिलं क्वचित् ॥ ११ ॥

---

किञ्च तादृशमार्गप्रान्तोभयतलयोः वकुलतिनिशाश्वत्थ-वटककुभादीञ्छायातरूंन्वर्धयित्वा तदधोभागेषु कण्ठालस्थापन-स्थलमेकहस्तप्रमाणोन्नतिकं शिलाकल्पनमिष्टिकाकल्पनं वा क्वचित्सोपानं प्रकल्पयेत् । किञ्चैतादृशलक्षणान्वितस्यास्य मार्गस्य क्वचिन्मार्गान्तरमेलने सति तत्स्थाने द्विगुणितप्रमाणं वा, त्रिगुणितप्रमाणं वा वैशाल्ये योजनीयम् । एवमेतादृशमार्गतले क्वचिद्विश्रान्तिस्थानस्थलेषु कुटिकामुखाख्यरक्षकावासस्थानेषु च किञ्चिद्वैशाल्याधिक्यं कार्यमिति लक्षणवाक्यार्थः । अपि चैतादृश-रक्षकावासस्थानकल्पनलक्षणादिकन्तु उत्तराध्याये प्रतिपादयिष्यते ॥

किञ्चैषु मार्गभागेषु नगरान्नगरान्तरदूरज्ञानार्थमेकघटिका-कालगमनार्हेयं शिला, घटिकात्रयकालगमनार्हेयं शिलेत्यादिदूर-प्रमाणप्रदर्शकाचिह्नितां शिलां क्वचित्तत्तद्ग्रामपुरनगरारण्यमहीधरादि-

नदीह्लदतले वापि महीधरतलेऽथवा ।
क्वचित्स्थलवशान्मानं कारयेद्दृढकल्पनम् ॥ १२ ॥

क्वचित्स्थलवशान्निम्नमुन्नतं च प्रकल्पयेत् ।
सेतुमार्गप्रान्तपक्षकल्पनं घनशैलकम् ॥ १३ ॥

पादप्रसर्पणाद्वापि महापादप्रसर्पणात् ।
पङ्क्तिक्रमस्पर्शनीया सलिलस्थलकल्पनम् ॥ १४ ॥

अगाधस्थलमार्गेषु योधस्थानयुतं क्वचित् ।

---

स्थानप्रदर्शकचिह्नयुतां शिलां च यथाप्रमाणक्रमं स्थापयेत् । किञ्चैतादृशलक्षणान्वितं मार्गतलं क्वचिन्नदीह्लदमहीधरजलाशयादिस्थानसमीपगाऽपि यदि तदा विविधकार्यादिसौकर्यहेतवे किञ्चिद्वैशाल्यहीनं वा प्रकल्पयेत् । तथा तादृशस्थलादिषु सेतुकल्पने क्वचिन्निम्नमानं क्वचिदौन्नत्ययुतं तत्तत्स्थलवशात् प्रकल्पनीयम् ॥

किञ्चैतादृशमार्गमध्ये सेतुकल्पनस्य पक्षयोरुभयोरपि घनशिलाकल्पनमङ्कणविभक्तं, तथा दृढपादप्रसरणविभक्तं, महापादप्रसरणविभक्तञ्च क्वचित्कारयित्वा नदीह्लदजलाशयादिसलिलग्रहणार्थं मार्गतलादधोभागे घनशिलाघटितसोपानकल्पनं ससौधलेपञ्च कारयित्वा तादृशसोपानमार्गस्थलेषु तत्स्थलरक्षकयोधस्थानञ्च प्रकल्पयेत् । राजधान्यादिमहानगरवीथीभागेषु एतादृश-

तिर्यङ्मार्गेऽथवा शाखामार्गेष्वपि करग्रहम् ॥ १५ ॥

शृङ्खलाकलनं वापि भित्तिकल्पनमेव वा ।
कलशस्थापनैर्युक्तं स्थलयुक्तप्रकल्पनम् ॥ १६ ॥

क्वचिदङ्गणकोपेतं बहिरन्तस्तु वा पुरः ।
मध्ये मण्टपसंयुक्तमथवा वर्त्म कारयेत् ॥ १७ ॥

पार्श्वारामयुतं कार्यं क्वचिद्वर्त्म महायनम् ।
युक्त्याऽन्यत्कल्पयेच्छिल्पी प्राणिनां सुखदायकम् ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे
मार्गलक्षणमार्गशालालक्षणकथनात्मकौ
अष्टषष्टितमैकोनसप्ततितमाध्यायौ
कुलकरूपौ ॥

---

मार्गस्थलेषु तिर्यङ्मार्गेषु क्वचिच्छाखामार्गेषु च करग्रहकल्पनं वा शृङ्खलामेलनं वा प्रकल्प्य तादृशस्थलेषु क्षुद्रकुड्यकल्पनं सशिखरं क्वचिदङ्गणकल्पनं तत्स्थानस्य बहिःप्रदेशे वाऽन्तःपुरप्रदेशे वा क्वचिद्विश्रान्तिकल्पनं च योधकानां पथिकानाञ्च प्रकल्पयेदिति तत्क्रमः ॥

किञ्चैतादृशलक्षणान्वितस्य मार्गस्य महामार्गस्य चोभयपक्षयोराराभादिस्थापनं कूपवापीसहितञ्च प्रकल्पयेदिति क्रमः । एवमेतादृशमार्गस्थापनन्तु मानवगोमहिषादिसर्वजन्तूनां च सुख-

अथ मार्गविश्रान्तिस्थलकल्पनलक्षणकथनं नाम

## सप्ततितमोऽध्यायः ॥

सर्वत्र मार्गभागेषु कल्पनं भयनोदकम् ।
सायुधानां भटानाञ्च स्थितिर्धैर्यप्रदायिनी ॥ १ ॥

तस्मात्तत्कल्पयेच्छिल्पी क्रोशमात्रस्थलादिषु ।
श्रान्तानां पथिकानाञ्च विश्रान्तिस्थानकैर्युतम् ॥

---

प्रदकल्पनादियुतं प्रकल्पयेदिति सङ्ग्रहेण मार्गलक्षणमार्गशाला-लक्षणमुक्तं बोध्यम् ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
**मार्गलक्षणमार्गशालालक्षणकथनात्मकौ**
**अष्टषष्टितमैकोनसप्ततितमाध्यायौ ॥**



॥ सप्ततितमोऽध्यायः ॥

अथ मार्गविश्रान्तिस्थलनिर्माणलक्षणकथनात्मकं सप्ततितमाध्यायं प्रतिजानीते — **सर्वत्र मार्गभागेषु** इत्यादिना । पूर्वोक्तरीत्या ग्रामान्तरनगरान्तरदेशान्तरगमनयोग्यमार्गमहामार्गादिस्थानेषु क्रोशप्रमाणपरिमितेषु मध्ये मध्ये खड्गाद्यायुधधारिपुरपालकमार्गपालकादिस्थाननिर्माणन्तु तन्मार्गद्वारगमनशीलानां

दृढमण्टपकल्पं वा दृढकूटप्रकल्पनम् ।
दण्डिकाकल्पनं वापि नानासनसमन्वितम् ॥ ३ ॥

---

पथिकादीनां चोरदुष्टसत्वादिभयनिवारणहेतुर्भवति । किञ्च तेषां पथिकादीनां धैर्यप्रदञ्च । तस्माद्भूपालादिभिरवश्यं मार्गभागेषु प्रतिक्रोशपरिमाणस्थलेषु, अरण्यभागेषु क्वचित्तदधिकमानेषु वा तादृशयोधस्थाननिर्माणं कार्यम् ॥

तादृशस्थानेषु क्वचित्समीपे वाऽध्वगमनादिना श्रान्तपथिकविश्रान्तिस्थानाख्यं मण्टपरूपकल्पनं, अथवा मध्यभागे समुचितप्रमाणं चत्वरस्थलं प्रकल्पयित्वा तत्स्थलं परितोऽङ्गणकल्पनवशात्कूटकल्पनाख्यानिर्माणञ्च कार्यम् । अथवा क्वचिद्ग्रामान्तरगामिषु क्षुद्रमार्गमध्यभागादिस्थलेषु दण्डिकाकल्पनाख्यमतिदैर्घ्यवदेकाङ्गणं वा निर्मापणीयम् । एवंविधेष्वेतादृशकल्पनेषु सर्वत्र श्रान्तानां पथिकादीनां श्रमापनोदनक्षमान्यासनकल्पनानि विविधप्रमाणानि क्वचित् प्रकल्पयेत् । तथा स्थलान्तरे तेषां तात्कालिकपाकादिनिर्माणार्हस्थलं सचुल्लीकं सौकर्यदायीनि कल्पनान्तराणि च निर्मापयेदित्युपदेशः ॥

किञ्च पूर्वोक्तेषु मण्टपकूटादिविश्रान्तिस्थानेषु मध्यचत्वराङ्गणसमीपस्थकुड्यादिस्थानेषु दर्शनीयेषु तेषां पथिकादीनामुल्लासजनकानि देवगन्धर्वनलनहुषादिभूपालादीनां चित्रकल्पनानि

त्रिभूमिगोपुरं वापि पञ्चभूगोपुरन्तु वा ।
सप्तभूगोपुरं वापि पृथुस्तम्भयुतन्तु वा ॥ ४ ॥

योजयेत्कल्पविच्छिल्पी दृढं सुव्यक्तकल्पनम् ।
देवगन्धर्वभूपालचित्रभासुरकुड्यकम् ॥ ५ ॥

नानाङ्गणसमोपेतं नानापङ्क्तिविराजितम् ।
मध्यचत्वरयुक्तं वा सविमानतलं क्वचित् ॥ ६ ॥

---

संयोज्यानि । किञ्चैतादृशविश्रान्तिस्थानाख्यकल्पनस्य प्राथमिकद्वारोपरिभागेषु वा तद्वारस्थलस्य पुरतः किञ्चिद्दूरस्थले वा सति बहुविभवे भूमिलम्बनपूर्वकं त्रिभौमगोपुरं वा पञ्चभौमगोपुरं वा क्वचित्सप्तभौमगोपुरं वा पूर्वोक्तरीत्या सुव्यक्तकल्पनं स्थापयेत् । किञ्च विश्रान्तिस्थलेष्वेवं गोपुरनिर्माणस्य फलन्तु पुरद्वारभागकल्पितगोपुरस्यैवोह्यमिति भावः ॥

किञ्च क्वचित्पाञ्चाल्यादिशैलीषु एतादृशविश्रान्तिस्थानद्वारगोपुरसमीपे तत्सहितं वा पृथङ्नानासोपानसंयुक्तनानाङ्गणकल्पनमवश्यं स्थापनीयमिति लक्षणवाक्यार्थः । अस्य विशदार्थस्तु मार्गमध्यभागसंप्राप्ततत्तत्स्थलनिम्नोन्नताद्यनुगुणं क्वचित्पञ्चषसोपानकल्पनं, क्वचिद्विंशत्यधिकसोपानकल्पनं वा स्थापयित्वा तदुपरिभागेषु मध्ये मध्ये चत्वरविभक्तानेकाङ्गणकल्पनं स्थापनीयमिति ॥

सव्ये सव्येतरे भागे कण्ठालस्थापनं वरम् ।
वटोऽश्वत्थो नारिकेलः पनसस्सहकारकः ॥ ७ ॥

वर्धनीयाः कुन्दलताः पूगनारङ्गभूर्जगाः ।
पुन्नागश्चापि नागाश्च निष्कुटार्हाः क्वचित्स्थले ॥

---

किञ्चात्रोक्तैतादृशकल्पनप्रमाणादिकं तु स्थपतितक्षकादिभिरेवोह्यमिति नियमः । तथा च तत्तन्मार्गपथिकसंख्यानुगुणं दोषहीनशुभस्थलप्राप्त्यनुगुणं च दण्डैकमानं वा दण्डद्वयमानं वा क्वचित्तदधिकमानं वाऽङ्गणतलं विभज्य तदनुगुणं चत्वरभागादिकञ्च मात्वा घनेष्टिकाशिलाखण्डादिभिर्घनकल्पनावरणं नेयमित्यादिक्रम ऊह्य एत्र ॥

तस्मादेतादृशविश्रान्तिस्थानकल्पनस्य सव्यभागे वाऽपसव्यभागे वा क्वचिदुभयपार्श्वयोश्च घनशिलाभिः कण्ठालस्थापनमवश्यं कार्यम् । तदेव पथिकानां भारवाहिनां विश्रान्तय इति भावः । कण्ठालकल्पनं नाम मानवादिभिर्मौलितलधारितभारावरोहणयोग्यमेकदण्डोन्नतिकघनशिलाघटनमित्यर्थः (द्राविड्यां சுமைதாங்கி स्थलमिति प्रसिद्धिः) ॥

किञ्च सर्वत्रैतादृशविश्रान्तिस्थानकल्पनस्य वास्तुभूमौ वा तद्वासन्नशुभवास्तुभूमौ वा तत्रत्यनदीतटाकह्रदादितीरभागे वा वटाश्वत्थपुन्नागनारिकेलपनससहकारादिवृक्षवर्गान् लतावर्गांश्च

जलाशयः पल्वलश्च कर्तव्यः पृथुवारकः ।
वाहस्थानं वृषस्थानमन्तिके कारयेद्बुधः ॥

क्वचित्तु मदिरागेहं प्राणिनां सुखदायकम् ।
तृणस्थानमथान्यच्च कल्पयेत्क्रोशमात्रके ॥ १० ॥

पूर्वापरगृहद्वारयोधस्थानं प्रकल्पयेत् ।
द्वारालङ्करणं कार्यमन्यच्च शुभदर्शनम् ॥

चतुर्वर्गप्रदीपाढ्यं पञ्चगेहसमन्वितम् ।

---

फलदायिनस्संवर्धयेत् । एतद्वर्धनेन तन्मार्गगमनशीलानां पथिकादीनां बहुधोपकृतिरिति भावः ॥

किञ्चैतादृशवृक्षाणामधोभागे वा तत्समीपस्थले वा समुचिते धान्याढकादिभारवहनव्यग्रशकटवृषभाद्यवरोहणस्थानमवश्यं कल्पनीयम् । तत्रैव क्वचिन्मदिरागेहं वा यथेप्सितं स्थलान्तरे कोणान्तरे वा दूरस्थले स्थापयित्वा शकटादिभारवहनपरिश्रान्तवृषभोष्ट्रवाजिवारणादिजीवानां क्षुन्निवारणार्हतृणादिस्थापनस्थानानि वैश्यवर्गद्वारेण क्वचित्स्थापयेत् । किञ्चात्र क्वचित्पथिकविश्रान्तिशालाकल्पने मागधशूरसेनादिशैल्या निर्मिते कल्पनस्यास्य मार्गद्वयमेव स्थापयित्वा तत्र च पूर्वभागे पश्चिमभागे च गृहे एतत्कल्पनरक्षकसायुधयोधस्थानं च निर्दिशेत् ॥

अपि चात्र समुचितेषु स्थानेषु चत्वरस्थापनतलमध्यभागे

तोरणैश्चित्रकैर्युक्तं मार्गद्वारप्रकल्पनम् ।
स्थापयेत्कल्पनं युक्त्या प्राणिनां सुखदायकम् ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे
मार्गविश्रान्तिस्थलकल्पनलक्षणकथनं नाम
सप्ततितमोऽध्यायः ॥

---

क्वचिच्चतुर्वर्गाख्यचतुरङ्गणमार्गस्थापनं विभज्य तन्मध्ये पञ्चगेहकल्पनं वा सप्तगेहकल्पनं वा निर्मापयित्वा तत्र सायं मङ्गलदीपारोपणं प्राणिसुखावहं तोरणाद्यलङ्करणानि च यथायुक्तिविभवं स्थापयेदिति लक्षणवाक्यार्थः ॥

किञ्चात्र कल्पने मानान्तरशैल्या निर्माणान्तरादिकन्तु मध्यसूत्रमाननयनपूर्वकं शिल्पिभिरेवोह्यमिति संग्रहेण मार्गविश्रान्तिस्थलनिर्माणलक्षणमुक्तं ज्ञेयम् ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
**मार्गविश्रान्तिस्थलकल्पनलक्षणकथनं नाम
सप्ततितमोऽध्यायः ॥**



अथ विशेषभौमलक्षणकथनं नाम

## एकसप्ततितमोऽध्यायः ॥

तत्राद्यस्य मेरुभवनस्य लक्षणम् ॥

विशेषभौमनिर्माणं क्वचित्कार्यं शुभे स्थले ।
मेरुमन्दरकैलासत्रिविष्टपवनाख्यकम् ॥ १ ॥

एकत्र कल्पयेद्वापि स्थलभेदेन वा पुनः ।
राज्ञां मङ्गलदायीति कीर्तितं तन्महर्षिभिः ॥ २ ॥

---

॥ एकसप्ततितमोऽध्यायः ॥

अथ विशेषभौमलक्षणकथनात्मकमेकसप्ततितमाध्यायमारभते — विशेषभौमनिर्माणमित्यादिना । क्वचिन्नगरराजधान्याद्युत्तमवास्तुभूभागे चक्रवर्तिभूपालसामन्तक्षत्रियादीनां सुखवासार्थं कल्पनीयानां प्रासादहर्म्याद्युत्तमनिर्माणानां मध्यभागे विशेषभौमलक्षणमवश्यं स्थापनीयम् । एवं स्थापनमेव पार्श्वस्थकल्पनानां प्रासादानाञ्च शोभाकरम्, तद्वासिनां क्षत्रियाणाञ्च क्षेमजनकमिति भावः । तस्मात्तादृशविशेषभौमकल्पनन्तु प्रसिद्धकोट्या पञ्चविधं भवति । यथा— (१) मेरुभवननिर्माणम्, २. मन्दरभौमनिर्माणम्, ३. कैलासभौमनिर्माणम्, ४. त्रिविष्टपभौमनिर्माणम्, ५. वनभौमनिर्माणम् इति ॥

एवं प्रसिद्धं पञ्चविधं विशेषभौमकल्पनं राजप्रासादमुख्य-

दक्षिणोत्तरसूत्रान्तं सममानमथापि वा ।
योजयेन्मेरुभवनं मानं मध्यस्थकूटके ॥ ३ ॥

---

कल्पनसहितमथवा तेषां कल्पनानां मध्यभागे वाऽऽहोस्वित्स्थलभेदेन भूपालेच्छया वा निर्दिष्टे शुभस्थले पृथगेव स्थापयेदिति स्थलनिर्देशक्रमः । अनेनैतादृशविशेषभौमपञ्चककल्पनन्तु राज्ञां प्रायशो न सन्ततवासार्हम् । परन्तु विवाहपट्टाभिषेकाद्युचितसमयेषु सचिवप्रमुखैस्सामन्तभूपैश्च सहितो नृपो भवनोत्तममिमं प्रविश्य सुखवासं प्राप्नुयादिति केषाञ्चिन्मतम् । अन्ये तु सन्ततवासार्थमेव तेषामिति ॥ २ ॥

तस्माच्छुभसमयेषु राज्ञां विशेषतो मङ्गलकारिणीमेतादृशभौमपञ्चककल्पननिर्मितिं कथं वा कल्पयेदित्याकाङ्क्षायां सङ्ग्रहेण तन्मानादिकमाह — दक्षिणोत्तरसूत्रान्तमित्यादिना । मेरुभवनाख्यस्यास्योत्तमकल्पनस्यायामादिमानन्तु दक्षिणां दिशमारभ्य ऋजुतयैवोदीचीदिक्पर्यन्तं समसूत्रप्रसारणेन मानं यथेष्टं गृहीत्वा विषमदृष्टिहीनकल्पनं कार्यमिति लक्षणवाक्यार्थः ॥

क्वचिच्चतुरश्रप्रमाणस्थलेऽपि भवनोत्तममिदं स्थाप्यम् । किञ्च भवनस्यास्य प्रधानद्वारं प्राङ्मुखमुत्तरमुखं वा स्थापयित्वा कल्पनमध्यभागे चतुरश्रमुन्नतमनेकभौमान्वितं कूटकल्पनं विधाय तत्कल्पनसमसूत्रं प्राच्यादिषु चतसृष्वपि दिक्षु

चत्वराणाञ्चतुष्कञ्च चतुश्शाला च कोणके ।
पञ्चभौमं सप्तभौमं शिखरावलिभासुरम् ॥ ४ ॥

मध्ये मेरुसमं कल्पं कारयेन्मेरुहर्म्यके ।

अथ द्वितीयस्य मन्दरभवनस्य लक्षणम् ॥

प्राचीसूत्रसमप्रान्ता तस्य मानमिहोदितम् ॥ ५ ॥

---

वास्थलाख्यचत्वराणां चतुष्कं निर्मापयित्वा, भागस्य तस्येशानादिषु चतुर्ष्वपि दिक्कोणभागेषु षोडशाधिकस्तम्भभासुराणां शालानां भौमान्वितानां स्थापनञ्च कार्यम् ॥

किञ्चात्र मेरुभवनकल्पने पृथक्पृथक्कल्पनीयानां शालानां चतुर्णां दण्डत्रयमेवायतिदैर्घ्यप्रमाणं योजयित्वा तदुपरिभागेषु औन्नत्याधिक्यशालिनः कल्पनस्योपरितले पञ्चभौमकल्पनं वा सप्तभौमकल्पनं वाऽत्युन्नतं मनोहरचित्रसमेतशिखरादिभासुरं कार्यमिति । अपि चात्र मेरुभवनकल्पनोत्तमे एतादृशचत्वराणां शालानाञ्च मध्यतले देहल्यलिन्दाङ्गणकल्पनानां स्थापनं पार्श्वस्थ-कल्पनाविरुद्धं नानावातायनतोरणादिलसितञ्च स्थापयेत् ! एव-मुत्तरत्रापि ज्ञेयमिति ॥

किञ्चात्र कल्पने उपद्वारस्थापनमुखसूत्रमुखभद्रप्रमाणपूर्वकं कल्पनान्तरमानादिकं तावच्छिल्पिभिः स्वयमेव युक्त्या कल्पनीयमिति ॥

भानुसंख्यसमाकारप्राच्यादिषु यथाक्रमम् ।
चतुर्भागावसाने च चतुश्शाला मनोहराः ॥ ६ ॥
बृहच्छिखा शिखापालिशिखरावलिभासुरः ।

---

अथ द्वितीयस्य मन्दरभवनस्य लक्षणं वक्ष्यमाणस्तस्य सूत्रप्रसारादिकमाह —**प्राचीति** । तत्र मन्दराख्यस्य द्वितीयस्य भवनविशेषस्य मानन्तु प्राचीं दिशमारभ्य ऋजुतयैव प्रतीचीदिक्पर्यन्तं सूत्रप्रसारणेन यथेष्टमानं गृहीत्वा निर्माणं कार्यम् किञ्चात्र मन्दरभवनकल्पने दिक्कोणस्थानेषु चतुर्षु त्रिभौमलसितं द्वादशशालासमेतं कल्पनं करणीयम् तथा च मध्यस्थानस्थापितस्य चत्वरमध्यभागस्थापितस्य मन्दरसंकाशस्य तादृशौन्नत्यशालिनो मध्यभवनस्य सर्वालङ्करणमपि पूर्वोक्तपत्रावल्यादिकं योजनीयम् ॥

किञ्च तन्मध्यभवनं परितो विदिक्षु किञ्चिद्दूरस्थले महती चतुश्शालानिर्मितिर्निर्मापणीया । तत्रापि भानुसंख्येति भावः । यथाक्रममित्यनेन प्रत्येकं शालानां दण्डत्रयमेवायतदैर्घ्यप्रमाणम् । न तु त्रिविष्टपभवनवत्पूर्वशालयोः प्रत्येकं चतुर्दण्डप्रमाणं पश्चाच्छालयोश्च चतुर्दण्डयोजनमिति च बोध्यम । तस्मान्मन्दरत्रिविष्टपभवनयोरयमन्यतमो भेदो लक्ष्य इत्यार्यशिल्पिभिरूह्यम ॥

पिण्डितार्थस्तु द्वादशदण्डपरिमितस्यास्य मन्दरभवनविशेषस्य

मध्ये मन्दरसंकाशः प्रासादस्सुमनोहरः ॥ ७ ॥
सर्वालङ्कारसंयुक्तं मन्दरं भवनं मतम् ।

॥ अथ तृतीयस्य कैलासभवनस्य लक्षणम् ॥

उदक्सूत्रेण संयुक्तं कैलासभवनं मतम् ॥ ८ ॥
दिशास्वष्टस्वष्टशालाकल्पनं मध्यमन्दिरम् ।
उपशालाङ्गणैर्युक्तं नवभौमश्च कल्पयेत् ॥ ९ ॥

---

विदिक्षु चतसृष्वपि चतस्रो महतीश्शाला दण्डत्रयमानमिताः निर्मापयित्वा मध्यभागे मन्दरसंकाशोऽत्युन्नतसुमनोहरकल्पनसमेतो वातायनादिघटितोऽत्युन्नतशिखरसमेतः प्रासादः कार्य इति ॥

अथ तृतीयस्य कैलासभवनाख्यस्योत्तमभवनस्य लक्षणमाह — उदक्सूत्रेणेति । उदक्सूत्रमित्यनेन कैलासभवनस्यास्य चतसृष्वपि दिक्षु चतुर्द्वारकल्पनेऽपि मुख्यं प्राथमिकं द्वारमुदङ्मुखमेव स्थापयेदिति भावः प्रतीयते । अपि चात्र मध्यभागस्थितस्य मध्यकैलासकल्पनस्य प्राच्यादिदिशास्वष्टस्वपि दण्डत्रयवैशाल्यदैर्घ्यप्रमाणानां शालानामष्टकं स्थापयित्वा तन्निर्माणकल्पनानुगुणमुपशालां तदर्धमानमितां प्रकल्प्य तत्पश्चाद्भागे तत्प्राप्त्यर्थमङ्गणचतुष्कमथवाऽङ्गणाष्टकं निर्मापणीयम् । अपि चात्र कैलासभवने मध्यकल्पनस्योपरिभागे नवभौमावधिकं भौमकल्पनं स्थापनीयम् ॥

चतुर्द्वारसमेतं वा प्रासादतलपङ्क्तिकम् ।
मध्यचत्वरयुक्तं वा दण्डपञ्चकमानितम् ॥ १० ॥
महातलाङ्गणोपेतं क्रमान्न्यूनप्रमाणकम् ।
पूर्वशालाकल्पनं वा पूर्वमण्डपकल्पनम् ॥ ११ ॥
भित्त्यन्तवेदिकोपेतं कल्पयेत्सुमनोहरम् ।

---

किञ्च तादृशभौमकल्पनसहितस्य मध्यनिर्माणस्य समसूत्रकं चतुर्ष्वपि दिग्भागेषु द्वारचतुष्कस्थापनं कारयित्वा तादृशद्वारस्यान्तर्भागे देहलीस्थाने उपरितनभौमारोहणार्थं सोपानकल्पनं विधाय तादृशभौमतलेषु सर्वेष्वाद्यभवनवत्प्रायशः कल्पनं कार्यम् । अथवा महावैशाल्योपेतान्यङ्गणानि निर्मापयेत ॥

किञ्चात्रोपरिभौमतलं प्रथमद्वितीयसौधप्रमाणापेक्षया क्रमात् किञ्चित्किञ्चिन्न्यूनप्रमाणं वा स्थाप्यम् । कुतः? कैलासपर्वतसदृशकल्पननिर्माणद्योतनार्थमिति भावः । तस्मादेतादृशलक्षणान्वितस्यास्य कैलासभवनकल्पनस्य मध्यस्थानस्थितस्य सर्वास्वपि दिशासु नानापादसहितमङ्गणकल्पनं विरचय्य चित्रादिकं च तत्र प्रकल्पयेत ॥

अपि च तत्र प्राथमिकद्वारस्य पुरोभागे पूर्वशालाकल्पनं वा पूर्वमण्टपस्थापनं वा कार्यम् । किञ्च कल्पनस्यास्य कैलासभवननामधेयस्यान्तर्भागे भित्त्यन्तभागेषु नानासनवेदिकाद्युपेत-

अथ चतुर्थस्य त्रिविष्टपभवनस्य लक्षणम् ॥

सकण्ठमर्दलाकारं त्रिविष्टपमुदीरितम् ॥ १२ ॥

चतुर्दण्डकशालानां चतुष्केनान्वितं पुरः ।

पश्चादङ्गणसंयुक्तं तत्पश्चादपि शालकम् ॥ १३ ॥

तन्मानकं हीनकं वा यथायोग्यं प्रयोजयेत् ।

मध्यभागे चत्वरं वा नवरङ्गप्रकल्पनम् ॥ १४ ॥

---

मतिदीर्घशालाकल्पनं वा सुखकरम नानाचित्रमनोहरञ्चस्थल-विभवानुगुणं तत्र तत्र युक्त्या प्रकल्पयेदित्युपदेशः ॥

अथ चतुर्थस्य त्रिविष्टपभवनस्य लक्षणमाह — **सकण्ठ-मर्दलाकारमित्यादिना** । पद्मकसर्वतोभद्रराजधान्यादिनगरोक्त-मेषु शुभवास्तुषु पूर्वतः पूर्वतः पश्चाद्भागे चैतादृशरीत्या कण्ठसहितमर्दलाकारनिर्माणं यत्कल्प्यते, तस्य त्रिविष्टपभवन-मिति नाम विदुश्शिल्पज्ञाः । तस्मादेतादृशकल्पनसूत्ररेखाभासुर-स्यास्य त्रिविष्टपभवनस्यान्तर्भागे चतुर्दण्डवैशाल्यदैर्घ्यसहितानां शालानां षोडशाधिकपादान्वितानां सुषिरकल्पनोपेतानां वा चतुष्कं चतुर्ष्वपि दिक्कोणभागेषु स्थाप्यम् ॥

किञ्चैतादृशशालानां पुरोभागे पश्चाद्भागे च तद्वैशाल्य-दैर्घ्यात्किञ्चिद्धीनप्रमाणमथवा तन्मानकमङ्गणकल्पनं सावरणं, ससौधनिर्माणं यथास्थलविभवं प्रकल्पयेत् । किञ्चात्र त्रिविष्टप-

मध्यकल्पो महाकायः पूर्वाङ्गणसमन्वितः ।
नवभिस्सौधकैर्युक्तो द्वात्रिंशद्द्वारभासुरः ॥ १५ ॥

मण्टपत्रयसंयुक्तद्वारवेदिप्रकल्पनम् ।
सर्वालङ्कारसंयुक्तं कल्पयेच्चित्रभासुरम् ॥ १६ ॥

---

भवने एतादृशाङ्गणस्य तस्याश्च शालाया मध्यभागे वास्थैलाख्यचत्वरस्थापनमथवा नवभौमावधिकं नवरङ्गनिर्माणं वा पार्श्वस्थलकल्पनाविरुद्धं प्रकल्पयेत् ॥

किञ्च, तादृशनवरङ्गसहितमध्यकल्पनं तु दण्डविंशतिकायामादियुतं अत्युन्नतकायमनेकभौमवातायनं कल्पयित्वा, तत्र तत्र समुचितेषु स्थानेषु द्वात्रिंशन्महाद्वारभासुरं स्थापयेत् ॥

किञ्चैतादृशलक्षणशालिनोऽस्य त्रिविष्टपभवनस्य प्राथमिकद्वारपुरोभागे द्वारवेदिकाकल्पनसहितं वा पृथक्पूर्वमण्डपकल्पनं वाहनशिबिकाद्यारोहणावरोहणार्थं स्थापनीयम् । किञ्चैतादृशपूर्वमण्टपनिर्माणं तु चित्रतोरणादिसर्वालङ्कारमण्डितं भावितव्यम् । किञ्च प्राङ्मुखं वा पश्चिममुखं वा स्थापितस्यैतादृशलक्षणोपेतस्यास्य त्रिविष्टपभवनस्य निर्माणे विविधानि कल्पनान्तराणि, अन्तश्शालादीनि स्थपतिवराः स्वयमेव युक्त्योह्य, दृढप्रकल्पनानि दोषहीनानि गुणोपेतानि स्थलक्रमात्स्थापयेयुरिति शास्त्रकारस्योपदेशः ॥

(५) अथ पञ्चमस्य वनभवनस्य लक्षणम् ॥

महाङ्गणचतुष्केण चतुर्द्वारेण मण्डितम् ।
अन्तस्सालद्वयं वापि सालत्रयमथापि वा ॥ १७ ॥

नानाभवनकोपेतमेकद्वित्रितलान्वितम् ।
तदन्तरुन्नतं कल्पं कल्पयेद्रविभूमिकम् ॥ १८ ॥

---

अथ पञ्चमस्य वनभवनस्य लक्षणमाह — **महाङ्गणचतुष्केणे**त्यादिना । वनभवनस्यास्य निर्माणन्तु चतुरश्रप्रमाणयुतमथवा तत्र तत्र संप्राप्तवास्तुस्थलानुगुणं दैर्घ्योपेतं वा यथेष्टदण्डमानं प्रकल्पयेत् । तत्रापि कोऽपि नियमः स्वीकार्यः । यथा प्राच्यादिषु चतुर्ष्वपि दिग्भागेषु प्रथमतो महाद्वारचतुष्कसहितां प्राकारभित्तिं प्रकल्पयित्वा तदन्तर्भागे क्षुद्रप्राकाराख्यसालद्वयमथवा स्थलवैशाल्यादिवाञ्छायां सत्यां सालत्रयमङ्गणोपेतं कल्पनं निर्मापयित्वा तदन्तर्भागे एकसौधेन वा सौधद्वयेन वा सौधत्रयेण वा भासुरमङ्गणं कल्पयित्वा तादृशाङ्गणभागे नानाधरणे विविधान्तःकल्पनयुतं नानाकार्योचितं नानाभवनकल्पनं निर्मापयेत् । अयञ्च क्रमश्चतुर्ष्वपि दिग्भागेष्विति भावः ॥

किञ्चैतादृशाङ्गणतरणानन्तरमेतत्कल्पनेन विहीनं मध्यभागे चतुरश्रं दैर्घ्योपेतं वा विवाहशालाद्यनेकशालामण्डितं दृढकल्पनं

रविशालासमोपेतं नानाङ्गणसमुज्ज्वलम् ।
नानाभवनसंभक्तं मध्यभागसभातलम् ॥ १९ ॥

मण्डपाकारमथवा दूरतश्चत्वरावृतम् ।
चतुरश्रव्यासयुतवास्तुस्थलसमन्वितम् ॥ २० ॥

---

द्वादशभौमविराजितं प्रकल्पयेत् । किञ्च प्रायशोऽत्र वनभवननिर्माणे मध्यकल्पनस्य कोणभागेषु चतुर्ष्वपि चतस्रश्शालास्तन्मध्यभागे च चतस्रश्शालास्तस्य पुरतः पश्चात्पार्श्वयोश्च पृथगेव चतस्रश्शालाश्चाहतिसंख्यायां द्वादश शालाः स्थापयेदिति क्रमः ॥

किञ्चैतासु शालासु द्वादशसंख्याकासु तत्रत्यकल्पनानुगुणं नानाक्षुद्रसदनं तदन्तर्भागे यथाक्रमसूत्रपातं निर्माय सर्वासां तासां शालानां मध्यभागे इतरशालाप्रमाणापेक्षया द्विगुणितवैशाल्यदैर्घ्योपेतं मध्यसभाकल्पनञ्च निर्मापयेदिति कल्पनाक्रमः । किञ्चास्य किल सदसः कल्पनस्याधोभागे मध्यमाधिष्ठानं ससोपानं स्थापयेत् । किञ्चैवंरीत्या लक्षणभासुरस्यास्य वनभवनकल्पनस्य प्राथमिकद्वारस्य पुरोभागे पूर्वभवनञ्च सपादं सशिखरञ्च स्थापयेत् । अथवा पूर्वोक्तद्वादशशालानां पुरोभागे पूर्वभवनवत् सपादमण्टपकल्पनं सडोलास्थानं प्रकल्पयेत ॥

अपि च वनभवनमित्यस्य नाम्नः प्रतीत्याऽस्य खलु

विशेषभौमानिर्माणे युक्त्यैवं कल्पनं नयेत् ।
पूर्वकल्पनसंयुक्तं नवभौममुदीरितम् ॥ २१ ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे
विशेषभौमलक्षणकथनं नाम
एकसप्ततितमोऽध्यायः ॥

---

कल्पनस्य पुरतस्सलिलस्थापनपीठिकां वा क्षुद्रतटाकमाक्रीड-स्थापनं वा कार्यमिति साधवः । किञ्चात्र पूर्वभवनस्य पुरोभागे पूर्वकल्पनाख्यं सगोपुरं महाद्वारकल्पनसहितञ्च सर्वत्र स्थापयेदिति संक्षेपेण पञ्चविधविशेषभौमनिर्माणस्य लक्षणमुक्तं ज्ञेयम् ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
**विशेषभौमलक्षणकथनं नाम**
**एकसप्ततितमोऽध्यायः ॥**



अथ देवप्रासादलक्षणकथनं नाम

## द्विसप्ततितमोऽध्यायः ॥

तैतलायतनं प्रायश्शुभदं सर्वदिङ्मुखम् ।
वैष्णवं सर्वतोवक्त्रं शैवं गेहन्तु दक्षिणम् ॥ १ ॥

---

द्विसप्ततितमोऽध्यायः ॥

अथास्मिन्द्विसप्ततितमेऽध्याये सर्वेषामपि मानवानां निःश्रेयसादिसकलविधश्रेयस्सङ्कलनहेतुभूतस्य देवालयस्य लक्षणं तत्कल्पनस्थापनक्रमं च संक्षेपेण प्रतिपादयति — **तैतलायतन-मित्यादिना** । तैतलाः = हरिहरब्रह्मादयो देवाः; तेषामायतनं बिम्बारोपितशक्तीनां तेषां सततवासार्हं मुख्यं गेहं पूर्वोक्तग्राम-नगरादिसद्वास्तुभूमिषु सर्वदिङ्मुखद्वारभासुरं स्थापयेत् ॥

सर्वदिङ्मुखमित्यत्रार्थद्वैविध्यं बोध्यम् । तत्राद्यो यथा — प्राचीप्राकारमध्यतले द्वारमेकं दक्षिणप्राकारमध्यतले द्वारान्तर-मित्यादिक्रमेण महाद्वारचतुष्कसहितं देवायतनमिति । द्वितीयो यथा — स्वशक्त्यनुगुणं संप्राप्तासु ग्रामनगरारण्यमहीधरादि-शुभवास्तुभूमिषु तत्तत्स्थलमानवशाद्वीथ्यादिस्थापनवशाद्वा प्राङ्-मुखं वा दक्षिणमुखं, पश्चिममुखमुत्तरमुखमिति क्रमतो देवालय-मुखद्वारभागः स्थाप्य इति । अयञ्च क्रमस्साधारणभूविषयक इति ॥

वैधात्रमन्यदेवानां गेहं सर्वसुखं शुभम् ।
महीधरादिस्थानेषु न पृष्ठस्थापनं शुभम् ॥ २ ॥
वास्तुमानवशात्सर्वं स्थापयेद्दीक्षितो नृपः ।

---

तथाऽपि क्वचिदुत्तमस्थलेषु संप्राप्तस्थलवीथीप्रमाणानुगुणकल्पनीयविष्ण्वालयं प्रायशो वासवदिङ्मुखद्वारं स्थापयेत् । क्वचिद्दक्षिणमुखमुत्तरमुखं पश्चिममुखं वा स्थापयेत् । शिवालयनिर्माणन्तु प्रायशो दक्षिणमुखमेव स्थापनीयम् । क्वचित्स्थलसौकर्याद्यभावविषये प्राचीदिङ्मुखद्वारयुतालयकल्पनमपि न दोषायेति । विधातुरालयस्तु पूर्वदिङ्मुख एव स्थापनीयः । एवं ग्रामनगरारण्यभागकल्पनीयदेवालये विषयो ज्ञेयः । क्वचित्पर्वतसानुमौलितटादिषु कल्पनीयं पूर्वोक्तं हरिहरकमलासनगेहन्तु पूर्ववत्तत्तत्स्थलानुगुणद्वारसंयुक्तं शुभदं मतम् । न तु तस्य पर्वतादेरत्यगाधेऽधस्स्थले पृष्ठभागे द्वयोः पर्वतयोर्मेलनमध्यभागस्थले देवालयस्थापनं शुभदमिति मुनीनां तत्वविदामाशयः ॥

एवं यथा वा पशुपतिनटपतिमहेशशङ्करलिङ्गादिशिवमूर्तिभेदस्यालयदिङ्मुखनियमः तथैव वासुदेवरङ्गनाथपद्मनाभकृष्णादिविष्णुमूर्तिभेदस्यालयदिङ्मुखनियमश्च प्रतिपादितः। तथैव तेनैव नियमेन गौरीलक्ष्म्यादीनां तत्तद्देवीनामालयश्च तत्तद्दिङ्मुखः कल्पनीय इति । क्वचिदतिविशाले प्राकारत्रयसंयुते देवालये

## गोपुरद्वारसंयुक्तं प्राकारावृतवास्तुकम् ॥ ३ ॥

तस्यालयस्याधिनेतुरीशिवस्य विष्णोर्वाऽभिमुखं तद्देवीनामायतनं स्थाप्यमिति प्राचां संप्रदायः। अयं क्वाचित्क एव। देवानां देवीनां गृहकल्पनं तत्तद्देवालयवास्तुस्थलविभवानुगुणं पृथग्वा मुख्यगर्भगृहनिर्माणमिलितं वा स्थापयेत् ॥

एवं क्वचिन्महानगरादिषु पृथक्कल्पनस्य देवीसदनस्य पूर्वोक्तस्य देवालयस्य च लक्षणान्तराणि सङ्ग्रहेण निरूपयति — **गोपुरद्वारसंयुक्तमित्यादिना** । सर्वविधदेवालयनिर्माणस्य प्राच्यादिषु चतुर्ष्वपि दिग्भागेषु शिलामयप्राकारकुड्यस्थापनं कार्यम्। एवं कल्पनीयकुड्यानामौन्नत्यवैपुल्याद्यनुगुणं दण्डद्वय-दण्डत्रयाधिकनिम्नयुतं भूमिलम्बनिर्माणं करणीयमिति भावः। एवं देवालयवास्तुस्थलेषु तत्र तत्र कल्पनीयानां सर्वेषामपि कुड्यानामौन्नत्यानुगुणभूमिलम्बप्रमाणं युक्त्या स्वयमेवोह्य कार्य-मित्यर्थो ध्वनीकृतो भवति। तस्मात्तथा निर्मितं प्राकारनिर्माणमेकं वा, क्वचिद्देवालयादौ प्राकारद्वयं प्राकारत्रयमथवा प्राकारपञ्चकं तदधिकसंख्याकं वा प्रकल्पयेत। एवं प्राकारनिर्माणानन्तरं तेषां प्राकारकुड्यानां मध्यभागे प्राच्यादिचतुर्दिक्सूत्रस्थाने द्वारद्वयं द्वारचतुष्कं क्वचिदेकमेव द्वारं वा प्रकल्पयेत्। एवं ग्रामवास्तुकृत-देवालयस्यैकप्राकारकल्पने तस्य मुखभागे द्वारस्थापनमेकमेवालम्।

बहिरन्तस्तु वा स्थाप्यस्तटाकस्साङ्गणो मतः ।
जलमण्टपयुक्तो वा विमानशिखरोज्ज्वलः ॥ ४ ॥

बलिपीठसमायुक्तमष्टदेवपदान्वितम् ।
ध्वजपीठपुरोभागे पार्श्वयोर्मण्टपा मताः ॥ ५ ॥

---

प्राकारद्वयादिकल्पने कृते सति तत्र पूर्वभागे पश्चाद्भागे च द्वारद्वयं क्वचिद्द्वारचतुष्कं चतुर्दिङ्मध्यभागेषु स्थाप्यमेव । एवं द्वारकल्पनं प्रतिप्राकारतलमतिघनशिलाखण्डकृतं शोभावहं मौलिभागे गोपुरोपेतं रक्षाकरं च स्थापयेदिति क्रमः ॥

किञ्च क्वचिन्नगरकल्पिते द्वयाधिकप्राकारयुते देवालये निर्मिते सति तत्र प्रथमप्राकारान्तस्स्थले वा देवालयतटाकः सर्वतोदिक्षु अङ्गणनिर्माणसहितः सविमानजलमध्यमण्डपसंयुक्तः स्थापनीय इति शिल्पसमयः । एवमालयस्य प्राकारान्तस्स्थले तादृशतटाकनिर्माणयोग्यविशालभूम्यलाभे प्राकारस्य बहिस्समुचिते स्थले पूर्वोक्तमाठवीथीसमीपे वा पार्श्वे वा तमिमं तटाकं स्थापयेत् ॥

अपि चैवं कल्पितस्य प्रथमद्वितीयतृतीयप्राकारान्तःस्थले गर्भगृहसूत्रस्य पुरोभागे ध्वजस्तम्भस्थापनं तत्पुरतः स्थले समरेखे बलिपीठतलं च प्रकल्प्य स्थानस्य सव्यापसव्यभागयोर्नानामण्डपाः प्रकल्प्या इति च क्रमः । किञ्चैवं कल्पितस्य ध्वजपीठ-

देवीनां भवनैर्युक्तं भक्तानाञ्च गृहैर्युतम् ।
पूर्वमण्टपसंयुक्तगर्भगेहेन भासुरम् ॥ ६ ॥
सर्वत्र समसूत्राणां द्वाराणां स्थापनं मतम् ।
कवाटयुग्मकलनं शुभदश्चात्र कीर्तितम् ॥ ७ ॥
आग्नेय्यां पाकशाला स्यात्कूपचत्वरसंयुता ।
नैर्ऋत्यां वाहनस्थानं वायव्यां वस्त्रगेहकम् ॥ ८ ॥

---

स्थानस्य समसूत्रविन्यासे पुरोभागे उत्तरत्र वक्ष्यमाणलक्षणोपेतं गर्भगृहं निर्मापयित्वा तस्य सव्यापसव्यभागयोः देवीनामालयं पूर्वोक्तरीत्या पृथक्कल्पनयुतं तेन गर्भगेहेन मिलितं वा स्थापयेत् । किञ्चैतस्य गर्भगृहस्य पूर्वोक्तबलिपीठध्वजस्तम्भस्थानस्य च मध्यभागे निर्मितो मण्डपष्षोडशविंशतिकद्वात्रिंशत्कसंख्याकस्तम्भोपेतः पूर्वमण्डप इति नामान्तरभाग्भवतीति सतां व्यवहारः ॥

किञ्च सर्वत्र देवीगर्भगृहस्य देवगर्भगृहस्य च द्वारस्थापने तेषां द्वाराणां त्रयाणां पञ्चानां वा मध्यरेखाक्रमसममानयुतो घनकवाटद्वययुतश्च प्रकल्पनीय इति द्वारनिर्माणशैली बोध्या । किञ्च गर्भगृहस्यास्य लक्षणान्तराणि तूत्तराध्याये प्रतिपादयिष्यन्ते । तस्मादेवं स्थापितस्य गर्भगृहस्याग्नेय्यां दिशि तस्मिन्नेव प्राकारतलेऽथवा द्वितीयप्राकारतले कूपचत्वराङ्गणनिर्माणसहितः पाकालयः प्रकल्पनीयः । एवं नैर्ऋत्यां दिशि हंसमयूरादिवाहनस्थापनस्थानं,

ऐशान्यां धान्यभवनं मध्यस्थाने महागृहम् ।
कल्पनं मण्डपानां वा तन्नयेत्सालकक्रमात् ॥ ९ ॥

हस्तिशालावाजिशालागोशालाभिस्समन्वितम् ।
स्नानालङ्करणस्थानं विहारस्थानकानि च ॥ १० ॥

आस्थानमण्टपो वापि चतुःस्तम्भादिभूषितः ।
डोलाशयनशाला च गर्भगेहान्तरे मता ॥ ११ ॥

---

वायव्यां दिशि देवपर्यङ्कोपधानदुकूलाभरणपट्टवस्त्रादिस्थापनस्थानं वा शालां, ऐशान्यां दिशि धान्यादिविविधद्रव्यस्थापनस्थानञ्च मण्डपाकारमथवाऽनेकस्तम्भयुतशालाकारं प्रकल्पयेदिति शिल्पसमयो बोध्यः ॥

किञ्च क्वचिन्नगरादौ स्थापिते महावैशाल्योपेते देवालये द्वितीयतृतीयादिप्राकारतलेषु देवाधीशायार्पितानां वारणानां वाजिनां गवामुष्ट्रादीनां च शालां दृढकल्पनां स्थलविभवानुगुणं तत्र तत्र स्थापयित्वाऽवशिष्टे स्थलान्तरे प्राकारान्तरादिविभक्ते देवानां देवीनाञ्चाभिषेकमण्डपं, विहारमण्डपं, डोलामण्डपं, शयनमण्डपं, मासोत्सवमण्डपं, पक्षोत्सवमण्डपं, वार्षिकोत्सवमण्डपं, वाहनमण्डपमेवंरीत्या विविधसमयेषूपसेव्यानि मण्डपान्तराणि च बहुविधचित्रभासुराणि विमानशिखरोपेतानि च स्थापयेदिति शास्त्रकारोपदेशः ॥

प्रदक्षिणतलस्थानं सेवाप्राप्तिस्थलानि च ।
सव्ये वा पुरतो भागे वाहनारोहमण्डपः ॥ १२ ॥

दक्षिणे मित्रभागे वा भूधरे वा पुरःस्थले ।
मुखवीथ्यां माठवीथ्यां वाहनारोहणस्थलम् ॥ १३ ॥

नानाशालासमायुक्तं नानाकल्पनभूषितम् ।
नानागोपानसीयुक्तं नानागोपुरकल्पनम् ॥ १४ ॥

सचित्रशिखरै रम्यं दृढकल्पं प्रकल्पयेत् ।
न मण्डलस्थानयुतं न न्यूनं नापि चाधिकम् ।
दोषहीनं गुणोपेतं कल्पयेच्छिल्पवित्तमः ॥ १५ ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे
मार्गविश्रान्तिस्थलकल्पनलक्षणकथनं नाम
द्विसप्ततितमोऽध्यायः ॥

---

किञ्चैतादृशमण्टपानां स्थापने कचित्प्राकारान्तस्स्थले स्थलवैशाल्याद्यभावे देवालयसान्निधिवीथ्यां वा तत्सव्यभागे वाऽपसव्यभागे वा प्रधानगोपुरकल्पनयुक्तं वा पृथक्कल्पनयुतं वाहनमण्टपं रथस्थानञ्च प्रकल्पयेदिति लक्षणवाक्यार्थो ज्ञेयः । अपि चैवं नानास्थलेष्वनेकविधमण्टपप्रकल्पने सर्वमपि तत्कल्पनं साधिष्ठानं शिलामयं समरेखाप्रमाणयुतं समप्रमाणस्तम्भगोपान-

अथ गर्भगृहलक्षणकथनं नाम

## त्रिसप्ततितमोऽध्यायः ॥

हरेर्हरस्य धातुर्वा तद्देवीनामनेकधा ।
आधारासनसंयुक्तं स्थानं गर्भगृहं मतम् ॥ १ ॥

---

स्याद्युपेतं दोषहीनं स्थापयेदिति सङ्ग्रहेण देवप्रासादलक्षणमुक्तं ज्ञेयम् ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
**देवप्रासादलक्षणकथनं नाम**
**द्विसप्ततितमोऽध्यायः ॥**



## ॥ त्रिसप्ततितमोऽध्यायः ॥

अथास्मिंस्त्रिसप्ततितमाध्याये पूर्वाध्यायप्रतिपादितस्य देवालयकल्पनस्यालङ्कारभूतं गर्भगृहं कुत्र वा स्थले कथं वा स्थाप्यमिति चेत्तल्लक्षणानि निवृणोति— **हरेरित्यादिना ।** हरिहरब्रह्मादिदेवानां तद्देवीनां बेरावाहितशक्तीनां चाधारयन्त्र-पट्टबीजाक्षरयन्त्रपट्टयुतं शुद्धिमत्स्थानं गर्भगृहनामभाग्भवतीति गर्भगृहशब्दार्थो निगदितः । तथा च बेरप्रमाणविद्भिरिशला-

समनेत्रं समद्वारं द्वारपञ्चकभासुरम् ।
द्वारत्रयसमायुक्तं ग्राम्यमाहुर्मनीषिणः ॥ २ ॥
द्वारपालान्वितं तस्य पार्श्वस्थानं प्रकल्पयेत् ।

---

तक्षकैर्लोहकारैश्च निर्मितानां महेश्वरलिङ्गादिशिवमूलबेराणां वैकुण्ठवासादिविष्णुमूलबेराणामेतेषामुत्सवबेराणाञ्च स्थापनस्थलं गर्भगृहमित्युक्तं भवति ॥

इदन्तु गर्भगृहं देवालयकल्पने स्थापितस्य प्रथमप्राकारद्वारस्य, द्वितीयप्राकारद्वारस्य, तृतीयप्राकारद्वारस्य वा मध्यस्थितमण्टपादेर्वा तिर्यक्सूत्रप्रमाणिते तत्समसूत्रपाताविरुद्धस्थले समद्वारवति आलयमध्यस्थाने स्थापयेदिति शिल्पविदामार्याणां संप्रदायः । एवं तत्रत्यसर्वद्वाराणामभिमुखं भित्तिस्तम्भादितिर्यक्पतनदोषहीनं कल्पनीयम् । एतद्गर्भगेहन्तु ग्रामालयकृतं चेत्तदा आदिमध्यावसानस्थलेषु द्वारत्रयसहितं, नगरादिविशालस्थलदेवालये कृतं चेद्द्वारपञ्चकोपेतं स्थापयेत ॥

एवमत्र गर्भगृहकल्पनस्य खण्डरूपस्य प्रथमद्वारभागे वामभागे दक्षिणभागे च तत्तन्मूलबेरजात्युचितद्वारपालकाख्यदेवबिम्बस्थापनमवश्यं कार्यमित्युपदेशः । किञ्चैतेषां द्वारपालानां निर्माणन्तु प्रायशश्शिलाभिर्लोहकवचिताभिर्लोहैर्वा कार्यमित्युत्तमः पक्षः । इष्टिकाभिर्निर्माणमधमपक्षद्योतकमिति । एवं निर्मितानां

दण्डद्वयव्यासमानमथवा हीनमानकम् ॥ ३ ॥

तन्मानाद्द्विगुणं वापि तन्मानात्त्रिगुणं तु वा ।
गर्भगेहस्य दैर्घ्यन्तु कल्पयेच्छिल्पवित्तमः ॥ ४ ॥

---

द्वारपालबेराणां युगलं प्रथमद्वारपार्श्वयोर्द्वितीयद्वारतृतीयद्वारादिस्थानेषु वामदक्षिणपार्श्वयोश्च क्वचित्स्थापनीयमिति शिल्पसमयविदः ॥

किञ्च गर्भगेहस्यास्य वैशाल्यन्तु दण्डद्वयप्रमाणवदिति, ग्रामकृतदेवालयगर्भगेहवैशाल्यन्तु एतस्मात्प्रमाणात्किञ्चिन्न्यूनमेवेति क्रमो बोध्यः । ब्रह्मोत्सवादिविविधोत्सवकरणार्हमतिवैशाल्याद्युपेतस्य कस्यचिद्देवालयस्य गर्भगेहवैशाल्यन्तु दण्डत्रयप्रमाणवत् ; क्वचित्तदधिकप्रमाणवच्चेति ॥

किञ्च सर्वत्र गर्भगेहकल्पनस्य दैर्घ्यन्तु वैशाल्यप्रमाणाद्द्विगुणितमानं, त्रिगुणितमानं, क्वचिच्चतुर्गुणितमानञ्चेति । इत्थं प्रमाणयुतगर्भगेहनिर्माणं तु ब्रह्मदेवगर्भगृहमिति नामान्तरभाग्भवतीत्यागमविद्भिरुदीर्यते । किञ्च पूर्वप्रतिपादितशैल्या क्वचिच्चापाकारगजपृष्ठाकारमण्डलाकाराद्यनेकविधगर्भगेहस्थापनं त्वनेनैव प्रमाणेन वा युतमेव प्रकल्पयेत् । क्वचित्तत्र तत्र स्थलविभवानुगुणं गर्भगृहप्रमाणाधिक्यहीनत्वयोजनमपि न दोषायेति मतिः ॥

अथापि सर्वत्र तस्य गर्भगृहकल्पनस्य पूर्वभागकल्पनन्तु

अन्तःप्रदक्षिणोपेतमथवा तेन हीनकम् ।
पार्श्वयोर्वा पृष्ठभागे गोमुखस्थानकं मतम् ॥ ५ ॥

द्विदण्डं वा त्रिदण्डं वा कुड्योत्सेधमथाधिकम् ।
द्वारान्तरे वेदिका वा क्षुद्रदेहल्यथापि वा ॥ ६ ॥

---

एवं द्वारत्रयद्वारपञ्चकसंयुतं द्वारपालककल्पनोपेतञ्च प्रकल्पयेदिति भावः । क्वचिन्मानाधिक्यवति गर्भगृहनिर्माणे गर्भगेहप्रथमभित्तेः बहिर्भागे प्रथमप्रदक्षिणस्थलं सावरणं मण्टपाकारनिर्माणसहितं वा स्थापयेत् । किञ्चास्य स्थलस्य गर्भगृहप्रदक्षिणस्थलमिति नामान्तरमुच्यते सद्भिः । इदमेव प्रथमप्राकारनिर्माणमिति केषाञ्चिन्मतम् । एवंरीत्या गर्भगृहस्थापने गर्भगृहकल्पनस्यौन्नत्यं तु क्वचिद्दण्डद्वयप्रमाणं, स्थलान्तरे दण्डत्रयप्रमाणवदिति ॥

किञ्चास्य गर्भगेहकल्पनस्यान्तस्स्थले मध्यमध्यभागे देवपीठात्मिका दैववेदिका निर्मापणीया । अस्यामेव वेद्यां देवतानां वा देवीनां मूलबेरस्थापनमिति क्रमः । एवमत्र स्थापितानां मूलबेराणामभिषेकजलनिस्सरणार्थमस्य गर्भगृहस्यान्तःस्थले तस्या देववेदिकाया वामभागे वा दक्षिणभागे वा क्वचित्पृष्ठभागे वा शिलाखण्डकृतगोमुखाख्यक्षुद्रप्रणालीयोजनं भित्तिमिलितमेव कारयेत । अपि च गर्भगृहमध्यस्थाने स्थापिताया देववेदिकायाः पुरतःस्थले स्थापितानां पूर्वोक्तानां द्वाराणामन्तःस्थले क्षुद्र-

नानापौषसमायुक्ता मुखतोरणमण्डिता ।
देवस्थानं वेदिकाढ्यं तदाधिष्ठानकं मतम् ॥ ७ ॥

तस्मान्निम्नक्रमेणात्र पूर्वभागः प्रकीर्तितः ।
प्रतिद्वारतलं द्वारपालस्थानमथापि वा ॥ ८ ॥

अन्तर्निम्नं बहिःपृष्ठं कूर्माकारमथापि वा ।
नानाधिष्ठानोपपीठसंयुतं मूलभूमिकम् ॥ ९ ॥

---

देहलीवेदिका निर्माप्या । तस्यामेव स्थलानुगुणं स्थापितायां दीर्घाकारदेहलीवेदिकायां नन्दिदेवानन्तगरुडविष्वक्सेनेशादि-भक्तबेरबिम्बस्थापनं क्वचित्कारयेदित्यागमविदः ॥

किञ्चैवं देववेदिकायाः पुरोभागे स्थापितानां सर्वेषामपि द्वाराणां ललाटभागे चित्रतोरणयोजनं उभयोरपि पार्श्वयोः दीपारोपणार्थं पौषनामकदीपस्थानकल्पनञ्च प्रकल्पयेत । किञ्चैवं स्थापितानामेतेषां द्वाराणामधस्स्थलन्तु पूर्वोक्तदेववेदिकाया अधःस्थलप्रमाणवन्निम्नमेव कार्यम् । अपि च देवानां मूलबिम्ब-स्थापनार्हायास्तस्या देववेदिकाया अधोभागे एकहस्तद्विहस्तैोन्नति-मधिष्ठानं कम्पपद्मवाजनादितक्षणोपेतं कार्यम् । इयन्तु दैववेदिका प्रायशो दृढशिलाप्रकल्पितैव चिरकालस्थितये । अत्र तु शिला-वेदिकायां मध्यभागे एकहस्तप्रमाणनिम्नं विधाय तस्मिन्मूलबेर-पादपीठाधोभागं योजयित्वा दृढमचञ्चलं बन्धयेत् ॥

गर्भन्यासेन संयुक्तं यन्त्रपट्टेन चान्वितम् ।
सर्वेषामपि देवानां देवीनामेवमाचरेत् ॥ १० ॥

नानाङ्गणविभक्ताङ्गबहिरङ्गणकल्पितम् ।
तत्र स्थाप्यं शुभे काले देवानां बेरजालकम् ॥ ११ ॥
नयनोन्मीलनं प्रायश्चात्र कार्यमुदाहृतम् ।

---

किञ्चैतस्य मूलबेरवेदिकाकल्पनस्य पुरोभागे तदासन्नतले उत्सवबेरस्थापनार्थं कल्पनीया वेदिका दारुमयी सुधेष्टिकाकल्पिता वा शिलामयी वा यथाभिरुचिविभवं प्रकल्पनीयेति क्रमः। अपि च सर्वत्र मूलबेरवेदिकायामुत्सवबेरवेदिकायामनेकबिम्ब-स्थापनाय कचित्तस्यां नानाङ्गणविभजनं कारयेत । कुतः? तेषां बेराणां पृथक्पृथक्स्थापनार्थमिति ॥

अपि चैवमत्र गर्भगृहमध्यस्थाने एतस्याः देववेदिकायाः स्थापनात्पूर्वमेव प्रयोगविच्छिल्पी देवगर्भविन्यासार्हदेवचिह्नानि ताम्रपट्टे विलिख्य गर्भविन्यासप्रकरणप्रतिपादितरीत्या अवटे निक्षिप्य मृदाऽऽच्छाद्य तदुपरि तामिमां दैवीं वेदिकां स्थाप-यित्वा तत्र वा क्रियाशालायां स्थलान्तरे वा निर्मितान्यनेक-विधानि देवबेराणि तां वेदीमारोप्य दृढं बन्धयित्वा शुभकाले नदति मङ्गलवाद्यजाले देवीनां देवानाञ्च नयनोन्मीलनं यथा-क्रमं कारयेदिति शिल्पाचार्यकार्यक्रमो ज्ञेयः ॥

कर्पूरचन्दनरसैः सेचयेद्वासयेदपि ॥ १२ ॥

दैवब्राह्मविभेदेन तत्स्थानं द्विविधं मतम् ।
तत्र पूर्वस्थले भद्रमण्टपं कारयेन्नृपः ॥ १३ ॥

तत्पूर्वमण्टपं वापि प्रभाष्टमुखकेलिकम् ।
चतुःस्तम्भसमेतं वा स्तम्भाष्टकसमुज्ज्वलम् ॥ १४ ॥

---

एवं देवबेराणां नयनोन्मीलनदिनात्पूर्वमेव तदिदं गर्भगेहमन्तर्बहिश्च स्थले कर्पूरचन्दनरसादिना तल्लेपादिना च वासयित्वा चूतपल्लववितानतोरणदीपारोपणादिकं कारयेत् ॥

एवं निर्मितस्यास्य गर्भगेहस्य पूर्वभागो ब्रह्मभाग इत्युच्यते। देववेदिकास्थापनन्तु दैवस्थानमिति च प्राचां व्यवहारः। तस्मादेवं निर्मितस्यास्य गर्भगृहकल्पनस्य नातिदूरे पूर्वभागे गर्भगृहप्रथमद्वारकुड्यमिलितमेव पूर्वमण्डपाख्यभद्रमण्डपनिर्माणं स्थापयेत्। क्वचिदस्य पूर्वमण्डपस्य च पुरोभागे तन्मानयुतमेव मण्डपान्तरकल्पनमपि विहितं भवति। एतादृशमण्डपाङ्गणस्थलतरणानन्तरमेव पूर्वोक्तस्य तस्य ध्वजस्तम्भस्य बलिपीठस्य च स्थापनस्थलमिति विवेकः। किञ्च कचिद्देवालये प्राकारद्वयावृते वा प्राकारत्रयावृते वा तस्य द्वितीयप्राकारद्वारस्य पुरतः स्थले वा तृतीयप्राकारद्वारस्य पुरतः स्थले वा तत्र ध्वजस्तम्भनिर्माणं कार्यमित्युक्तं भवतीति आशयो बोध्यः ॥

षोडशस्तम्भयुक्तं वा महती शालका मता ।
चित्रस्तम्भसमोपेता वलभीतोरणोज्ज्वला ॥ १५ ॥

गर्भगेहमुखद्वारयुक्तकल्पनमुत्तमम् ।
जङ्गमास्थानवाहादिमण्टपादीन्प्रकल्पयेत् ॥ १६ ॥

संयुक्ता वा वियुक्ता वा द्वारान्ते स्तम्भपार्श्वका ।
दीपदेव्यस्स्थापनीया नानालङ्कारभूषिताः ॥ १७ ॥

---

एवमत्र स्थापितानां भद्रमण्डपतत्पूर्वमण्डपकल्पनानां लक्षणान्याह — चतुःस्तम्भसमेतमित्यादिना । ग्रामकृतगर्भगेह-मण्डपस्य स्तम्भचतुष्कं,स्तम्भाष्टकमथवा स्तम्भषोडशकं योजनीयम् । महावैशाल्ये देवालयकल्पने तु अस्मिन्पूर्वमण्डपकल्पने चतुर्विंशति-स्तम्भस्थापनमथवा द्वात्रिंशत्स्तम्भस्थापनतदधिकस्तम्भस्थापनं वा कार्यमितीच्छाधीनविकल्पः । क्वचिदस्य पूर्वमण्डपस्य मध्यस्थले महाशालामनेकचित्रस्तम्भसहितां निर्माप्य तत्कल्पनयुतमेवाङ्गण-स्थलं मण्डपरीत्या कार्यमिति विवेकः ॥

एवमत्र मण्डपमध्यभागस्थापितायां मध्यशालायां मध्य-स्थाने देवानां देवीनां संक्रान्त्याद्युत्सवसमयारोपणाय सारदारु-कृतजङ्गमरूपास्थानमण्डपकल्पनं वा तस्यामेव शालायां भद्रवेदिकां स्थापयेत् । एवं कल्पितस्यास्य मण्डपनिर्माणस्य स्तम्भकन्धरवक्षो-भागे वाऽऽवरणमध्यतले उत्तानशिलापाट्टिकायां वा दीपपोष-

अथवा दीपकीलादींस्तोरणे विन्यसेत्क्रमात् ।
स्तम्भपञ्जरयुक्तं वा क्षुद्रद्वारयुतं क्वचित् ॥ १८ ॥
दण्डं यवनिकाक्रान्तं डोलास्थानञ्च कल्पयेत् ।
मुखवेदीसमायुक्तं नैवेद्यासनसंयुतम् ।

---

दीपपात्रादियोजनन्तु देवालयकल्पनेषु सर्वत्र तत्र तत्र स्थलोचितं प्रकल्पयेदिति भावः । तथा कल्पनेऽपि विशेषतो देवानां देवीनां गर्भगृहद्वाराणां सव्यभागदक्षिणभागयोर्निरन्तरदीपश्रेणीं स्थापयित्वा तत्र दीपप्रज्वलनकरणन्तु सर्वक्षेमकरमिति भावः ॥

किञ्चास्मिन्पूर्वमण्डपादिस्थाने क्वचिल्लोहकृतदीपदेवीस्थापनं,दीपस्तम्भदीपदण्डदीपतोरणमालिकादिदीपकीलास्थापनन्तु भगवत्कृपावर्धकमिति भावस्सतां वेदविदाञ्च ॥

अपि चात्र मण्डपे गर्भगेहस्यान्त्यतले देवदेव्याद्यलङ्करणमण्डपस्थाने च यवनिकादण्डं तिर्यक्कृतं वा द्वारभागोपरि तूलस्थलयुतं वा प्रकल्पयेत । किञ्चैवंप्रकारेणैतादृशमण्डपादिस्थानेषु समुचितस्थलेषु देवानां देवीनां डोलास्थानं अभिषेकासनकल्पनं च कार्यम् । किञ्च सर्वत्र गर्भगृहस्य देववेदिकाया नातिदूरे पुरोभागे द्वितीयद्वारसमीपस्थले वा तृतीयद्वारसमीपे वाऽधस्ताद्भूतले चतुरङ्गुलषडङ्गुलौन्नत्यवर्ती नैवेद्यभाण्डस्थापनवेदिकाञ्च प्रकल्पयेत ॥

एवमत्र गर्भगृहे तत्पार्श्वकल्पने कल्पनान्तरेषु च करणीयं

युक्त्या प्रकल्पयेद्गर्भगेहमेवं प्रमाणवित् ॥ १९ ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे
गर्भगृहलक्षणकथनं नाम
त्रिसप्ततितमोऽध्यायः ॥

---

सर्वमपि निर्माणं स्वयमेव युक्त्या घनदृढशिलावरणाद्याच्छादितं प्रकल्पयेत् । यथा वा गर्भगेहमण्डपादिकल्पनानामन्तर्भागे वर्षाजलस्रावो न भवेत्तथा शिलानामत्यन्तमेलनं सुधाचूर्णादिभिः कारयित्वा तत्तद्देवचिह्नंचिलादिकं वलभीस्थलादिषु योजयेदिति संग्रहेण गर्भगृहलक्षणमुक्तम् ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
गर्भगृहलक्षणकथनं नाम
त्रिसप्ततितमोऽध्यायः ॥



अथ शतस्तम्भमण्डपलक्षणकथनं नाम

## चतुःसप्ततितमोऽध्यायः ॥

निर्माणं मण्डपानान्तु बहूरूपं स्थलार्हकम् ।
कारयेन्मानविच्छिल्पी देवागारे विशेषतः ॥ १ ॥

अभिषेकाय देवानामलङ्काराय च क्वचित् ।
जननार्थं क्वचिद्देव्या विवाहाय क्वचिन्मतम् ॥ २ ॥

---

चतुस्सप्ततितमोऽध्यायः ॥

अथास्मिन् चतुस्सप्ततितमेऽध्याये महावैशाल्यवति देवालये तदधिनेतुर्वार्षिकमहोत्सवादिनिर्वर्तनाय कल्पनस्य शतस्तम्भमण्डपस्य निर्माणस्य लक्षणं प्रसङ्गान्मण्डपान्तराणां लक्षणञ्च प्रतिपादयति । सर्वत्र देवालयादौ मण्डपनिर्माणन्तु तत्तत्स्थलभेदेन कल्पनभेदेन च विविधरूपं भवति । तस्मात्तेषां मण्डपकल्पनानां प्रमाणनिर्माणक्रमादिविच्छिल्पी देवागारेषु बहुचित्रमेदुरितं विविधमण्डपनिर्माणं यथाविभवं वक्ष्यमाणलक्षणोपेतं स्थापयेदिति लक्षणवाक्यार्थः । तस्माद्देवालयप्रमाणनिर्माणादिस्थानेष्ववश्यं कल्पनीयानां तेषां मण्डपानां कानिचिन्नामान्याह —

| | |
|---|---|
| १. अभिषेकमण्डपनिर्माणम् । | २. अलङ्कारमण्डपनिर्माणं । |
| ३. याग ,, | ४. विवाह ,, |
| ५. आस्थान ,, | ६. वसन्त ,, |

भट्टारकनृपानुज्ञाचोदितो मानभेदवित् ।
देवानामपि देवीनां नित्यनैमित्तिकोत्सवाः ॥ ३ ॥

यथा सुलभसाध्यास्स्युस्तथा मण्डपकल्पनम् ।
कारयेन्मतिमान्युक्त्या सर्वं तत्स्थलयोग्यकम् ॥ ४ ॥

---

| | |
|---|---|
| ७. ग्रीष्ममण्डपनिर्माणम् । | ८. वार्षिकमण्डपनिर्माणम् । |
| ९. कार्तिक ,, | १०. विहार ,, |
| ११. जप ,, | १२. अध्ययन ,, |
| १३. वाहन ,, | १४. प्रणयकलह ,, |
| १५. प्लवोत्सव ,, | १६. दमनिकोत्सव ,, |
| १७. डोला ,, | १८. शयन ,, |
| १९. मासोत्सव ,, | २०. पक्षोत्सव ,, |
| २१. संवत्सरोत्सव ,, | २२. नित्योत्सव ,, |
| २३. नैमित्तिकोत्सव ,, | २४. आखेट ,, |

अन्यानि मण्डपान्तरनिर्माणानि च समयसेव्यानि गुरुदेवभट्टारकनृपाज्ञाप्रचोदितस्सन् स्थपतिर्यथाक्रमं तत्र तत्र स्थापयेदिति शिल्पसमयः । तस्माद्गर्भगृहस्य पूर्वभागे पार्श्वयोः पृष्ठभागे द्वितीयतृतीयादिप्राकारस्थलेषु देवालयस्य प्राकाराणां बहिःप्रदेशे सन्निधिवीथ्यां क्वचिन्माठवीथ्यां स्थलान्तरेषु समुचितभूमिषु कल्पनीयानामेतेषां मण्डपानां स्तम्भयोजनक्रमस्तु तत्रत्य-

चतुःपादयुतं वापि क्वचिदष्टपदान्वितम् ।
दशपादयुतं वापि द्वादशांघ्रिसमन्वितम् ॥ ५ ॥

षोडशस्तम्भयुक्तं वा स्तम्भविंशतिसंयुतम् ।
चतुर्विंशतिपादाढ्यमष्टाविंशतिपादकम् ॥ ६ ॥

द्वात्रिंशत्स्तम्भयुक्तं वा चत्वारिंशत्पदं तथा ।
पञ्चाशत्स्तम्भसंयुक्तं द्विपञ्चाशत्पदं क्वचित् ॥ ७ ॥

चतुष्षष्टिपदोपेतमशीतिस्तम्भभासुरम् ।
शतस्तम्भयुतं वापि मण्डपं बहुरूपकम् ॥ ८ ॥

स्तम्भस्थापनकार्यार्हपूर्वाङ्गणसमन्वितम् ।
शिलाभिरेव देवानां यतीनाञ्च मठक्रिया ॥ ९ ॥

---

स्थलविभवानुगुणं स्वसंपद्विभवानुगुणञ्च चतुःस्तम्भयोजनं वाऽष्टस्तम्भयोजनं वा दशस्तम्भयोजनं वा द्वादशस्तम्भयोजनं वा षोडशस्तम्भयोजनं वा विंशतिस्तम्भयोजनं चतुर्विंशतिस्तम्भयोजनमष्टाविंशतिस्तम्भयोजनं द्वात्रिंशत्स्तम्भयोजनं चत्वारिंशत्स्तम्भयोजनं पञ्चाशत्स्तम्भयोजनं द्विपञ्चाशत्स्तम्भयोजनं वा क्वचिच्चतुष्षष्टिस्तम्भयोजनमशीतिस्तम्भयोजनं शतस्तम्भयोजनं वा कार्यमिति वाक्यार्थबोधः ॥

एवं कल्पनीयानां देवागारमण्डपनिर्माणानां यतिपरिव्राजकादिगुरुकुलनिवासाय कल्पनीयानां मठादिनिर्माणानां

लोहैर्द्रव्यान्तरैर्भूपमण्डपं स्थापयेत्क्रमात् ।
जपमण्डपकं वाऽपि वेदाध्ययनमण्डपम् ॥ १० ॥
अधिष्ठानयुतं प्रायश्चिरकालाय कल्पते ।
सोपपीठस्तम्भपालिं चित्रालङ्करणान्वितम् ॥ ११ ॥

---

च शिलापट्टिकासंयोजनमेव शोभायै चिरकालस्थितये च भवति । तस्माद्यत्र यत्र कल्पनेषु शिलास्तम्भशिलापटलावरणादिकं क्रियते, तेषां तेषां निर्माणानां सर्वेषामप्यधोभागे तत्तत्कल्पनानुगुणं दृढघनशिलाखण्डैरधिष्ठानकल्पनमवश्यं कार्यमिति शिल्पसमयः ॥

न्यायशालाहस्तिशालावाजिशालावैद्यशालादिकल्पनं साकल्येन शिलाभिरेव स्थापनीयं भवति । परन्तु क्षत्रियाणामन्येषां च विहारार्थं कल्पनीयमण्डपादिनिर्माणेषु शिलास्तम्भशिलापटलावरण-योजनं न शुभफलप्रदम् । किन्तु तेषां विहारमण्डपादिषु लोहकृत-स्तम्भस्थापनं वा सुषिरस्तम्भस्थापनं वा चन्दनतिन्दुकादि-महीरुहखण्डस्थापनं वा कार्यम् । एवमावरणविषयेऽप्यूह्यम् ॥

एवं शिलामयमण्डपनिर्माणाय तत्तन्मण्डपस्थलविभवानुगुणं क्षुद्राधिष्ठानकल्पनं मध्यमाधिष्ठानकल्पनमुत्तमाधिष्ठानकल्पनं वा घनं योजयित्वा तदुपरि स्थापनीयस्तम्भश्रेणिस्थापनानुगुणं पूर्वाङ्गणं क्वचित्पार्श्वाङ्गणं क्वचित्सर्वभागेष्वप्यङ्गणकल्पनं च क्रमादिच्छा-विभवानुगुणं निर्मापयित्वा पूर्वोक्तसंख्याः स्तम्भपालीश्चित्र-

मुखाङ्गणसमोपेतं पार्श्वाङ्गणसमन्वितम् ।
चतुरङ्गणयुक्तं वा सचारं वा विचारकम् ॥ १२ ॥
समरेखादृष्टिहीनं समोत्तुङ्गविशालकम् ।
वाजिवक्त्रेण संयुक्तं गजवक्त्रान्वितं क्वचित् ॥ १३ ॥
यालीमुखसमोपेतं पार्श्वचक्रसमन्वितम् ।

---

शोभिताः स्थापयित्वा तदुपरि प्रस्तरतूलवलभ्यादिकं प्रयोज्य घनावरणं प्रकल्पयेदिति तत्क्रमोऽवधार्यः ॥

किञ्चैवंरीत्या कल्पितेषु बहुषु मण्डपेषु केषाञ्चिन्मण्डपानामुभयोः पार्श्वयोर्घनाभित्तिनिर्माणं केषाञ्चिन्मण्डपानां मुखभागं विना भागत्रयस्थलेषु भित्तिस्थापनं केषाञ्चिन्मण्डपानां चतुर्ष्वपि दिग्भागेषु भित्तिस्थापनं विनैव कल्पनञ्च करणीयम् । तच्चैच्छिकमेवेत्ययमर्थः 'सचारं वा विचारकम्' इति लक्षणवाक्येन प्रतिपादितः ॥ १२ ॥

तस्मादेवंरीत्या स्तम्भान्तरभित्त्यन्तरतिर्यक्प्रसारणाख्यदृष्टिदोषादिसकलविधदोषवर्जितं कल्पितानामेतेषां मण्डपानां स्तम्भादिषु कस्याश्चित्स्तम्भश्रेण्याः दर्शनायां तुरगरूपतक्षणं कस्याश्चित्स्तम्भश्रेण्याः वारणरूपतक्षणमन्यस्याः स्तम्भश्रेण्याः यालीरूपतक्षणमान्तरालिकस्तम्भश्रेणीनां शुकहंसमयूरचक्रवाकभल्लूकवानराद्यनेकतक्षणं विविधतोरणपताकाद्यलङ्करणं च प्रकल्पयेदिति विवेकः ॥

सोपानसंयुतं वापि कल्पयेत्सुमनोहरम् ॥ १४ ॥
मुखप्रस्तरयुक्तं वा ऊर्ध्वप्रस्तरणान्वितम् ।
वलभीकल्पनं चोर्ध्वे वरणश्च यथाक्रमम् ॥ १५ ॥
एकद्रव्यसमायुक्तं विमानशिखरोज्ज्वलम् ।

---

किञ्चैतेषां मण्डपानां केषाञ्चित्पूर्वभागे सोपानस्थापनं, केषाञ्चिन्मण्डपानां पार्श्वयोरस्थलयोश्सोपानस्थापनं केषाञ्चित् मण्डपानां सर्वतो दिक्षु चित्रसोपानस्थापनञ्च कार्यम् । अपि चैतेषां मण्डपनिर्माणानां भित्त्यन्तभागेषु तूलप्रस्तर-वलभीवलभ्याधारपट्टिकादिस्थानेषु विविधतोरणवितानपङ्कजकुमुद-चम्पकचूतादिदलरूपतक्षणवर्धनादिकं निर्मापयित्वा क्वचित्पार्श्व-स्थितकल्पनभित्त्यादिभिर्मिलितं कारयेत् । किञ्च वलभ्यावरण-पटलानामुपरिभागे घनमाच्छादनं सुधेष्टिकामेलनं निरन्तरं स्थापयेत् ॥ १५ ॥

किञ्चात्र मण्डपकल्पने कांश्चन स्तम्भान् शिलामयान् स्थापयित्वा कांश्चन स्तम्भानिष्टिकासुधादिभिः कल्पयेत । परन्तु तत्तज्जातिद्रव्यैरेव कार्यमिति नियमः । अयमर्थः '**एकद्रव्य-समायुक्तम्**' इत्यनेन मूलवचनपादेनोच्यत इत्यर्थः । तथा च मण्डपादिकल्पनेषु यस्मिन्स्थाने शिलास्तम्भयोजनं क्वचित्साकल्येन तस्मिन् स्थाने शिलास्तम्भयोजनमेव शोभावहं शुभप्रदञ्चेति

भित्तिकोष्ठसमायुक्तं कर्णनासादिमण्डितम् ॥ १६ ॥
युक्त्या कल्पान्तरयुतं स्थापयेन्मण्डपं दृढम् ।
शङ्करस्य हरेर्वापि धातुर्देवीगणस्य च ॥ १७ ॥
क्वचिन्मण्डपकल्पस्तु शतस्तम्भसमन्वितः ।
स्थाप्यः पञ्चविधो युक्त्या पूर्वाङ्गणयुतोऽपि वा ॥

१. सूर्यकान्तशतस्तम्भमण्टपलक्षणम् ॥

आद्यस्तु सूर्यकान्तस्स्यात्सूर्यसंख्यापदावलिः ।

---

भावः । एवमेव लोहवृक्षखण्डादीनामपि विषये फलादिकं बोध्यम् ॥

किञ्चैवं कल्पितानां मण्डपानां कतिपयानां पूर्वभागे कल्पितस्यारोहणसोपानस्योभयोः पार्श्वयोर्दृढशिलाचक्रं चित्ररूपतुरगवाहनादिभिरूह्यं योजयेदित्यपि शिल्पसमयकल्पनक्रमवेत्तारः । तस्मादेवंप्रकारेण कल्पितेषु मण्डपेषु शतस्तंभमण्टप एव सर्वोत्तमः । तस्मादस्य शतस्तम्भमण्डपस्य वार्षिकोत्सवसेवनाद्युचितस्य लक्षणमाह—स्थाप्य इत्यादिना । तदिदं शतस्तम्भमण्टपनिर्माणं पञ्चविधं स्थाप्यं भवति । तल्लक्षणं क्रमाद्विशदयतीति वाक्यार्थः ॥

अथ शतस्तम्भमण्डपनिर्माणस्याद्यस्य सूर्यकान्ताख्यस्य लक्षणमाह—आद्य इति । सर्वेषामेतेषां पञ्चविधानां शतस्तम्भ-

रेखाद्वयं पूर्वभागे तथा पश्चिमभागिके ॥ १९ ॥

तन्मध्ये षोडशपदं सव्ये सव्येतरेऽपि च ।
तन्मध्यस्थानभागे च षोडशस्तम्भकल्पनम् ॥ २० ॥
तदन्तस्तु चतुष्पादस्थानं तद्दैवतं मतम् ।
सर्वत्र देवभागस्तु तुङ्गो वाऽधिष्ठितोऽपि वा ॥ २१ ॥

---

मण्डपकल्पनानां स्तम्भस्थापनक्रम एव दुर्विज्ञेय इति मत्वा तादृशस्तम्भस्थापनपरिपाटीं प्रकटीकरोति — **सूर्यसंख्यापदावलि-रिति** । शतस्तम्भमण्डपकल्पनस्यास्य पूर्वभागे पङ्क्तिद्वयं स्तम्भानां स्थाप्यं, प्रतिपङ्क्तिस्थलं स्तम्भानां द्वादशकस्थापनमिति । तथा च पूर्वभागे पङ्क्तिद्वयस्थाने आहत्य संख्यायां स्तम्भचतुर्विंशतिक-मिति ॥

एवं पश्चाद्भागस्थलेऽपि पङ्क्तिद्वये स्तम्भचतुर्विंशतिकं स्थाप्यम् । एवं स्थापितानां स्तम्भानां मध्यतले स्तम्भान्तरस्थापनार्थं विभक्ते सति तत्र पूर्वोक्तपूर्वभागस्तम्भसमीपे सव्यभागे स्तम्भाष्टक-मपसव्यभागे च स्तम्भाष्टकमाहत्य संख्यायामत्र स्तम्भषोडशकं स्थापयेत् । अनेनैव प्रकारेण पश्चाद्भागस्थापितस्तम्भश्रेणि-समीपस्थले च स्तम्भषोडशकं स्थापयित्वा कल्पनस्यास्य मध्यभागे वैशाल्यवति चतुःस्तम्भस्थापनरीत्या स्तम्भश्रेणीचतुष्कं च निर्माप-यित्वा तेषाञ्च षोडशस्तम्भानां मध्यभागे दैवभागस्थले चित्रस्तम्भ-

चतुष्कञ्च स्थापयेत् । एवं शैल्या स्तम्भस्थापने कृते शतस्तम्भमण्डपकल्पनमविकलं भवतीति लक्षणवाक्यार्थः ॥

तथाऽपि झटिति स्फूर्तये कल्पनस्यास्योद्धारमण्डलं पञ्चविधं विलिख्यते । यथा — तत्राद्यस्य सूर्यकान्ताख्यस्य शतस्तम्भमण्डपस्य स्तम्भस्थापनक्रमः ॥

२. चन्द्रकान्तशतस्तम्भमण्टपलक्षणम् ॥

द्वितीयश्चन्द्रकान्तस्स्यात्सव्यसव्येतरात्मकम् ॥ २२ ॥
भागे विभज्य वेदेन षण्णवत्यंघ्रिकल्पनम् ।
मध्ये वेदपदस्थानं तद्देवतमुदीरितम् ॥ २३ ॥

---

अथ चन्द्रकान्ताख्यस्य द्वितीयस्य शतस्तम्भमण्डपकल्पनस्य स्तम्भस्थापनक्रममाह — द्वितीय इति । कल्पनस्यास्य सव्यभागे चतुःस्तम्भस्थापनरीत्या पङ्क्तिद्वादशकं निर्मापयित्वा तथैव शैलया सव्येतरभागेऽपि स्तम्भस्थापने कृते आहत्य संख्यायां षण्णवतिस्तम्भा भवन्ति । किञ्च कल्पनस्यास्य मध्यभागे पूर्वोक्तक्षुद्रप्रमाणदेवमण्डपकल्पनार्थं स्तम्भचतुष्के क्रमात् स्थापितेऽविकलं शतस्तम्भमण्डपनिर्माणं भवतीत्यर्थः ॥

कल्पनस्योद्धारमण्डलं यथा —

अथ द्वितीयस्य चन्द्रकान्ताख्यस्य शतस्तम्भमण्डपस्य स्तंभस्थापनक्रमः —

२. चन्द्रकान्तशतस्तम्भमण्टपः ॥



३. इन्द्रकान्तशतस्तम्भमण्टपलक्षणम् ॥

तृतीयश्चेन्द्रकान्तस्स्यात्पार्श्वयोष्षट्प्रमाणकम् ।
स्तम्भकल्पनमत्रोक्तं वसुपङ्क्तीः प्रकल्पयेत् ॥ २४ ॥
मध्ये वेदपदस्थानं तद्दैवतमुदीरितम् ।

---

अथेन्द्रकान्ताख्यस्य तृतीयस्य शतस्तम्भमण्डपकल्पनस्य स्तम्भस्थापनक्रममाह — **तृतीय** इति । कल्पनस्यास्य सव्यभागे स्तम्भषट्कसंयुतं श्रेण्यष्टकस्थलं प्रकल्प्य तथैव सव्येतरभागे च स्तम्भस्थापने कृते षण्णवतिस्तंभा भवन्ति । किञ्च पूर्वोक्तरीत्या कल्पनमध्यभागे दैवमण्डपकल्पनार्थं स्तम्भचतुष्के स्थापिते सत्यविकलं शतस्तम्भमण्डपनिर्माणं भवेदिति भावः ॥

कल्पनस्यास्योद्धारमण्डलं यथा — अथ तृतीयस्य इन्द्रकान्ताख्यस्य शतस्तम्भमण्डपस्य स्तम्भस्थापनक्रमः —

## ३. इन्द्रकान्तशतस्तम्भमण्टपः ॥



४. गन्धर्वकान्तशतस्तम्भमण्टपलक्षणम् ॥

चतुर्थो गन्धर्वकान्तश्चतुष्कोणे चतुःक्रमम् ॥ २५ ॥

स्तम्भषोडशकं स्थाप्यं तदन्तश्च यथामतम् ।
पूर्वपृष्ठपदोपेतनागपादप्रकल्पनम् ॥ २६ ॥

तत्संख्याकं तदन्तश्च चतुःपङ्क्तिक्रमात्पदम् ।
तदन्तर्वेदपादन्तु दैवस्थानमुदाहृतम् ॥ २७ ॥

---

अथ गन्धर्वकान्ताख्यस्य चतुर्थस्य शतस्तम्भमण्डपकल्पनस्य स्तम्भस्थापनक्रममाह — **चतुर्थ** इति । गन्धर्वकान्तस्यास्य मण्डपकल्पनस्य मध्यतलमतिविशालं कार्यम । तस्मादस्य मध्यतलस्याग्नेयादिकोणचतुष्कस्थलेषु स्तम्भचतुष्कसहितं पङ्क्तिद्वयं विरचय्य दीर्घाकाररेखायां तिर्यग्रूपस्थाने सव्यापसव्यभागयोः स्तम्भाष्टकयुतं पङ्क्तिचतुष्के स्थापिते सति चतुष्षष्टिस्तम्भा भवन्ति । किञ्चैतेषां स्तम्भानां मध्यभागे वैशाल्यरेखायां स्तम्भाष्टकयुतं पङ्क्तिचतुष्के विरचिते सति तदाहृत्य संख्यायां षण्णवतिस्तम्भा भवन्ति । पूर्वोक्तरीत्या मध्यभागे दैवभागतले क्षुद्रमण्डपकल्पनार्थं स्तम्भचतुष्के स्थापिते कल्पनं अविकलं भवेदिति लक्षणवाक्यार्थः ॥

कल्पनस्यास्योद्धारमण्डलं यथा — अथ चतुर्थस्य गन्धर्वकान्ताख्यस्य शतस्तम्भमण्डपस्य स्तम्भस्थापनक्रमः —

५. ब्रह्मकान्तशतस्तम्भमण्टपलक्षणम् ॥

पञ्चमो ब्रह्मकान्तस्स्यान्मुखपादेऽष्टपादकम् ।
पृष्ठे च तत्क्रमात्स्तम्भस्थापनं चात्र गण्यते ॥ २८ ॥

तदङ्गणस्थानमाहुश्शिल्पशास्त्रविशारदाः ।
ततष्षट्स्तम्भविन्यासद्वयं स्थाप्यन्तु पार्श्वयोः ॥ २९ ॥

पृष्ठे चैवं स्थापनीयं मध्ये द्वात्रिंशदङ्घ्रिकम् ।
तन्मध्ये वेदपादन्तु तद्दैवतमुदाहृतम् ॥ ३० ॥

---

अथ पञ्चमस्य ब्रह्मकान्ताख्यस्य शतस्तम्भमण्डपकल्पनस्य स्तम्भस्थापनक्रममाह — **पञ्चम** इति । ब्रह्मकान्तमण्डपस्यास्य पुरोभागे पश्चाद्भागे च मध्यसूत्रस्थाने चित्रस्तम्भचतुष्कयुतं पङ्क्तिद्वयं पूर्वाङ्गणकल्पनाय, पश्चादङ्गणकल्पनाय च स्थापयित्वा पूर्वभागे मध्यमार्गस्य सव्यभागे अपसव्यभागे च स्तम्भषट्कयुतं पङ्क्तिद्वयं स्थापयेत् । अनेनैव प्रकारेण पश्चाद्भागस्य सव्यापसव्यस्थानयोः स्तम्भपङ्क्तौ स्थापितायां सत्यां आहत्य संख्यायां चतुष्षष्टिस्तम्भा भवन्ति ॥

किञ्चैतयोः पूर्वभागपश्चाद्भागकल्पनयोर्मध्यस्थाने स्तम्भाष्टकयुतं पङ्क्तिचतुष्कं स्थापयित्वा तन्मध्यस्थले पूर्वोक्तरीत्या दैवस्थले क्षुद्रमण्टपनिर्माणाय स्तम्भचतुष्के स्थापिते सति अविकलं शतस्तम्भमण्डपनिर्माणं भवेदिति लक्षणवाक्यार्थो ज्ञेयः ॥

कल्पनस्यास्योद्धारमण्डलं यथा — अथ पञ्चमस्य ब्रह्मकान्ताख्यस्य शतस्तम्भमण्टपस्य स्तम्भस्थापनक्रमः —

## ५. ब्रह्मकान्तशतस्तम्भमण्टपः ॥



अन्त्यकल्पनमेतत्तु विषमस्थानकं मतम् ।
आद्यं समं कल्पमाहुश्शास्त्रज्ञा वेदपारगाः ॥ ३१ ॥

समरेखां दृष्टिहीनं मनोहारिप्रकल्पनम् ।
स्तम्भानां मुखभागेषु पूर्वोत्तरपदस्थली ॥ ३२ ॥

---

किञ्चैवमत्र प्रतिपादितरीत्या शतस्तम्भमण्डपनिर्माणन्तु पञ्चविधरूपस्थापनमेव सौकर्याय शोभायै च भवति । अपि च कचित्तत्रतत्र कोणभागेषु मध्यतलेषु मध्यान्तभागेषु च कोणाङ्गण-क्षुद्राङ्गणस्थापनपूर्वकं प्रकारान्तरेण शतस्तम्भमण्डपनिर्माणन्तु सद्भिर्नाङ्गीकृतमिति भावो ध्वन्यते । अत एवंशैल्या पञ्चप्रकार-कल्पनीयशतस्तम्भमण्डपनिर्माणेषु पूर्वोक्तं प्रकारचतुष्कं सम-कल्पननामभाग्भवति । अन्त्योक्तं ब्रह्मकान्ताख्यं पञ्चमकल्पनं विषमकल्पननामभागिति च शिल्पविदां व्यवहारो ज्ञेयः ॥

तस्मादेवं शतस्तम्भमण्डपकल्पने पूर्वभागे स्तम्भानां मिथो यावद्वैशाल्यं दैर्ध्यं कृतं तावदेव प्रमाणं सर्वत्र पश्चाद्भागे च कल्पनीयमिति नियमः । तदानीमेव कल्पनाशोभासौकर्यादिक-मिति भावः । एवं स्तम्भानां मिथो वर्धनादिहीनं नानाविध-वितानतोरणचित्राद्यलङ्कृतं मण्डपनिर्माणं स्थापयेत् । किञ्चात्र शतस्तम्भमण्डपकल्पने पूर्वोक्तदैवभागे क्षुद्रमण्डपस्थलन्तु किंचित् उन्नतमेव सर्वत्र कारयेत् । तस्मिन्नेव क्षुद्रमण्डपे देवानां स्थिति-

यथाविभवतः स्थाप्या नानालङ्कारमण्डिता ।
स्थापनीया विशेषेण देवानां प्रीतिदायिनी ॥ ३३ ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे
शतस्तम्भमण्डपलक्षणकथनं नाम
चतुस्सप्ततितमोऽध्यायः ॥

---

रुत्सवादिसमयेषु करणीयेति च नियमः । एवं मनोहराकृतेरस्य शतस्तम्भमण्डपनिर्माणस्य स्थापनेन देवानामत्यन्तप्रीतिरिति भावः ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
**शतस्तम्भमण्डपलक्षणकथनं नाम**
**चतुस्सप्ततितमोऽध्यायः ॥**



अथ विमानलक्षणकथनं नाम

## पञ्चसप्ततितमोऽध्यायः ॥

सर्वेषामपि देवानां देवीनामपि सेविनाम् ।
गर्भगेहस्य मौलौ यत्कल्पनं रक्षणार्थकम् ॥ १ ॥

तद्विमानमिति प्राहुश्शिल्पशास्त्रविशारदाः ।
प्रतिलोमक्रियां तत्र स्थापयेच्छिल्पकोविदः ॥ २ ॥

---

॥ पञ्चसप्ततितमोऽध्यायः ॥

अत्रायमस्माकमभिप्रायः। यथा—पूर्वोक्तरीत्या त्रिसप्ततितमे अध्याये गर्भगृहलक्षणप्रतिपादनानन्तरमेव तस्य गर्भगृहस्योपरितले कल्पनीयस्य विमानस्य लक्षणं चतुस्सप्ततितमेऽध्याये वक्तुं युक्तं प्रकरणौचित्यात् । तथापीदं विमानलक्षणमत्र मातृकायां पञ्चसप्ततितमाध्याये पठितं दृश्यते । तदयं शास्त्रकारपठनशैलीक्रमो वा मातृकालेखकप्रमादो वेति । अतः पूर्वोक्तस्य देवानां देवीनां भक्तानाञ्च बेररूपाणां सततनिवासार्हस्य कल्पितस्य गर्भगृहकल्पनस्योपरि मौलितले तस्य गर्भगृहकल्पनस्य संरक्षणार्थं यत्तु कल्पनं क्रियते, तदिदं विमाननामभाग्भवतीति शिल्पशास्त्रपारङ्गतानामाशयः ॥

तस्मात्तदिदं विमानकल्पनं प्रायशस्सर्वेष्वपि देशेषु सर्वास्वपि कल्पनशैलीषु प्रतिलोमक्रियाप्रमाणमाश्रित्यैव स्थापयेदिति

तत्कल्पनकलं (समं) कृत्स्नं विमानाधिष्ठितं मतम् ।
मण्डलश्चतुरश्रं वा व्यासाधिक्यं क्वचिन्मतम् ॥ ३ ॥

गजपृष्ठाकारवद्वा चापाकारं क्वचिन्मतम् ।
आधारमानद्विगुणं त्रिगुणं वा चतुर्गुणम् ॥ ४ ॥

औन्नत्यं कल्पयेत्तस्य मुखवर्धनसंयुतम् ।

---

लक्षणवाक्यार्थः । प्रतिलोमक्रियाप्रमाणं नाम गर्भगृहस्य तस्य यावत्प्रमाणमधिष्ठानमौन्नत्यादिकञ्च योजितम्, तदौन्नत्यानुगुणमेव विमानकल्पनस्यास्य स्थापनमिति ॥

किञ्च पूर्वोक्तस्य गर्भगृहस्यान्तःस्थलस्य देवताबिम्बसान्निध्यसहितस्य च यावद्वैशाल्यं दैर्घ्यञ्च योजितं तावद्वैशाल्यदैर्घ्ययुतमेवास्य विमानस्याधिष्ठानं कार्यमिति नियमः। एवं क्वचिन्मण्डलाकारगर्भगृहस्थापने, चतुरश्राकारगर्भगृहस्थापने व्यासाधिक्यप्रमाणगर्भगृहस्थापने, गजपृष्ठाकारगर्भगृहस्थापने, चापाकारगर्भगृहकल्पने यादृशशैल्या गर्भगृहभित्तिनिर्माणं कृतं तादृशशैल्यैव तदुपरिकल्पनीयस्य विमानस्याधोभागेऽधिष्ठानकल्पनं स्थापनीयमिति विवेकशिशिल्पिभिर्विज्ञेय इति क्रमः ॥

तस्मादस्य विमानकल्पनस्यौन्नत्यं कियत्प्रमाणमिति चेत् तद्विवृणोति — आधारमानद्विगुणमित्यादिना। यावदौन्नत्यप्रमाणं गर्भगृहस्याधिष्ठाने योजितं तन्मानाद्विगुणौन्नत्ययुतं वा तन्मान-

अधिष्ठानस्तम्भकर्णप्रस्तराख्यविभागभाक् ॥ ५ ॥
चतुर्भागौन्नत्यकल्प्यं पूरयेत्खण्डनक्रमात् ।
शैलं सौधं लोहमयं विमानं दृढसन्धिकम् ॥ ६ ॥
तक्षयेद्वर्धयेन्मानक्रमतष्टङ्कभेदनैः ।

---

त्रिगुणौन्नत्ययुतं वा तन्मानचतुर्गुणौन्नत्ययुतं वा विमाननिर्माणमिदं कल्पयेदिति विवेकः । अनेन गर्भगृहस्य तस्याधोभागे क्षुद्राधिष्ठानं वा मध्यमाधिष्ठानमथवोत्तमाधिष्ठानं कल्पनीयमित्युक्तमिति तत्क्रमः ॥

अथवा ग्रामादौ क्वचिन्निर्मितस्य गर्भगृहस्य मध्यभागे एवमधिष्ठानकल्पनाभावे तादृशगर्भगृहस्यान्तर्भागे स्थापितायाः पूर्वोक्ताया देववेदिकाया यावत्प्रमाणमौन्नत्यं कल्पितं तन्मानद्विगुणौन्नत्यवद्वा, तन्मानत्रिगुणौन्नत्यवद्वा तन्मानचतुर्गुणौन्नत्यवद्वा विमानकल्पनमिदं स्थापयेदित्यर्थोऽपि ध्वन्यते । तस्माद्विमानकल्पनस्यास्यौन्नत्यप्रमाणमेवं प्रथमतो निश्चित्य तत्र गर्भगृहमध्यतले देवबिम्बस्थापनप्रतिष्ठापनात्पूर्वमेव तस्य गर्भगृहस्योपरि भृत्यवर्गैरिदं विमानकल्पनं निर्मापयेदित्युपदेशोऽवधार्यः ॥

किञ्चैवं कल्पनीयस्यास्य विमानस्यारम्भभागेऽधःस्थले तदौन्नत्यमानानुगुणमाधिष्ठानकल्पनं मध्यरन्ध्रहीनं घनशिलाखण्डैः मुखवर्धनसंयुतमेव चतुर्ष्वपि दिग्भागेषु स्थापनीयम् । क्वचिद्विमानकल्पनमिदं घनेष्टिकादिभिस्सुधामिश्रितैश्च स्थाप्यमिति

चतुर्भागं नयेद्भूमौ पादुका तत्प्रमाणका ॥ ७ ॥

---

द्रव्यभेदक्रमः । सर्वथा न दारुफलकादिकमत्र विमानकल्पने योज्यमिति ॥

एवमस्य विमानकल्पनस्य चतुर्ष्वपि दिग्भागेषु अधिष्ठानतलमुखकल्पनं पौषनिर्माणयुतं वा एकहस्तद्विहस्तौन्नत्ययुतस्तम्भसहितं वा कारयित्वा गोपुरतलप्रकल्पनरीत्यैवात्रापि विमानकल्पने गवाक्षहीनं कल्पनं समप्रमाणं समचित्रयुतं क्रमादुपर्युपरि कल्पने न्यूनप्रमाणकं प्रकल्पयेदिति शिल्पसमयविदः ॥

किञ्चैवमत्र विमाननिर्माणाय भित्तिकाराशिलातक्षकादयश्च गुरूपदेशक्रमात्पूर्वकृतनिर्माणदर्शनाच्छास्त्रज्ञानपरिचयात् स्वयुक्त्या चेतस्ततो निर्माणादिदोषहीनमव्रणमखण्डं अचञ्चलं विमानमिदं स्थापयेत् । एवं करणे तस्य शिल्पिनः कीर्त्यादय अक्षोभ्या इति । तस्मादेवं शिल्पिभिर्युक्त्यादिभिरेव प्रायशो निर्मापणीयस्यास्य विमानकल्पनस्य कानिचन निर्माणलक्षणानि तेषां प्रमाणान्यपि विवृणोति — चतुर्भागमित्यादिना । पूर्वोक्तस्य विमानाधिष्ठानकल्पनस्योपरिभागे पादुकाख्यचित्रस्थानं चतुर्भागयुतं तदाधारकल्पनभागञ्च चतुर्भागयुतं प्रकल्पयेदिति लक्षणवाक्यार्थक्रमः ॥

किञ्चात्रोक्तभागक्रमस्तु विमानकल्पनस्यास्याधिष्ठानभागा-

एकेन कम्पनिर्माणमेकहस्तद्विहस्तकम् ।
ऊर्ध्वस्तम्भप्रमाणन्तु कल्पनान्तरभेदतः ॥ ८ ॥

उपपीठं कल्पयेद्वा प्रान्तपट्टिकया युतम् ।
द्वाभ्यामेकेन वा तत्र उपानत्स्थानमीरितम् ॥ ९ ॥

चतुर्भागेन पद्मन्तु मुखपत्रसमन्वितम् ।
कम्पमेकेन कर्तव्यं पार्श्वनेत्रं द्विभागिकम् ॥ १० ॥

पञ्चभागेन कुमुदमेकेनोर्ध्वतलं मतम् ।

---

दूर्ध्वशिखरतलपर्यन्तमौन्नत्यं प्रमात्वा तत्र प्रमाणे चतुर्भागं, त्रिभागं, द्विभागमित्यादिक्रमेण कल्पनकरण इति भावः । तथा कल्पितस्य पादुकास्थानस्योपरितले एकभागेन कम्पतलं निर्मापयेत । तदुपर्यूर्ध्वस्तम्भप्रमाणन्तु एकहस्तौन्नत्ययुतमथवा क्वचिदत्युन्नतविमानकल्पने द्विहस्तौन्नत्यं योजनीयम् । तस्योर्ध्वस्थस्य कल्पनस्याधस्तात्क्वचिदुपपीठकल्पनं प्रान्तपट्टिकाचित्रादियुतं च कार्यम । तत्त्वैच्छिकमिति भावः ॥

किञ्चैवं कल्पनानन्तरं तस्य स्तम्भस्य मौलिभागे एकभागेन वा भागद्वयेन वा पादुकान्तरकल्पनं कार्यम् । किञ्च तदुपरि चतुर्भागेन पद्मकल्पनं मुखवक्त्ररेखासहितं निर्मापयित्वा तदुपरि पुनरप्येकेन भागेनोर्ध्वं कम्पतलकल्पनं भागद्वयेन पार्श्वनेत्रस्थानं तदुपरि भागपञ्चकेन कुमुदकल्पनं तदुपर्येकेन भागेनोर्ध्वतलं

द्विभागेन महापट्टमग्रपट्टं त्रिभागतः ॥ ११ ॥
वेदिका नागबन्धश्च पादश्च कमलं घटः ।
पञ्चभागश्च षड्भागस्सप्तभागोऽथवा भवेत् ॥ १२ ॥
फलकाबोधिकाभागो द्विभागश्च कपोतकः ।
प्रस्तरश्चाष्टभागेन कथितो बहुवक्त्रकः ॥ १३ ॥
ग्रीवा तु दशभागेन चतुरश्राकृतिर्भवेत् ।

---

तदुपरि त्रिभागेन महापट्टकल्पनं, तथैव त्रिभागेनाग्रपट्टकल्पनञ्च कारयेत । किञ्चैतेषु स्थानेषु वेदिका नागबन्धतलं, पादतलं, कमलतलं, कुम्भतलं वा पाञ्चालकोसलमागधद्राविड्यादिशैल्यनुगुणं कल्पनं यथाक्रमं प्रकल्पयेत् ॥

किञ्चैवमत्र कल्पितस्य कल्पनस्य निरीक्षणेनैव सुलभमेव विमानजातिज्ञानं भवेदिति भावः । एतत्क्लृप्तं कल्पनं सर्वमपि विमानस्य मध्यतलकल्पनमिति क्रमः । अपि चैवं कल्पितस्य कल्पनस्योपरितले प्रस्तरकल्पनं स्थाप्यम् । तादृशप्रस्तरकल्पनमनेकमुखसहितमनेकचित्रपोषादिमण्डितं चाष्टभागप्रमाणयुतं कार्यम् । तत्र प्राच्यादिषु चतुर्ष्वपि दिग्भागेषु नानारूपदेवगन्धर्वहरिहरब्रह्मादिचित्रस्थापनं सुधेष्टिकालोहपट्टादिभिः कार्यमिति च क्रमो ज्ञेयः ॥

किञ्च तदुपरि दशभागेन ग्रीवानिर्माणतलं कार्यम् ।

मण्डलाकृतिरग्र्या तु पट्टिका च द्विभागिका ॥ १४ ॥

नानामुखसमोपेतं मौलिभागयुतन्तु वा ।
स्थूपिप्रकल्पनं तत्र लोहजं दृढसन्धिकम् ॥ १५ ॥

प्रस्तरान्ते मध्यभागे त्रिमूर्तिस्थानकैर्युतम् ।
पृथग्बेरस्थलं वापि पौषस्थानमथापि वा ॥ १६ ॥

देवानामपि देवीनां दासानां गर्भगेहके ।
कलिङ्गं द्राविडं शौरसेनिकं कौसलन्तथा ॥ १७ ॥

---

सर्वविधविमानकल्पनेष्वपि तादृशग्रीवास्थलं चतुरश्राकृतियुतमेव निर्माप्यमिति नियमः । किञ्चैवं कल्पितस्य ग्रीवास्थानस्योपरितले मण्डलाकारमेव स्थूपिकल्पनं द्विद्विभागप्रमाणाग्र्यपट्टिकाकल्पनसमेतं नानाचित्रनानाननसमन्वितञ्च स्थापयित्वा तदुपरि कलशस्थापनार्थं अधःकीलसंयोजनं दृढं कारयेत । किञ्चैतादृशप्रस्तरस्थलं सुवर्णपट्टकवचितं वा रजतपट्टाच्छादितं वा ताम्रपट्टाच्छादितं वा कारयित्वा तत्र हरिहरब्रह्मदिक्पालाद्यनेकदेवरूपसंयोजनं कल्पयेत् ॥

क्वचिदेतादृशप्रस्तरभागे प्राच्यादिषु चतुर्ष्वपि दिग्भागस्थापनेषूपरितले पौषाकृतिस्थलं प्रकल्पयित्वा तत्र तद्गर्भगृहस्थापितदेवदेव्यादिमूर्तीनां चित्ररूपादिकं च योजयेत् । किञ्च तादृशबेरस्यान्तिकस्थले फलकातले तत्तद्देववाहनत्तिह्नभूतनन्दिवृषगरुड-

विमानकल्पनं कार्यं कुम्भपञ्जरसंयुतम् ।
बोधिकाजालकैर्युक्तं द्वारपालाश्रितन्तु वा ॥ १८ ॥
रन्ध्रहीनं मध्यकल्पमवाग्वक्त्रादिवर्जितम् ।
देवरूपसमोपेतं कल्पयेच्चित्रभूषितम् ॥ १९ ॥
कर्णकूटक्रियोपेतं कीलकुम्भयुतं क्वचित् ।

---

हंसमयूरादिबिम्बस्थापनं च कार्यम् । एवमुक्तरीत्या विमाननिर्माणन्तु कलिङ्गद्राविडशैलीद्योतकं भवतीति शिल्पसमयः ॥

अनेनैव प्रकारेण शूरसेनकोसलादिशैल्यन्तरविमाननिर्माणमपि युक्त्या तत्र देशेषु शिल्पी प्रकल्पयेदित्युपदेशः । किञ्च तत्र मण्डलाकारविमानं वा चतुरश्राकारविमानं वा व्यासाधिक्यप्रमाणविमानं वा तत्र तत्र देशेषु देशीयशैलीद्योतककल्पनं वा विशेषसहितं कारयेत् । किञ्च सर्वत्र शैलीनिर्माणेषु कम्पवाजनकपोतकमलकुमुदमुखपट्टिकादिस्थानविशेषाणां स्थलप्रमाणविभजनेनैव तत्तन्निर्माणस्वरूपं सर्वमपि स्पष्टं भवेदिति भावः ॥

किञ्चात्र विमानकल्पने बोधिकाजालकुम्भपञ्जरयुक्ते प्रतितलं वा एकस्मिन् तले वा चतुर्ष्वपीशानादिकोणस्थानेषु कर्णकूटकीलकुम्भस्थापनं पूर्वोक्तपौषभागास्थितदेवाबिम्बरूपादेरुभयोरपि पार्श्वयोः द्वारपालकल्पनञ्च तदनुगुणप्रमाणं यथाक्रमं स्थापयेत् ॥

किञ्चैवं कल्पितं विमाननिर्माणन्तु रन्ध्रादिदोषवर्जित-

सौवर्णं राजतं ताम्रं कवचञ्च कचिन्मतम् ॥ २० ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे
विमानलक्षणकथनं नाम
पञ्चसप्ततितमोऽध्यायः ॥

---

मवाङ्मुखहीनं चोपरि कर्णिकातले शिखराणामेकेन, त्रयेण, पञ्चभिस्सप्तभिर्नवकैर्वा संयुतं कारयित्वाऽधिष्ठानप्रभृति शिखर-कलशस्थूपिपर्यन्तं सौवर्णराजतपट्टाच्छादनञ्च दृढमनेकचित्रभूषितं कारयेत् । किञ्चात्र विमानकल्पने शिल्पी स्वयं युक्त्या कल्पनीय-स्थलान्तरकल्पनान्तरादिकं चोह्य दोषहीननिर्माणं स्थापयेदिति सङ्ग्रहेण विमानलक्षणमुक्तं बोध्यम् ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
**विमानलक्षणकथनं नाम**
**पञ्चसप्ततितमोऽध्यायः ॥**



अथ प्राकारलक्षणकथनं नाम

## षट्सप्ततितमोऽध्यायः ॥

प्राकारकल्पनं कल्परक्षकं प्रथमं मतम् ।
सैन्यवेशो द्वितीयन्तु तृतीयन्त्वर्गलादिकम् ॥ १ ॥

---

॥ षट्सप्ततितमोऽध्यायः ॥

अथास्मिन् षट्सप्ततितमेऽध्याये देवप्रासादभूपालप्रासादादिकल्पनस्य यत्प्राकारभित्तिनिर्माणं क्रियते तल्लक्षणमत्र विवृणोति शास्त्रकारः — **प्राकारकल्पनमित्यादिना** । देवालयगर्भगृहस्य भूपालप्रासादादे राज्ञामावासस्थानाख्यमूलस्थानकल्पनस्य दुर्गनगरमठमण्डपशालाद्यनेकविधकल्पनस्य रक्षणार्थं यदुन्नतभित्तिनिर्माणं क्रियते, तत्प्राकारकल्पनमिति व्यवह्रियते शास्त्रज्ञैः ॥

तस्मादेतच्च प्राकारनिर्माणं तत्र तत्र कल्पितदुर्गदुर्गप्रासादनगरादिस्थलभेदेन विविधं भवति । यथा — प्रथमप्राकारनिर्माणं, द्वितीयप्राकारनिर्माणं, तृतीयप्राकारनिर्माणमित्यादिना । किञ्च भूपालप्रासादवास्तुभूमौ स्थापितस्य प्रथमप्राकारकुड्यस्यान्तःस्थले तत्कल्पनरक्षणयोग्यं सेनानिवेशं स्थापयेत् । तत्र च सेनास्थाने कतिपयानां वाजिनां वारणानां खड्गाद्यायुधधारिणां भटानाञ्च स्थितिः । तादृशस्थलमुखद्वारगोपुरद्वारस्योभयोरपि पार्श्वयोरलङ्कारादिक्रिया कार्येति समयः । किञ्च द्वितीयतृतीयादिप्राकारादिस्थलेषु समुचित-

पृथक्कल्पाक्रियोपेतं कार्याय परिकल्पते ।
दुर्गेषु राजधान्याञ्च नगरेषु विशेषतः ॥ २ ॥

दैवं भौपमिति प्रोक्तं द्विविधं तत्प्रकल्पयेत् ।
स्थलकल्पनयोग्यं तत्कल्पयेद् दृढसन्धिकम् ॥ ३ ॥

---

भागेषु राजकीयकरग्रहणद्रव्यस्थापनशालाभाण्डारशालादिकं सर्वमपि कल्पनजालं दृढार्गलयोग्यं स्थापयेदिति तत्क्रमः ॥

एवं भूपालप्रासादकल्पितानां सर्वेषामपि कल्पनानां प्रधानरक्षाकरं द्रव्यन्त्विदमेव प्राकारकल्पनमिति भावः । याम-रक्षकभटायुधादिद्रव्यन्तु द्वितीयमप्रधानमिति सतां व्यवहारः । तस्मादन्तःस्थापितानां सर्वेषामपि सिह्मासनशालाधनशालादि-कल्पनानां रक्षाकरणशीलस्यास्य प्राकारकुड्यनिर्माणमतिदृढ-मगाधभूमिलम्बननिर्माणोपेतं स्थापयेदिति लक्षणवाक्यार्थः ॥

किञ्चैवं लक्षणोपेतं निर्मितं प्राकारकल्पनन्तु नगरेषु राजधान्यां दुर्गस्थलेषु च यदि कृतं तदा तस्य भूपप्राकारनिर्मिति-रिति व्यवहारः । एवं देवालयवास्तुभूभागे यदि कृतं तदा देवप्राकारनिर्मितिरिति व्यवहारश्च क्रमबोध्यः । एवं भूपपद-देवपदप्रयोगेन किं वा फलमिति चेद्भूपप्राकारकल्पनेषु वैरिमण्डलनिरासाय नलीकाद्यायुधस्थापनं कार्यम् । देवप्राकार-कल्पनेषु वृषहंसमयूरगरुडादिभक्तमूर्तिकल्पनस्थापनादिकं शान्ति-

प्रतिलोमानुलोमाभ्यां मानं तस्य द्विधा भवेत् ।
पादपादप्रमाणेन वर्धयेन्नृपमन्दिरे ॥ ४ ॥
दैवेऽधिकं प्रमाणं वा तत्समं वा क्वचिन्मतम् ।

---

रसवर्धकचिह्नञ्च योजनीयमिति क्रम इति शिल्पिवर्गीयोपदेशः । इदमेव लक्षणं स्पष्टमत्रैव विवृणोति शास्त्रकार इत्यलम् ॥

तस्मादेवं द्विविधमपि प्राकारनिर्माणं तत्तत्स्थलकल्पित-कल्पनानुगुणं स्थापनीयमिति प्रतिलोमपक्षः । अनुलोमपक्षस्तु प्राकारौन्नत्यानुगुणमेव तदन्तस्स्थं कल्पनं करणीयमिति । अयं तु अनुलोमपक्षः प्रायशः दैविकप्रासादालयशालामण्डपादिनिर्माणेष्वेव योज्य इति शिल्पसमयविदः ॥

किञ्च पादपादप्रमाणेनेत्यत्रायमर्थो बोध्यः । यथा — राज्ञां सन्ततवासार्हमूलस्थानस्यासन्नस्थले कल्पितस्य प्रथम-प्राकारस्य द्वादशहस्तप्रमाणौन्नत्यं यदि कृतं तर्हि तस्य प्राकारस्या-नन्तरस्थलकल्पितस्य द्वितीयप्राकारकुड्यस्य पञ्चदशहस्तप्रमाणौन्नत्यं कल्पनीयम् । अनेनैव प्रकारेण परस्परं पादप्रमाणाधिक्यवदिति । तथा च तृतीयप्राकारस्याष्टादशहस्तप्रमाणौन्नत्यं योजनीयमिति क्रमः पादपादप्रमाणवर्धनरीत्या कार्य इत्यर्थः । एवं नगरदुर्ग-प्राकारकुड्यद्वाराणां सर्वेषामप्यौन्नत्यक्रमः । किञ्च देवालयवास्तु-कृतप्रथमप्राकारकुड्यस्यौन्नत्यप्रमाणात् पादप्रमाणाधिकप्रमाणं

दुर्गेषु कूपसंयुक्तं त्रुटनस्थानकान्वितम् ॥ ५ ॥

क्षुद्रमण्डलयुक्तं वा स्थलमानवशान्नयेत् ।
मध्याङ्गुलिसमायुक्तं पिञ्छवर्धनसंयुतम् ॥ ६ ॥

मस्तकेष्वपि वेष्टाकं पौषं नलिकसंयुतम् ।

---

द्वितीयप्राकारकुड्यस्य नेयमित्यादिक्रमश्च यथाक्रमं ज्ञेय इति परिपाटी । एवं देवप्राकारकुड्यस्यौन्नत्यकल्पनमुक्तम् ॥

अथ प्राकारनिर्माणस्य स्थापनस्वरूपमाह -- दुर्गेष्वित्यादिना । दुर्गस्थानेष्वासन्नतलस्थितपरिघाजलवीचीप्रसरणवेगेन दुर्गप्राकारभित्तेर्यथा वा क्षोभणभेदनादिकं न भवेत्तथा घनशिलाखण्डैरिष्टिकादिभिर्वा स्थापनं कार्यम् । तथा दुर्गप्राकारभित्तिस्थापने कचिदीशानादिकोणभागेषु मध्ये मध्ये भित्तिस्वरूपं कूपाकारकल्पनसंयुक्तं कचित्त्रुटनाख्यकल्पनसंयुक्तं वा निर्मापयित्वा तेषां दुर्गप्राकारकुड्यानामुपरिभागे शिलाखण्डैरिष्टिकाखण्डैश्च क्षुद्रमण्डलाकारकल्पनं मध्यमाङ्गुलिककल्पनविशेषसंयुक्तं कचित भित्तेरधोभागे वा जलतलपर्यन्तं मध्यभागे वा पिञ्छवर्धनकल्पनविशेषयुक्तं तादृशपिञ्छकल्पनस्थानस्योर्ध्वभागे मौलितले पौषयुतवेष्टनस्थानञ्च प्रकल्पयेत् । किञ्च तत्र खलु पौषस्थाने वैरिमण्डलनिरासनाय नलीकाद्यायुधस्थापनमिति तदीयक्रमः ॥

एवं भूपालभवनमन्दिरावरणस्थलम् ॥ ७ ॥

आदौ वृद्धियुतं प्रायः क्रमाद्धीनं प्रकल्पयेत् ।
प्राकारकल्पनेष्वेवं दैविकेषु तथा मतम् ॥ ८ ॥

चतुरश्रं व्यासहीनं दैविकं संप्रकल्पयेत् ।

---

किञ्चात्रोक्तकूपाकारत्रुटनाकारकल्पनादिस्वरूपन्तु गुरूपदेशेन कार्यनिरीक्षणवशात्स्वयं युक्त्या च शिल्पिभिरेवमवधार्यं भवति । किञ्चैवंप्रकारेण भूपालदुर्गप्राकारभित्तिकुड्यानां निर्माणं शस्तं भवति । तस्मादिदं भूपालदुर्गभित्तेः प्रासादकुड्यस्य नगरप्राकारकुड्यस्य च स्वरूपन्तु तत्तत्स्थलप्रमाणानुसारेण चतुरश्रं मण्डलाकारं दीर्घाकारमीशानादिदिक्कोणभागेषु कचित् कोणकल्पनयुतञ्च निर्माप्यम । किञ्च देवालयप्राकारकुड्यस्य स्वरूपं तु न मण्डलाकारं कोणभागेषु कोणकल्पनयुतं कार्यम् । परन्तु तत्तद्देववास्तुस्थलस्वरूपानुसारेण दीर्घाकारं वा चतुरश्रं वा स्थापयेदिति शिल्पशास्त्रकाराणां नियमोऽवश्यमनुष्ठेयः ॥

तस्मादेवं कल्पनीयानां नगरदुर्गभूपप्रासाददेवप्रासादगृहभवनहर्म्यकुड्यानां सर्वेषामप्यधोभागे भूमिलम्बनतलादुपरि हस्तद्वयाधिकवैशाल्यप्रमाणं योजयित्वा तदुपरि क्रमात्कुड्यकल्पने कचित्किञ्चिदेकाङ्गुलद्व्यङ्गुलादिक्रमाद्वैशाल्यहीनत्वमपि योजनीयम् । एवं कल्पनमेव सर्वेषां कुड्यानां दार्ढ्यप्रदमिति भावः ॥

मण्डलं वरणस्थानं शुभदं नृपमन्दिरे ॥ ९ ॥
पर्वते वा भूमिभागे कल्पने विविधे मतम् ।
समद्वारयुतं वापि विषमस्थानवेशकम् ॥ १० ॥
समसूत्रप्रमाणेन पादहीनादिभेदतः ।
हरेर्हरस्य धातुर्वा तत्तच्चिह्नं प्रयोजयेत् ॥ ११ ॥
कोणेषु मध्यतालेषु पार्श्वे प्राकारकल्पने ।
सुधालेपितकैर्वज्रयोजनैस्तक्षणैरपि ॥ १२ ॥

---

किञ्चैवं कल्पितानां देवप्रासादप्राकारकुड्यानामुपरिभागे ईशानादिदिक्कोणेषु क्वचिन्मध्यतलेष्वपि तत्तद्देवताचिह्नभूतवृषगरुडहंसमयूरादिस्थापनञ्च कार्यम् । एवं भूपालप्रासादकुड्यानामुपरिभागे तु राज्ञां जयप्रदं खड्गध्वजपटादिकं लोहैस्सुधेष्टिकादिभिर्वा निर्मापयेदिति क्रमः । अपि चैवंरीत्या लक्षणोपेतानां देवालयप्राकारकुड्यानां मध्यभागे प्रतिप्राकारतलप्रवेशार्हं द्वारं पूर्वोक्तरीत्या स्थापयेत् । क्वचिन्मध्यस्थाने कोणादिविषमस्थानेषु च हीनप्रमाणं क्षुद्रद्वारकल्पनमपि नृपादीनामिच्छानुगुणं स्थाप्यमेव भवति ॥

किञ्च सुधाचूर्णवज्रलेपनादिभिरतिनिबिडमचञ्चलस्थापितानामिष्टिकाकुड्यानां क्वचित्कोणभागेषु बहिरन्तश्च स्थले उपघ्नकुड्यनिर्माणं चातिदार्ढ्याय कल्पनीयमिति भावः । एवं सर्वत्र प्राकारादिबृहत्कुड्यानां च निर्माणं तत्र तत्र कल्पनीय-

मिथोबन्धनसंयुक्तं शैलमैष्टिककल्पनम् ।
भूमिलम्बनसंयुक्तपार्श्वोपान्ततलक्रियम् ।
स्थापयेन्मतिमान्युक्त्या रक्षाप्राकारकल्पनम् ॥ १३ ॥

इति विश्वकर्मप्रणीते **विश्वकर्मवास्तुशास्त्रे**
प्राकारलक्षणकथनं नाम
षट्सप्ततितमोऽध्यायः ॥

---

भारवहनक्षमं चिरकालरक्षाकरमतिघनं दृढसान्धिकञ्च निर्मापयेत इति सङ्ग्रहेण प्राकारलक्षणवाक्यार्थो ज्ञेयः ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
**सकलविधप्राकारलक्षणकथनं नाम**
षट्सप्ततितमोऽध्यायः ॥



अथोपपीठलक्षणकथनं नाम

## सप्तसप्ततितमोऽध्यायः ॥

उपपीठक्रियायोगः शोभारक्षणवर्धकः ।
तस्मात्तत्कल्पनं शस्तं निर्माणे बहुरूपके ॥ १ ॥

स्थलभेदात्क्रियाभेदादधिष्ठानस्य चोर्ध्वके ।
अधस्ताद्वा यथाशोभं तन्निर्माणं प्रयोजयेत् ॥ २ ॥

---

॥ सप्तसप्ततितमोऽध्यायः ॥

अथास्मिन् सप्तसप्ततितमेऽध्याये उपपीठलक्षणमाह — **उपपीठक्रियायोग** इत्यादिना । अधो वक्ष्यमाणेषु सर्वेष्वपि कल्पनेषु उपपीठकल्पनयोजनन्तु तेषां कल्पनानां शोभाजनकं परम्परया रक्षणदार्ढ्यप्रदञ्च भवतीत्युपपीठकल्पनफलमुक्तम् । तस्मादेतदुपपीठकल्पनं तत्र स्थलयोग्यं कार्ययोग्यं च प्रयोजयेदिति लक्षणवाक्यार्थः । किञ्चेदमुपरिकल्पनं **प्रायशोऽधिष्ठानस्योर्ध्वभागे स्तम्भानामधोभागे च स्थाप्यम्** । एवं **क्वचिदधिष्ठानस्याधोभागे च प्रयोज्यमिति** सामान्यस्थलयोजनक्रमः ॥

विशेषस्थलनिर्देशो यथा — सर्वेष्वपि गृहादिकल्पनेषु प्रथमद्वारसमीपस्थलस्थापितवेदिकाया अधोभागे सर्वेषामपि द्वाराणामधोभागस्थले, कवाटफलकायाश्चान्ततलेषु गवाक्षाणामधोभागे, रन्ध्रस्तम्भानामधोभागे, तूलस्थापनस्थलस्याधोभागे, भित्तीना-

तदुत्तमं मध्यमं वाऽधमं कल्पनमीरितम् ।
तोरणादित्रिभेदेन क्वचिद्बहुविधं मतम् ॥ ३ ॥

प्रतिभद्रं वाजिभद्रं मञ्चभद्रन्तु शैलजम् ।

---

मारम्भस्थले, प्रस्तरकल्पनानामधोभागे, तोरणकल्पनानामधःस्थले, पर्यङ्कानां शिबिकानां डोलानामधोभागे, सोपाननिर्माणानामधोभागे चत्वरतलस्यान्तिमस्थलेऽङ्गणस्थानानामधोभागे, भित्तीनां सर्वासामुपरिभागे, गलस्थाने, तिर्यग्दारुकादिस्थापनस्थले, कल्याणशालानां स्तम्भोपरिप्रवेशितदारुफलकोपरितले, रन्ध्रस्तम्भानां गलान्तभागे, स्थलान्तरेष्वपि तदिदमुपपीठकल्पनं योजयेदिति क्रमः ॥

किञ्चैतादृशाधिष्ठानेन वोपपीठेन वा विना यन्निर्माणं प्रकल्प्यते, तद्गृहभवनादिवेदिकास्तम्भकुड्यादिकल्पनं शोभारहितं निन्द्यं भवेत् । न चिरकालस्थितये चेति शिल्पशास्त्रज्ञैः क्रियासौष्ठवज्ञैर्मुनिभिरुदीरितमिति भावः । एवंप्रकारेण प्रतिपादितस्थलेषु क्वचिदुन्नतप्रमाणोपपीठयोजनं क्वचिन्मध्यमप्रमाणोपपीठकल्पनयोजनं च तत्तत्कार्यानुसारेण निर्माणस्थलानुसारेण च यथाशोभं युक्त्या दृढं प्रकल्पयेदिति शास्त्रकारोपदेशः ॥ ३ ॥

किञ्च पूर्वोक्ताभिः सप्तविधनिर्माणशैलीभिर्निर्मितानां गृहभवनहर्म्यप्रासादशालामण्डपादीनां निर्माणेष्वपि सकलेषु

सूर्यभद्रं चन्द्रभद्रं दारुकार्ये प्रयोजयेत् ॥ ४ ॥

गन्धर्वभद्रं देवेशभद्रं लोहक्रियार्हकम् ।
सप्तस्वपि च शैलीषु योज्यमेतत्प्रकीर्तितम् ॥ ५ ॥

---

योजयितुं योग्यस्यास्योपपीठकल्पनस्य जातिक्रममाह — प्रतिभद्रमित्यादिना ॥

१. प्रतिभद्रजात्युपपीठकल्पनम् ,

२. वाजिभद्रजात्युपपीठकल्पनम् ,

३. मञ्चभद्रजात्युपपीठकल्पनम् ,

इत्येतज्जातित्रयमपि शिलामयस्तम्भध्वजस्तम्भादिशिलानिर्माणेषु योजनीयमित्यर्थः ॥

१. सूर्यभद्रजात्युपपीठकल्पनम् ,

२. चन्द्रभद्रजात्युपपीठकल्पनम् ,

इत्येतज्जातिद्वयं दारुखण्डकृतफलकाद्वारगवाक्षप्रस्तरफलकाशिबिकाडोलापर्यङ्किकादिकार्यजालेषु योज्यं भवति ।

१. गन्धर्वभद्रजात्युपपीठकल्पनम् ,

२. वासवभद्रजात्युपपीठकल्पनम् ,

इत्येतज्जातिद्वयन्तु ताम्रपित्तलरजतसुवर्णादिसकलविधलोहकार्येषु प्रयोजनीयमिति क्रमार्थो ज्ञेयः । तथा चास्योपपीठकल्पनस्य सप्तविधजातिरुक्ता भवति । एतासु सप्तविधास्वपि जातिष्विद्-

अधिष्ठानोपपीठाभ्यां हीनं यत्तु प्रकल्पनम् ।
तन्निन्द्यमपि चाल्पायुर्निश्शोभमिति भाषितम् ॥ ६ ॥

तस्मात्तत्कल्पयेच्छिल्पी शास्त्रज्ञो मानवित्क्रमात् ।
अधःपट्टं च कम्पञ्च पादुकां वाजनं तथा ॥ ७ ॥

कपोतं पञ्जरं कम्पमालिङ्गं कम्पमेव च ।
मसूरकं कुम्भभद्रं क्षेपणं पट्टिकामपि ॥ ८ ॥

ग्रीवाञ्च प्रस्तरं कण्ठं नालमालिङ्गमेव च ।
गलञ्च पञ्जरं कूटं कर्णकूटं च कुम्भकम् ॥ ९ ॥

बोधिकामूर्ध्वपट्टञ्च प्रस्तरासनमेव च ।
नलिकास्थापनञ्चापि तत्तत्कल्पनयोग्यकम् ॥ १० ॥

यालं पादञ्च कूटञ्च कान्तं कुमुदपाट्टिकम् ।
कोष्ठपादं चित्रपादं कोष्ठवक्त्रमिति क्रमात् ॥ ११ ॥

अधिष्ठाने च यत्प्रोक्तं सङ्कीर्णं तद्युतं भवेत् ।
चतुरश्रं वर्तुलं वा व्यासहीनमपि क्वचित् ॥ १२ ॥

---

मुपपीठकल्पनमुत्तमप्रमाणोपेतं, मध्यमप्रमाणोपेतमधमप्रमाणोपेतं वा पूर्वोक्तरीत्या यथाशोभं प्रयोजयेदिति शिल्पसमयः ॥

किञ्च सुधेष्टिकारचितरन्ध्रस्तम्भानामधोभागेषु लोहपट्टकृतकल्पनेषु, दारुखण्डकृतकल्पनेषु, शिलाभिः कल्पितकल्पनेषु च विविधरूपेषु योजनीयस्यास्योपपीठनिर्माणस्य स्वरूपन्तु क्वचि-

लताभेदं चित्रभेदं मुखभेदञ्च योजयेत् ।
तोरणाकृतिकं वापि क्षुद्रबिन्दुस्थलं तथा ॥ १३ ॥

वेदिकान्ते द्वारभागे कवाटे च गवाक्षके ।
तूलप्रस्तरभागेषु स्तम्भभागेषु तोरणे ॥ १४ ॥

पर्यङ्कशिबिकाडोलाकार्येष्वपि मनोहरा ।
शैल्येषा संप्रयोज्यैव भागन्यूनाधिकक्रमात् ॥ १५ ॥

अङ्गुलक्रममानेन किष्कुमानेन वा क्वचित् ।
भागमानेन वा तस्य प्रमाणं कल्पयेत्क्रमात् ॥ १६ ॥

---

चतुरश्ररूपं, कचिद्दीर्घाकारं, कचिन्मण्डलाकारं, कचिदतिदीर्घ-प्रमाणतोरणाकारं, कचिल्लतापत्ररूपमित्यादिक्रमकल्पनीयं भवतीत्युपदेशः ॥ १५ ॥

एवमेतेषु स्थलेषु स्थलान्तरेष्वपि अस्योपपीठकल्पनस्य योजने कचिदङ्गुलमानमन्यत्र किष्कुमानं स्थलान्तरे भागमानञ्च प्रयोज्य मात्वा तदनुगुणमधःपट्टकम्पवाजनादिकं योज्यमिति च प्रमाणक्रमः ॥

अस्य विशदार्थस्तु शिबिकानां डोलानां गवाक्षाणां फलकानां दारुस्तम्भानां दारुखण्डकृतानां द्वाराणामन्येषां दारुकार्याणामेकाङ्गुलद्व्यंगुलचतुरङ्गुलादिमानयोजनं कार्यम् । एवं चत्वरसमीपस्थापिताङ्गणकल्पनस्य शालाकल्पनस्थानस्य तूलप्रस्तरादि-

**पट्टादीनां वर्धनञ्च तक्षणञ्च क्रमान्नयेत् ।**
**खण्डहीनमदृश्यं वा श्लक्ष्णितं रन्ध्रहीनकम् ।**

---

स्थापनस्थलस्य स्थलान्तरस्य च निर्माणार्थमेकाकिष्कुप्रमाणं किष्कुद्वयप्रमाणमित्यादिक्रमतः किष्कुमानं प्रयोजयेत् । किञ्च पूर्वोक्तरीत्या स्तम्भानां सकलविधानामप्यधोभागे स्थापनीयस्यास्योपपीठकल्पनस्य भागद्वयं भागत्रयमित्यादिक्रमेण भागप्रमाणयोजनं कार्यमित्यर्थः ॥

तस्मादेवं तत्र तत्र स्थलानुगुणं द्रव्यानुगुणं कार्यानुगुणञ्च मानयोजनेऽपि कचिच्चतुरंशेन वाजनकल्पनमन्यत्र निर्माणे त्र्यंशेन वाजनकल्पनमन्यत्र षडंशेन वाजनयोजनमित्यादिक्रमं च तत्रत्यकल्पनशोभा यथा भवेत्तथा शिल्पी, तक्षको, भित्तिकारो, लोहकारश्च स्वयुक्त्या स्वयमूह्य प्राचीनकल्पननिरीक्षणेन च गुरूपदेशतश्च प्रकल्पयेदित्युपदेशः ॥

तस्मात्पूर्वोक्तरीत्या इदमुपपीठनिर्माणन्तु शिलाभिरिष्टिकाभिर्दारुभिर्लोहपट्टखण्डैश्च कार्यम् । तथा करणे पादुकावाजनकपोतपञ्जरादिस्थलन्तु कचिट्टङ्कैस्तक्षयेत्, कचिद्वर्धयेदिति तक्षककार्यभित्तिकारकार्यक्रमश्च ज्ञेयः । तस्मादेवमत्र कल्पनीये उपपीठकल्पने तक्षणीयवर्धनीयकम्पवाजनकपोतपञ्जरादिस्वरूपन्तु गुरूपदेशेन शास्त्रपठनेन च पूर्वकल्पननिरीक्षणेन स्वीयया युक्त्या च शिल्पिभिरेवोह्यं, नेतरैश्शास्त्रज्ञैरिति ॥

युक्त्या प्रकल्पयेच्छिल्पी यथाशोभं यथाबलम् ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे
उपपीठलक्षणकथनं नाम
सप्तसप्ततितमोऽध्यायः ॥

---

किञ्च पूर्वोक्तसप्तविंशतितमेऽध्याये प्रतिपादितेष्वधिष्ठानकल्पनेषु यो यो निर्माणविशेषः कथितस्स चाप्यत्रोपपीठकल्पने योजनीय इति प्राचामाशयः ॥

नवीनानामाशयस्त्वधिष्ठाननिर्माणेषु कम्पवाजनादीनां तक्षणवर्धनकरणापेक्षयाऽस्योपपीठकल्पनस्य तदाधिक्यं शोभाधिक्यञ्चेति । तस्माद्यथेप्सितक्रमानुसारेण स्थलनिर्माणविभवानुसारेण चोपपीठकल्पनं शिलाखण्डैरिष्टिकाखण्डैः कृतमप्यव्रणं रन्ध्रादिदोषहीनमतिस्निग्धं वाजनादिस्थानेषु शोभावहक्षुद्रचित्रयुतं प्रकल्पयेदिति सङ्ग्रहेणोपपीठलक्षणमुक्तं बोध्यम् ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
**उपपीठलक्षणकथनं नाम**
**सप्तसप्ततितमोऽध्यायः ॥**



अथ सकलविधदेवपीठलक्षणकथनं नाम

## अष्टसप्ततितमोऽध्यायः ॥

शालायां स्थानके वापि कार्यैर्मानवेदिभिः ।
निर्मितानाञ्च देवानामधस्तात्पादपीठकम् ॥ १ ॥

संयुक्तं वा वियुक्तं वा कल्पयेच्छिल्पवित्तमः ।
आसीनस्य शयानस्य देवदेवस्य शार्ङ्गिणः ॥ २ ॥

---

॥ अष्टसप्ततितमोऽध्यायः ॥

अथास्मिन्नष्टसप्ततितमेऽध्याये सकलविधदेवपीठलक्षणमुपपादयति — **शालायामित्यादिना** । किं नाम देवपीठकल्पनामिति चेद्वासुदेवनारायणादिविष्णुदेवबिम्बानां पादारविन्दयुगलस्याधोभागे शोभार्थं बेररक्षणाय च कल्पनीयमासननिर्माणमिति यावत् । एवं सकलविधमहेश्वरलिङ्गबेराणामधोभागे स्थापनीयं सगोमुखं पीठमासनं च तन्नामभागिति च बोध्यम् । तथा च तत्तत्प्रमाणविद्भिः मूलबेरोत्सवबेरनिर्माणकर्मणि कुशलैः शिल्पितक्षकैर्भित्तिकारैर्लोहकारैश्च क्रियाशालायां वा गर्भगृहमध्यस्थापितदेववेदिकायां वा निर्मितानां सकलविधदेवबेराणामधोभागे पीठमासनं वा कल्पनीयमित्युक्तं भवति । तस्मादासीनस्य वा शेषशयनस्य वा तिष्ठतो वा विष्णोर्मूलबेराणामुत्सवबेराणाञ्चाधोभागे योजनीयमासनम् —

पद्मपीठं शेषपीठं कुमुदं पीठमेव वा ।
सोमपीठं भद्रपीठं मूलबेरार्हकं मतम् ॥ ३ ॥

लिङ्गानामपि चाधस्ताल्लिङ्गपीठं सगोमुखम् ।
तालमानवशात्सर्वबेराणां पीठयोजनम् ॥ ४ ॥

मण्डलश्चतुरश्रं वा दीर्घाकारमथापि वा ।
षोडशाश्रं द्वादशाश्रं वस्वश्रञ्च षडश्रकम् ॥ ५ ॥

अर्धचन्द्रं त्रिकोणं वा चापाकारं क्वचिन्मतम् ।

---

१ पद्मपीठनिर्माणम, २. शेषपीठनिर्माणम,

३ कुमुदपीठनिर्माणम्, ४. सोमपीठनिर्माणम्,

५ भद्रपीठनिर्माणम् इति मुख्यकोटित्वेन पञ्चविधरूपं भवति । एवं शिलानिर्मितमहेश्वरलिङ्गानामधोभागे स्थापनीयमासनं लोहादिद्रव्यनिर्मितनटराजपशुपतिगौरीकान्तकार्तिकेयविनायकाद्युत्सवबेराणामधोभागे कल्पनीयमासनञ्च तत्तद्बेरतालप्रमाणानुसारेण निर्माणपरिपाट्या च बहुरूपं भवति । तस्मादेवं प्रतिपादितं विष्णुबेरासनं शिवबेरासनं सर्वमपि दशविधं कथितम् । यथा—१ मण्डलपीठनिर्माणम्, २ चतुरश्रपीठनिर्माणम्,

३ दीर्घाकारपीठनिर्माणम, ४ षोडशाश्रपीठनिर्माणम,

५ द्वादशाश्रपीठनिर्माणम्, ६ अष्टाश्रपीठनिर्माणम्,

७ षडश्रपीठनिर्माणम्, ८ अर्धचन्द्रपीठनिर्माणम्,

पीठप्रमाणमादिष्टमेवं दशविधं क्रमात् ॥ ६ ॥

षडङ्गुलं चैकहस्तं द्विहस्तं वा प्रकीर्तितम् ।
देवानामपि देवीनां वेदिकायुक्तमेव वा ॥ ७ ॥

---

९ त्रिकोणपीठनिर्माणम्, १० चापाकारपीठनिर्माणमिति ॥

एवं प्रतिपादितं दशविधजातिभेदविभक्तपीठनिर्माणमपि पूर्वोक्तदेवबेराणामधोभागे पादारविन्दस्याधस्तात्तले तन्निर्माणेन दृढसंबद्धं कारयेत् । अयमुत्तमः पक्ष इति समयः । क्वचिदिदमासनं तद्बेराधःस्थलेन समये योजनार्हं वियोजनार्हं च कार्यमिति । अयमधमः पक्ष इति मतिः । किञ्चात्र क्षुद्रप्रमाणवत् पीठकल्पननामभाक्, महाप्रमाणवत् आसननामभाग्भवतीति च क्रमो बोध्यः ॥

किञ्चैवं स्थापनीयानामेतेषां दशविधानामपि पीठानामासनानां चौन्नत्यप्रमाणन्तु केषाञ्चिद्बेराणामधोभागे षडङ्गुलं योज्यम् । अन्यत्रैकहस्तौन्नत्यप्रमाणं, केषाञ्चिद्बेराणामधोभागे द्विहस्तौन्नत्यप्रमाणं, क्वचिन्महेश्वरलिङ्गानामत्युन्नताकाराणामासनं तु सगोमुखं त्रिहस्तचतुर्हस्तपञ्चहस्तादिकौन्नत्ययुतं स्थापयेदिति शिल्पसमयः । सर्वथा मूलबेरस्थापनात्पूर्वमेव तेषां मूलबेराणामधोभागे स्थापनीयमासनन्तु न चाल्यमेव । इदञ्च लक्षणं महेश्वरलिङ्गाधारभूतासनस्यापीति भावः ॥

जन्म पद्मं कपोतं वा पञ्जरं रेखिका क्रमात् ।
क्षुद्रोपपीठमानेन योजयेत्पीठमासनम् ॥ ८ ॥

प्रणालीसंयुतं वापि कोणरन्ध्रसमान्वितम् ।
ऊर्ध्वकर्णसमायुक्तं वज्रलेपेन बन्धितम् ॥ ९ ॥

---

अपि च विष्णोर्वा शिवस्योत्सवबेराणामधोभागे स्थापनीयमासनन्तु पूर्वोक्तरीत्या वज्रलेपसंयोजनश्लक्ष्णीकरणादिना च तद्द्वारनिर्माणेन संयुक्तं प्रकल्पयित्वा तेषामासनानां नानाविधानामपि सव्यापसव्यभागयोरूर्ध्वकर्णाख्यं षडङ्गुलैन्नत्यवत्कीलयोजनं निर्मापयेत् । किमर्थम् ? तेषामुत्सवबेराणां हंसगरुडमयूरादिवाहनारोपणकाले तेषां बेराणां वाहनमस्तकस्थितकीलानाञ्च दुकूलरज्ज्वादिभिस्सम्यग्बन्धनार्थमिति प्रयोजनञ्च बोध्यम् ॥

किञ्चात्र पीठनिर्माणे कोऽपि नियमः स्वीकार्यः । यथा — लोहनिर्मितोत्सवबेराणामधोभागे लोहकृतमेवासनपीठयोजनम्, क्वचिद्दारुकृतोत्सवबेराणामधोभागे लोहकृतमासनपीठयोजनं शस्तं भवति । शिलानिर्मितानां मूलबेराणामधोभागे शिलामयासनमेव युक्तं स्थापयितुम् । क्वचित्तेषां शिलाकृतमूलबेराणामधोभागे दृढघनेष्टिकासुधाकृतासनमपि युज्यत एवेति । एवं दारुनिर्मितोत्सवबेराणां दारुमयमेवासनकल्पन-

मिति च क्रमः। तस्मादेवं कल्पनीयस्यासनस्य पीठस्य वोत्सवबेरेण सार्कं दृढसन्ततयोजनमेव युक्तम्। वाहनाद्यारोपणसमयेऽपि एतदासनोर्ध्वकर्णनिर्माणेन बन्धनसौकर्यञ्च संभवति। एतेषां पीठानां नियोजनक्रमस्तु नवीनैःशिल्पाचार्यैर्दीक्षितभट्टारकैश्च नाङ्गीक्रियत इति ॥

अपि चात्र पीठनिर्माणे माहेश्वरलिङ्गानामधःकल्पने अभिषेकजलपतनार्थं गोमुखकल्पनं वामभागे कार्यमिति नियमः। एवं क्वचिद्विष्णुमूलबेराणामधःकृतासनकल्पनेऽपि अभिषेकजलनिस्सरणमार्गः कल्पनीय इति। किञ्च कल्पनस्यास्य गोमुखमिति नाम केचिद्वदन्ति ॥

एवंलक्षणोपेतं कल्पनीयानामेतेषां दशविधानामासनानामपि स्वरूपन्तु पूर्वोक्तोपपीठनिर्माणरीत्या जन्मपद्मकम्पवाजनपङ्कजादिस्थलं रेखया पूर्वं विभज्य तक्षणक्रमेण क्वचिद्वर्धनक्रमेण च अङ्गुलकिष्कुभागप्रमाणयोजनपरिकल्पनेन उपरि पद्मदलाधःपद्मदलादिविविधचित्रभासुरं क्वचिन्निरन्तररेखायुक्तं, क्वचिद्बहुबिन्दुजालमेदुरितं क्षुद्राङ्गणविभजनञ्च कारयित्वा दृढं बन्धयेदिति वाक्यार्थक्रमः ॥

किञ्चैवं कल्पितानामुत्सवबेरपादान्तिकतले योजनीयानामेतेषां दशविधासनानामुभयोरपि पार्श्वयोः तत्तद्बेरतलौन्नत्यप्रमाणानुगुणं रन्ध्रं प्रायशो वर्तुलाकारं क्वचिच्चतुरश्रं कारयेत्।

आधारसूत्रसंयुक्तं बीजाक्षरयुतन्तथा ।
श्लक्ष्णितं टङ्कवेशेन मेलयेत्तु दिने बुधः ॥ १० ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे
सकलविधदेवपीठलक्षणकथनं नाम
अष्टसप्ततितमोऽध्यायः ॥

---

किमर्थम् ? अनेन रन्ध्रेण पूर्वोक्तेनोर्ध्वकर्णेन च रज्जुं प्रवेशयित्वा गजतुरगादिवाहनमस्तकोपरितले बेराणां दृढं स्थापनार्थमिति क्रमः । तस्मादनेन लक्षणेनोपेतेषु आसनेषु वासुदेवमाधव-नारायणरङ्गनाथादिविष्णुबेराणि चतुरश्रपीठे वा दीर्घाकारपीठे वा योजयेत ॥

किञ्चैष्वेव चतुरश्रदीर्घाकारपीठेषु मुख्यानां शिवबेराणां स्थापनं युक्तम । कचिदेष्वेवासनेषु देवीनां बेराणीति नवीनाःशिल्पविदः । अथापि प्राचामाशयस्तु षडश्राष्टाश्रद्वादशाश्र-षोडशाश्राख्यासनेषु सुदर्शनशङ्खशूलाद्यायुधानां कालीकराली-भैरवीग्रामदेवीचण्डिकालक्ष्म्यादिसकलदेवीबेराणां सप्तमातृका-बेराणां च स्थापनं युक्तं क्षेमकरमिति ॥

एवं कल्पनीयमिदमासनजालं बेरयोजनात्पूर्वमेव तत्त-देवतामातृकाबीजाक्षररेखायन्त्रनवरत्नादिविन्यासपूर्वकं मनोहरं

अथ सकलबेरलक्षणकथनं नाम

## एकोनाशीतितमोऽध्यायः ॥

हरिर्हरश्च धाता च दिक्पाला वासवादिमाः ।
नवग्रहस्वरूपा ये ये चान्ये विबुधा मताः ॥ १ ॥

---

कारयित्वा शुभे मुहूर्ते नदति मङ्गलवाद्यजाले देवबेरेण योजनं शिल्पी प्रकल्पयेदिति आगमविदामाशयो निगदितः ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
**सकलविधदेवपीठलक्षणकथनं नाम**
**अष्टसप्ततितमोऽध्यायः ॥**



॥ **एकोनाशीतितमोऽध्यायः** ॥

अथास्मिन्नेकोनाशीतितमेऽध्याये सर्वक्षेमनिदानभूतानां हरिहरादिदेवबिम्बानां लक्षणान्युपदिशति— **हरिर्हरश्च धाता** चेत्यादिना । सर्वेषामपि जगतां सृष्टिस्थितिसंहारकारणभूता वेदान्तवेद्या ये ब्रह्मविष्णुमहेशाना देवोत्तमा विख्यातास्तेषां रूपशक्त्यादिकं बेरनिर्माणेषु वा चित्रकल्पनेषु वा योजयेदिति शास्त्रकारोपदेशः ॥

ज्योतिस्स्वरूपा ये प्रोक्तास्तद्देव्यो याश्च कीर्तिताः ।
गरुत्मान्नन्दिदेवेशो देववाहाश्च ये मताः ॥ २ ॥

देवायुधस्वरूपा ये द्वारपा ये च कीर्तिताः ।
शास्त्रप्रवर्तका देवा ये चान्ये मुनिपुङ्गवाः ॥ ३ ॥

शिलादिभिर्द्रव्यजालैरेतेषां रूपकल्पनम् ।

---

एवं वासवाग्नियमनिर्ऋतिवरुणपवनधनेशेशानाख्या ये दिक्पाला देवविशेषाः, ये च सूर्यचन्द्रशुक्रकेतुबुधभौमराहु-गुरुशन्याख्या ग्रहपतयो देववराः, अन्ये च ये ज्योतिर्मया निर्दिष्टा देवाः विष्वक्सेनसनकसनन्दनाद्या दिव्यसूरयो, याश्च लोकमातरो लक्ष्मीगौरीशारदाछायास्वाहाद्याः एतेषां स्वरूपमपि बेरकल्पनेषु चित्रकल्पनेषु चारोप्य प्रत्यहं अमन्दानन्दप्राप्तये पूजयेयुरित्यर्थः ॥

किञ्च पूर्वोक्तानां हरिहरब्रह्मादिदेवानामायुधांशभूतास्त-द्दिव्यस्थानद्वारपालकरक्षकाश्च ये प्रकीर्तिताः ये चैतेषां देवोत्त-मानां भक्तिनिलया वैनतेयनन्दिपावमानिप्रमुखा ये च देववाहन-भूताश्शेषहंसमयूरादयो, ये च दिव्यचक्षुषश्शास्त्रप्रवर्तकाः गोत्र-प्रवर्तका नारदकाश्यपात्रिभृगुकुत्सवसिष्ठगौतमादयो मुनीन्द्रा-स्सर्वेषामेतेषां स्वरूपञ्च बेरकल्पनेषु चित्रकल्पनेषु चारोप्य पूजयेदिति शास्त्रकारोपदेशलक्षणवाक्यार्थो बोध्यः ॥

बेरं चित्रमिदं प्रोक्तं भक्तानां भक्तिवर्धकम् ॥ ४ ॥

रत्नं सुवर्णं रजतं प्रवालं दन्तदारुकम् ।
शिला च लोहो बेराणां द्रव्यमाहुर्मुनीश्वराः ॥ ५ ॥

पीतशुक्लादिजालन्तु चित्रद्रव्यमुदाहृतम् ।
द्रव्यैरेतैर्दोषहीनैश्शिल्पी निर्माणकोविदः ॥ ६ ॥

क्रियासूत्रप्रमाणज्ञस्तालज्ञष्टङ्ककर्मवित् ।
दोषहीनं गुणोपेतं देवरूपं प्रकल्पयेत् ॥ ७ ॥

---

तस्मादेतेषां बेरनिर्माणं केन वा द्रव्येण कल्पयेदित्याकाङ्क्षायां तदर्हद्रव्यजातिक्रममाह — शिलादिभिरित्यादिना । दोषहीनाभिः स्त्रीशिलाभिर्वा पुंशिलाभिर्वा सुतप्तशुद्धघनेष्टिकाभिर्वा सर्वेषां तेषां पूर्वोक्तानां देवानां मूलबेरकल्पनं निर्मापयेदिति क्रमः । क्वचिद्दारुभिस्सारवद्भिरेतेषां मूलबेरकल्पनमपि युक्तमेवेति साधवः । मूलबेरोत्सवबेरनिर्माणफलन्तु स्पष्टमेव लोकानामिति ॥

तस्मादेतैर्द्रव्यैश्शुद्धधनार्जितैर्मूलबेरनिर्माणमादौ यथाक्रमं निर्मापयित्वा नवरत्नखण्डजालकैर्वा, सुवर्णखण्डैर्वा, जातरूपखण्डैर्वा, प्रवालजालैर्वा, शुद्धदन्तखण्डैर्वा, क्वचित्सारदारुखण्डैस्ताम्रादिपञ्चलोहवर्गद्रव्यैर्वा, स्वस्वसंपदनुगुणं उत्सवबेरनिर्माणञ्च प्रकल्पयेत् । एवं शुक्लपीतहरितकृष्णनीलादिवर्णैस्तत्र तत्र चित्रकल्पनञ्च कार्यमिति क्रमार्थो ज्ञेयः ॥

आदौ परीक्षयेच्छिल्पी शकुनं सुमुहूर्तके ।
दिवाकरे च विमले शुद्धवासा व्रजेद्वनम् ॥ ८ ॥

वनस्पतिं पर्वतं वा पूजयेदायुधादिकम् ।
द्रव्यं परीक्ष्य क्रमशः खण्डयेदाहरेद्बुधः ॥ ९ ॥

---

तस्मादेवं बेरनिर्माणकार्याणां, चित्रनिर्माणकार्याणाञ्च प्रायशः प्रमाणतौल्येऽपि लम्बसूत्रपार्श्वसूत्रप्रमाणयोजनं तु बेर-निर्माणकार्येष्वेवात्रश्यं कल्पनीयम् । एतादृशपार्श्वसूत्रलम्बसूत्र-योजनन्तु चित्रकार्येषु नावश्यकमिति भावः । तस्मादत्र शास्त्रकारः दिव्यो विश्वकर्मा सकलविधदेवबिम्बनिर्माणलक्षणमेवास्मिन्नध्याये निरूपितवानिति भावो ज्ञेयः ॥ ७ ॥

तस्मादेवंप्रकारेण निर्मापणीयानामेतेषां मूलबेरनिर्माणार्ह-शिलादारुद्रव्याहरणायादौ स्थपतिस्तक्षकश्चान्ये तत्कार्योद्युक्ताश्शुभ-दिने स्नाताश्शुद्धवाससो नवयज्ञोपवीतास्सन्तः भगवन्तं विश्वकर्माणं मयमीशानं मनसि ध्यात्वा, सूर्ये च मेघाद्यावरणहीने नभसि स्फुटं प्रकाशमाने सति, शुभशकुनादि सम्यङ्निरीक्ष्य, स्वास्तिवचन-वाद्यघोषपुरस्सरं वनं प्रविश्य, तत्रत्यपर्वतराजं, वनस्पति-मायुधादींश्च संपूज्य, तर्पयित्वा पायसान्नादिभिर्ध्वजस्तम्भार्ह-वाहनार्हमूलबेरनिर्माणार्हशिलाखण्डवृक्षखण्डादिकान् टङ्कादिभिः प्रहरणैर्यथोचितं खण्डयित्वा, वाहैश्शकटादिभिरानीय पूर्वोक्तदेव-

स्थापयेच्च महावेद्यां शालायां वा विशेषतः ।
तद्द्रव्यं खण्डयेदादौ सूत्ररेखाश्च योजयेत् ॥ १० ॥

अङ्गुलं तालमानं वा किष्कुमानं क्वचिन्नयेत् ।
हस्तमानं क्वचिन्नेयं बेरे चित्रे च कर्मणि ॥ ११ ॥

क्रमान्मुखादिरूपन्तु योज्यं सौष्ठववेदिभिः ।
मुखबाहूरुपादादीन्स्फुटरूपं प्रकल्पयेत् ॥ १२ ॥

लम्बसूत्रं पार्श्वसूत्रं तिर्यक्सूत्रं तथा नयेत् ।
तत्तदङ्गक्रियाकारी सावधानो रहःस्थले ॥ १३ ॥

---

वेदिकायां वा, क्रियाशालायां वा, शुद्धे स्थले स्थापयित्वा, तदारभ्य बेरनिर्माणाय यतेरन्निति शिल्पिकार्यक्रमश्च बोध्यः । एवं शुभदिने, शुभमुहूर्ते, शुभशकुननिरीक्षणपूर्वकमुत्सवबेरनिर्माणार्हताम्रादि-लोहजालाहरणमपि कार्यमिति भावः ॥

एवं द्रव्याहरणानन्तरं पञ्चतालषट्तालसप्ततालाष्टतालनव-तालदशतालद्वादशतालादिबेरतालप्रमाणज्ञो बेरनिर्माणक्रियाकुशलः शिलालोहकारश्च स्थपती रहःस्थले यवनिकाच्छादिते वनादाहृतं तद्द्रव्यं स्वक्रियार्हं यथामानं खण्डशः खण्डयेत् । तदनन्तरं तेषु बेरेषु मुखाद्यवयवकल्पनाय लम्बसूत्रं, पार्श्वसूत्रं, तिर्यक्सूत्रञ्च क्रमात्प्रयोज्य तत्र तत्र धातुभी रक्तवर्णैः रेखाविन्यासञ्च कृत्वा, मुखवक्षोबाहुनाभ्यूरुजङ्घापादादिस्वरूपस्फूर्तये बहुविधैष्टंकविशेषै-

तक्षणैर्वर्धनैर्योगैर्द्रव्ययोग्यस्वरूपकम् ।
अङ्गसौष्ठवसंयुक्तं बेरं सर्वशुभप्रदम् ॥ १४ ॥

कुर्याद्द्वादशतालेन वीरदेवप्रकल्पनम् ।
दशतालेन मानेन सौम्यदेवप्रकल्पनम् ॥ १५ ॥

नवाष्टसप्तषट्तालैरन्यान्देवान्प्रकल्पयेत् ।
यथाविभवतस्सर्वदेवानां कल्पनं मतम् ॥ १६ ॥

पुरयोग्यं हर्म्ययोग्यं गृहयोग्यं प्रकल्पयेत् ।

---

स्तक्षयित्वा तेषामङ्गानां सौष्ठवञ्च क्रमात संपाद्य, मुखमण्डल-हस्ताद्यवयवेषु यथाक्रमं रेखादिकञ्च विन्यसेत् ॥

एवं मूलबेरनिर्माणकार्योद्युक्तश्शिल्पी नितरां सावधान-स्तत्तद्देवतामूर्त्यनुगुणं बेरप्रमाणमौन्नत्यादिकञ्च तत्रारोपयेत् । यथा ब्राह्मणगृहपूजार्हदेवबेरं पञ्चतालप्रमाणेन वा षट्तालप्रमाणेन वा कारयेत् । एवं क्षत्रियप्रासादपूजार्हबेराणि सप्ततालप्रमाण-युतानि वाऽष्टतालप्रमाणयुतानि वा प्रकल्पयेत् । किञ्च ग्रामकृत-देवालयस्थापनीयदेवबेराणि तु नवतालप्रमाणयुतानि निर्मापयेत् । नगरनिर्मितमहाप्रमाणयुतदेवालयस्थापनार्हदेवबेराणि सर्वाणि दश-तालप्रमाणयुतानि वा द्वादशतालप्रमाणयुतानि वा स्थापयेत ॥

तत्र तु कोऽपि नियमः । यथा – वीरभद्ररघुनाथकार्तिकेय-प्रमुखानां वीररसप्रधानदेवानां बेराणि द्वादशतालप्रमाणसहितानि

तद्वेरस्थापनं मोक्षैश्वर्यारोग्यसुखप्रदम् ॥ १७ ॥

तस्मात्तत्कल्पयेच्छिल्पी दोषहीनं गुणान्वितम् ।

करण्डमकुटोपेतं शीर्षकैरपि वेष्टकम् ॥ १८ ॥

किरीटैश्च जटाजालैर्यथारूपं प्रकल्पयेत् ।

---

चात्युन्नतपीठकल्पनसहितानि प्रकल्पयेत् । एवं शान्तिरसभक्तिरसवर्धकानामन्येषां सत्वप्रधानानां पशुपतिगौरीकान्तनारायणमाधवगोविन्दरङ्गनाथप्रमुखानां देवोत्तमानां बेराणि दशतालमानकृतानि स्थापयेदित्यर्थः । एवं निर्मितमूलबेरतालसंख्याप्रमाणानुगुणमेव तद्देवीबेराणाञ्च तदपेक्षया किञ्चिन्न्यूनप्रमाणं युक्तम् ॥

किञ्चात्रोक्ततालप्रमाणसंख्याक्रमस्तु मूलबेरेषूत्सवबेरेषु च योजनीय इति भावः । परन्तु तत्र शिलादिकल्पनीयमूलबेरतालप्रमाणानुगुणाङ्गुलपरिकल्पनन्त्वन्यदेव । ताम्रादिलोहकृतोत्सवबेरतालप्रमाणानुगुणांगुलमानयोजनन्त्वन्यदेवेति । अयन्तु विभागप्रमाणक्रमोऽवश्यं शिल्पिभिरादौ ज्ञेय इत्यर्थः ॥

यथाविभवं ग्रामदेवालयार्हं, नगरदेवालयार्हं, प्रासादार्हञ्च बेरनिर्माणं कर्तुमुद्युक्तशिल्पी केषाञ्चिद्देवबेराणां मौलिभागे मकुटयोजनमन्येषां बेराणां मौलितले शीर्षकयोजनं, वीरसत्वबेराणां मौलितले किरीटयोजनं अन्येषां मौलितले जटा,

ललाटभ्रूनेत्रनासाधरगण्डस्थलानि च ॥ १९ ॥

कर्णकण्ठभुजानालवक्षोनाभिस्थलानि च ।
जङ्घोरुपादस्थानानि स्थानान्यन्यानि चाङ्गके ॥ २० ॥

तद्रेखाजालयुक्तानि तत्प्रमाणयुतानि च ।
तालप्रमाणोर्ध्वमानक्रमात्सर्वं प्रकल्पयेत् ॥ २१ ॥

नानाभरणसंयुक्तमन्तर्वाससमुज्ज्वलम् ।
द्विहस्तं वा चतुर्हस्तं षट्करन्त्वष्टहस्तकम् ॥ २२ ॥
कल्पयेद्द्वादशकरं नानायुधसमन्वितम् ।
नानामुद्रासमायुक्तकरं वा संप्रकल्पयेत् ॥ २३ ॥

अथाञ्जलिपुटोपेतं भक्तरूपं सपीठकम् ।
यज्ञसूत्रसमायुक्तं कण्ठतन्तुसमुज्ज्वलम् ॥ २४ ॥

---

योजनञ्च क्रमात्परिकल्पयेत् । एवं तत्तद्देवार्हायुधयोजनं द्विहस्त-चतुर्हस्तषड्ढस्ताष्टहस्तद्वादशहस्तकचतुर्विंशतिहस्तकादिनिर्माणं च यथाक्रमं कारयेत् ॥

किञ्च बेरनिर्माणक्रियाकुशलशिल्पी सर्वेषामपि तेषां देवबेराणां देवीबेराणाञ्च युक्त्याऽऽभरणानि रेखारूपाणि समुचितानि वक्षोमुखहस्ताद्यवयवेषु योजयित्वा पुंबेराणां भुजतले यज्ञसूत्रलम्बनं स्त्रीबेराणां कण्ठनाले नित्यमाङ्गल्यसूत्रलम्बनञ्च पूर्ववद्रेखाकारं प्रकल्पयेत् । अपि च केषाञ्चिद्देवानां दक्षिण-

आधारासनसंयुक्तं प्रसन्नमुखमण्डलम् ।
आसीनं वा शयानं वा तिष्ठन्तं वा यथाक्रमम् ॥ २५ ॥

तत्तद्वाहयुतं वापि लोहबेरं क्वचिन्मतम् ।
कारयित्वा यथाशोभं सुमुहूर्ते सुलग्नके ॥ २६ ॥

नयनोन्मीलनं कुर्याद्भट्टार्यो दीक्षितोऽपि वा ।

---

हस्तेऽभयमुद्रामन्येषां तत्रमुद्राञ्च यथाक्रमं योजयित्वैतेषां बेराणां कल्पनं तत्तत्स्थलार्हं प्रतिष्ठाकारिणो वाञ्छार्हञ्च कारयेत । किञ्च यथाशास्त्रक्रमं शयानमासीनं तिष्ठन्तं वा क्वचित्तत्तद्वाहनोपरि विविधासनस्थितं वा प्रकल्पयेदिति च क्रमः । एवमेतेषां पुंबेरायुधयोजनक्रमः स्त्रीबेरायुधयोजनक्रमश्च मूर्तिध्यानाख्यशिल्पग्रन्थे विस्तरशः प्रतिपादितो द्रष्टव्यः । ग्रन्थविस्तरभयान्नेह लिख्यत इत्यलम् ॥

तस्मात्तत्रोक्तप्रकारेण शङ्खचक्रगदाखड्गशूलाद्यनेकायुधजालैरभयादिनानामुद्रणैश्च भासुरहस्तानामेतेषां देवबिंबानां, देवीबिम्बानां, भक्तबिम्बानामन्येषां नवग्रहदिक्पालादिदेवबिम्बानां, नारदव्यासशुकपराशरादिमहर्षिबिम्बानामीश्वरांशेन मानवतनुमाश्रित्य लोकेऽवतीर्णानां स्वगुरूणाञ्च साकल्येन बेरनिर्माणानन्तरं पूर्वोक्तरीत्या तेषां संततनिवासाय कल्पितानां वेदिकानामुपरि तानि बेराणि स्थापयित्वा, शुभे मुहूर्ते नदति वाद्यजाले, स्थपतिवरशिल्पी, भट्टारको दीक्षितो वा तेषां बेराणां नयनोन्मीलनकर्म कारयेत् ॥

नानादानानि विप्रेभ्यो वेदज्ञेभ्यो विशेषतः ।
पुरवीथीप्रवेशश्च सर्वक्षेमकरो भवेत् ॥ २७ ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे
सकलबेरलक्षणकथनं नाम
एकोनाशीतितमोऽध्यायः ॥

---

नयनोन्मीलनं नाम बेराणां समदृष्टिविन्यासकरणम् । तदानीमेव तेषु बेरेषु तत्तद्देवतासान्निध्यमुत्पद्यत इति वैदिकः शिल्पसंप्रदायक्रमः । एवं तादृशनयनोन्मीलनसमये शिल्पिनां, दीक्षितानां, भट्टारकाणां, विशेषेण वेदविदां ब्राह्मणोत्तमानां पूजनं गोभूकन्यकादिनानादानानि च कारयेत् । अथास्मिन्दिने सायं वा रात्रौ पूर्वयामिके वा तानि बेराणि शिबिकान्दोलिकारथादिवाहनमारोप्य, ग्रामवीथीनगरवीथीप्रदक्षिणमार्गेणोत्सवादिकं क्रमात् कारयेदिति च संप्रदायः । एवमत्र संक्षेपेण सकलविधबेरलक्षणक्रमः कथितो बोध्यः ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
सकलविधबेरलक्षणकथनं नाम
एकोनाशीतितमोऽध्यायः ॥



अथ शिवबेराणां भेदक्रमकथनं नाम

## अशीतितमोऽध्यायः ॥

कैलासाधिपतिश्शम्भुर्लोकानुग्रहकाम्यया ।
भक्तैस्संप्रार्थितः पूर्वं वनमध्ये नदीतटे ॥ १ ॥

भूधरस्य तटे मौलौ वृक्षमूले शुभस्थले ।
स्वां मूर्तिं देवदेवेशो दिव्यां प्रादर्शयच्छुभाम् ॥ २ ॥

मानवीं तनुमाश्रित्य क्वचिल्लिङ्गीमनेकधा ।
भूलोके देवदेवस्य तस्य वैभवमुत्तमम् ॥ ३ ॥

ज्ञात्वा हर्षेण मुनयः प्रणेमुश्च सहस्रशः ।
देवाश्च मुदिता आसन्ब्राह्मणा वेदपारगाः ॥ ४ ॥

अभिषेकैः पूजनैश्च नैवेद्यैर्विविधैरपि ।

---

॥ अशीतितमोऽध्यायः ॥

अथास्मिन्नशीतितमेऽध्याये सकलविधशिवबेराणां भेद-लक्षणक्रममुपपादयति — **कैलासाधिपतिरित्यादिना** । पूर्वं=कृतयुगत्रेतायुगद्वापरयुगाख्येषु कालेषु, कैलासाधिपतिः=उमानाथः तत्तत्कालोदितभक्तश्रेष्ठैः संप्रार्थितस्सन्निहलोकस्थितान्मानवान्सर्वा-नप्यनुगृहीतुं नदीवनमहीधरादिस्थानेषु वल्मीकलिङ्गज्योतिर्लिङ्गा-द्यनेकविधदेवशरीरेण, क्वचिन्मानवशरीरेण चाविरासीत् । तदादि सुकृतशालिनो ब्राह्मणक्षत्रियवैश्यादयस्तदीयमूर्तीर्दिव्याः प्रणिपत्य

सत्कृत्य च महादेवं प्रापुश्च परमां मुदम् ॥ ५ ॥

तत्प्रसादवशात्सर्वं जगत्स्थावरजङ्गमम् ।
निराबाधश्च निष्पीडं परमानन्दभागभूत् ॥ ६ ॥

तस्मात्तद्दिव्यमूर्तीस्तु स्थापयेल्लक्षणान्वितः ।
नटेशबेरं कैरातं चन्द्रशेखरमेव वा ॥ ७ ॥

मृत्युञ्जयं पशुपतिं चण्डेशं गजमर्दनम् ।
जटाधरमुमाकान्तं सोमास्कन्दञ्च भैरवम् ॥ ८ ॥

दक्षिणामूर्तिबेरं वा कैलासाधिपतिं शुभम् ।

---

अभिषेकार्चननैवेद्योत्सवादिभिरानर्चुः । तस्य तु देवदेवस्य प्रसादादखिलं जगदिदं, परमानन्दवशगमभूदित्यादिकः स्पष्टार्थः । तस्मात्तस्य परमेश्वरस्य बेरनिर्माणं पूर्वोक्तरीत्याऽवश्यं स्थापनीयमित्युक्तं भवति ॥

तथा च ग्रामनगरादिवास्तुस्थलेषु देवालयनिर्माणकारयिता वा देवबेरप्रतिष्ठापयिता वा स्वस्ववाञ्छानुगुणं तत्तत्क्षेत्रमाहात्म्यप्रतिपादितपरमेश्वरमूर्त्यवतारानुगुणं १. नटेशबेरनिर्माणं वा २. चन्द्रशेखरबेरनिर्माणं वा ३. किरातबेरनिर्माणं वा ४. मृत्युञ्जयबेरनिर्माणं वा ५. पशुपतिदेवबेरनिर्माणं वा ६. गजासुरसंहारबेरनिर्माणं वा ७. जटाधारिबेरनिर्माणं वा ८. गौरीकान्तबेरनिर्माणं वा ९. गौरीकार्तिकेयोपेतपरम-

वृषारूढं हरिहरं लिङ्गरूपमनेकधा ॥ ९ ॥
त्रिपुरान्तकरूपं वा क्षेत्रनाथमनेकधा ।

---

शिवबेरं वा १०. भैरवबेरनिर्माणं वा ११. दक्षिणामूर्तिबेरनिर्माणं वा १२. कैलासनाथबेरनिर्माणं वा १३. वृषवाहनदेवबेरनिर्माणं वा १४. हर्यर्धदेवभागदेवबेरनिर्माणं वा १५. त्रिपुरान्तकदेवबेरनिर्माणं वा १६. तत्तत्क्षेत्रनाथबेरनिर्माणं वा पूर्वोक्तरीत्या नवतालदशतालद्वादशतालप्रमाणयुतं यथाक्रमं यथाविभवं प्रकल्पयेत् ॥

किञ्च क्वचिच्छिवालयेषु पूर्वोक्तगर्भगृहमध्यवेदिकास्थाने १. वल्मीकनाथलिङ्गबेरनिर्माणं वा २. ज्योतिर्लिङ्गबेरनिर्माणं वा ३. पृथिवीलिङ्गबेरनिर्माणं वा ४. अब्लिङ्गबेरनिर्माणं वा ५. तेजोलिङ्गबेरनिर्माणं वा ६. वायुलिङ्गबेरनिर्माणं वा ७. आकाशलिङ्गबेरनिर्माणं वा ८. देवलिङ्गबेरनिर्माणं वा ९. ब्रह्मलिङ्गबेरनिर्माणं वा १०. महर्षिलिङ्गबेरनिर्माणं वा शिलाभिर्यथाक्रमं निर्मापयित्वा स्थापयेदिति च शिल्पसमयः ॥

एवमत्रोक्तरीत्या स्थापनीयानां लिङ्गानां बेराणां च, प्रकारान्तरेण ग्रन्थान्तरप्रमाणवचनानुसारेण च कल्पनीयानां शिवलिङ्गबेराणाञ्च तत्र तत्राविर्भावकारणमाहिमादिकन्तु विस्तरशो ब्रह्माण्डपुराणस्कन्दपुराणादिषु प्रतिपादितं तत्र द्रष्टव्यमिति ।

कार्तिकेयं गणाध्यक्षं तत्तद्वाहसमन्वितम् ॥ १० ॥
शूलपाशसृणीकुन्तमुसलाद्यायुधोज्ज्वलम् ।
तद्देव्यालिङ्गिततनुं कल्पयेच्छिल्पवित्तमः ॥ ११ ॥
मूलोत्सवक्रमाद्बेरनिर्माणं यत्र संयुतम् ।

---

किञ्चानेकविधानां शिवमूर्तिबेराणामेतेषां लिङ्गबेराणां चायुधभेद-निर्माणरीत्यादिकन्तु **मानसारमूर्तिध्याना**दिशिल्पशास्त्रग्रन्थेषु प्रतिपादितं बोध्यम् । विस्तरभयान्नात्र लिख्यत इति ॥

किञ्चैवंप्रकारेण शिवबेरकल्पनन्तु क्वचित्तत्कुटुम्बबेरसंयुक्तं कार्यमिति । यथा — गौरीदेव्यास्समीपे वा परमशिवस्य समीपे वा कार्तिकेयसुब्रह्मण्यबेरनिर्माणं सदेवीकं स्थापयेत् । एवंरीत्या स्थलान्तरे वामभागे पुरतस्स्थले वा गणपतिबेरं विविधरूपं, स्थानान्तरे नन्दिदेवकल्पनं च राज्ञः प्रतिष्ठाकारिणस्सर्वेषामपि जनानामायुरारोग्यैश्वर्यादिश्रेयःप्रदमिति च भावः ॥

किञ्च सर्वेषामत्रोक्तानां शिवबेराणां कल्पने मूलबेरं लिङ्ग-बेरं च पूर्वोक्तरीत्या गर्भगृहमध्यस्थितदैववेदिकायां स्थापयित्वा तदुत्सवबेरमन्यत्र प्रथमप्राकारमण्डपमध्यस्थाने वा द्वितीयप्राकार-कल्पितभद्रमण्डपादिस्थानेषु वा स्थापयेदिति शैवागमोपदेशक्रमः । अयन्तु संप्रदायो विष्ण्वायतने नोपपद्यते । कुतः ? यस्मिन्स्थले मूलबेरनिर्माणं राजते तस्मिन्नेव स्थले उत्सवबेरं स्थापनीयमिति

भक्तांश्च देवदेवस्य कल्पयेत्साञ्जलीनपि ॥ १२ ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे
शिववेराणां भेदलक्षणक्रमकथनं नाम
अशीतितमोऽध्यायः ॥

---

वचनबलात् । किञ्च सर्वत्र शिवमन्दिरे वा विष्णुमन्दिरे वा मूलवेरमूललिङ्गादिस्थापनं विनोत्सववेरस्थापनन्तु सद्भिश्शास्त्रकारैश्च नाङ्गीकृतमिति संप्रदायः । स्पष्टमन्यत् ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
शिववेराणां भेदलक्षणक्रमकथनं नाम
अशीतितमोऽध्यायः ॥



अथ विष्णुबेराणां भेदक्रमकथनं नाम

## एकाशीतितमोऽध्यायः ॥

वैकुण्ठलोकाधिपतिर्लोकरक्षणतत्परः ।
श्रीमान्विष्णुरचिन्त्यात्मा योगिभाव्योऽतिरञ्जनः ॥

बहुधाऽऽविरभूद्भूमौ पूर्वं मायातनुः प्रभुः ।
तस्मात्तद्बेरनिर्माणं स्थापनं पूजनं शुभम् ॥ २ ॥

मत्स्यकूर्मादिरूपं वा वैकुण्ठभवनाधिपम् ।

---

॥ एकाशीतितमोऽध्यायः ॥

अथास्मिन्नेकाशीतितमेऽध्याये सकलविधविष्णुबेराणां लक्षणभेदक्रममुपपादयति — वैकुण्ठलोकाधिपतिरित्यादिना । भक्तरक्षणाय विविधरूपेणावतीर्णस्य भगवतो नारायणस्यार्हणाय तद्बेरं बहुविधं प्रकल्पयेत् । हेयगुणरहितः सकलकल्याणगुणैकतानो योगिभिरप्यमेयस्वरूपो लक्ष्मीवल्लभो बेरेष्वावाहितस्समर्चितो यदि तेषां सकलैश्वर्यप्राप्तिरित्यादिफलादिकन्तु विष्णुपुराणसात्वतसंहितामरीचिपटलपाञ्चरात्रवैखानसादिग्रन्थोत्तमेषु बहुधा प्रपञ्चितो द्रष्टव्यः ॥

तस्मात्तदिदं विष्णुबेरं पूर्वोक्तसद्द्रव्यवर्गैः १. मत्स्यदेवबेरनिर्माणं वा २. कूर्मदेवबेरनिर्माणं वा ३. वराहरूपबेरनिर्माणं वा ४.नरसिंहरूपबेरनिर्माणं वा ५.वामनरूपबेरनिर्माणं वा ६.भार्गव-

नारायणं केशवं वा गोविन्दं माधवं तथा ॥ ३ ॥

लक्ष्मीकान्तं मधुरिपुं तत्वप्रदमथापि वा ।
प्रसन्नं श्रीधरं वापि हृषीकेशं परं पतिम् ॥ ४ ॥

पद्मनाभं क्षेत्रनाथं दामोदरमथापि वा ।
वरदाभयहस्तं वा शार्ङ्गहस्तमथापि वा ॥ ५ ॥

पञ्चायुधकरं वापि शेषशायिनमेव वा ।
भक्तप्रियं भीतिहरं नानारूपं प्रकल्पयेत् ॥ ६ ॥

---

रामरूपिबेरनिर्माणं वा ७. दाशरथिरामरूपिबेरनिर्माणं वा ८. बलभद्ररामरूपिबेरनिर्माणं वा ९. वासुदेवबेरनिर्माणं वा १०. कल्किदेवबेरनिर्माणं वा ११. केशवरूपिबेरनिर्माणं वा १२. नारायणरूपिबेरनिर्माणं वा १३. माधवबेरनिर्माणं वा १४ गोविन्दरूपिबेरनिर्माणं वा १५. लक्ष्मीकान्तरूपिबेरनिर्माणं वा १६. मधुसूदनरूपिबेरनिर्माणं वा १७. तत्त्वोपदेशव्यग्रदेवबेरं वा १८. प्रसन्नदेवबेरनिर्माणं वा १९. श्रीधररूपिबेरनिर्माणं वा २०. हृषीकनाथबेरनिर्माणं वा २१. पद्मनाभबेरनिर्माणं वा तत्तत्क्षेत्रमाहात्म्यप्रतिपादितबहुविधक्षेत्रनाथबेरनिर्माणं वा वरदमुद्रान्वितबेरनिर्माणं वाऽभयमुद्रान्वितबेरनिर्माणं वा शार्ङ्गपाणिबेरनिर्माणं वा पञ्चायुधधारिबेरनिर्माणं वा शेषशायिरूपबेरनिर्माणं वा भक्तवत्सलरूपबेरनिर्माणं वा भयहररूपबेरनिर्माणं वा यथाक्रमं

देवीगणसमोपेतमलङ्कारासनास्थितम् ।

---

दोषहीनं गुणोपेतं प्रमाणविच्छिल्पी प्रकल्पयेदिति शास्त्रकारोपदेशलक्षणवाक्यार्थः ॥

किञ्चैतेषु बेरेषु मत्स्यकूर्मवराहवामनभार्गवरामबलभद्राख्यानां देवानां बेराणि ग्रामनगरादिदेवालयेषु गर्भगृहमध्यस्थापितवेदिकायां न मुख्यदेवतात्वेन स्थाप्यानि । परन्तु तत्र स्थाने नारायणकेशवादिबेरं मुख्यदेवतासान्निध्यवत्स्थापयित्वा एतादृशमत्स्यकूर्मादिबेराणि प्रथमप्राकारमण्डपेषु वा द्वितीयप्राकारमण्डपेषु वा पृथक्स्थापयित्वा पूजयेयुरिति नवीनाः ॥

केचित्तु दशावतारबेराणि सर्वाण्यप्येकत्र स्थापयित्वा पूजयेयुः; नैतेषां ब्रह्मोत्सवादिकं कार्यमिति च वदन्ति । अन्ये तु दाशरथिरामवासुदेवबेरकल्पनं विनाऽन्येषामेवात्र स्थापनम । श्रीरामश्रीकृष्णबेरयोस्तु पूर्वोक्तगर्भगृहमध्यवेदिकायां स्थापनं युक्तम् । किञ्चैतयोः पक्षोत्सवमासोत्सववार्षिकोत्सवादिरपि युज्यत इति । एवं श्रीधरमाधवपद्मनाभादिशुद्धसत्वप्रधानानां शान्तस्वरूपाणां देवबेराणां स्थापनविषयेऽपीति क्रमः । किञ्च सर्वत्र शिवमन्दिरेषु वा विष्णुमन्दिरेषु स्थापितानां प्रधानदेवबेराणामेव वार्षिकोत्सवादिकं विभवानुसारि कल्पनीयमित्यादिको विषयः पूजाक्रमश्च **शैवागमपाञ्चरात्रागमवैखानसागमादिषु** द्रष्टव्य इति ॥

क्षेत्रदेवैर्मुनीन्द्रैर्वा संयुतं शान्तरूपकम् ॥ ७ ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे
विष्णुबेराणां भेदलक्षणक्रमकथनं नाम
एकाशीतितमोऽध्यायः ॥

---

तस्मादेवं स्थापनीयानि विष्णुबेराणि कचिल्लक्ष्मीदेवी-भूदेवीप्रमुखादिदिव्यमाहिषीसंयुक्तानि तत्तत्क्षेत्रनाथबेरसहितानि, कचित्तत्तत्क्षेत्रवासिमहिर्षीप्रमुखपुण्यशालिबेरसहितानि च नाना-लङ्कारमण्डितानि स्थापयेदिति शिल्पसमयः । एवं प्रधानदेवबेराणि विनाऽन्येषां सर्वेषामपि बेराणां निर्माणं हीनतालप्रमाणेनेति तत्क्रमश्च शिल्पिभिरवधार्यः ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
विष्णुबेराणां भेदलक्षणक्रमकथनं नाम
एकाशीतितमोऽध्यायः ॥



अथ लक्ष्मीगौर्यादिबेरलक्षणकथनं नाम

## द्व्यशीतितमोऽध्यायः ॥

देवालयेषु सर्वेषु देवीनां स्थापनं शुभम् ।
शक्तीनाञ्च सयन्त्राणां पूजनं वेदपारगैः ॥ १ ॥

भट्टारकैर्दीक्षितैर्वा सर्वक्षेमकरं भवेत् ।
तस्मात्प्रकल्पयेच्छिल्पी देवीनां बेरमुत्तमम् ॥ २ ॥

तपस्यन्तीमपर्णां वा गौरीमीशेन संयुताम् ।
नानासुरप्रमथिनीं भक्तरक्षाप्रदान्तु वा ॥ ३ ॥

---

॥ द्व्यशीतितमोऽध्यायः ॥

अथास्मिन्द्व्यशीतितमेऽध्याये ग्रामकृतनगरकृतालयस्थानेषु स्थापनीयानां सर्वासामपि गौरीलक्ष्म्यादिदेवीबेराणां स्थापनक्रममुपपादयति --- देवालयेष्वित्यादिना । दुष्टग्रहदुर्व्याध्यनेकोपद्रवनिरासनाय, तद्द्वारेण परमसुखप्राप्त्यर्थं चावश्यमेतासां देवीनां बेराण्यालयेषु स्थापयेदिति स्थापनप्रयोजनमप्युक्तं भवति । तस्मादनेकयन्त्रबीजाक्षररेखाविन्यासेनोपेतानां तासां देवीनां बेराणां स्थापने कचिद्देवालये परमेश्वरप्राप्त्यर्थं तपस्यन्त्या अम्बिकाया बेरं स्थापयेत् । अन्यत्र देवालये परमेश्वरप्राप्तिलाभसन्तोषेण प्रसन्नमुखमण्डलाया अम्बिकाया बेरं स्थापयेत् । कचिद्भक्तसंरक्षणार्थं गजासुरमहिषासुराद्यनेकारिपुनिरासनोद्युक्ताया

कालीं करालीमथवा भैरवीं विविधायुधाम् ।
तत्तत्क्षेत्राधीश्वरीं वा स्थापयेद्विविधासने ॥ ४ ॥

दुर्गां द्वारान्तिके वापि पुरमध्येऽथवा क्वचित् ।
ग्रामस्य वा बहिर्देशे ग्रामदेवीं च कल्पयेत् ॥ ५ ॥

रक्षाकरीं वा जननीमालये स्थापयेत्क्वचित् ।

---

जयशालिन्या गौर्याः बेरं वा तादृशासुरवधव्यग्रदेवीबेरं वा, तादृशासुरकृतदुष्कार्यं प्रति महाकोपवतीमुदायुधां दंष्ट्राकरालवदनां वा देवीं बेररूपिणीं स्थापयेदिति विकल्पः ॥

किञ्च क्वचिद्देवालये भक्तरक्षणार्थमुन्मुखायाश्शान्तस्वरूपाया देव्या बेरं वा स्थापयित्वा तस्य ग्रामस्य वा नगरस्य वा दुर्गनगरस्य वा राजधान्या रक्षाकारिण्याः काल्याः कराल्याः भैरव्या वा देव्या बेरं ग्राममध्ये, नगरमध्ये वा कृतालयस्थानेषु स्थापयेत् । अथवा तदिदं पुररक्षकदेवीबेरं पुरद्वारस्य, राजधानीद्वारस्य, दुर्गद्वारस्य च सव्यभागकल्पिते क्षुद्रप्रमाणे देवालये स्थापयेत् । किञ्च कचित्तत्र तत्र शिवमन्दिरेषु कल्पितानां शिवबेराणामनुकूलमेव देवीबेरं नानायुधभासुरकरपल्लवं प्रकल्पयेत् । पुरुषबेराणां पूर्वोक्तानां येन वा प्रकारेण हस्तचतुष्कहस्ताष्टकहस्तदशकहस्तद्वादशादिकं कल्पनीयमित्युक्तं, तेनैव प्रकारेणात्रापि देवीबिम्बनिर्माणे हस्तचतुष्कहस्ताष्टकादिसंयोजनं कार्यमिति च क्रमः ।

एवं पद्मां पद्महस्तां मुरमर्दनदेविकाम् ॥ ६ ॥

नारायणीं वा कल्याणीं प्रजारक्षणतत्पराम् ।
सर्वक्षेमंकरीं लक्ष्मीं महिषीं माधवस्य च ॥ ७ ॥

नानायन्त्रसमोपेतां नानालङ्कारमण्डिताम् ।
भद्रपीठस्थितां वापि क्षेत्रपीठस्थितान्तु वा ॥ ८ ॥

---

किञ्च तादृशहस्तेषु स्थापनीयडमरुशूलघण्टाकमलपाशशूलाद्यायुधक्रमस्तु मूर्तिध्यानाख्यशिल्पग्रन्थे बोध्य इति च क्रमः । एवं संक्षेपेण सकलविधशिवदेवीबेराणां भेदक्रमः प्रतिपादितो ज्ञेयः ॥

अथ विष्णुदेवीबेरभेदक्रममाह — **एवं पद्मामित्यादिना।** वैकुण्ठनाथस्य वा तेषु तेषु दिव्यक्षेत्रेष्ववतीर्णस्य भगवतो नानारूपिणो देवस्य माधवस्य महिषीं नारायणीं माधवीं कल्याणीं वा बेररूपवतीं तत्र दैववेदिकामध्ये गर्भगृहे स्थापयेत् । क्वचित् रामस्य सीतादेवीं, वासुदेवस्य रुक्मिणीं सत्याञ्च बेररूपवतीं स्थापयेत् । अपि चान्यत्र देवालये सर्वेषामपि भक्तानां ज्ञानानन्ददायिनीं हयग्रीवदेवमहिषीं वा लोकजननीं शारदादेवीं वा बेररूपवतीं स्थापयेत् ॥

तस्माच्छिवदेवीबेराणां विष्णुदेवीबेराणां सर्वेषां शारदादेव्यादिबेराणाञ्च स्थापनन्तु प्रायशस्तत्र तत्र भद्रपीठे वा भद्रासने वा सिंहासने वा पूर्वोक्तत्रिकोणाद्यासनफलकासु वा

स्थापयेन्नाथपार्श्वे वा पृथग्वा मण्डपान्तरे ।
अथवा तामिमां देवीं पृथग्गर्भगृहे क्वचित् ॥ ९ ॥

स्थापयेत्प्राङ्मुखां प्रायश्शिल्पी शिल्पविदां वरः ।
तत्तद्देवीं लक्षणाढ्यां भक्तानां मङ्गलप्रदाम् ॥ १० ॥

शारदां लोकजननीं पृथग्वा संप्रकल्पयेत् ।
क्वचित्तु देवगन्धर्वसुन्दरीगणसेविताम् ॥ ११ ॥

---

क्षेत्राधिनाथासनेषु वा युक्तं सर्वक्षेमकरमिति भावः । एवं स्थापितानां देवीबिम्बानां अन्तिकस्थले पञ्चतालषट्तालसप्ततालाष्टतालादिप्रमाणैस्तासां देवीनां परिचर्यासक्तानां देवगन्धर्वकिन्नरादिदिव्यसुन्दरीणां बेरादिकं च पृथक् स्थापनीयमिति प्राचामाशयः । एवं कल्पनन्तु चित्रकार्ये परं युज्यते; न बेरकर्मणीति नवीनाः । किञ्च देवालये क्वचिदरुन्धत्यनसूयालोपामुद्रादिमहर्षिपत्नीबेरस्थापनपूजनादिकमपि श्रेयस इति साधवः । अत्र तु विषये औदासीन्यं भजन्त्यागमवेत्तारः ॥

तस्मादेतेषु देवीबेरेषु विष्णुदेवीबेरं प्रधाननाथस्य पार्श्वे स्थापयित्वा स्थलान्तरे पृथक्कल्पिते क्षुद्रप्रमाणालयगर्भगेहे पुनरप्येतद्बेरस्थापनं कार्यम् । एवं क्रमस्तु लक्ष्मीभूमीनीलागोदासीतारुक्मिणीदेवीप्रभृतीनां तत्तत्क्षेत्रनाथदेवीनां बेरनिर्माणविषयक इति भावः । किञ्चायन्तु क्रमश्शिवदेवीबेरेषु नोपपद्यत इति ॥

प्रदक्षिणस्थलोपेतं विहारगृहमण्डपम् ।
विमानशिखरोपेतं नानालङ्कारमण्डितम् ।
डोलामण्डपसंयुक्तं पृथग्गेहं प्रकल्पयेत् ॥ १२ ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे
लक्ष्मीगौर्यादिबेरलक्षणकथनं नाम
द्व्यशीतितमोऽध्यायः ॥

---

सर्वथा सर्वत्र देवीबेराणां पृथक्स्थापनविषये क्षुद्रप्रमाणयुतमपि तद्देवीबेरालयं क्वचिड्डोलामण्डपपुरोमण्डपविहारशालामण्डपप्रदक्षिणमार्गाद्युपेतं सशिखरविमानं प्रकल्पयेदित्युपदेशः शास्त्रकारकृतः स्वीकार्य इति ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
लक्ष्मीगौर्यादिबेरलक्षणकथनं नाम
द्व्यशीतितमोऽध्यायः ॥



अथ भक्तबेरस्थापनक्रमकथनं नाम

## त्र्यशीतितमोऽध्यायः ॥

भक्तबेरस्थापनञ्च शुभदं परिकीर्तितम् ।
देवालयेषु सर्वेषु भक्तानां भक्तिवर्धकम् ॥ १ ॥

वेदिकाधिष्ठितं वापि पृथङ्मण्डपसंयुतम् ।
पृथक्शालासमोपेतं भक्तानां स्थापनं शुभम् ॥ २ ॥

गरुडं नन्दिकेशं वा योगिनं वा मुनीन्द्रकम् ।

---

॥ त्र्यशीतितमोऽध्यायः ॥

एवं सकलविधदेवबेरदेवीबेरमुपपाद्यास्मिन् त्र्यशीतितमेऽध्याये तादृशदेवपादारविन्दभक्तिभाजां भक्तोत्तमानां लक्षणं निरूपयति— **भक्तबेरस्थापनञ्चेत्यादिना** । पूर्वोक्तानां सर्वेषामपि देवानां देवीनां पादारविन्दे भक्तिशालिनो ये दिव्यसूरयो गरुडपावमानिनन्दिसनकसनन्दनादयो देवा महर्षयश्च पुराणग्रन्थेषु प्रतिपादिताः, देवभक्तानां तेषां बेराणि च देवस्य पुरोभागे क्वचिद्देव्याश्च पुरोभागस्थले स्थापयेदिति शास्त्रकारोपदेशक्रमः । तस्मादेतेषां भक्तानां बेरस्थापनस्थलन्तु पूर्वोक्तस्य देवगर्भगृहस्यान्त्यद्वारस्य पुरोभागे ध्वजस्तम्भस्थानस्य, बलिपीठस्थानस्य चान्तस्स्थले द्विहस्तौन्नत्यवत्यां चतुरश्रवेदिकायां वा तदर्थं पृथक्कल्पितक्षुद्रप्रमाणमण्डपशालाकूटमध्यस्थले वा स्थापयेदिति क्रमो निगदितः ।

दिव्यसूरिगणं वापि पावमानिमथापि वा ॥ ३ ॥

मण्डपस्य पुरोभागे प्राकारे वा प्रकल्पयेत् ।
भक्तध्वजाद्यावरणं द्वाराणान्तु न दोषकृत् ॥ ४ ॥

पूर्वमण्डपयुक्तं वा पुष्पमण्डपसंयुतम् ।

---

तथा च सर्वत्र देवालयेषु पुरोभागास्थितास्थानमण्डपस्याग्रभाग एव गरुडस्य, नन्दिदेवस्य वा स्थानकल्पनमवश्यं कार्यमित्युक्तम् ॥

किञ्च देवालये क्वचित्प्राकारत्रयप्राकारपञ्चकाद्यावृते तु एतादृशभक्तानां बेराणि द्वितीयप्राकारद्वारारम्भतले वा तृतीय-प्राकारद्वारारम्भतले वा क्षुद्रप्रमाणं शिलागृहं शिलामण्डपं वा निर्मापयित्वा तन्मध्ये स्थापयेदिति स्थलविकल्पः । प्रायशो विष्णुमन्दिरेषु शिवमन्दिरेषु चात्रोक्तरीत्या ध्वजस्तम्भबलिपीठ-समीपस्थल एव गरुडनन्द्यादिदिव्यभक्तबेरस्थापनं वरम् । क्वचित्स्थलान्तरे प्राकारान्तरे द्वारसूत्रपुरोभागे स्थापनञ्च न निन्द्यमेवेति स्थलविकल्पक्रमं प्रतिपाद्य तथा भक्तबेराणां स्थापनं द्वारमार्गावरणकरं चेत् किं कार्यमित्यत आह — **द्वाराणां तु न दोषकृदिति** । ग्रामकृते वा नगरकृते वा देवालये सर्वत्र द्वारस्य पुरोभागे मध्यसूत्रस्थाने बलिपीठस्थापनं ध्वजस्तम्भस्थापनं गरुडनन्द्यादिदिव्यभक्तबेरस्थापनं च द्वाराणां न दोषकृद्भवेत् । परन्तु शुभकरमेवेति समयः ॥

तत्स्थानं कल्पयेच्छिल्पी तदायुधतलं मतम् ॥ ५ ॥

तत्पुरोभागके द्वारभागे वा स्तम्भभित्तिके ।
त्वष्टारं शास्त्रकर्तारं विश्वकर्माणमादिमम् ॥ ६ ॥

निर्मापितारं राजानं दीक्षितं वा पुरोधसम् ।

---

तस्मादेताहृशबलिपीठध्वजस्तम्भभक्तमण्डपानां पुरोभागे पश्चाद्भागे क्वचित्पृष्ठभागे च मण्डपान्तरं क्षुद्रप्रमाणयुतं वा स्थापनीयम् । एतच्च भक्तमण्डपान्तरन्तु पूर्वोक्तदेवभद्रमण्टपसंयुक्तं वा पृथग्वा स्थलविभवानुगुणं प्रकल्पयेदित्यर्थः । एवं दिव्यभक्तानां स्थानस्य पार्श्वादिस्थलकृते मण्डपान्तरे प्रधानदेवस्य देव्या वा आयुधजालादीनि स्थापयित्वा प्रत्यहं कालत्रयेऽपि पूजयेदित्युपदेशः ॥

किञ्च सर्वत्र देवालये ग्रामकृते वा नगरकृते गर्भगृहस्य पूर्वभागस्थिते पूर्वोक्तास्थानमण्डपे प्रधानस्तंभान्तिके तत्स्तम्भमिलितं वा पृथक् वास्तुशास्त्रप्रणेतारं दिव्यं विश्वकर्माणं घनशिलाबेररूपं साञ्जलिबन्धं स्थापयेदिति शास्त्रकारोऽयं स्वस्यापि बेरस्थापनं देवालये कार्यमित्युक्तवान् । एवं तस्य गर्भगृहस्य मण्डपस्य वा निर्मातारं भौमं त्वष्टारं, शिल्पाचार्यं, स्थपतीश्वरं वा तत्पुरोभागे स्तम्भान्तरतले स्थापयेत । अनेनैव प्रकारेण स्थलान्तरे स्तम्भान्तरे वा तस्य देवालयस्य निर्माणार्थं धन-

दण्डिनं स्वगुरुं वापि वेदशास्त्रार्थकोविदम् ॥ ७ ॥

क्षुद्रपीठसमायुक्तं जपमालालसद्गलम् ।
लसद्वेष्टनयुक्तं वा पृथक्कल्पनसंयुतम् ।
बद्धाञ्जलिपुटं भक्त्या स्थापयेत्क्षेमसिद्धये ॥ ८ ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे
भक्तबेरस्थापनक्रमकथनं नाम
ऽयशीतितमोऽध्यायः ॥

---

कनकादिप्रदायिनो राज्ञो बेरं तस्मिन्देवालये देववेदिकायां वा स्थापितदेवबेराणामागमक्रमतः प्रतिष्ठाकारिणो दीक्षितस्य भट्टाचार्यस्य पुरोहितस्य च क्रमात्साञ्जलिपुटबेराणि च स्थापयेत् ॥

किञ्च क्वचित्स्थलान्तरे प्राकारान्तरे मण्डपान्तरे प्रदक्षिणपार्श्वमण्डपान्तरे वा विश्वगुरोस्संप्रदायसिद्धान्तस्थापयितुः परिव्राजकस्यापि बेरं बद्धाञ्जलिपुटं स्थापयेत् । एवमत्र स्थापितेषु भक्तबेरेषु विश्वकर्मबेरस्य मौलितले किरीटस्थापनं, राज्ञो मौलितले वेष्टनकल्पनं, भट्टाचार्यादीनां मौलितले शेषपटदुकूलपट्टवस्त्रादिवेष्टनं, कण्ठभागे वक्षोभागे च जपमालिकायोजनं कार्यम् । अयञ्च क्रमः परिव्राजकाचार्यबिम्बेषु न योजनीयः । परन्तु तस्य करकमले एकदण्डं त्रिदण्डं वा संयोज्य काषायवस्त्रपरिवेष्टनञ्च कार्यमिति क्रमः ॥

अथ कल्पवृक्षादिवाहनलक्षणक्रमकथनं नाम

**चतुरशीतितमोऽध्यायः ॥**

**सर्वेषामपि देवानां देवीनाञ्च विशेषतः ।**

---

किञ्चैतेषां सर्वेषामपि बेराणामनुगुणं पीठादिकं युक्त्या शिल्पी कल्पयेदिति च शिल्पसंप्रदायक्रमः । अपि चात्रोक्तस्य परिव्राजकाचार्यस्य विश्वगुरोश्शिलाबेरस्थापनमुत्सवार्हलोहबेरस्थापनञ्च करणीयमित्यर्वाचीनाः ॥

किञ्चैतेषां प्रत्यहं माननादिकं यथाक्रमं भट्टारकवर्यैः प्रकल्पयेदिति संक्षेपेण भक्तबेरभेदलक्षणस्थापनादिक्रमः प्रतिपादितो ज्ञेयः ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
**भक्तबेरस्थापनक्रमकथनं नाम**
**त्र्यशीतितमोऽध्यायः ॥**

---

**॥ चतुरशीतितमोऽध्यायः ॥**

एतावता प्रबन्धेन नानारूपाणां कल्पनीयानां सर्वेषामपि देवबेराणां, देवीबेराणां, भक्तगणानाञ्चान्येषां बेराणां निर्माणक्रममुपदिश्य तेषां बेराणां च उत्सवसमयारोपणार्हाणां कल्प-

अभिषेकैश्च नैवेद्यैर्वा प्रीतिस्संप्रजायते ॥ १ ॥
ततोऽधिका भवेत्प्रीतिः वाहनारोपणाद्ध्रुवम् ।
तस्मात्तद्द्विविधं कार्यं शिल्पिभिर्मानवेदिभिः ।
चन्दनैस्सारवृक्षैर्वा लोहपट्टावृतैस्तथा ॥ २ ॥

---

वृक्षाद्यनेकविधवाहनानां निर्माणक्रमं अस्मिंश्चतुरशीतितमेऽध्याये क्रमेण प्रतिपादयति — **सर्वेषामपीत्यादिना** । तादृशवाहननिर्माणप्रयोजनमादौ व्यनक्ति — **अभिषेकैश्चेत्यादिना** । क्षीरादिभिर्नानाविधैरभिषेकैर्मुद्गान्नगुडान्नपायसान्नदध्यन्नमाषान्नपौल्याद्यनेकविधखाद्यलेह्यचोष्याद्यनेकभक्ष्यादिनैवेद्यार्पणैश्च तेषु बेरेषु उत्तमेषु सान्निध्यं कृतवतां हरिहरादिदेवानां या प्रीतिर्मनस्समुल्लासो जायते तदधिका प्रीतिस्तेषां देवानां कल्पवृक्षगरुडहनुमद्वृषभशिबिकारथादिविविधवाहनारोपणेनोद्भवतीति । तस्मात् तदर्थं कल्पनीयानि विविधानि वाहनजालानि चन्दनवृक्षैरुत्तमैरन्यैश्च सारवृक्षैर्निर्मापणीयानीति नियमः । कथं सारवृक्षखण्डैरेव वाहननिर्माणमिति चेन्मानवानां स्कन्धैस्सुलभवहनार्थं शोभार्थञ्चेति भावः । तस्माद्वृक्षखण्डैरेव निर्मापणीयेषु विविधप्रमाणेषु कल्पवृक्षादिवाहनेषु क्वचित्ताम्राणि, राजतानि, सौवर्णानि पट्टिकाकवचादीनि संयोज्यानीति मतिः । कवचादीनीत्यादिपदेन तेषु तेषु वाहेषु मुखाद्यवयवेषु शुक्लपीतादिवर्णजालैः यथाक्रमं शोभासंपत्तिश्च कार्येति विवेकः ॥

तत्कल्पनमिहादिष्टं शास्त्रज्ञैर्मुनिपुङ्गवैः ।
उत्तमः कल्पवृक्षस्तु छायामण्डपसंयुतः ॥ ३ ॥
चतुरश्रं मण्डलं वा दीर्घाकारमथापि वा ।

---

एवं विविधरूपेष्वपि सर्वत्र वाहनजालेषु मुखाद्यवयवानां मेलनदार्ढ्योत्पादनायायःकीलकील्यापट्टिकाकवचादिभिस्संबन्धनीय इति नियमश्शिल्पिवर्गैः क्रियाकारिभिर्बोध्य इति क्रमः ॥

किञ्चैवं कल्पनीयेषु वाहनेषु तेषु कल्पवृक्षवाहनमेव नितरामुत्तममिति महर्षीणां शास्त्रकाराणाञ्चाशयः । तस्मात्तादृश-दिव्यकल्पवृक्षोऽत्र मानवलोके बेरेष्वावाहितानां हरिहरादि-देवानामुत्सवचंक्रमणाय वृक्षखण्डैर्निर्माप्यः । मन्दारादिवृक्ष-पञ्चकशाखान्तःकुसुमफलावलिभिः संपूर्णः हस्तषट्काद्युन्नतियुतः कल्पवृक्षः कल्प्यः । किञ्च तस्य वृक्षस्याधोभागे आधारफल-कायाश्चतुरश्रप्रमाणाया मध्यभागे तस्य वृक्षस्य छायायां तथैव मण्डपो वृक्षखण्डकृतस्तम्भचतुष्कोपेतः अयःकीलबन्धितो निर्मापणीयः । किञ्चैतस्य खलु मण्डपस्य मध्यभागे देवीबिम्ब-सहितदेवबिम्बानां कचित्तद्भक्तानां च स्थितिरुत्सवादिसमयेषु कल्पनीयेति भावः । एवं बृहदाकृतीनामिष्टिकादिभिर्निर्मितानां कल्पवृक्षाणामधोभागे मण्डपमध्यस्थले तदनुगुणौन्नत्यवैशाल्ययुते मूलबेरस्थापनमपि कार्यमिति नवीनानां शिल्पिनामाशयः ॥ ३ ॥

किष्कुहस्तप्रमाणेन तस्याधिष्ठानमुच्यते ॥ ४ ॥
चतुस्स्तम्भसमेतं वा स्तम्भाष्टकसमुज्ज्वलम् ।
वलभीप्रस्तरयुतमण्डपाकारवन्मतम् ॥ ५ ॥
नानाचित्रावलीयुक्तं विमानशिखरान्वितम् ।
देवपीठसमायुक्तं यथाशोभं प्रकल्पयेत् ॥ ६ ॥

---

एवं कल्पवृक्षशाखाया अधोभागे आधारफलकायाश्चोर्ध्वतले कल्पनीयो मण्डपस्तावच्चतुरश्रप्रमाणयुतो वा मण्डलाकारप्रमाणयुतो वा दीर्घाकृतिर्वा स्थाप्यः। क्वचिदस्य मण्डपस्याधोभागे किष्कुद्वयप्रमाणोन्नतिकं दारुमयमधिष्ठानं तुरगहंसमयूरशुकाद्यनेकविहङ्गमचित्रसहितं प्रकल्पयेत्। किञ्चैवमस्य कल्पवृक्षस्य छायायां यत्राधिष्ठानं क्रियते, तत्र मण्डपकल्पने तस्य मण्डपस्योर्ध्वतले कल्पवृक्षशाखास्पृक्शिखरकलशकल्पनं निर्मापणीयमिति शिल्पसमयविदः ॥

किञ्चैवंलक्षणोपेतस्यास्य मण्डपस्य स्तम्भचतुष्कं, स्तम्भाष्टकं स्तम्भषोडशकं वा परस्परं मिलितं क्वचिद्रन्ध्रयुतं वा नानाचित्रोपेतं स्थापयित्वा मण्डपस्य मध्यतले देवासनं च प्रकल्प्य उपरि वलभीप्रस्तरादिकं दृढं योजनीयमिति समयः। एवं संक्षेपेण कल्पवृक्षवाहनस्य शप्राख्यवाहनस्य निर्माणलक्षणमुक्तं बोध्यम् । कल्पवृक्षशाखादिनिर्माणं विना केवलदारुमयमण्डपः शप्र इति नामान्तरञ्च भजतीति समयः ॥ ६ ॥

सिह्मः करालवदनस्सटापटलशोभितः ।
उत्तिष्ठन्पतमानो वा तथोच्छ्रायितवालधिः ॥ ७ ॥
नागेन्द्रसहितो वापि केवलं वा गृहस्थितः ।
कल्पनीयो देवयोग्यो मस्तकान्तासनान्वितः ॥ ८ ॥

---

अथ सिह्मवाहनस्य लक्षणमाह — सिह्म इत्यादिना । पूर्ववत्सारदारुखण्डैः सिह्मरूपं समग्रं कल्पनीयम् । कीदृशलक्षणोपेतमिति चेदुच्यते । सप्राणस्य सिह्मस्य यथा वा स्कन्धतलस्योपरि सटाश्रेणिः, मुखे दंष्ट्रादियोगः, उद्धृतलाङ्गूलादिस्तथाऽस्य दारुकृतसिह्मवाहनस्य कल्पनं तुल्यं निर्मापणीयमिति तन्निर्माणक्रमः । किञ्चैतादृशसिह्मवाहनरूपन्तु उत्थानस्वरूपशालि गजादिरिपुजालं प्रति पतनोद्युक्तरूपं वा वैरिगजेन भीतेन युतं वा क्वचिद्रहितं वा निर्मापणीयम् ॥

किञ्चैतस्य सिह्मवाहनस्य पृष्ठदेशस्य पुरोभागे स्कन्धोपरि स्कन्धासन्नतले वा देवबिम्बस्थापनायासनपीठिका अयःकीलबन्धिता निर्मापणीया । एष्वेवासनपीठिकाफलकादिषूत्सवसमयेषु पूर्वोक्तदेवबिम्बानां स्थापनमिति भावः । एवमुत्तरत्रापि ज्ञेयम् । किञ्चैवंलक्षणोपेतं सिह्मवाहनन्तु शिवस्य विष्णोरन्येषां देवानां वा आरोहणयोग्यमेव । एवं व्याघ्रवाहनं, व्याघ्रीवाहनं, सैह्मीवाहनञ्च क्वचिच्छिवस्य गौर्यादीनां देवीनाञ्चारोहणाय प्रकल्पनीयमिति मतिः ॥ ८ ॥

हंसो मयूरवर्यश्च सुमनोहरपक्षकः ।
शुभनेत्रादिसंयुक्तो मुखस्थदलपत्रकः ॥ ९ ॥

उत्तिष्ठन् वा शयानो वा देवपीठसमन्वितः ।
पुष्पवन्मण्डलं नानामरीचिपटलान्वितः ॥ १० ॥

तुरङ्गैरन्वितं वापि रहितं वा प्रकल्पयेत् ।

---

अथ हंसमयूरवाहनयोर्लक्षणमाह — **हंस** इत्यादिना । सप्राणस्य हंसस्य मयूरस्य च शुभगरुद्युगलं पिंछादिकञ्च यथा वा दृश्यते तथैवास्यापि वाहनस्य गरुत्पिंछादिकं मेलयित्वा तस्य मयूरस्य हंसस्य वा आननभागे कमलदलपत्रादिकं वा पन्नगादिकं वा योजनीयमिति तत्कल्पनक्रमः ॥

किञ्चैतादृशलक्षणोपेतं हंसवाहनं, मयूरवाहनं वा पूर्ववदुत्थानस्वरूपं वा, तिष्ठद्वोड्डीनशैलीयुतं वा शयानं वा स्थापनीयम् । अपि चैतादृशलक्षणोपेतस्य हंसस्य मयूरस्य च स्कन्धानन्तरतले पूर्ववद्देवबेरपीठादिकञ्च कल्प्यमित्यर्थः ॥

अथ सूर्यप्रभाचन्द्रप्रभाख्ययोर्वाहनयोर्लक्षणमाह — **पुष्पवदित्यादिना** । 'एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ' इति निघण्टुकारवचनेनात्र पुष्पवत्पदप्रयोगस्तावत्सूर्यप्रभावाहनचन्द्रप्रभावाहनद्योतक इति साधवः ॥

इदन्तु सूर्यप्रभावाहनं चन्द्रप्रभावाहनञ्च तिष्ठच्चक्राकारं

निषण्णमण्डले मध्ये देवपीठप्रकल्पनम् ॥ ११ ॥

गरुडः पक्षयुगलस्तिष्ठन्नासीनरूपकः ।
भुजङ्गभूषः पृथुलकायः कार्यो मनोहरः ॥ १२ ॥

---

कल्पनीयम् । तत्र सूर्यप्रभायास्तिष्ठच्चक्राकारायाः पुरोभागे तच्चक्राकारप्रभाया अधिष्ठानं हस्तद्वयोन्नतिकं प्रकल्पयित्वा तेनाधिष्ठानेन संयुतं क्षुद्रप्रमाणं सप्ततुरगवाहनं योजनं कार्यम् । 'सप्त युञ्जन्ति रथमेकचक्रम्' इति वेदवाक्यबलात्तस्य सूर्यप्रभावाहनस्य वाहकतुरगावलिं क्षुद्रप्रमाणं स्थापयेदिति शिल्पसमयः ॥

किञ्चास्य सूर्यप्रभावाहनस्य मण्डलाकारस्य नेमिपट्टिकाभागे सूर्यरश्मितुल्या रेखाकारा रश्मयः कल्प्याः । एवं चन्द्रप्रभावाहनस्यापि नेमिपट्टिकाभागे षोडशकलास्वरूपकल्पनं कार्यमिति च क्रमबोधः । तस्मादेतादृशलक्षणोपेतस्य सूर्यप्रभावाहनस्य, चन्द्रप्रभावाहनस्य च मण्डलमध्यभागे देवबेरस्थापनस्थानं सायःकीलबन्धं निर्मापयेत् ॥ ११ ॥

अथ गरुडवाहनस्य लक्षणमाह — **गरुड** इति । पक्षयुगलोपेतः फणिभूषामण्डितः पृथुलशरीरो वैनतेयवाहनकल्प उत्तिष्ठन्वा उड्डीनकार्योद्युक्तरूप आसीनो वा प्रकल्पनीयः । अत्र गरुडवाहननिर्माणविषये हनुमद्वाहननिर्माणविषये च प्रकारद्वय-

नागः फणावलियुतो मण्डलायितकायकः ।
फणातपत्रच्छायायां देवपीठं प्रकल्पयेत् ॥ १३ ॥

पावमानिर्दाशरथिपादपङ्कजधृङ्मतः ।

---

कल्पनमुशन्ति शिल्पविदः । यथा — किरीटमकुटोपेतो मनुष्यकायः यज्ञोपवीतभासुरपृथुलवक्षस्स्थलः स्कन्धभागस्थापितदेवबेरस्य पादाम्बुजधारणोद्युक्तोद्धृतहस्तयुगलो गरुडवाहनकल्पो निर्माप्य इति । अयमेकः प्रकारः ॥

प्रकारान्तरेण यथा — पक्षिजातिषु यथा वा वैनतेयः शकुन्तरूपी दृश्यते तथैव शकुन्तरूपेणोपेतो वैनतेयवाहनकल्पः कल्पनीय इति । अत्र प्रथमप्रकारेण कल्पनं नवीनमतानुसारि; द्वितीयप्रकारेण कल्पनं प्राचीनमतानुसारीति क्रमो बोध्यः । पाण्ड्यचोलादिषु देशेषु सर्वेषु यथाक्रमं स्वस्वदेशीयंनिर्माणक्रमः स्वीकार्य इति ॥ १२ ॥

अथ शेषवाहनलक्षणमाह — **नाग** इति । मण्डलीकृतस्वदीर्घकायः सप्तभिर्वा नवभिर्वैकादशभिः फणाभिस्संयुतश्शेषवाहनकल्पः करणीयः । तत्र तस्य शेषस्य विस्तृतफणायाश्छत्राकाराया अधोभागे तादृशमण्डलीकृतकायस्योर्ध्वतल एव देवबेरस्थापनासनं स्थाप्यमिति शिल्पसमयः ॥ १३ ॥

अथ हनूमद्वाहननिर्माणक्रममाह — **पावमानिरिति** ।

**नन्दी च भगवान्गौरीकान्तपादाब्जधारकः ॥ १४ ॥**

**मूषकश्च गणाध्यक्षधारकश्चोर्ध्वपत्रकः ।**

**याली गजगणाकर्षव्यग्रतुण्डो बलान्वितः ॥ १५ ॥**

---

पूर्ववदत्रापि हनूमद्वाहननिर्माणे हनूमतश्शरीरं मानुषाकारं मुखभागे केवलं हनूमच्चिह्नोपेतं कटीतटपृष्ठभागे पृथुलवालधियुतं स्वस्कन्धभागे स्थितदेवबेरस्य पादाम्बुजधारणोद्युक्तोद्धृतहस्तयुगलं प्रकल्पयेत् । अनेनैव प्रकारेण नन्दिवाहनमपि नन्दिदेवस्वरूपयुतं वा वृषस्वरूपयुतं वा स्वस्वेच्छाधीनं स्थापयेत् । वैनतेयपावमानि-नन्दिवाहनानां देवकायकल्पने मनुष्यकायकल्पने च यज्ञोपवीत-प्रमुखभूषावलीकल्पनमवश्यं करणीयमिति विवेकः ॥ १४ ॥

अथ मूषकवाहलक्षणमाह—**मूषक** इति । भगवतो गणनायकस्य बेराबाहितदिव्यशक्तेर्वाहनन्तु मूषकः । तस्य वाहनस्य स्वरूपन्तु यथा वा लोके जीविनो मूषकस्य शरीरं दृश्यते तथैव वाहनकल्पनेऽपि करचरणलाङ्गूलाद्यवयवनिर्माणं कार्यमिति । तस्मात्तस्य मूषकवाहनस्य स्कन्धतले गणनाथबेरस्थापनपीठयोजनं शिल्पिभिर्दृढं कारयेदिति मर्यादाक्रमः ॥

अथ यालीवाहनलक्षणमाह—**यालीति** । सर्वत्र लोकेऽरण्य-तलवासिषु गजतुरगादिषु सिंह एव बलीयान् । अत एव तस्य मृगेन्द्र इति नाम प्रसिद्धम । तस्मात्तादृशसिंहादप्यधिकबलाढ्यो

स्थूलकायश्चोर्ध्ववालः क्रुध्यन्नेत्रयुगान्वितः ।
कल्पनीयो देवताही वारणश्च तथा पृथक् ॥ १६ ॥

आसीनस्त्वथवा तिष्ठन्निक्षुदण्डकरान्वितः ।
कदल्युपेतशुण्डो वा भीतिहीनो मुदाऽन्वितः ॥ १७ ॥
कल्पनीयो देवयोग्यो मस्तकान्तासनान्वितः ।

---

गजरिपुः कश्चिन्मृगविशेषो यालीति नामान्तरभाक्प्रसिद्धः । तादृशयालीवाहनस्य स्वरूपन्तु सिंहवाहनवत्सटाश्रेण्युद्धत-लाङ्गूलादिकं योजयित्वाऽस्य यालीवाहनस्य मुखभागे शुण्डादण्डः कल्पनीयः । कचित्तादृशशुण्डादण्डस्याग्रभागे क्षुद्रप्रमाणस्यैकस्य गजस्य द्वयोर्वारणयोर्वा निर्माणं लम्बनरूपं मेलनीयम । एवं शुण्डाकर्षितवारणस्यास्य यालीवाहनस्य नेत्रयुगं क्रुद्धस्वरूपं कृत्वा स्कन्धोपरि देवबेरस्थापनार्हं स्थलं निर्मापणीयमिति तत्कल्पनक्रमः ॥

अथ गजवाहनलक्षणमाह — वारणश्चेति । सिंहयाल्यादि-भीतिरहितस्य सन्तोषभरितस्य गजस्य यथा वा आकृतिर्भवेत् तथा वाहननिर्माणेऽपि स्वरूपं कल्प्यम् । इदन्तु वारणवाहनं आसीनस्वरूपं वा तिष्ठत्स्वरूपं वा निर्मापणीयम् । किञ्चास्य वारणवाहनस्य शुण्डाग्रे इक्षुदण्डयोजनं वा कदलीदण्डयोजनं वा कार्यम् । किञ्चास्य किल वारणवाहनस्य मस्तकसमीपस्थले

**शिबिकां मानवैर्धार्यां पेटिकाकारसंयुताम् ॥ १८ ॥**

**अथ पार्श्वावरणैर्हीनां वेण्वादिदण्डकाम् ।**

**भूतेशो वा वृषो नानालङ्क्रियामण्डितो मतः ॥ १९ ॥**

---

पूर्ववद्देवबेरस्थापनस्थलनिर्माणं कार्यमिति च शिल्पसमयः । लक्षणान्तराणि सर्वाणि तु सजीवस्य वारणस्येव योज्यानीति क्रमः ॥

अथ शिबिकालक्षणमाह — **शिबिकामिति** । विविधरूपं शिबिकालक्षणन्तु पुरोभागे पश्चाद्भागे दृढं संयोजितमाधारदण्डं मानवभटस्कन्धैर्धार्यं प्रकल्पयेत् । तादृशाधारदण्डस्तु वेणुकृतो वा वटकृतो वा सौकर्यदायीति समयः । एवं मानवस्कन्धवाह्या-धारदण्डसहितस्य शिबिकाख्यस्य वाहनस्य निर्माणन्तु पेटिकारूपं पार्श्वयोः प्रवेशद्वारोपेतं कार्यम् । अयमेकः प्रकारः । प्रकारान्तरेण तु पार्श्वभागावरणहीनं मध्यस्थदेवबेरस्थापनस्थलं देवबेरस्य मुख-मण्डलस्फुरणार्थमग्रभागे मुकुरस्थानोपेतं विविधचित्रपट्टिकावृत-पार्श्वपट्टिकातलं शिबिकाकल्पनं प्रकल्पयेत् ॥

किञ्चात्र शिबिकानिर्माणे क्वचित्पूर्वभागे भूतेशगणस्कन्ध-धारितपूर्वदण्डं वा नन्दिदेवधारितपूर्वदण्डं वा गन्धर्वकिन्नरादि-देवगणस्कन्धधारितदण्डं वा कार्यमिति विकल्पः । अतोऽत्र तु शिबिकानिर्माणे **पुष्पशिबिकादर्पणशिबिकेत्यादिभेदश्चोह्यः** क्रिया-सौकर्यार्थं शिल्पिभिरिति ॥ १९ ॥

आन्दोली प्रभया युक्ता सपक्षा वा विपक्षका ।
नानोत्सवार्हा वाहादियोग्या देवासनोचिता ॥ २० ॥

रथस्तु क्षेमदो भूमेः पुंसां स्त्रीणामनेकधा ।

---

अथान्दोलिकालक्षणमाह — आन्दोलीति । आन्दोलीवाहनन्तु चतुर्भिरष्टभिर्मानवैर्धार्यं चतुरश्राकारं क्वचित्क्वचिद्दीर्घाकारं कल्पनीयं दृढफलकासंयुतम् । एतादृशान्दोलिकायाः पक्षोत्सववाहनमिति नामान्तरं ज्ञेयम् । किञ्चास्यां किलान्दोलिकायामुत्सवबेरासनं मध्यभागे तत्पार्श्वयोरुत्सवदेवीबेरासनं चायःकीलघटितबन्धनं प्रकल्पयेत् । किञ्चास्या मध्यभागे स्थापितबेरासनस्य पश्चाद्भागे प्रभाकल्पनं वर्तुलरूपं वा मुखभद्ररूपं वा दीर्घाकारं सपक्षं वा पक्षहीनं स्थापयेत । एवंप्रकारेण प्रभाकल्पनन्तु पूर्वोक्तोत्सवबेरस्य तद्देव्याश्च मौलिभागादिष्वत्यन्तशोभावर्धनायेति मतिः । किञ्च पूर्वोक्तरीत्याऽत्रान्दोलिकानिर्माणे सौवर्णराजतादिकवचबन्धनमवश्यं कार्यमिति नवीनाश्शिल्पाचार्याः । क्वचिद्दारुकृतामप्यान्दोलिकां वर्णजालविरचिताचित्रादिमनोहरां प्रकल्पयेदिति प्राचीनाः ॥ २० ॥

अथ रथलक्षणमाह — रथस्तु क्षेमद इत्यादिना । रथनिर्माणेन किं वा प्रयोजनमिति चेत्तत्फलं व्यनक्ति — भूमेः पुंसामित्यादिना । मानशास्त्रवेदिभिश्शिल्पिभिरतिधनव्ययपूर्वकं

षट्चक्रो वा चतुश्चक्रस्त्वष्टचक्रयुतः क्वचित् ॥ २१ ॥

दशभिर्वा द्वादशभिश्चक्रैर्युक्तः क्वचिन्मतः ।

दृढयुग्यकलोपेतस्साधिष्ठानं तदासनम् ॥ २२ ॥

पद्मवाजनकम्पादिसंयुक्तं बहुचित्रकम् ।

ततस्स्तम्भावलिर्योज्या प्रस्तरादिसमन्विता ॥ २३ ॥

---

देवाय रथनिर्माणे कृते प्रतिसंवत्सरं तस्मिंश्च रथे देवबिम्बारोपणे च कृते यदि तथा तन्मण्डलभूमौ नितरां सुवृष्ट्यारोग्यादिर्भवेत् । धेन्वादीनां रोगाभावः स्त्रियस्सुपुत्रवत्य इत्याद्यनेकक्षेमपरम्परे-त्यागमविदामाशयः आविष्कृतः 'पुंसां स्त्रीणामनेकधा' इति मूलवाक्येन । तस्मादनेकविधक्षेमाविर्भावनिदानभूतस्य तस्य देवस्यन्दनस्य चतुश्चक्रयोजनं वा षट्चक्रयोजनं वाऽष्टचक्रयोजनं वा चक्रदशकयोजनं वा स्वस्वविभवानुगुणं कारयित्वा तेषाञ्चक्राणां दारुकृतानां नेम्यादिस्थानेष्वयःकीलादियोजनमप्यविशीर्णं कारयेत् । एवं स्वस्वविभववाञ्छानुगुणं कल्पनीयस्य देवरथस्य चक्रस्थापनानन्तरमुपरिभागे रथदेहनिर्माणार्थं तेषां चक्राणां नाभिस्थाने पृथुयुग्याख्यलोहोलूखलदण्डं योजयित्वा तदुपरि चतुर्दिक्षु तिर्यग्रूपदृढदारुखण्डैरधिष्ठानं हस्तषट्कौन्नत्यं पद्म-वाजनादिचित्रयुतं वा प्रकल्प्य तद्दृढाधिष्ठानकल्पनस्य समन्ततो दिक्षु सर्वास्वपि विनायककार्तिकेयवासवब्रह्मविष्णुरामचन्द्रकृष्ण-

तन्मध्ये देवपीठस्तु चाधिष्ठानादिभिर्युतः ।
चतुरश्राकारतलैरनेकैर्युतमस्तकम् ॥ २४ ॥
तस्योपरि विमानादिकल्पनं शुभदं भवेत् ।

---

गन्धर्वाद्यनेकदेवताबिम्बजालानि दारुमयान्ययःकीलघटितानि वर्णयोजनसहितानि वा प्रकल्पयेत् । एवं चक्रयुग्योपरि अधिष्ठानकल्पनमुपर्युपरि क्रमाच्चतसृषु दिक्ष्वपि वृद्धियुतं प्रतितलं बहुचित्रचित्रितं कारयित्वा तदुपरितले एकपुरुषोन्नत्याधिक्यप्रमाणयुतानां नानास्तम्भानां चित्रोपेतानां स्थापनं कार्यम् । किञ्च रथकल्पनस्याधिष्ठानोपरितले क्रमपाङ्क्तिरीत्या एवं स्थापितानामेतेषां स्तम्भानां मध्यभागे विशालाङ्गणे मध्यस्थापितोच्छ्रिताधिष्ठाने देवीसहितस्य देवबेरस्यासनस्थापनं कार्यमिति विवेकः ॥

किञ्चैवमत्र रथमध्यभागे देवबेरासनपीठस्थापनानन्तरं तेषु स्तम्भेषूपरितलेषु मिथो दृढबन्धनयुक्तं प्रस्तरावलीप्रमुखकार्यजालं विरचय्य तदुपरि प्रथमतलं चतुरश्रं कल्पयित्वा, तत्प्रमाणात्किञ्चिन्न्यूनप्रमाणं द्वितीयतलं स्थापयेत् । एवं द्वितीयतलात्किञ्चित्प्रमाणहीनं तृतीयतलकल्पनमित्यादिक्रमेण दारुमयतलसप्तकोपेतं वा, तलनवकोपेतं वा तलैकादशकोपेतं वा रथकल्पनं सर्वमप्ययःकीलादिघटितदारुपट्टिकाखण्डादिसहितमेव कारयित्वा,

तत्तद्देवस्वरूपानुरूपं वाहनकल्पनम् ।
नानारूपं वितानादियुक्तं सर्वत्र कारयेत् ॥ २९ ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे
कल्पवृक्षादिवाहनलक्षणकथनं नाम
चतुरशीतितमोऽध्यायः ॥

---

तदुपरि विमानशिखराधिष्ठानं सचित्रं सवितानं सवितानपटं गरुडवृषादितत्तच्चिह्नोपेतं प्रकल्पयेदिति सङ्ग्रहेण रथनिर्माणलक्षणमुक्तं ज्ञेयम् । विस्तरेण लक्षणान्तराणि तु रथलक्षणाख्यशिल्पग्रन्थे ज्ञेयानीति भावः ॥

किञ्चैवमत्रोक्तानां सर्वेषामपि वाहनानां स्ववित्तादिविभवानुगुणं राजतसौवर्णपट्टाच्छादनादिकं तत्र तत्र सर्वतो दिङ्मध्यभागेषु द्वारपालकतुरगादियोजनञ्च कार्यमिति नियमः । किञ्चैतेषां वाहनानां तत्तदङ्गनिर्माणप्रमाणादिकं यथाक्रमं स्वयमेवोह्य पूर्वकालकल्पितरथादितत्तद्वाहननिरीक्षणेन चान्तरालिकप्रमाणलक्षणादिकं ज्ञात्वा मानविद्भिस्तक्षकैर्लोहकारैश्च तद्योज्यमिति भावः ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
कल्पवृक्षादिवाहनलक्षणकथनं नाम
चतुरशीतितमोऽध्यायः ॥

---

अथोत्सवकालनिर्णयकथनं नाम

## पञ्चाशीतितमोऽध्यायः ॥

शुभमासि सुनक्षत्रे दृष्टे च सुनिमित्तके ।
प्रतिष्ठितानां यन्त्रज्ञैर्दीक्षितैश्च पुरोहितैः ॥ १ ॥

---

पञ्चाशीतितमोऽध्यायः ॥

पूर्वाध्यायप्रतिपादितरीत्या निर्मापणीयेषु कल्पवृक्षादिवाहनेषु देवबेरारोपणं कस्मिन्वा समये कार्यमित्याकाङ्क्षायां तदर्थमुत्सवकालनिर्णयकथनात्मकमेतं पञ्चाशीतितमाध्याये विशिनष्टि— शुभमासीत्यादिना । पाञ्चरात्रवैखानसशैवागमादिशास्त्रेषु प्रतिपादितरीत्या शास्त्रज्ञैर्मूलबेरपादाम्बुजस्याधोभागे स्थापनीययन्त्रमातृकाबीजाक्षरादिविन्यासज्ञैः दीक्षितैर्भट्टारकाचार्यैश्शुभमासेषु मकरमेषवृषभसिंहकार्तिकादिषु शुभयोगशुभकरणसहिते सुमुहूर्ते प्रथमतः पूर्वोक्तगर्भगृहमध्यस्थितदैवत्रेदिकायां मूलबेरस्थापनं जटिबन्धनमातृबीजाक्षरयन्त्रपट्टादिविन्यासपूर्वकं कार्यम् । ततस्तस्मिन्नेव शुभसमये उत्सवबेराणामन्येषां द्वारपालादिबेराणाञ्च स्थापनं कार्यम् । किञ्च तस्मिन्नेव समये नदति मङ्गलवाद्यजाले तथा स्थापितानां तेषां बेराणामपि सर्वेषामभिषेकालङ्क्रियापूजनं नैवेद्योपचारादिकं यथाक्रमं कारयेदित्यागमप्रमाणानुसारेण देवबेरप्रतिष्ठानन्तरं तेषां हरिहरादीनां देवानां मनःप्रीतिकरमुत्सवादिकं तेषु तेषु कालेषु कार्यमित्युपदेशः पुराणप्रतिपादित एव ॥

देवानामुत्सवः कार्यस्सर्वक्षेमकरो मतः ।
नित्यो नैमित्तिकश्चायं विभक्तश्शास्त्रपारगैः ॥ २ ॥

मेषादिसंक्रमे दर्शे पूर्णिमायां विशेषतः ।
स्थापनर्क्षेऽथवा राज्ञो जन्मर्क्षे दीक्षितस्य वा ॥ ३ ॥

स्थानकल्पयितुर्वाऽपि मासर्क्षे सुखहेतवे ।

---

तस्मादत्र शास्त्रकारस्तादृशोत्सवकालं व्यनक्ति — **देवानामुत्सवः कार्य** इत्यादिना । किञ्च तादृशोत्सवाद्याचरणेन किंवा फलमिति चेत्तदाह — **सर्वक्षेमकर** इति । सर्वेषामपि जीवानामायुरारोग्यैश्वर्याद्यनेकविधश्रेयोवर्धनहेतुरुत्सवाचरणमिति । एवं देवानां प्रीतिवर्धकः प्राणिनां क्षेमजनकः उत्सवकालस्ताबद्द्विधा विभक्तः । यथा — नित्योत्सवकालो नैमित्तिकोत्सवकालश्चेति । किञ्च तत्राद्यस्य **पर्वोत्सवकाल** इति नामान्तरं केचिदुशन्ति । द्वितीयस्य **विशेषोत्सवकाल** इति । तत्र मेषमासवृषभमासादिद्वादशमासाविर्भावसमयः प्रतिमासममावास्यादिनानि पौर्णमासीदिनानि च नित्योत्सवकाल इत्यर्थः । किञ्च यस्मिन्नक्षत्रे देवालयगर्भगृहवेदिकायां मूलबेरादिस्थापनं कृतं, प्रतिमाससमागमनशीलानि तानि नक्षत्राणि = नक्षत्रदिनानि तादृशप्रतिष्ठाकारयितुर्देवालयस्थापयितुर्वा भूपालस्य वा दीक्षितस्य जन्मनक्षत्रदिनानि च नित्योत्सवकाल इति क्रमः ॥

**मेषादौ च महः कार्यो देवप्रीतिकरे दिने ॥ ४ ॥**

**क्षेत्रमाहात्म्यनिर्दिष्टवासरे वा विशेषतः ।**

---

अथ नैमित्तिकोत्सवसमयक्रमं व्यनक्ति— **मेषादौ च महः कार्यमिति**। तत्तत्क्षेत्रमाहात्म्यपुराणादिग्रन्थनिर्दिष्टदिनानि विशेषेण देवप्रीतिकरदिनानि नैमित्तिकोत्सवकाल इति च परिपाटी । अस्य विशदार्थस्तु —मेषमासे वा वृषभमासे वा वसन्तोत्सवः कार्यः। मिथुनमासे ग्रीष्मोत्सवः, सिंहमासे वार्षिकोत्सवः, पवित्रारोपणोत्सवश्च कार्यः । एवं कन्यामासे शमीवृक्षताडनोत्सवो नवरात्रमण्डपोत्सवश्च कार्य इति क्रमः । एवं तुलामासि शरत्कालोत्सवः, कार्तिकमासे कृत्तिकादीपोत्सवः, धनुर्मासे तत्तत्क्षेत्रदेवमाहात्म्यव्यक्तीकरणनक्षत्रोत्सवः,मकरमासे प्लवोत्सवः, कुम्भमासे दमनिकोत्सवः, मीनमासे तत्तद्देव्या साकं विशेषतो विवाहोत्सवश्च कार्य इति क्रमः ॥

किञ्च सर्वत्र शिवमन्दिरेषु, विष्णुमन्दिरेषु ग्रामवास्तुनगरवास्तुदेवालयवास्तुस्थानेषु च प्रतिसंवत्सरं मकरमासे वा मीनमासे वा मेषमासे वा वृषभमासे वा मिथुनमासे वा वास्तुदेवदिक्पालाद्यावाहनपूर्वकं वार्षिकोत्सवश्च करणीयः । अस्यैव ब्रह्मोत्सव इति नामान्तरम् । कुतः? प्रथमतः पूर्वभागे ब्रह्मणाऽऽरब्धत्वात् । अयन्तु ब्रह्मोत्सवस्सर्वासामपि देवीनाञ्च

करणीय एव; न तु भक्तानां गरुडादीनां स्वाचार्यपर्यन्तानामिति। परन्तु लोकगुरोराचार्यादेः प्रतिसंवत्सरं तदाविर्भावदिननक्षत्रे विशेषत उत्सवः कार्य इति नियमः। किञ्च सर्वत्र देशेषु शिवमन्दिरे वा विष्णुमन्दिरे वा करणीयसंवत्सरोत्सवसमयस्ताव-द्दशदिनावधिक इति केचित्। नवदिनावधिक इत्यन्ये। अत्र तु विषये वैखानसपाञ्चरात्रशैवागमादिवचनप्रमाणमेव शरणमिति सन्तः॥

किञ्च ब्रह्मोत्सवाख्यसंवत्सरोत्सवानुष्ठानक्रमस्तु सङ्ग्रहेणात्र प्रतिपाद्यते। यथा — पूर्वप्रतिपादितरीत्या उत्तरायणकाले मकरा-द्युचितमासेषु निर्दिष्टनक्षत्रदिनात्पूर्वं दश दिनान्युत्सवदिनानीति मतिः। तत्र तेषां दशदिनानां पूर्वदिने प्रातर्वा सायं दीक्षितो, भट्टारको रङ्गवल्लीवितानतोरणाद्यलङ्कृतदेवालययागशालां प्रविश्य, तत्राग्निकुण्डेष्वाहुतीश्शान्तिप्रतिपादका हुत्वा तेषां मूलबेराणामुत्सव-बेराणाञ्चाभिषेककालक्रियादीन्कारयित्वा देवालये प्रतिप्राकारतल-मष्टास्वपि दिग्भागेष्वावाहितानां दिक्पालानां रोगशोषमित्रादि-वास्तुनाथदेवादीनाञ्च बलिं प्रदापयित्वा सन्निधिवीथ्यां वा देवालयप्राकारतले वा देवचंक्रमणं च कारयित्वा ततो ध्वजस्तम्भे गरुडरूपाङ्कितं वृषभरूपांकितं वा नवपट्टवस्त्रमारोपयेत्। एवं पूर्वदिनरात्रौ ध्वजपटारोपणानन्तरं ब्राह्मणैस्स्वस्तिवाचनादिकं पाठयित्वा प्रथमोत्सवदिने प्रातः पूर्वोक्तकल्पवृक्षवाहने सदेवी-कस्योत्सवबेरस्यारोपणं च विरचय्य ग्रामवीथीनगरवीथ्यादिस्थलेषु

स्नानैर्होमैश्च दानैश्च नैवेद्यैर्विविधैरपि ॥ ५ ॥

करदीपिकानृत्तगीतवाद्यादिपूर्वकं चंक्रमणञ्च कारयित्वा तत्र तत्र मध्यस्थानेषु मण्डपादिषु नैवेद्योपचरणादिकमपि समर्पणीयमिति क्रमः । एवं दशसु दिनेषु प्रातस्सायं करणीयमिति नियमः ॥

किञ्चैवं प्रथमदिनस्य रात्रावुत्सवबेराणां सिंहवाहनारोपणं, द्वितीयदिनस्य प्रातर्हंसवाहनारोपणं, रात्रौ सूर्यप्रभारोपणं, तृतीयदिनस्य प्रातर्गरुडवाहनारोपणमित्यादिक्रमेण पूर्वोक्तवाहनेषु स्थापनक्रमस्तावत्तत्तदागमसंप्रदायोपदेशानुसारेण स्वीकार्य इति परिपाटी ॥

एवं वार्षिकोत्सवाय निर्दिष्टनक्षत्रदिनात्पूर्वं दशसु दिनेषु कल्पवृक्षरथादिवाहनारोहणानन्तरं नवमदिनस्य दशमदिनस्य वा रात्रौ ध्वजस्तम्भशिखरात्तच्च ध्वजपटवस्त्रमवतारयित्वा सर्वे भक्तगणा दीक्षितभट्टारकपुरोगमाः देवपुष्करणीतटाकनद्यादाववभृथस्नानं कृत्वा भक्त्या मुहुर्मुहुरनेकवारं प्रणम्य स्तुतिवाचकानि पाठयेयुरिति । एवं तत्र विविधेषु समयेषु कल्पनीयवसन्तोत्सवग्रीष्मोत्सववर्षाकालोत्सवादिषु करणीयक्रमस्तु भट्टारकोपदेशादिभिर्ज्ञेय इत्यर्थः ॥

किञ्च देवप्रीतिकराणि यानि कार्याणि दधिक्षीरमधुफलशुद्धतोयगन्धतोयादिभिरभिषेककरणं मूलबेराणामुत्सवबेराणां, देवीबेराणां द्वारपालकादीनामप्यभिषेकनैवेद्यादिकरणं, याग-

वीथीचङ्क्रमणैश्चापि वाहनारोहणैरपि ।
अनेकैरुपचारैश्च देवान्देवीश्च तोषयेत् ॥ ६ ॥

भक्तान्गुरूंश्च विविधान्देववत्पूजयेद्बुधः ।
वेदमाहात्म्यपठनैश्शान्तिभिस्स्वस्तिवाचनैः ॥ ७ ॥

सायंप्रातर्नृत्तगीतवाद्यताडनमण्डलैः ।
प्रसादयेद्बुधो नित्यं देवप्रासादमुत्तमम् ॥ ८ ॥

---

शालायां होमाहुतिभिर्देवाग्निमहर्षियजनं, कुटुम्बिनां, श्रोत्रियाणां, वेदविदां करतलेषु गोभूहिरण्यवस्त्रादिदानकरणं, गुलान्नमुद्गान्नाद्यनेकविधभक्ष्यादिनिवेदनकरणं तत्र तत्र ग्रामेषु नगरेषु च सन्निधिवीथीराजवीथीरथवीथ्यादिस्थानेषु मन्दगमनादिचंक्रमणकरणं, यच्च नानावाहनारोपणं, यच्चोशीरतालवृन्तादिभिश्शैत्योपचरणचामरवीजनादिकमन्यानि कार्यान्तराणि च देवप्रीतिकराणि यानि स्मृतानि तानि सर्वाणि भट्टारकप्रमुखभक्तगणास्तेषूत्सवसमयेषु भक्त्या कारयेयुरिति परिपाटी । एवं देवालयप्राकारादिस्थानेषु तत्र तत्र स्थापितानां चण्डिकेशविष्वक्सेनगरुडस्वाचार्यादीनां देवभक्तगणानामप्युत्सवसमयेषु मुख्यदेवानां नित्योत्सवसमयेषु नैमित्तिकोत्सवसमयेषु च वेदपठनं, स्वस्तिपठनं, स्तुतिजालपठनमन्यच्च देवीप्रियकरकार्यजालञ्च यथाक्रमं कल्पनीयमित्युपदेशः ॥

किञ्च प्रतिदिनं देवालये गर्भगृहमण्टपशालादिस्थानेषु सम्मार्जन्या अवकरनिरसनं रङ्गवल्ल्यादिभिर्भूमिप्रसाधनं चूतपत्र-

आगमोक्तविधानेन बलिदानैश्च तोषयेत् ।
वीथीप्रसादनश्चापि मण्डपालङ्क्रियाऽपि च ॥ ९ ॥

चित्रपुष्पाद्यलङ्कारो देवप्रीतिकरो मतः ।
तस्मात्सर्वेषु कालेषु देवानां प्रीतिवर्धनम् ।
पूजादिकं प्रकर्तव्यमित्याहुश्शास्त्रपारगाः ॥ १० ॥

इति विश्वकर्मप्रणीते विश्वकर्मवास्तुशास्त्रे
उत्सवकालनिर्णयकथनं नाम
पञ्चाशीतितमोऽध्यायः ॥

---

नारिकेलपत्रपद्मादिकुसुमजालैः क्वचित्पट्टवस्त्रादिभिस्तोरणवितानयोजनं सायंकाले विशेषतो दीपप्रज्वलनकरणं आराधनादिसमयेषु नृत्तगीतमङ्गलवाद्यादिकरणमागमविधानेन वास्तुनाथक्षेत्रनाथादीनां बलिदानं, ब्राह्मणेभ्यष्षड्रसोपेतदिव्यान्नदानं, नवरत्नखचितभूषणदुकूलकुसुमादिभिर्देवबेरालङ्करणं अन्यानि कार्यजालानि च देवप्रीतिकराणि यदि भक्तगणैः कृतानि तदा लोके सर्वेषामपि जीवानां विविधश्रेयःप्राप्तिर्देवानां कारुण्यभूम्ना संजायत इति शास्त्रीयोपदेशस्सर्वैरप्यादरणीय इति संक्षेपेण सकलविधदेवानां देवीनाञ्चोत्सवसमयक्रमः कथितः ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
**उत्सवकालनिर्णयकथनं नाम**
**पञ्चाशीतितमोऽध्यायः**



अथ प्रतिमापूजनभजनादिफलकथनं नाम

## षडशीतितमोऽध्यायः ॥

हरेर्हरस्य धातुर्वा बेराणां चित्ररूपिणाम् ।
सर्वेषामपि देवानां देवीनाञ्च विशेषतः ॥ १ ॥

---

॥ षडशीतितमोऽध्यायः ॥

पूर्वोक्तप्रकारेण देवालयगर्भगृहे सुमुहूर्ते प्रतिष्ठितानां देवानामाराधनेन यत्फलं पुंसां प्रजायते तत्क्रममत्र षडशीतितमेऽध्याये शास्त्रकारः प्रतिपादयति — **हरेर्हरस्येत्यादिना** । हरिहरब्रह्मादिदेवानामेतेषां दिव्यमहिषीणां नवग्रहनाथादीनामष्टदिक्पालकानामन्येषामपि देवानां पूजनं सर्वश्रेयःप्रदमिति प्राचां महर्षीणामुपदेशः । तस्मादेवं पूजनाय तेषां देवानां स्वरूपं लोहजालैः पूर्वोक्तप्रकारेण बेररूपं कारयित्वा नित्यशस्तद्बेरपूजनमित्येकः प्रकारः ॥

प्रकारान्तरेण यथा — एवं बेरनिर्माणाय धनादिशक्त्यभावे वा, स्वेच्छावशाद्वा, पट्टवस्त्रदुकूलादौ, यवनिकादौ, कचित्फलकादौ कचित्कुड्यादौ, कचिद्दर्पणादौ वा शुक्लपीतहरितादिवर्णजालैरेतेषां देवानां स्वरूपं चित्रकृतं कल्पयित्वा तत्पूजनमिति । किञ्च गण्डकीनद्यादौ स्वयमेवोत्पन्नानां सालग्रामशिलादीनां स्वयम्भूलिङ्गादीनाञ्च पूजनमप्यनयोर्विषयोरन्तर्गत-

भक्तानामपि सर्वेषां सर्वज्ञस्य गुरोरपि ।
प्रतिमां पूजयेन्नित्यं सर्वक्षेमाभिवृद्धये ॥ २ ॥

भट्टारकैर्दीक्षितैश्च काले काले विशेषतः ।
अभिषेकैरलङ्कारैर्वीजनैरुत्सवैरपि ॥ ३ ॥

मण्डपारोहणाद्यैश्च वाहनारोपणैरपि ।

---

मेवेति सतामागमविदामाशयः । तस्मात्सर्वज्ञस्य सकलशास्त्रपारङ्गतस्य लोकगुरोराचार्यस्य गरुडपवनसुतविष्वक्सेनचण्डिकेशादिदेवभक्तगणस्य देवदेवीगणस्य च बेरस्थापनं पूर्वोक्तरीत्या यथाक्रमं प्रकल्पयित्वा प्रातःकाले मध्यंदिने रात्रौ च तेषां देवानामाराधनादिकं नैयत्येन कार्यमित्युपदेशो ज्ञेयः । तथा पूजनविषये कोऽपि नियमो यथा — देवालयस्थापितानां सर्वेषामपि बेराणां पूजनादिकन्तु दीक्षितैर्भट्टारकैर्देवलकैः कारयितुं युक्तम् । भूपालप्रासादादिषु वा स्वस्वगृहेषु वा स्थापनीयानां क्षुद्रप्रमाणानां बेराणां, लिङ्गमूर्तीनां, सालग्रामशिलादीनाञ्चाराधनादिकं नित्यशः प्रातस्सायमेकवारं वा गृहपतिपुरोहितादिभिः कार्यम् । न तु देवालयदेवलकभट्टारकदीक्षितैरिति । कुत एवं नियमः? एवंप्रकारेणोत्तमप्रमाणवचनदर्शनादिति ॥

तस्मादेवं देवालयस्थापितानां सर्वेषामपि देवदेवीभक्तबेराणां यथाकालमभिषेककरणेन दुकूलरत्नभूषाद्यर्पणेन चामरवीजनाद्यनेक-

नैवेद्यदर्शनैरेवं प्रतिमापूजनं मतम् ॥ ४ ॥
सर्वपापविमुक्तात्मा सायुज्यं लभते नरः ।
सुखमारोग्यमैश्वर्यमायुर्वृद्धिर्भवेद्ध्रुवम् ॥ ५ ॥
कीर्तिश्च महती तस्य येन देवालयः कृतः ।
प्रतिष्ठाकारिणश्चैवं धनधान्यादिवृद्धयः ॥ ६ ॥
तटाककारी च देवविमानस्थापकोऽपि च ।
दीपप्रदाता च पुमान् चिरञ्जीवी सुखी भवेत् ॥ ७ ॥

---

विधोपचारप्रदर्शनेन मण्डपारोहणेन वाहनारोपणेन नैवेद्यप्रदर्शनेन च समग्रपूजा कल्पिता भवतीति पूजनकार्यक्रमकथनं बोध्यम् । न केवलमर्घ्यपाद्यादिप्रदानेनेति भावः । तस्मादत्र प्रतिपादित-रीत्या देवानामभिषेकाद्यनेकविधसत्कारप्रदर्शनेन समग्रपूजनं कर्तुः कारयितुर्वा पुण्यशालिनः पुरुषस्य सर्वपापविमोचनपूर्वकं देहावसाने भगवत्सायुज्यपदप्राप्तिर्भवतीति फलकथनम् ॥

किञ्चात्रोक्तप्रकारेण समग्रपूजां कर्तुः कारयितुर्वा पुरुषस्येह-लोके सुखारोग्यैश्वर्यायुर्वृद्ध्यादिकं भवति । अपि च देवबेर-प्रतिष्ठाकार्यार्थं दत्तधनस्य पुरुषस्य कीर्तिर्महती जृम्भते धनधान्यादि-समृद्धयश्च । एवं देवालयतटाकनिर्माणाय, देवालयविमान-निर्माणाय, मण्डपध्वजस्तम्भवाहनरथादिनिर्माणाय, दीपप्रज्वलनाय प्रदत्तधनस्य पुरुषस्य दीर्घमायुस्सौख्यपरम्परा च जृम्भते ॥

पुत्रार्थी पुत्रमाप्नोति धनार्थी धनमाप्नुयात् ।
राज्ये विजयते राजा रोगी रोगविमुक्तिभाक् ॥ ८ ॥

अनन्यमानसैर्भक्तैर्दीयते यत्तु भूरिशः ।
तेन प्रसीदन्ति देवास्ते सर्वे मङ्गलप्रदाः ॥ ९ ॥

देवताभक्तिमाहात्म्याद्विपदो यान्ति दूरतः ।
संपच्च महती तेषां प्रदत्ता यैर्वसुन्धरा ॥ १० ॥

---

किञ्चैवं सम्प्राराधननिर्वहणार्थं धनभूम्यादिद्रव्यप्रदाता पुत्ररहितोऽपि देवतानुग्रहभूम्ना पुत्रं प्राप्नुयादिति शास्त्रकारस्य आशीर्वचनफलकथनम ; एवमुत्तरत्रापि ज्ञेयमिति मतिः । धनार्थी धनमाप्नुयात् । विजयार्थी राजा विजयमाप्नुयात् । तस्मादेवं ब्राह्मणादयस्सर्वेऽपि जना अनन्यभावैर्मनोभिश्शुद्धैर्देवालयादि-निर्माणाय द्रव्याणि प्रदत्तवन्तो यदि तान्प्रति सर्वा अपि देवताः प्रसन्ना भवेयुः, तेषां बहुविधमङ्गलप्रदायिन्यश्च । किञ्च स्थपतितक्षकादिशिल्पाचार्यवर्गैः प्रकल्पितेषु देवताशक्त्यारोपणा-नन्तरं तेषु देवेषु अन्यादृशी भक्तिः कृता चेत्तेषां भक्तानां सर्वा अपि विपदस्स्वयमेव दूरतो यान्ति मङ्गलावाप्तिश्च भवति ॥

किञ्च देवालयस्थापनार्थं देवालयतटाकनिर्माणार्थं भूमि-प्रदातुः देवस्य नैवेद्यादिकार्यनिर्वहणाय भूमिप्रदातुश्च शाश्वतलोक-प्राप्तिरिहलोके महती च संपद्वर्धते । किञ्च सर्वमपि क्रियाजालं

देवार्पितक्रियाभारो यः करोति नरो भुवि ।
भजनं पूजनं स्तोत्रं स मान्यो दिविषद्गणैः ॥ ११ ॥

तुलसीबिल्वपत्रैश्च कुसुमैर्विविधैरपि ।
पूजां करोति यो भक्त्या दिव्ये लोके महीयते ॥

ध्यात्वा तु शास्त्रकर्तारं विश्वकर्माणमादरात् ।
करोति देवतागारं यस्स मान्यो मनीषिणाम् ॥ १३ ॥

गोपुरस्थापनं भूमेरर्पणश्चोत्सवक्रिया ।
तटाकनिर्माणमपि श्रेयोवर्धनमीरितम् ॥ १४ ॥

---

सर्वशक्तिर्भगवान्मया स्वप्रीतये स्वयमेव कारयतीत्यादिनिश्चयं कृत्वा देवतानां पूजननमनस्तोत्रोत्सवादिकार्येऽव्यग्रमतेः भक्तस्य वृत्तं देवगणैरपि मान्यं भवति । किञ्चात्र लोके यश्च पुमान् देवभक्तिभासुरस्तुलसीवनं, बिल्ववनं, कुसुमलता वा वर्धयति, तद्वर्धनाय भूमिं प्रददाति, तैश्च कुसुमजालैर्देवार्चनं करोति स तु पुण्यशाली देहावसाने स्वर्गलोके देवगणमानितो विराजते ॥

अपि च यश्च पुमान् लोके देवालयनिर्माणाय शास्त्रस्यास्य प्रणेतारं दिव्यं विश्वकर्माणं दिव्यशक्तिं शुद्धेन स्वचेतसा ध्यायति, यश्च पुमाननन्यभक्तिर्देवतागारं कारयति करोति वा, यश्च पुमान् गोपुरनिर्माणं करोति तदर्थं भूम्यादिद्रव्यप्रदाता चैते सर्वेऽनन्तश्रेयोभाजो विराजन्त इति शास्त्र-

पूर्वपापनिरासाय नमनं देवतार्चनम् ।
उत्तराघनिरासाय प्रतिष्ठादिरुदीरितः ॥ १५ ॥
तस्मात्सर्वप्रयत्नेन देवान्देवीश्च नित्यशः ।
शुभवास्तुतले शुद्धद्रव्यैः पूजां च कारयेत् ॥ १६ ॥
ब्राह्मणाः क्षत्रियाश्चान्ये स्वधर्मनिरताश्च ये ।
देवार्पितमनोभावास्तत्कैङ्कर्यदृढव्रताः ।
भक्त्या निर्धूतपापास्ते क्षेमभाजो न संशयः ॥ १७ ॥

इति विश्वकर्मप्रणीते **विश्वकर्मवास्तुशास्त्रे**
प्रतिमापूजनभजनादिफलकथनं नाम
षडशीतितमोऽध्यायः ॥

---

कारस्याशीर्वचनक्रमश्च ज्ञेयः । अपि च बेरेष्वावाहितशक्तीनां देवानां पुरोभागे प्रणमनभजनस्तुत्यादिकन्तु पूर्वजन्मपापराशिनिरासनाय भवति । तादृशमाहात्म्यनिकेतनस्य देवस्य प्रतिष्ठाद्याचरणेनागामिपापराशिनिरोधश्चेति प्राचां महर्षीणां वचनरीत्या सर्वेऽपि मानवाः स्वकुलधर्माचारादीननतिक्रम्यैव देवभक्तिभाजो देवकैङ्कर्यनिरताश्च भवितव्याः । एवं देवभक्तिभासुराणामेव जनानां सकलविधश्रेयःप्राप्तिरिति देवतापूजनभजनादिफलकथनं शास्त्रकारेण सङ्ग्रहेणोक्तं बोध्यम् ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
**प्रतिमापूजनभजनादिफलकथनं नाम**
**षडशीतितमोऽध्यायः ॥**

अथ मनुष्यजन्मफलकथनं नाम

## सप्ताशीतितमोऽध्यायः ॥

दुर्लभं मानवं जन्म कथितं शास्त्रपारगैः ।
तदवाप्य बुधो लोके महत्संपादयेत्फलम् ॥ १ ॥

---

॥ सप्ताशीतितमोऽध्यायः ॥

एतावता प्रबन्धेन प्रतिपादितानां नानाविधक्रियाजालानां निर्माणप्रमाणादिकं बोद्धुं कर्तुं कारयितुं वा मानव एव समर्थो भवति । तस्मादेवंविधकार्योपकृतिजनकमानवजन्ममाहात्म्य-प्रशंसापूर्वकमेतस्य वास्तुशास्त्रस्य निगमनप्रकरणं शास्त्रकारः प्रतिजानीते — **दुर्लभं मानवं जन्मे**त्यादिना । कृतत्रेताद्वापराख्येषु युगान्तरेषु देवगन्धर्वकिन्नरादयः स्वदिव्यसंकल्पनेनैव दिव्य-प्रासादमण्डपविमानादिकं निर्मातुं समर्था आसन् । केषु-चित्समयेषु कचिद्विश्वकर्मप्रभृतीनां दिव्यया शक्त्या प्रासाद-विमानादिकञ्चातापुः । अत्र तु कलौ युगे भूलोके प्रायशो यन्त्रमन्त्रादिदिव्यशक्तिहीना अपि मानवा विश्वकर्मीयस्यास्य शास्त्रोक्तमस्य सेवनादिना तादृशप्रासादादिकं कर्तुमपि प्रभवन्ति । तस्मात्पापवृद्धिकरे पुण्यक्षयकारिणि अस्मिन्नन्तिमयुगे तादृश-कल्पनाद्युपकृतिजनकं मानवं जन्म प्रायशो दुर्लभमेवेत्ययमर्थः पुराणादिषु मुनीन्द्रैः स्पष्टीकृत एव । अतश्चिरपुण्यराशिप्राप्यं मानवं जन्म लब्ध्वाऽपि पुमान् तस्य जन्मनस्साफल्यकारी

देवपादार्पितमनास्तद्भक्तेष्वपि भक्तिभाक् ।
निर्ममो निरहङ्कारः पापभीतो दृढव्रतः ॥ २ ॥

सालग्रामशिलां दिव्यां लिङ्गबेरमथापि वा ।
चित्रसान्निध्यभाजं वा देवमाराधयेत्क्रमात् ॥ ३ ॥

देवमाहात्म्यकथनं देवानां नित्यपूजनम् ।
देवालयस्थापनञ्च तद्रक्षाकरणञ्च यत् ॥ ४ ॥

---

भवितव्य इति शास्त्रकारोपदेशः । तस्माद्दुर्लभस्य तस्य मनुष्यजन्मनस्साफल्यसंपादककार्याणि कानीत्याकाङ्क्षायां क्रमेण तानि उपपादयति — **देवपादार्पितमना** इत्यादिना । प्रायशोऽत्र मानवलोके विशेषतश्चास्मिन्कलिकाले तपश्शक्तियोगशक्त्यादिविहीनानां मानवानां हरिहरब्रह्मादिदेवोत्तमानां बेरेष्वावाहितशक्तीनां वा चित्रादिष्वारोपितशक्तीनां वा पादारविन्दयुगलेष्वप्यन्यादृशभक्तिबन्धनं, क्वचित भगवद्भक्तानां पादारविन्देष्वपि भक्तिकल्पनं, यथाशक्ति कामक्रोधाद्यरिषड्वर्गनिरसनं, पापकार्यविमुखत्वं, देवपूजनसाधुसम्माननादिसत्कार्येषु दृढव्रतत्वं, प्रत्यहं नियमेन सालग्राममूर्तिपूजनं, माहेश्वरलिङ्गार्चनं, चित्रादिसान्निध्यवद्देवतार्चनं, तत्तत्क्षेत्रनाथदेवमाहात्म्यकथनं, देवालयमठमण्डपादौ प्रतिष्ठितानां देवानां नैवेद्यकार्यादये सद्द्रव्याद्यर्पणं, तेषां देवानां प्रदक्षिणनमनादिकं, सति विभवे देवालयस्थापनं, पूर्वं निर्मितानां

देवद्रव्यादिरक्षा च जनैः फलमुदीरितम् ।
विश्वकर्मक्रियाजालदर्शनं श्लाघनं च यत् ॥ ५ ॥

तल्लक्षणयुतस्थानस्थापनं शास्त्रवाचनम् ।
पठनं सुखसिद्ध्यर्थं बालानां पाठनश्च यत ॥ ६ ॥

शुभदं कीर्तिदं जन्मफलदायि भवेद्ध्रुवम् ।
कथितं तत्पुरा विश्वकर्मणा शिवसंसदि ॥ ७ ॥

वासवस्य सभायाश्च वास्तुशास्त्रमिदं महत् ।
कालेन भूतलं नीतं गाङ्गं वारीव पावनम् ॥ ८ ॥

---

देवतानां देवालयादीनां रक्षणं, देवद्रव्यपरिपालनरक्षणादिकमेतत् सर्वमप्यन्यानि सत्कार्याणि च मानवजन्मसाफल्याय भवन्तीति शास्त्रकारोपदेशपरिपाटी ॥

किञ्चास्मिन्विश्वकर्मवास्तुशास्त्रे प्रतिपादितलक्षणसहित-प्राचीनप्रासादमण्डपादिदर्शनम, तत्रत्यचित्रसौष्टवान्प्रति श्लाघनम्, सति विभवे तच्छास्त्रोक्तप्रमाणानुसारेण स्थलान्तरेषु देवप्रासाद-भूपप्रासादमठमण्डपतटाकगृहभवनादिकल्पनं, विश्वकर्मकृतवास्तु-शास्त्रपठनपाठनश्लाघनादिकमपि जन्मसाफल्याय भवतीत्यपि च क्रमः । तस्माद्ब्राह्मणादीनां सर्वेषां वर्णानां सुखारोग्यसंपज्जन्म-साफल्योत्पादनाय विरचितमिदं वास्तुशास्त्रं पुरा युगान्तरे विश्व-कर्मणा दिव्येन शिवसदसि वासवसदसि च व्यक्तीकृतं तदिदं

निदानं सर्वमानानां शास्त्राणामुत्तमं मतम् ।
श्रोतॄणां पठतां पुंसां चतुर्वर्गफलप्रदम् ॥ ९ ॥
सर्वदेवप्रीतिकरं स्थपत्यादेस्सुखप्रदम् ।
लेखनाद्वाचनादस्य प्रसन्नास्सर्वदेवताः ॥ १० ॥
विश्वकर्मकृतं शास्त्रमेतत्सेव्यं मनीषिभिः ।
ब्राह्मणैः क्षत्रियैर्वैश्यैः स्थपत्यादिभिरन्वहम् ॥ ११ ॥
सर्वक्षेमकरं प्रोक्तं मुनिभिस्तत्त्वदर्शिभिः ।
विश्वकर्मा च भगवान्ध्येयः प्रातस्सुखार्थिभिः ॥

---

शास्त्रं भगीरथगङ्गानयनक्रमात्स्तुतादिभिस्तत्त्वदर्शिभिर्मुनीन्द्रैर्भूलोकं नीतमित्यस्य शास्त्रस्य प्राप्तिक्रमकथनं ज्ञेयम ॥

किञ्च सर्वेष्वपि शिल्पशास्त्रेषु उत्तमं सर्वविधाक्रियाजालानां प्रमाणलक्षणादिप्रतिपादनेन प्रसिद्धिमदिदं विश्वकर्मवास्तुशास्त्रं पठतां, श्रोतॄणां, लिखतामपि चतुर्वर्गफलप्रदं भवति । सर्वेषामपि देवानां प्रीतिवर्धनं स्थपतितक्षकलोहकारादिक्रियाकारिणां श्रेयसे, कीर्तये, सम्पदे च भवति ॥

किञ्च शास्त्रपारङ्गतैस्सर्वैरपि बुधैर्ब्राह्मणक्षत्रियादिभिरिदं वास्तुशास्त्रं देववत्सन्ततं सम्मान्यम् । शास्त्रस्यास्य प्रणेता भगवानुत्तमगुणो दिव्यशक्त्यादिसंपन्नो विश्वकर्मा देवोत्तमश्च तत्र तत्र क्रियारम्भसमयादिषु शुद्धेन मनसा सर्वैरपि ध्येय

सम्मान्यमेतद्विधिवत्सुरेन्द्रैः
शास्त्रोत्तमं यः प्रकटीकरोति ।
तस्यैव कीर्तिर्महती च संपत्
विजृम्भते शास्त्रकृतः प्रसादात् ॥ १३ ॥

इति दिव्येन विश्वकर्मणा प्रणीते विश्वकर्मवास्तुशास्त्रे
मनुष्यजन्मफलकथनं नाम
सप्ताशीतितमोऽध्यायः ॥

---

इत्युपदेशः । एवंप्रकारेण हरिहरादिदिव्यवरेषु विश्वकर्मणि विश्वकर्मकृतवास्तुशास्त्ररत्ने चादरं कृतवतां तत्प्रसादमहिम्ना दिव्यसंपद्वृद्ध्यादिकमिति शास्त्रसेवनफलमप्युक्तं ज्ञेयम् ॥

विश्वकर्मकृतस्यास्य वास्तुशास्त्रस्य सङ्ग्रहात् ।
प्रमाणबोधिनीव्याख्या कलिता विदुषां मुदे ॥

अनन्तकृष्णभट्टार्यैश्शिल्पव्याख्यानपण्डितैः ।
तक्षकादिहितायैषा क्रियाणामपि सिद्धये ॥

इति श्रीमदनन्तकृष्णभट्टारकविरचितायां प्रमाणबोधिन्याख्यायां
विश्वकर्मवास्तुशास्त्रव्याख्यायां
मनुष्यजन्मफलकथनं नाम
सप्ताशीतितमोऽध्यायः ॥

समाप्तमिदं विश्वकर्मवास्तुशास्त्रम् ।

॥ प्रीयतां भगवान् शेषशायी ॥



